# अथ तद्धितप्रकरणम् ।

**अर्द्धर्चादिप्रयोगाश्च यन्निमित्तमिहोदिताः ।**
**इयं मे तद्धितव्याख्या तद्धितत्वाय कल्पताम् ॥१॥**

---

शब्द शास्त्रार्णवं सम्यक् विलोड्यामृतमाहरत् ।
हरिनामामृतास्वादे स श्रीजीवः प्रवर्त्तकः ॥

अथ समासपादोक्तानां अर्द्धर्च्च पूर्वाह्लद्‌विपथ पौर्वशालादि प्रयोगाणां तद्धित-कार्य तत्प्रत्यय सापेक्षत्वेनाकाङ्क्षितं प्रत्ययेषु चावशिष्ट तद्धिताख्यं सप्तमप्रकरण-मारभमाणो ग्रन्थकारो वक्ष्यमाण पादीयप्रयोगाणां श्रीभगवत् परत्वं प्रतिपादयन् भङ्ग्या चैतदध्ययनाध्यापनस्य हितकारित्वपादनेन शिष्यप्रवृत्ति जनयति—अर्द्धाचादीति पद्येन । इह सप्तमे पादे यन्निमित्तं यस्य भगवतः सन्तोषार्थं यत्प्रीतये इत्यर्थः, मे मया अर्द्धार्चादयः प्रयोगा श्चोदिताः कथितुमारब्धाः, इयं मे मत् सम्बन्धिनी मत्कर्त्तृका वा तद्धित-व्याख्या तद्धितोपलक्षिता व्याख्या तद्धितत्वाय तद्धारित त्वेन तद्धारकत्वेन वा कल्पतां-परिणमता मित्यन्वयार्थौं ।

उदिता इत्यारम्भे क्तः, आरम्भार्थस्य बर्त्तमानसामीप्यत्वेन वर्त्तमानत्वपर्यवसानात्, वर्त्तमाने भावे च क्तस्य योगे कर्त्तरि षष्ठी वेति मे इत्यत्र कर्त्तरि षष्ठी । देहलीप्रदीपन्यायेन

---

अर्द्धर्चाद्यान् यमुद्दिश्य गायन्ति पण्डिता इह ।
तदर्थास्तद्धिताः सर्वे तद्‌व्याख्याश्च भवन्ति हि ॥ १ ॥

अथो अखिलवेदाङ्गपुराणोपपुराणेतिहासवेदान्तोपनिषदध्यापकपरमकारुणिक-भागवताप्रगण्यप्राणिनिकायजीवातुकश्रीमज्जीवगोस्वामिनाम्ना ग्रन्थकारः सन्धिप्रकरण-टीकोक्तक्रमशः प्राप्ततद्धितपादमारभमाण एतत्पादीयप्रयोगाणां भगवत्परतां भङ्ग्या-ध्यापनाध्ययनशीलकहितपरताञ्च प्रतिपादयन्नाह अर्द्धर्चादीति । इह सप्तमपादे यन्निमित्तं लक्षणया यस्य सन्तोषार्थं मे मया अद्ध्वर्चादय एव प्रयोगा उदिताः कथितुमारब्धाः इयं मे मम च सम्बन्धिनी मत्कर्त्तृका वा तद्धितव्याख्या तद्धितैरुपलक्षितव्याख्या तद्धितत्वाय कल्पतां तद्धारितत्वेन परिणमतामित्यन्वयः । उदिता इत्यारम्भे क्तः । आरम्भार्थ-क्तस्य वर्त्तमानप्रयोगित्वादवर्त्तमाने भावेच क्तस्य योगे कर्त्तरि षष्ठी वेत्यनेन मे इत्यस्मिन् कर्त्तरि षष्ठी । पक्षे सम्बन्धषष्ठीच । प्रयोगाश्चेत्यत्र चार्थस्य प्रयोजना-भावत्वात् पुनरर्थत्वेन मे इति सम्बन्धषष्ठ्यन्तेन सम्बन्धः । न केवलं तद्धितानां व्याख्या

मे इत्यस्योभयत्रान्वयादुत्तरार्द्धे सम्बन्धे च षष्ठी। तद्धितत्वायेति—दधाते र्भावे क्तः—हितः, दधाते र्हिरिति धास्थाने हिः, तादर्थ्ये चतुर्थी। चकार समुच्चये, तेन ग्रन्थोक्ताः यावन्तो हि प्रयोगाः पुष्पतुल्याः कृष्णप्रीत्यर्थे हि निवेदिता इति तात्पर्यार्थः। ग्रन्थादौ—कृष्ण-मुपासितुमित्यादिना, तथा ग्रन्थान्ते च—कृष्णत्रा कृतमेतदित्यादिना चेतस्य पूजोपकरणत्वं भगवत्यर्पितत्वञ्च व्यक्तम्।

अथ व्याकरणपक्षे च,—इह तद्धितपादे यन्निमित्तं येभ्यश्छात्रेभ्यः अध्यापकेभ्यश्च निमित्तमर्द्धार्चादिय स्तद्धितप्रयोगा मया कथितुं प्रस्तुताः, ममेयं तद्धित व्याख्या ( विशेषेण आख्या कथनं ) तेषां छात्रादीनां मङ्गलत्वाय कल्पतांसमर्था भवतु। भगवत् सम्बन्धित्वेन नानार्थबोधनद्वारा विचित्र व्युत्पत्तिमयत्वेन च तेषां मङ्गलत्वाय परितोषाय च कल्पता-मिति ग्रन्थान्तमङ्गलाचरणे प्रार्थनेयम्। तस्मै हितः तद्धित इति यथा कथञ्चिद् व्युत्पत्तिः।

अथेति—प्रत्ययार्थपारावार रूपस्य तद्धितप्रकरणस्यातिबाहुल्यात् अथ च षट् प्रकरणाध्ययनलब्धसंस्कारेणालं बुद्धिमतामस्य पठने प्रवृत्तिशैथिल्यं मनसि सन्दिह्य आदा-वेव प्रकरणफलस्वरूपं तत् कार्यं तावदुपक्रममाणः प्रतिज्ञानीते—अथ तद्धितकार्याणीति। आनन्तर्ये माङ्गलिक्ये चेह अथ शब्दः।

---

तद्धितत्वेन कल्पते अपितु तद्धितास्तद्व्याख्याच, अतएव तद्धितोपलक्षिता तद्धित-सहितेत्यर्थः। ममोक्ततद्धितव्याख्या सर्वेषां निरपेक्षहितकारिणस्तस्य हितत्वेन परिणाम-कल्पना नोचितेति तद्धारितत्वेन तस्मिन् समर्पितत्वेनेत्यर्थः। तद्धितत्वायेत्य त्रच डु धाञ् धारणपोषणयोरित्यस्माद्भावे क्तः। दधातेर्हिरित्यनेन हिः। तस्मादनेन भगवत्य-र्पितत्वेन ग्रन्थकृता परममङ्गलमाचरितं एवं सर्वोऽयं ग्रन्थो मङ्गलरूप इति च विज्ञापित-मिति। एवं मत्कृतमङ्गलाचरणस्यापि। व्याकरणपक्षेतु। इह तद्धितपादे यन्निमित्तं येभ्यश्छात्रेभ्यो निमित्तं अर्द्धर्चादितद्धितप्रयोगा मयोदिताः कथयितुं प्रस्तुताः मम इयं तद्धितव्याख्याच तद्धितत्वाय तेषां छात्राणां नानार्थबोधकद्वारा परमपारितोषिकत्वेन कल्पतां समर्था भवतु पोषणरूपधात्वर्थस्य परितोषफलत्वात्। अर्द्धर्चेति ऋचः अर्द्धमर्द्धर्चः स एव आदिर्येषां तेऽर्द्धर्चादयः तेच प्रयोगाश्चेति अर्द्धर्चादिप्रयोगा इति प्रथमतोऽर्द्धर्चेत्यत्र वेदाक्षरस्य ऋचः प्रदर्शनादस्मिन् ग्रन्थे वेदाक्षरस्यैव प्राधान्यं। अतएव तदादिप्रयोगानु-शीलकानां वेदार्थानुशीलनफलत्त्वात् हरिनामभिर्वैष्णवानां कालक्षेपणमुचितमित्यस्य न व्यभिचारः। संज्ञाशब्दानां यथाकथञ्चिदित्युक्तदिशा तस्मै हितस्तद्धित इति संज्ञाशब्दस्य व्याख्या। अर्थविवरणमिति किं बाहुल्येन।

अथ। इदानीन्तनानां विविधोपद्रवाभिभूतानां मन्दबुद्धचलसानां सन्ध्यादिषट्-पादाध्ययनक्लेशक्लेशितानां छात्राणां मध्ये कस्यचित् समस्ततद्धितपाठो भवेत् कस्यचिन्न भवेदिति। किम्वा सन्ध्यादिषट्पादाध्ययनाहितसंस्कारेण सूक्ष्मधियां तेषां सुलभबुद्ध्या तद्धिते प्रवृत्तिर्न स्यादितिच मनसिकृत्य समग्रतद्धितफलरूपाणि तत्कार्याणि दर्शयन्नाह। अथेति। अथ स्यान्मङ्गलप्रश्नकार्यारम्भेष्वथो अथ इति विश्वात्। ओंकारश्चाथशब्दश्च द्वाविमौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्जातौ तस्मान्माङ्गलिकावुभाविति माध्व-भाष्याच्च। अथ शब्दस्यानन्तर्यमङ्गलार्थौ युगपत् स्वीकृत्याथशब्दं प्रयुञ्जीत। अथानन्तरं अथानन्तरं परममङ्गलरूपाणि तद्धितकार्याणि दर्श्यन्त इत्यर्थः।

अथ तद्धित कार्याणि ।

## १. आदिसर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे ।

**विभुरयम् ।**

**गर्ग यण्—अ—इद्वयस्य हरो वक्ष्यते, गार्ग्यः । दक्ष इण् दाक्षिः । उपगु अण् उद्वयस्य गोविन्दो वक्ष्यते, औपगवः ।**

---

**अमृता०—१.** आदीति । नृसिंहे प्रत्यये परे प्रकृतेरादिसर्वेश्वरस्य वृष्णीन्द्रो भवति । अधिकारोऽयं विभुनामा । सजातीयविजातीयानेकाधिकार व्यापित्वादस्य विभुत्वमिति भावः । गार्ग्यइति—गर्गस्य गोत्रापत्यं पुमानित्यर्थे गर्गादे र्माधव य इति वक्ष्यते, स एवात्र यण् इत्याख्याते । हरो वक्ष्यत इति—अइद्वयस्य हरोभगवतीत्यनेनेति शेषः । अत्रादिसर्वेश्वरः अराम स्तस्य वृष्णीन्द्र आरामरूपः । दाक्षिरिति—दक्षस्यापत्यं पुमानित्यर्थे—अराम-वाह्वादिभ्यामिति नृसिंह इः, सएवात्रइण् इत्याख्यातः । औपगवमिति—उपगतः उपक्रान्तो वा गामिति विग्रहे अत्यादयो द्वितीययेत्यनेन कृष्ण पुरुषः, गोरीप आप इत्यादिना वामनः—उपगुः कश्चित्, तस्यापत्यं पुमानिति केशवणः, सएवात्र अणित्युक्तः । गोविन्दो वक्ष्यत इति—उद्वयस्य गोविन्दो नतु धातो र्न च स्त्रीप्रत्यये इत्यनेन । ततश्च सन्धौ सति औपगव इति । अत्र उरामस्य वृष्णीन्द्र औरामः ।

---

**बाल०**—आदि । नृसिंहे परस्मिन् आदिस्थस्य सर्वेश्वरस्य वृष्णीन्द्रो भवति । अस्य सजातीयविजातीयानेकाधिकारव्यापित्वादाह विभुरिति । तेन दीव्यतीत्यतः प्रागर्थेषु अपत्याद्यर्थेषु यः केशव णो वक्ष्यते, तद्बाधकाश्च ये प्रत्ययास्तानाह गर्ग यणित्यादिना । गर्गादेर्माधव-यराम इत्यनेन यो माधव-यरामो वक्ष्यते, स एव गर्ग यणित्यनेनोक्तः । तद्धिते कार्यस्य प्रत्ययविधायकानि सूत्राणि स्वयं ग्रन्थकृता पश्चात् विवृत्य वक्ष्यन्तेऽत-स्तेषामत्र प्रदर्शनं पिष्टपेषणमात्रमिति यथासम्भवं क्वचित् कानिचिद्दर्श्यन्ते । किञ्च, तद्धितप्रत्ययानां बहुलार्थत्वात् बहूनि वाक्यानि सम्भवन्ति । तेषां मध्ये कुत्रापि किमपि कुत्रापि किमप्यच्युते इति बोद्धव्यं । अइ-द्वेति वक्ष्यते इति अ-इद्वयस्य हरो भगवतीत्य-नेनेति शेषः । अस्य सूत्रस्य प्रायः सर्वत्र विषय इति सर्वत्रेदं योज्यं । गर्गस्य गोत्रापत्यं पुमानित्यर्थे गार्ग्य इति । अरामाह्वादिभ्यामिर्नृसिंह इर्वक्ष्यते, स एव दक्ष इण् इत्यने-नोच्यते । दक्षस्यापत्यं पुमानित्यर्थे दाक्षिः । उपगु अणिति केशवण इति वक्ष्यतेच अयमेवाण इति । गोविन्द इत्यस्मादुत्तरत्र नच धातोर्नच स्त्रीप्रत्यय इति शेषः । उपगु-रित्यकस्य नाम तस्यापत्यं पुमानित्यर्थे उपगोः केशवणस्तस्मिन् गोविन्दस्येत्येवं उपगवइति ॥ १ ॥

**२. प्रलयादीनां यादे रीयश्च ।**

अण्—प्रालेयम् कैकेयः ।

**३. देविका-शिंशपा-दीर्घसत्र-श्रेयसामारामः ।**

एषामारामरूपएव वृष्णीन्द्रः । अण—दाविकं शांशपं दार्घसत्रं श्रायसम् ।

**४. वृष्णीन्द्रस्थान-चतुःसनादेश-विष्णुपदान्तयो र्द्वारादिस्थयोश्च वृष्णीन्द्रं निषिध्य यवरामयोरैयौवौ नतु स्वागतादेः ।**

---

**अमृता०**—२. प्रलयेति। नृसिंह प्रत्यये परे प्रलयादि शब्दानामादि सर्वेश्वरस्य वृष्णीन्द्रः स्यात्, तेषां यादिभागस्य इयइत्यादेशश्च भवति। प्रालेयमिति—प्रलयादागतमित्यर्थे केशवणः, प्रालेयं हिममित्यर्थः। अत्र वृष्णीन्द्रः, सारामयरामस्य इयादेशश्च। एवं केकयस्यापत्यं कैकेयो भरतः। आदिपदेन—मित्रयु शब्दात् नृसिंह ठः, भावे आप्—मैत्रियिका, मित्रयुत्वमित्यर्थः।

**अमृता०**—३. देविकेति। नृसिंहे परे देविकादि चतुर्णामारामरूपो वृष्णीन्द्रः स्यात्। देविकायां भवं दाविकं जलम्। शिंशपाया विकारः शांशपं, यज्ञोपकरणम्। दीर्घसत्रे भवं दीर्घसत्रम्, श्रेयसि भवं श्रायसमिति। सर्वत्र हि केशवणः।

**अमृता०**—४. वृष्णीन्द्रेति। वृष्णीन्द्रस्थानश्चासौ चतुः सनश्चेति वृष्णीन्द्रस्थान-चतुःसनः, आदेशश्च आदेशश्च आदेशौ, एवं विष्णुपदान्तौ, आदेशौ च विष्णुपदान्तौ चेस्यादेश विष्णुपदान्तौ, वृष्णीन्द्रस्थानचतुःसनस्य तौ वृष्णीन्द्रस्थानचतुःसनादेश-विष्णुपदान्तौ तयो र्यराम वरामयोरिति विग्रहः। स्वयं वृत्तिमाह—वृष्णीन्द्रस्थानीयेत्यादिना।

---

**बाल०**—प्रल। य आदिर्यस्य स यादिस्तस्या तद्गुणसम्विज्ञानपीताम्बरेणात्र यरामस्तदन्तश्च गृह्यते। प्रलयादीनां सम्बन्धे केशवणस्तस्मिन् परे तेषां यादिवर्णस्य ईयश्च भवति। यादेरित्यत्र यस्य इयश्चेति कृतेऽपि प्रयोगः सिध्यत्येव तथापि यदेवं कृतं तद्वै चित्रार्थं। प्रलयस्येदं प्रालेयं केकयस्यायं केकये भवो वा कैकेय इति। जनपदसनामभ्यः क्षत्रियेभ्योऽपत्ये तज्जनपदनामभ्यस्तु राजनि इत्यर्थे प्राग्दीव्यतीय-केशवणः ॥ २ ॥

**बाल०**—देवि। नृसिंहे परे देविकादिचतुर्नामादिसर्वेश्वरस्यारामो भवति। वृत्तिमाह एषामिति। देविकाया इदं देविकायां भवो वा दाविकं। एवं शांशपादि ॥ ३ ॥

**बाल०**—वृष्णीन्द्र। वृष्णीन्द्रस्य स्थानं वृष्णीन्द्रस्थानञ्च तच्चतुःसनश्चेति वृष्णीन्द्र-स्थानचतुःसनः। आदेशश्च आदेशश्च आदेशौ विष्णुपदान्तश्च विष्णुपदान्तश्च विष्णुपदान्तौ आदेशौ च तौ विष्णुपदान्तौ चेति आदेशविष्णुपदान्तौ वृष्णीन्द्रस्थानचतुःसनस्य आदेशविष्णुपदान्तौ वृष्णीन्द्रस्थानचतुःसनादेशविष्णुपदान्तौ तयोर्यरामयोः। द्वार आदिर्यस्य

वृष्णीन्द्रस्थानोयश्चतुःसन स्तस्यादेशयो र्विष्णुपदान्तयो र्द्वारादिस्थयोश्च यवयौ वृ्ष्णीन्द्रं निषिध्य यथासंख्यमैयौवौ भवतः। अयि—वैयाकरणः। इणि—सौवश्विः। वृष्णीन्द्रं निषिध्येति किम्—सौवाश्वि रिति स्यात्। वृष्णीन्द्रस्थानेति किम्—दाध्यश्विः माध्वश्विः। विष्णु-पदान्तयो रिति किम्—इण्-शत्रन्तस्य यत श्छात्रा इत्यणि याताः।

---

वृष्णीन्द्रार्हे स्थाने (आदिसर्वेश्वर स्थाने इत्यर्थः) यश्चतुःसन इद्वयोद्वयरूप इति यावत् तत्सम्बन्धिनौ यौ आदेशौ यराम-वरामरूपौ पुनस्तौ चेद् विष्णुपदान्तस्थौ, तयोः स्थाने यथाक्रमं ऐय् औव् इत्येतावादेशौ स्यातां वृष्णीन्द्रापवादरूपौ इति सरलार्थः। आदेशः स्थानिवत क्वचिदिति यवादेशयोः स्थानिवत्त्वे वृष्णीन्द्रे प्रसक्तेऽनेन निराक्रियत इत्यवधेयम्। सर्वत्र नृसिंहे प्रत्यये परे इत्यूह्यम्।

अणि वैयाकरण इति—व्याकरणमधीते वेद वेत्यर्थे केशवणः। सु अश्वः स्वश्वः, तस्यापत्यं पुमानिति नृसिंह इः—सौवश्विः। एवं व्यासस्यापत्यं वैयासकिरिति। प्रत्युदाहरति—सौवाश्विरिति स्यादिति। इत्येवंमसिद्धरूपं प्रसज्येतेत्यर्थः। वृष्णीन्द्रं निषिध्येत्यनुक्ते सति अश्वशब्दस्य अरामस्य वृष्णीन्द्रो निर्बाधेन प्रसज्येतेति फलितम्। दध्यश्व-मध्वश्वौ संज्ञा विशेषौ। उभयत्र यवयो श्चतुः सनादेशत्वेऽपि न तौ आदिसर्वेश्वररूपवृष्णीन्द्र स्थाने जातौ किन्तु तत्परस्थौ, अतो न तदादेशौ। इणिति—इण् गतौ इत्यस्य शतृ प्रत्ययान्तस्य बहुत्वे रूपं यत इति। सर्वे गत्यर्था ज्ञानार्थश्केत्यभ्युपगमात् यतो गच्छन्तो जानन्तो वा यतः छात्राः, तेभ्य आगता इत्यर्थे केशवणः—याताः, बहुवचनात्मक प्रयोगः। अत्र यरामस्य वृष्णीन्द्रस्थान चतुःसना देशत्वमस्त्येव किन्तु विष्णु पदान्तत्वविरहान्न ऐय्।

पृथग् ग्रहणाद् द्वारादिगणस्थयो र्यवयोस्तु तत्तदादेशौ भवत एव वृष्णीन्द्र स्थानादि-

---

स द्वारादिस्तस्मिन् स्थीयते इति द्वारादिस्थौ तयोश्च यवरामयोः। स्वागत आदिर्यस्य स स्वागतादिस्तस्य स्वागतादेरिति। वृत्तिमाह वृष्णीन्द्रस्थेति। भवत इत्यस्मात् स्वागतादेर्यवरामयोस्तु नेति द्रष्टव्यं। सूत्रे वृष्णीन्द्रस्थानेत्युक्तत्वात् वृष्णीन्द्रहेतौ प्रत्यये इत्यर्थाद्-गम्यते। अतएव ग्रन्थकृता यद्यपि कृतावपि परनिमित्तं न दत्तं, तथापि नृसिंहे परे इति ज्ञेयं। अणीति रूपं दर्श्यते इति शेषः। एवमुत्तरत्रापि। व्याकरणमधीते वेद वेति व्याकरणस्य वा इत्यत्र यरामस्यैयादेशे वैयाकरणमिति। स्वश्वस्यापत्यं पुमानिति सौवश्विरिति। इति किं किमर्थं यदा वृष्णीन्द्रः स्यात्तदा सौवाश्विरिति स्यात्। स्यादिति सम्भावनायां विधिः, तेन सौवाश्विरिति न सिद्धप्रयोगः किन्त्वाक्षेपार्थः। अन्यथा वृष्णीन्द्रे सति ऐयौवादेशलक्षणाभावात् कथमेवं प्रयोगो भवेत्। दधिनामाश्वो यस्य तस्य दध्यश्वस्य अपत्यं पुमान् दध्यश्वस्यायं वेति दाध्यश्विः। एवं मध्वश्वस्य इत्याद्यर्थे माध्वश्विः। अत्र यवौ विद्येते एव, किन्त्वनयोः वृष्णीन्द्रस्थानीयचतुःसनादेशत्वाभावात् नैयौवौ। इन् यताविति इन्धातोः शत्रन्तस्य रूपं यथा सर्वे गत्यर्था ज्ञानार्थाश्चेत्यनेन यतो गच्छतो

द्वारादिस्थयोः खल्वपि । टिकण्—दौवारिकः । द्वार श्वन् श्वस् स्वारादि द्वारादिः ।

**५. न्यग्रोधश्च केवलोऽत्र ।**

नैयग्रोधम् । सेह—न्यग्रोधमूला वैष्णवाः ।

**६. श्वापदो वा ।**

---

लक्षणाभावेऽपीति व्यञ्जयति—द्वारादिस्थयोः खल्वपीत्यनेन । टिकणिति माधव ठः, तस्य पुनः—ठस्त्विक इत्यनेन इक आदिश्यते । द्वारे नियुक्त इत्यर्थे दौवारिकः । शुन इदं शौवं मांसम्, श्वोभविता शौवस्तिकः, श्वसः श्वस्तादेश इह निपातात् । स्वरमधिकृत्य कृतो ग्रन्थः सौवरः । आदिपदेन—स्वाध्याय स्वस्ति स्वादु मृदु व्यल्कश इत्येतेषां ग्रहणम् । स्वाध्यायमधीते सौवाध्यायिकः, स्वस्तीत्याह सौवस्तिकः, स्वादु मृदुने सौवादुमृदवं, व्यल्कशे भवः वैयल्कश इति ।

**अमृता०**—५. न्यग्रोधइति । केवलः अन्यसाहचर्यरहितो न्यग्रोधशब्दः अत्र द्वारादौ गणे वर्त्तत इति शेषः । न्यग्रोधो बहुपाद् वट इत्यमरः । न्यग्रोधस्य विकारः, न्यग्रोधस्येदं वेति नैयग्रधम् ।

**अमृता०**—६. श्वापद इति । श्वापद शब्दो द्वारादि र्वा भवति । श्वपदस्येदं केशव णः—श्वापदं शोवापदम् । स्वागतादे वृष्णीन्द्रस्थानेत्यादि धर्मोऽस्त्येव, अत ऐयौवोः प्रप्तयोः सतो निषिध्यति—स्वागतादेस्त्विति । शोभनमागतं स्वागतं, तदाहेत्यर्थे माधव ठः—स्वागतिकः । व्यवहारेण चरति तदर्हतीति वेति व्यावहारिकः । व्याडस्यापत्यं

---

ज्ञानिनश्च वा छात्रा इत्यर्थेऽणि सति याता इति । अत्र वृष्णीन्द्रस्थानीयचतुःसनादेशत्व-मस्त्येव, किन्तु न विष्णुपदान्तत्वमतो नैय् । खल्वपीत्यनेन वृष्णीन्द्रस्थानचतुःसना-देशत्वादिविशेषणाभावेऽपि । द्वारादिगणस्थयोर्यरामयोर्नित्यमैयौवादेशौ भवत इति सूचितं । टिकण्णिति माधवस्य प्रतिरूपकं ठस्त्विक इति वक्ष्यतेच । द्वारे नियुक्त इत्यर्थे द्वौवारिक इत्यत्र तत्र नियुक्त इत्यनेन माधवठः । द्वारादिगणमाह द्वारेति । शुनि नियुक्तः शौवनिकः । एवं शौवसिकः । स्वरे नियुक्तः स्वरेण कृतो वा सौरसिक इत्युदाहरणानि ॥४॥

**बाल०**—न्यग्र । अत्र द्वारादौ केवलो न्यग्रधो वटस्तस्य विकारोऽवयवो वा फलमित्यर्थे नैयग्राधमिति । अत्र न्यग्राधस्य विकारोऽवयवो वा फलमिति महाहरविषये प्लक्षादित्वात् केशव-णः । न्यग्रोधो बहुपाद् वट इत्यमरः । नेहेति । सूत्रे केवलशब्दो-पादानादिति शेषः । न्यग्रोधस्य मूलं न्यग्रोधमूलं तत्र स्थिता अमी इत्यर्थे न्याग्रोधमूला इति केशवणान्तं ॥ ५ ॥

**बाल०**—श्वा । श्वापदो द्वारादिर्वा भवति । श्वपदस्येदमिति श्वापदादिद्वयं । तस्येदमिति केशवणः । स्वागतादेरूपं दर्श्यते । शोभनमागतं स्वागतं तदर्हतीति स्वागतिकः ।

श्वापदं शौवापदम् । स्वागतादेस्तु—स्वागतिकः, व्यावहारिकः । इणि —व्याडिः ।

**७. न श्वपूर्वस्येरामे ।**

इण्—श्वादंष्ट्रिः श्वाभस्त्रिः श्वागणिकः ।

**८. उत्तरपदस्य ।**

प्रभुरयम् । आदिसर्वेश्वरस्येति विभुरनुवर्त्तत एव ।

**९. गुरु लघ्वादेः ।**

---

व्याडिः, पण्डितविशेषः । एवं स्वाध्वरेण चरति स्वाध्वरिकः, स्व पतौ साधुः स्वापतेयः, स्वार्थे कुशलः स्वार्थिकः, स्वभावे भव स्वाभाविक इत्येते च स्वागतादौ ज्ञेयाः ।

अमृता०—७. नेति । इरामे प्रत्यये परे सति श्वा पूर्वो यस्य तादृश-शब्दस्य औवादेशो न भवति । द्वारादे स्तदादिविधि स्वीकारादत्र च प्राप्ते निषेधोऽयम् । श्वदंष्ट्राया अपत्यं श्वदंष्ट्रेण निर्मितं वा श्वादंष्ट्रिः । श्वभस्त्रया कृतः श्वाभस्त्रिः । अत्र इरामे इति—इरामादौ नतु केवलेरामे परे इति मन्तव्यम् । तेन श्वगणे नियुक्तः, श्वगणेन चतति वेत्यर्थे ठ इकः—श्वागणिक इत्युदाहरणञ्च सङ्गच्छते ।

अमृता०—८. उत्तरेति । उत्तरपदस्येत्यधिकृत्य वक्ष्यमाणानां कार्यं स्यात् । किं तावत् तत्कार्यमित्याकाङ्क्षायां पूर्वाधिकारं स्मारयति—णादिसर्वेश्वरस्येति, वृष्णीन्द्रो नृसिंह इति सर्वमेवानुवर्त्तत इति भावः ।

अमृता०—९. गुर्विति । नृसिंहे परे गुरुलघुप्रभृति शब्दानामुत्तरपदस्यादि सर्वेश्वरस्य वृष्णीन्द्रो भवति । अनेन पूर्वपदस्य वृष्णीन्द्रो बाध्यते, अग्रे तूभयपदस्येति

---

तथा व्यवहारिकमितिच । अत्र तदर्हतीत्यर्थे माधवठः । किञ्चानयोर्वृष्णीन्द्रस्थानचतुःसनादेशत्वं विष्णुपदान्तत्वञ्चास्त्येव इति सूत्रे निषेधविधानं । एवमन्यत्रापि यथायोग्यमनुसन्धेयमिति । व्याडस्यापत्यं पुमानिति व्याडिः । अरामवाह्वित्यनेनात्र इर्नृसिंहः । व्याडिः पण्डितविशेषः ।। ६ ।।

बाल०—न श्व । श्वा पूर्वो यस्य स श्वपूर्वस्तस्य न औवादेशः । इरामे कृते सति । द्वारादित्वात् प्राप्ते निषेधोऽयं । श्वदंष्ट्रेण निर्मितः श्वादंष्ट्रिः । श्वभस्त्रया कृतः श्वाभस्त्रिः । अत्रापि द्वये अरामवाह्वित्यनेन नृसिंह इः । श्वगणे नियुक्त इत्यर्थे माधवठे श्वागणिक इति ।। ७ ।।

बाल०—उत्तर । उत्तरपदस्य यथास्वं कार्यं स्यात् । पूर्वाधिकारमपि सूचयति आदिसर्वेश्वरस्येति ।। ८ ।।

बाल०—गुरु । नृसिंहे परे सति गुरुलघ्वादेरुत्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रो भवति । परत्रोभयपदस्य वृष्णीन्द्रो वक्ष्यते, तत्रत्यैः सूत्रैः पूर्वपदस्यादौ प्राप्तो वृष्णीन्द्रो-

गुरुलाघवं, पितृपैतामहं, वातपैत्तिकं, वातश्लैष्मिकं, एकपौरुष्य-मित्यादि ।

## १०. अवयवादृतोः ।

पूर्वं वर्षासु भवः पूर्ववार्षिकः, वर्षाणां पूर्वभागे जात इत्यर्थः । एवं अपर शारदम् । अवयवात् किम्—पूर्वासु गतासु वर्षासु भवः पौर्ववर्षिकः ।

---

वक्ष्यमाणत्वात् । गुरुलघ्वो रिदं गुरुलाघवं । एवंपितृपैतामहम् । वातपित्तयोः शमनं कोषनं वा वातपैत्तिकम् । एवं वातश्लैष्मिकम् । एकपुरुषस्य भाव एकपौरुष्यम् ।

अमृता०—१०. अवयवादिति । नृसिंह प्रत्यये परे अवयव वा चकात् परस्य ऋतु-वाचिशब्दस्य उत्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रः स्यात् । पूर्ववार्षिक इति—वर्षाभ्यो माधव ठ इति वक्ष्यते । वर्षा शब्दो नित्यं बहुवचने प्रयुज्यते इति दृष्टान्तितम् । पूर्वभाग इत्यर्थ कथनेन ह्यवयववत्त्वं दर्शितम् । प्रत्युदाहरणे गतास्विति पूर्वासु इत्यस्यैवार्थः, तेन चातीत वर्षाप्रतीतेरवयवत्वाभावान्न तूत्तरपद वृष्णीन्द्रः । अवयव एकस्यैव वस्तुनोऽङ्ग-मिति ।

---

ऽप्येतैः सूत्रैर्वाध्यते । गुरुलघ्वोरिदं गुरुलाघवं । पितृपितामहयोरिदं पितृपैतामहमित्यत्र द्वये तस्येदमित्यनेन केशवणः । वातपित्तयोः शमनंकोपनं वेत्यर्थे वातपैत्तिकं । एवं वातश्लैष्मिकं । वातपित्तश्लेष्मसन्निपातेभ्यः शमनकोपनयोरित्यनेनात्र माधवठः । एक-पुरुषस्य भावः एकपौरुष्यमित्यत्र भावे नृसिंहयः । इत्यादिपदेन, परस्यार्थः परार्थः संहतस्य परार्थः संहतः परार्थो येन वा इति संहतपरार्थस्तस्य भाव इति संहतपारार्थ्यमित्यादयोऽपि यथास्वमूह्याः ॥ ९ ॥

बाल०—अव । नृसिंहे परे अवयववाचकादुत्तरस्य ऋतुवाचकोत्तरपदस्यादि-सर्वेश्वरस्य वृष्णीन्द्रो भवति । ऋतोरिति नेदं स्वरूपग्रहणं यतः स्वरूपे अवयवं न सम्भवति । यच्चावयवं वर्णात्मकं ऋरूपं तुरूपञ्च न तद्व्यभिचारित्वात् । एवमवय-वादित्यपि न स्वरूपग्रहणं तथा सति अवयवार्त्तवमित्यस्यैव युक्तत्वादित्यत उ यथैवा-सामञ्जस्यं तस्मादवयववाचकं ऋतुवाचकमित्येव सङ्गतं । भङ्ग्यैतदेव वर्षाणां पूर्वभागे जात इत्यर्थकथनेन वक्ष्यते । वाक्योदाहरणमर्थकथनञ्च स्वयमेवोक्तं । किन्वत्र वर्षाभ्यो माधवठः । वर्षाशब्दः नित्यबहुवचनान्त इत्यप्यत्र बहुवचनान्तप्रयोगेण दर्शितमिति । एवमित्यनेन अपरशरदि भव इत्यादि पूर्ववत् । किञ्चात्र केशवणः । अवयवात् किं किमर्थं यर्हि न स्यात्तर्हि न स्यात् । पूर्वास्वित्यनेन श्यामरामसमासोऽप्यत्र दर्शितः । ततः समासनिष्पन्नान्माधवठः । गतास्विति न समासार्थं किन्त्ववयवनिरासार्थं । पौर्ववर्षिक इत्यत्र पूर्वपदस्यैवादिसर्वेश्वरस्य वृष्णीन्द्रो नोत्तरपदस्येति ॥ १० ॥

**११. सु-सर्वार्द्धेभ्यो देशनाम्नः ।**

सुशौरसेनकः सर्वशौरसेनकः अर्द्धशौरसेनकः ।

**१२. दिशस्त्वमद्राणाम् ।**

पूर्वशौरसेनकः । मद्राणान्तु—पौर्वमद्रः ।

**१३. संख्यातः संवत्सर-संख्ययोः ।**

द्विसाम्वत्सरिकः । संख्यायाः—त्रिसाप्तिकः ।

---

**अमृता०**—११. सुसर्वेति । नृसिंहे परे सुसर्व अर्द्ध इत्येतेभ्यः परस्य देशनाम्नः आदि सर्वेश्वरस्य वृष्णीन्द्रः स्यात् । सुप्रभृतिभ्य उत्तरमत्र देशनाम ह्युत्तरपदे तिष्ठतीति तस्यैव वृष्णीन्द्रो ज्ञेयः । सुशौरसेनक इति—सुशूरसेनेषु देशेषु जातादिरित्यर्थे—आदि वृष्णीन्द्रादपि बहुवचन विषयाज्जनपदाद् वु नृसिंह इति वुः, वो रकः अपिशब्दादनादि वृष्णीन्द्राच्च । एवं सर्व शूरसेनेषु जातादि रर्थो योज्यः ।

**अमृता०**—१२. दिश इति । नृसिंहे परे दिग्वाचिभ्य उत्तरेषां मद्रभिन्नानां देशनाम्नामादिसर्वेश्वरस्य वृष्णीन्द्रः स्यात् । पूर्वं शूरसेनेषु जातादिरित्याद्यर्थे वुः—पूर्वशोरसेनकः । एवमुत्तर वाञ्चालक इत्यादि । पूर्वं मद्रेषु भवः पौर्वमद्र इति केशवणः, अत्रतु पूर्वपदवृष्णीन्द्रः ।

**अमृता०**—१३. संख्यात इति । नृसिंहे परे संख्यावाचकादुत्तरयोः संवत्सर-संख्ययोः पूर्ववत् कार्यं स्यात् । द्विसाम्वत्सरिक इति—द्वौ संवत्सरौ अधीष्टो भृतो भूतो भावी वेत्यर्थेषु कालात् माधव ठः । त्रिसाप्तिक इति—तिस्रः सप्ततयः परिमाण-मस्येत्यर्थे माधवठः ।

---

**बाल०**—सुस । नृसिंहे परे सुसर्वार्द्धेभ्यः परस्य देशनाम्न उदरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रो भवति । सुशूरसेनेषु जातादिरित्यर्थे सुशौरसेनक इति । एवं सर्वशूरसेनेषु जातादिरिति अर्द्धशूरसेनेषु जातादिरिति ॥ ११ ॥

**बाल०**—दिश । नृसिंहे दिशः दिग्वाचकादुत्तरेषां मद्रभिन्नानां देशनाम्नामादि-सर्वेश्वरस्य वृष्णीन्द्रो भवेत् । पूर्वशूरसेनेषु जातादिरिति पूर्ववत् । एवमुत्तरशौरसेनकादय इत्यत्र द्रष्टव्याः । सुशौरसेनकादिषु आदिवृष्णीन्द्रादपि बहुवचनविषयाज्जनपदाद्वुर्नृसिंह इत्यनेन नृसिंहवुः । मद्राणान्तु रूपं यथा । पूर्वमद्रेषु भवः पौर्वमद्र इत्यत्र केशवणः पूर्वपदस्य वृष्णीन्द्रश्च ॥ १२ ॥

**बाल०**—संख्यातः । संख्यावाचकादुत्तरयोः संवत्सरसंख्यावाचकयोरादिसर्वेश्वरस्य वृष्णीन्द्रो भवति नृसिंहे परे । द्विसाम्वत्सरिक इत्यत्र द्वाभ्यां सम्वत्सराभ्यां निर्वृत्त इत्यर्थे द्वौ संवत्सराधीष्ट इत्यर्थेच कालान्माधव-ठः । त्रिसाप्तिक इति तिस्रः सप्ततयः परिमाणमस्येत्यर्थे माधवठः ॥ १३ ॥

## १४. संख्यायाः वर्षस्याभाविनि ।

द्विवार्षिकः पञ्चवार्षिकः । अभाविनि किम्—द्विवर्षे भविष्यति द्वैवर्षिकम् ।

## १५. संख्यायाः परिमाणस्याशाणस्य ।

द्वि नैष्किकम् । शाणस्य तु—द्वैशाणम् ।

## १६. ओष्ठपदा-भद्रपदयो र्जातार्थे ।

प्रोष्ठपादो वालः, भद्रपादः । भावार्थेतु—प्रौष्ठपदो मेघः ।

---

**अमृता०**—१४. संख्याया इति । नृसिंहेपरे संख्या वाचकात् परस्य वर्षस्यादि सर्वेश्वरस्य वृष्णीन्द्रो भवति, स चेत्तद्धितो भविष्यदर्थे न भवेत् । द्विवार्षिक इति—द्वौ वर्षा वधीष्टः, द्वयो र्वर्षयो र्जात वेत्यर्थे माधव ठः । एवं पञ्चवार्षिक इति च ।

**अमृता०**—१५. संख्यायाइति । नृसिंहेपरे संख्यावाचिन उत्तरस्य शानवर्जित परिमाणस्यादिसर्वेश्वरस्य वृष्णीन्द्रः स्यात् । द्विनैष्किकमिति—द्वाभ्यां निष्काभ्यां क्रीतं, द्वौ निष्कौ परिमाणमस्येति वार्थे माधवठः । निष्कस्तु तोलक द्वयम् । द्वैशानमिति पूर्ववत् क्रीतार्थे परिमाणार्थे वा केशवणः । शाणस्तु निकषः कष इत्यमरः ।

**अमृता०**—१६. प्रोष्ठेति । नृसिंहेपरे जातार्थे प्रोष्ठपदादि शब्दयोः पूर्ववद् वृष्णीन्दः स्यात् । एते द्वे नक्षत्रविशेषौ । प्रोष्ठपदा नक्षत्रेण युक्तः काल इत्यनेन विहितो यः केशवण स्तस्य स्मरहरः, तत्र जातार्थे पुन ऋतुनक्षत्राभ्याञ्चेति केशवणः—प्रोष्ठपादः । एवं भद्-पाद इति च ।

---

**बाल०**—संख्यायाः । अभविष्यदर्थे नृसिंहे परे संख्यावाचकात् परस्य वर्षशब्दस्य वृष्णीन्द्रो भवति । द्वौ वर्षावधीष्ट इत्यर्थे पञ्चवर्षा अधीष्ट इत्यर्थे द्विवार्षिकादिद्वयं । वर्षात् खमाधवठावित्यनेनात्र माधवठः । द्वैवर्षिकमित्यत्र पूर्वस्यैव वृष्णीन्द्रः ॥ १४ ॥

**बाल०**—संख्यायाः परि । संख्यावाचिनः परस्य शाणवर्जितस्य परिमाणस्यादि-सर्वेश्वरस्य वृष्णीन्द्रो भवति नृसिंहे । द्वौ निष्कौ परिमाणमस्येति द्विनैष्किकं । निष्कस्तु तोलकद्वयं । तदस्य परिमाणमित्यनेनात्र माधवठः । द्वौ शाणौ परिमाणमस्येति । द्वैशाणमित्यत्र द्वित्रिपूर्वाभ्यां शाणशताभ्यां केशवणश्च वेत्यनेन केशवणः पूर्वपदस्य वृष्णीन्द्रश्च । शाणो मासचतुष्टयं । (शाणस्तु निकषः कषः । इत्यमरः । त्रयं स्वर्णादीनां सदसद्‌बोधने प्रस्तरे कष्टीति ख्याते इति तट्टीका) ॥ १५ ॥

**बाल०**—प्रोष्ठ । नृसिंहे परे जातार्थे प्रोष्ठपदाभद्रपदयोः सम्बन्धिनोरुत्तरपदयोरादि-सर्वेश्वरस्य वृष्णीन्द्रो भवति । प्रोष्ठपाद इति प्रोष्ठपदा नाम नक्षत्रविशेषः । सामीप्य-सम्बन्धात् प्रोष्ठपदाशब्देन तत्समीपवर्त्ती चन्द्रोऽभिधीयते । तस्माच्छब्दात् तद्युक्ते काले

## १७. उभयोः पदयोः ।

प्रभुरयम् ।

## १८. हृद्भगसिन्ध्वन्तानाम् ।

**अमृता०**—१७. उभयोः पदयो र्वृष्णीन्द्रः स्यादादिसर्वेश्वरस्येत्यधिकारः ।

**अमृता०**—१८. हृदिति । नृसिंहे परे हृद्भग सिन्धुइत्येते अन्ते येषां तेषाभुभय पदयोरादि सर्वेश्वरस्य वृष्णीन्द्रः स्यात् । सौहार्दमिति—सुहृन्मित्रे इत्यनेन पीताम्बरे निपातितो यः सुहृच्छब्द स्तस्मात् केशवणः, तस्येदमित्यर्थे तस्य भाव इत्यर्थे वा । तथा सुहृदय शब्दस्य "हृदयस्य हृल्लेखलासयो र्याणो श्चे"ति अणि हृदादेशे कृते च सौहार्दमिति सिध्यति । तथा स्वाभाविक हृच्छब्दाच्च सौहार्दम् । सुभगस्य भावः सौभाग्यम् । सुर-सिन्धोरिदं सौरसैन्धवमिति । एवं सुभगाया अपत्यं सौभागिनेयः, दुर्भगाया दौर्भागिनेयः । सौहृदमित्येक इति—दीक्षितादय एवं मन्यन्ते । हृदयादेशस्येति सुहृन्मित्रे इत्यनेन निपातितादेशस्य सौहृदम् । यद्वा हृदयस्य हृद् यदुषु वेत्यादेशस्य । ननु शसादि स्वादि-प्रत्ययानामेव यदुसंज्ञत्वादिह तद्धित प्रत्यये कुतस्तत्प्राप्तिरिति चेत्तत्राह—क्वचित्तद्धितेऽ-पीति । विधानसूत्रे ने तद्धिततेषु च क्वचित् क्वचित् प्रत्ययेऽपि तदादेशविषयं कुर्वन्तीति तन्मते तद्धितेऽपि हृदादेशे सिद्धे तस्योभयपदवृद्धिं नस्वीकुर्वन्ति किन्तु—स्वान्तं हृन्मानसं मन इति कोषोक्तस्वाभाविक हृच्छब्दस्य हि सूत्रानुबन्धि वृद्धिकार्यं विदधतीति विशदार्थः ।

तदेतन्मतं समीचीनतयानुमोदितंग्रन्थकृता । लभ्यते चैतत्प्रयोगः कविवाक्येषु,

---

वाच्ये नक्षत्रेण युक्तः काल इत्यनेन विहितो यः केशवणः सतु महाहरः । स्मरहरः कालाविशेषे प्रागुक्तनक्षत्रप्रत्ययस्यैवेति वर्त्म इति विधिवाक्येन महाहरस्यैव स्मरहरसंज्ञा वक्ष्यते । ततश्च प्रोष्ठपदानक्षत्रयुक्ते काले जात इत्यर्थे ऋतुनक्षत्राभ्याश्चेत्यनेन केशवण इति । एवं भद्रपदे जातः भद्रपाद इति । भद्रपदशब्दस्तारकाविशेषाणां तिरोहिता-वयवभेदं समुदायमाचष्टे । अत एकत्ववृत्तिः स्वभावात् पुलिङ्ग इतिच रक्षितः । प्रोष्ठ-पदासु भवः इत्यर्थे प्रोष्ठपद इत्यत्र पूर्वपदस्यैव वृष्णीन्द्रः । प्रोष्ठपदाशब्दस्तारका-विशेषाणामुद्रिक्तावयवभेदं समुदायं वक्ति अतो बहुत्ववृत्तिः स्वाभावाल्लक्ष्मीलिङ्गः ॥१६॥

**बाल०**—उभ । उभयोः पदयोर्यथास्वं वृष्णीन्द्रो भवति नृसिंहे । अधिकारोऽयं । आदिसर्वेश्वरस्येति विभुरप्यत्रानुवर्त्तते ॥ १७ ॥

**बाल०**—हृद्भ । हृद्भगसिन्धवः अन्ते येषां ते हृद्भगसिन्ध्वन्तास्तेषां हृद्भगसिन्ध्व-न्तानमुभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रः स्यान्नृसिंहे । द्वन्द्वात् परः पूर्वो वेत्युक्तादन्त शब्देन सह सर्वेषामन्वयः । तेन कृदन्तस्येत्यादि योज्यं सुहृदः इदं सौहार्दं । सुहृन्मित्रे इत्यनेन शोभनं हृदयमस्येति पीताम्बरे निपातात् सुहृच्छब्दात् तस्येदमित्यनेन केशवणः । तथा सुहृदयशब्दादपि सुहृदयस्य भाव इत्यर्थे केशवणे कृते हृदयस्य हृल्लेखलाशयोर्याणो-श्चेत्यनेन हृदादेशेच कृते सौहार्दमितिच । हृदयसमानार्थो यो हृच्छब्दस्तदन्तस्याप्येवं

सौहार्दं सौभाग्यं सौरसैन्धवम् । हृदिति प्रतिपदोक्तग्रहणाद् हृदयादेशस्य सौहृदमित्येके । ते खलु क्वचित्तद्धितेऽपि हृदाद्यादेशं मन्यन्ते ।

## १९. अनुशतादीनाञ्च ।

आनुशतिकं आनुसम्वत्सरिकम् । एवं इहलोक परलोक सर्वभूमि पुष्कर सद् अधिदेव अधिभूत अध्यात्म अनुहोड अवहोडादीनाम् ।

---

यथा—विनिकीर्य क्षणभङ्गसौहृदमिति कुमारसम्भवे । तथा—भावस्थिराणि जननान्तर-सौहृदानीति शाकुन्तले । अत्र उद्गात्रादेश्चेति भावे केशव णः । सौहृद्यमित्येक इति पाठे तु ब्राह्मणादेराकृतिगणत्वाद् भावे नृसिंह यः ।

अमृता०—१९. अन्विति । नृसिंहे परे अनुशत प्रभृतीनाञ्चोभयपदवृष्णीन्द्रः स्यात् । आनुशतिकमिति—शतेन क्रीतः शतिकः, पश्चादनुना समासः अनुशतिकः । तत स्तस्येद-मित्यर्थे केशवणः । आनुसम्वत्सरिकमिति—तत्र कार्यं, तस्मै दीयते, तेननिर्वृत्त इत्याद्यर्थे कालान्माधव ठः । आदि शब्दग्राह्यानन्यांश्चोद्दिशति—एवमित्यादिना । इह लोके भव इत्यर्थे—लोकोत्तर पदादि माधवठः ऐह लौकिकः । एवं पारलौकिक इति च । सर्वभूमे र्निमित्तं संयोग उत्पातो वेत्यर्थे, तथा सर्वभूमि विषयोऽस्येत्यर्थे वा केशवणः सार्वभौमः । पुष्करसदोऽपत्यं, वाह्वादित्वान्नृसिंह इः—पौष्करसदिः । अधिदेवे भव इत्यर्थे अध्यात्मादे रिति माधव ठः—आधिदैविकः । एवमाधिभौतिकः आध्यात्मिक इति च । अनुहोडेन चरतीति माधव ठः—आनुहौडिकः । एवमावहौडिकः । अत्रचादिपदेन—सर्वलोके विदितः सार्वलौकिकः, परदारं गच्छति पारदारिकः, शतकुम्भेभवः शातकौम्भ इत्यादयश्च ज्ञेयाः ।

---

भवति । हृदिति सामान्यग्रहणात् । सुभगस्य भाव इत्यर्थे सौभाग्यमित्यत्र ब्राह्मणादे-राकृतिगणत्वात् नृसिंह यः । सुरसिन्धोरिदमित्यर्थे सौरसैन्धवमिति । तस्येदमित्यनेनात्र केशवणः । सौहृद्यमित्येके इत्यत्र आहुरिति शेषः । ये एवं वदन्ति ते खल्वेव क्वचित् तद्धितेऽपि परे हृदयादीनां हृदाद्यादेशं मन्यन्ते इत्यनेन तेषामयमभिप्रायः सूचितः । सुहृन्मित्र इत्यनेन सुहृदादेशस्य निपातत्वात् पूर्वोत्तरपदविभागो नास्तीति उभयपदस्य वृष्णीन्द्राभावात् सौहृद्यमिति । अतएव तन्मते हृदयसदृशार्थहृच्छब्दान्तस्यैव सौहार्दं सौहार्द्यमित्यादि । न हृदयादेशहृच्छब्दान्तस्येति । एतत्तु बहूनां मतमिति ग्रन्थकृता इत्येक इत्युक्तं । यतः सर्वे पण्डिताः सामान्यं सुहृदं गृह्णन्ति, यदि तन्मतमेव मतं स्यात्तदा प्रोष्ठपदाभद्रपदयोः पूर्वोत्तरपदविभागाभावात् प्रोष्ठपादः भद्रपादः इत्यत्रोत्तरपदे वृष्णीन्द्रो न स्यात् । यद्येवं तर्ह्यस्माकं मते सौहृद्यमिति कथं सिध्येत् ? उच्यते । तद्धितस्य बाहुल्यात् तद्धितकार्यस्यापि बाहुल्यं तेन, क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिरित्युक्तानुसारेण नात्रोत्तरपदस्य वृष्णीन्द्र इति सर्वसमञ्जसं ॥ १८ ॥

बाल०—अनु । अनुशतमादिर्येषां ते अनुशतादयस्तेषामनुशतादीनां नृसिंहे परे पूर्वपदस्योत्तरपदस्य चादिसर्वेश्वरस्य वृष्णीन्द्रो भवति । आनुशातिकमिति शतेन क्रीत

**२०. देवताद्वन्द्वे च।**

**सौर्याचान्द्रमसं सूक्तं हवि र्वा। सूक्तहविषोरेवाभिधानम्। नेह—ब्राह्मविशाखो देशः।**

**२१. नेन्द्रस्य परस्य।**

**सौमेन्द्र श्चरुः।**

---

**अमृता०**—२०. देवतेति। नृसिंहे परे देवताद्वन्द्वे विषये सूक्त-हविषोरेव वाच्ययोरुभयपद वृष्णीन्द्रः स्यात्। सूक्तं वेदमन्त्रः, हवि घृंतम्, तत्तदर्थे सतीत्यर्थः। सौर्याचान्द्रमसमिति—सूर्या चन्द्रमसौ देवते अस्य सूक्तस्य हविषो र्वेत्यर्थे सास्य देवतेति केशवणः। सूर्यश्च चन्द्रमाश्चेति द्वन्द्वे—इन्द्रादे ररामस्याराम इत्याराम उक्त एव। एवमाग्निमारुतमित्यादि च। नेहेति—इह सूक्त-हवि र्वाच्यत्वाभावान्नोभयपद वृष्णीन्द्र इत्यर्थः।

**अमृता०**—२१. नेन्द्रस्येति। नृसिंहे परे सूक्त हविषो र्वाच्यत्वेऽपि देवताद्वण्द्वे इन्द्रशब्दस्य परस्य तु वृष्णीन्द्रो न भवति। सौमेन्द्र इति पूर्ववत् केशवणः। चरु र्यज्ञपायसं हविविषयएव। एवमाग्नेन्द्र इति च। ननु सोमशब्दस्यारामेण सह इन्द्रस्य इरामस्य सन्धौ एरामे कृते वृष्णीन्द्रस्य प्राप्तिरेव नास्तीति किमिह प्रतिषेधेनेति चेत्? सत्यं, तदेतच्च निषेधवचनं ज्ञापयति—सन्धिर्विषयापेक्षकः क्वचिदिति। तेन पूर्वोत्तरपदयो र्वृष्णीन्द्रादिकार्यं प्रागेव भवति, सन्धिकार्यन्तु पश्चात्, पूर्वोत्तरविभागविवेकश्च सन्धि निवर्त्त्य हि कर्त्तव्यः, वैयाकरणवत्।

---

इत्यर्थे शताट् ठरामयरामावशतात्मके इत्यनेन शतात् ठरामः शतिकः, पश्चात् अनुगतः शतिको येन सोऽनुशतिकः। तस्मात् तस्येदमित्यनेन केशवणः। आनुसम्वत्सरिकमिति तत्र कार्यं तस्मै दीयते तेन निर्वृत्त इत्याद्यर्थे कालान्माधवठ इति ठः॥ १९॥

**बाल०**—एवं। अतिदेशोऽयं। नृसिंहे परे इहलोकादीनामुभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रो भवति। इहलोके भव इत्यर्थे लोकोत्तरपदादित्यनेन माधवठः ऐहलौकिकः। एवं पारलौकिकः। सर्वभूमिर्विषयोऽस्यत्यर्थे सोऽस्य विषय इत्यनेन केशवणः। तदर्थंयोगात् पातावित्यर्थे वा केशवणः। सार्वभौम इति। पुष्करसदोऽपत्यं पुमानित्यर्थे वाह्वादित्वात् नृसिंहइः पौष्करसादिरिति। देवमधिकृत्य इति विग्रहे सप्तम्याद्यर्थे नित्यमव्ययमित्यनेन प्रथमतोऽव्ययीभावस्ततस्तस्मिन् भव इत्यर्थे अध्यात्मादेरत्यनेन माधवठः। आधिदैविकः एवमाधिभौतिकः आध्यामिक इति। अनुहोडेन तरतीत्यर्थं तेन तरतीति माधवठः। आनुहौडिकं, एवमावहौडिकमिति। आदिशब्दात् आभिगामिक इत्यादयोऽपूह्याः। केषाञ्चिदयमनुहोडादिर्गणः। स यथा। अनुहोडचतुर्विद्यान्तर्हतवध्योगद्धरुकताभिगमाः। अनुसम्वत्सरपुष्करसदस्यहत्यप्रयोगश्च। कुरुपञ्चालानुशतिकसूत्रलडाः सर्वलोकपरलोकौ। इहलोकसर्वपुरुषाधिभूतशतकुम्भराजपुरुषाश्च। असिहात्यादिकशुद्धोऽगारवेणुस्तथास्यहेतिश्च। अधिदेवसर्वभूमी इत्यनुहोडादयोऽपरे ज्ञेयाः॥ २०

## २२. न च त्रिविक्रमाद् वरुणस्य ।

ऐन्दावरुणम् । त्रिविक्रमात् किम्—अग्निवारुणम् ।

## २३. प्राच्यनगरान्तस्य ।

उभयपदवृद्धिः । पौण्ड्रनागरः सौह्मनागरः ।

---

**अमृता०**—२२. नचेति । त्रिविक्रमादुत्तरस्य वरुणस्य नृसिंहेपरे वृष्णीन्द्रो नस्यात् । त्रिविक्रमादिति—इन्द्रादे ररामस्याराम इत्यनेन विहितो यो वृष्णीन्द्र स्तस्मादुत्तरस्य वरुणस्येत्यर्थः । ऐन्दावरुणमिति—इन्दावरुणौ देवते अस्येत्यर्थे केशवण: । अग्निवरुणौ देवते अस्येति आग्निवारुणम् । अत्राग्नि शब्दस्य अरामान्तत्वाभावेन त्रिविक्रम विरहाद् वरुणस्य न त्रिविक्रमनिषेधः ।

**अमृता०**—२३. प्राच्येति । प्राचि भवः प्राच्योदेशः । नगरमिति अन्ते यस्य स नगरान्तः, प्राच्यश्चासौ नगरान्तश्चेति तथा, तस्योभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रः स्यान्नृसिंहे परे । नचेति निषेधानुवृत्ति वारणाय—उभयपदवृद्धिरिति वृत्तौ पुनरुक्तिः । पौण्ड्रनागर इति—पुण्ड्र नाम ( पूर्वदेशीथ ) नगरे भव इत्यर्थे केशवणः । एवं सौह्म नागर इति च । पुण्ड्रसुह्मेति ख्यातं नगरद्वयं पूर्व देशे हि वर्त्तते । प्राच्येति किम्—मदनगर मुदीचि, तत्रभवः मादनगरः । नगरान्तस्येति किम्—पौण्ड्रपत्तनः ।

---

**बाल०**—देव । सूक्तहविषोरिति वृत्तित्वेन दर्शनादेवं व्याख्येयं । सूक्तहविषोर्वाच्ययोर्यो देवताद्वन्द्वो भवति, नृसिंहे परे तस्मिन् देवताद्वन्द्वे उभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रो भवति । सूर्याचन्द्रमसौ देवते अस्येत्यर्थे सास्य देवता इत्यनेन केशवणः सौर्याचान्द्रमसमिति । सूक्तमिति । आग्निमारुतीमनड्वाहामालभेत इत्यादिमन्त्रं । हरिर्घृतमिति । नेहेति सूक्तहविषोरभावादिति शेषः । ब्रह्मविशाखयोरयमित्यर्थे तस्येदमित्यनेन केशवणः ब्राह्मविशाख इति । अत्र देशवाच्यत्वादुत्तरपदस्य न वृष्णीन्द्रः । देवताद्वन्द्वे सति नृसिंहे परस्य परभूतस्येन्द्रशब्दस्यादिसर्वेश्वरस्य वृष्णीन्द्रो न भवति । सोमेन्द्रौ देवते अस्येत्यर्थे सास्येत्यनेन केशवणः । सौमेन्द्र इति चरुर्यज्ञपायसं । एवमाग्नावैष्णवादयस्त्रिविक्रमेण साधव इत्यनेन निपातसिद्धादाग्नेन्द्रशब्दात् केशवणः । आग्नेन्द्र इतिच । ननु अद्वयमिद्वये ए इत्यनेन इन्द्रस्येरामेण सह पूर्वरामस्य एरामे कृते पूर्वपदान्तस्थितत्वाद्वृष्णीन्द्रसम्भावनैव नास्ति किमनेन विधानेन सत्यं, विषयापेक्षकः क्वचिदित्यनेन सन्धेर्विषयापेक्षकत्वं यदुक्तं तस्यैव ज्ञापकमिदं तस्मात् प्रथमतः सन्धिनं स्यादतो वृष्णीन्द्रे प्राप्ते निषेधविधानमिति ॥ २१ ॥

**बाल०**—नच । त्रिविक्रमादुत्तरस्य वरुणशब्दस्यादिसर्वेश्वरस्य वृष्णीन्दो न स्यान्नृसिंहे परे ऐन्द्रावरुणमिति सास्य देवतेत्यर्थे आग्नावैष्णवादय इति निपातनिष्पन्नात् इन्द्रावरुणशब्दात् केशवणः । आग्निवारुणमिति आग्नावैष्णवगणाभावात् अग्नेरिरामो न स्यात्, किन्तु देवताद्वन्द्वे चेत्यनेन पूर्ववत् केशवणान्तः ॥ २२ ॥

## २४. जङ्गल धनु वलजान्तस्य विभाषितमुत्तरम् ।

कौरु जाङ्गल: वैश्वधैनव: सौवर्णवालज: । पक्षे कौरुजङ्गल इत्यादि ।

## २५. अर्द्धात् परिमाणस्य पूर्वस्यतु वा ।

आर्द्ध द्रौणिकं अर्द्धद्रौणिकम् ।

## २६. नार्द्धात्परिमाणस्थस्यारामस्य, पूर्वस्य तु वा ।

---

**अमृता०**—२४. जङ्गलेति । नृसिंहे परे जङ्गल धेनु वलज इत्येते अन्तेयस्य तस्योत्तरपदं विभाषया वृष्णीन्द्र: स्यात्, पूर्वपदन्तु नित्यमित्यर्थ: । आदि सर्वेश्वरस्यैव स भवेदित्यणुवर्त्तत एव । कुरुजङ्गलेषु भव: कौरुजाङ्गल कौरुजङ्गल इति । एवं विश्व धेनुषु भवो वैश्वधैनव इति द्वयं तथा सुवर्णवलजेषु भव: सौवर्ण वालज इति द्वयंज्ञेयम् । जङ्गलाद्यन्ता: शब्दा देशवाचिन इति बोध्यम् । धैनव इति उद्धयस्य गोविन्दो वक्ष्यते ।

**अमृता०**—२५. अर्द्धादिति । नृसिंहे परे अर्द्धशब्दादुत्तरस्य परिमाण वाचकस्य वृष्णीन्द्रो भवति, तत्रपूर्वस्य ( अर्थादर्द्धस्य ) वृष्णीन्दो वा भवति । अर्द्धदोणेन क्रीतमित्यर्थे माधव ट:—आर्द्धदौणिकमित्यादि ।

**अमृता०**—२६. नार्द्धादिति । पूर्वस्यैव प्रतिषेधोऽयम् । परिमाणवाचकस्य आदि सर्वेश्वरो यद्यरामो भवेत्तर्हि तस्य न वृष्णीन्द्र:, तद्वर्जमन्येषां सर्वेश्वराणान्तु वृष्णीन्द्रो

---

**बाल०**—प्राच्य । प्राचि भव: प्राच्य: । नगर: अन्ते यस्य स नगरान्त: । स चासौ स चेति प्राच्यनगरान्तस्तस्य । वृत्तिमाह उभयेति । उभयपदयोर्वृद्धिरुभयपदवृद्धि: प्राचीनमतेनात्र वृद्धिरित्युक्तं । पुण्ड्रश्चासौ नगरश्चेति पुण्ड्रस्य नगर इति वा पुण्ड्रनगर: । तस्यायं तस्मिन् भावो वा इत्याद्यर्थे केशवण: पौण्ड्रनागर: । पुण्ड्रोऽत्र देशविशेष: स प्राग्दिग्भव: नगरान्तश्चेति । एवं सौह्मनागर: । प्राच्ये देशे वाच्ये नगरान्तस्येत्येके ॥२३॥

**बाल०**—जङ्ग । जङ्गलधेनुवजना इत्येते अन्ते यस्य तस्य नृसिंहे विभाषितं यथा स्यात्तथा उत्तरमुत्तरपदं वृष्णीन्दो भवति, अर्थात् नृसिंहे परे जङ्गलधेनुवनजान्तस्य विकल्पेनोत्तरपदस्यादिसर्गेश्वरस्य वृष्णीन्द्र: स्यात्, पूर्वपदस्यतु नित्यमिति निर्गलितोऽर्थ: । कुरुजङ्गल: कुरुक्षेत्रं तत्र भव इत्यर्थे केशवण: कौरुजाङ्गल इति । विश्वा धेनुर्यस्य स विश्वधेनुस्तस्यापत्यं पुमानित्यर्थे केशवण: । उद्वयस्य गोविन्द इत्यनेन गोविन्द: वैश्वधैनव इति । सुवर्णेन निर्मितो वलज इत्यर्थे तेन निर्मित इत्यनेन केशवण: । सौवर्णवालज इति । वलज: सौध: । इत्यादीत्यादिपदेन वैश्वधेनव: सौवर्णवलज इति ॥ २४ ॥

**बाल०**—अर्द्धात् । नृसिंहे अर्द्धादुत्तरस्य परिमाणवाचकस्यादिसर्वेश्वरस्य वृष्णीन्द्रो भवति पूर्वपदस्यादिसर्गेश्वरस्यतु विकल्प: अर्द्धद्रोण: परिमाणमस्य अर्द्धद्रोणेन क्रीतं वा इत्याद्यर्थे, अर्द्धं समविभागे वा इति कृष्णपुरुषसिद्धात् अर्द्धद्रोणात् माधवठ: । आर्द्धद्रौणिकमित्यादिद्वयं ॥ २५ ॥

आर्द्धप्रस्थिकं अर्द्धप्रस्थिकम् ।

## २७. नञः शुचीश्वर-क्षेत्रज्ञ-कुशल-निपुणानां, पूर्वस्य तु वा ।

उत्तर पदस्य वृद्धिरेव । आशौचं अशौचम्, आकौशलं अकौशलम्, अनैपुणं अनैपुणम् । अनीश्वराक्षेत्रज्ञौ तत्पुरुषावेव ब्राह्मणादित्वाद् भाव यणन्तौ । अनैश्वर्यं अनैश्वर्यम् ।

---

भवत्येवेति तात्पर्यम् । अर्द्धप्रस्थेन क्रीतमित्यर्थे पूर्ववत् ठः । अत्र परिमाणवाचक प्रस्थस्यादिसर्वेश्वरः अराम इति नवृष्णीन्द्रः ।

अमृता०—२७. नञइति । नृसिंहे परे नञ उत्तरेषां शुचिप्रभृतिपञ्चानामादि-सर्वेश्वरस्य वृष्णीन्द्रः स्यात्, पूर्वपदस्य नञस्तु विकल्पेन संभवति । पूर्वतो नेत्यनुवृत्ति निरासाय वर्त्तयति—उत्तरपदस्य वृद्धिरेवेति ।

अशुचेरिदं केशवणः—अशौचमिति द्वयम् । एवं सर्वत्र कल्प्यम् । तेषां समासेविषये तु मतभेदोऽस्तीत्यत माह—तत्पुरुषावेवेति । तेन न ईश्वरः अनीश्वरः, न क्षेत्रज्ञः अक्षेत्रज्ञ इत्येवं समासान्तौ, तयो र्भावः—आनैश्वर्यमित्यादि । ब्राह्मणादित्वादिति—गुण वचनाद् ब्राह्मणादेश्च नृसिंह य इति वक्ष्यते । तत्र ब्राह्मणादेश्चाकृतिगणत्वादनयो र्भावे नृसिंह यः । अनयो रेव तत्पुरुषत्वेनावधारणादन्येषान्तु तत् पुरुषत्वे पीताम्बरत्वे वेति ननियमः । तेन च नशुचिः अशुचिः, न विद्यते शुचि र्यस्य सोऽशुचि रित्युभयथा हि समासे वृद्धि रिष्टेति-हृदयम् ।

---

बाल०—नार्द्धात् । अर्द्धशब्दादुत्तरस्य परिमाणवाचकस्थस्यारामस्य नृसिंहे वृष्णीन्द्रो न स्यात् पूर्वस्यादिसर्वेश्वरस्यतु स्यात् । आर्द्धप्रस्थिकमित्यादिद्वयं पूर्ववन्माधव-ठान्तं । सूत्रेऽरामस्येत्युक्तत्वात् आरामादिर्न गृह्यते तस्मादर्द्धखार्यां भवा इत्यर्द्धखारीत्यत्र पूर्वसूत्रेणोत्तपदस्य वृष्णीन्द्रो भवत्येव पूर्वपदस्यतु विकल्पः । एवं सति अर्द्धखारी भार्या यस्य सोऽर्द्धखारी भार्या यस्य सोऽर्द्धखारीभार्य इत्यत्र वृष्णीन्द्रहेतुतद्धितान्तलक्ष्मीररक्त-विकारयोरित्यनेन तुल्याधिकरणलक्ष्म्यां परे पूर्वस्य पुम्वद्भावनिषेध एव वृष्णीन्द्रहेतु-तद्धितान्तत्वात्, अन्यथा यद्यनेन उत्तरपदस्य वृष्णीन्द्रनिषेधः स्यात्तदा पूर्वपदस्यापि वृष्णीन्द्रनिषेधपक्षे वृष्णीन्द्रहेतुतद्धितान्तत्वाभावात् पुम्वद्भावः स्यात् यथा वैयाकरणभार्य इत्यादौ ॥ २६ ॥

बाल०—नञः । वृत्तिमाह उत्तरस्येति । नञ उत्तरेषां शुच्यादिपञ्चानामादि-सर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे पूर्वस्यतु नञो वा स्यात् । पूर्वस्येत्यनेनात्र नञ् गृह्यते । अन्यथा पूर्वसूत्रात् पूर्वस्यतु इत्यनुवर्त्तने सति पुनरत्र पूर्वस्येति ग्रहणमनर्थकं स्यात् । अशौचमिति अशुचेरिदमित्यर्थे तस्येदमित्यनेन केशवणः । एवमकुशलस्येदमिति । अनीश्वरेति तत्पुरुषावेव तत्पुरुषसिद्धावेव ब्राह्मणादित्वात् ब्राह्मणादिगणपठितत्वात्, तेन ईश्वरः अनीश्वरस्तस्य भाव इत्यर्थे आनैश्वर्यादिद्वयमिति । तथा अक्षेत्रज्ञस्य भावः आक्षैत्रज्ञं अक्षैत्रज्ञं । अनयोरेवकारेण तत्पुरुषेऽवधारणात् अशुच्यादीनां पीताम्बरसिद्धा

## २८. नञो यथातथ-यथापुरयोः पर्यायेण ।

अयाथातथ्यं आयथातथ्यम् । वृष्णीन्द्रो निवृत्तः ।

## २९. संसारस्य हरो भगवति ।

प्रभुरयम् ।

---

**अमृता०**—२८. नञ इति । नृसिंहे परे नञ उत्तरयो र्यथातथ यथापुरशब्दयो रादि सर्वेश्वरस्य वृष्णीन्द्रः स्यात् पर्यायेण क्रमेणेत्यर्थः । पूर्वपदस्य नञो वृष्णीन्द्रे सति नोत्तर पदस्य वृष्णीन्द्रः, अथवा उत्तर पदस्य वृष्णीन्द्रे न हि पूर्वपदस्य स इति फलितम् । यथतथ यथापुरशब्दौ अव्ययीभावे सिद्धौ । तत्र च तथा शब्देन सत्यं, पुरा शब्देन च पुरातनं लक्ष्यते । तथा सत्यमनतिक्रम्येति यथतथं, पुरा प्राचीनमनतिक्रम्येति यथा—पुरम्, इति स्थिते पश्चान्नञा समासः, अव्ययीभावत्वाद् ब्रह्मत्वं वामनत्वञ्च, तयो र्भाव इत्यर्थे ब्राह्मणादित्वान्नृसिंह यः । भाष्ये तु अयथातथा भावः अयाथातथ्यमित्याहुः । तन्मते यदृच्छादिगणान्तत्वेन सुप्सुपा समास इति भावः । वृष्णीन्द्ररूपविभुर्निवृत्तः ।

**अमृता०**—२९. संसारस्येति । अधिकार सूत्रम् । भगवत् संज्ञके प्रत्यये परे नाम्नः संसारस्य हरो भवति । अन्त्यसर्वेश्वरादिवर्णाः संसार संज्ञा इति, अकृष्ण स्थान सर्वेश्वरो भगवत् संज्ञ स्तद्धिते यश्चेति प्रोक्तं नामप्रकरणे । तद्धिते तु कृष्णस्थानस्य विरहात् केवल सर्वेश्वरो यश्च भगवत् संज्ञत्वेन मन्तव्यः, यावत् सम्भवविधिबलात्, अन्यथा सर्वेश्वराग्रहणे चकारवैयर्थ्यं स्यात् ।

---

नामपि आशौचमित्यादिकं स्यात् । न विद्यते शुचिर्यस्य सोऽशुचिस्तस्येदमित्यादितु पूर्ववत् । भावेतु त्वतापौ ब्रह्मलक्ष्म्यामित्यनेन अशुचित्वमशुचिता इत्यादि स्यात् ॥ २७ ॥

**बाल०**—नञो । नृसिंहे परे नञः परयोर्यथातथ-यथापुरयोरादिसर्वेश्वरस्य नञश्च पर्यायेण क्रमेण वृष्णीन्द्रो भवति । यर्हि यथातथ-यथापुर इत्येतयोवृष्णीन्द्रस्तदा नञो न भवति, यर्हिच नञो वृष्णीन्द्रो भवति तदा यथातथयथापुरशब्दयोर्नेति पर्यायार्थः । अयथातथमित्यस्य भावः । अयाथातथ्यमित्यादिद्वयं । तथा अयाथापूर्यं अयाथापूर्यमितिच । यथातथा-यथापुराशब्दौ यादृच्छादिगणपाठात् कृतकृष्णपुरुषसिद्धौ । तथाचोक्तं भाष्ये, अयथातथाभावः अयाथातथ्यमित्यादि । अस्मिन् पक्षेतु यथातथादिद्वयोर्वामनदर्शनोच्चारणं सूत्रे वेवदवद्व्यवहारात् । यद्वा, अनतिक्रमे इत्यनेनाव्ययीभावनिष्पन्नावेतौ किन्त्वनतिक्रमार्थमत्र दुष्पष्टमिति वृद्धोक्तानुसारेण यथातथमिति सत्यवचनं, यथापुरमिति पुरातनवचनमिति स्वीकार्यं । अव्ययीभावस्याव्ययत्वं ब्रह्मत्वञ्चेत्यनेन वामनदर्शनोच्चारणमविरुद्धं । पुनर्न यथातथमित्यनेन नञ्कृष्णपुरुषसिद्धाभ्यां ताभ्यां ब्राह्मणादेराकृतिगणत्वात भावे नृसिंहयः । ननु भावविहितनृसिंहयान्ताभ्यां याथातथ्य याथापूर्याभ्यां पश्चान्नञ्समासे कृते अयाथातथ्यमयाथापूर्यमिति । तथा अयथातथा अयथापुराशब्दाभ्यां भावविहितनृसिंहये कृते आयथातथ्यमायथापूर्यमिति सिध्यत्येव किं सूत्रेण । भद्रं । तदेतत् कृतं स्पष्टार्थं । इति वृष्णीन्द्रप्रकरणं समाप्तं ॥ २८ ॥

## ३०. नान्तस्य नत्वणीपोः ।

आग्निशर्मिः । नेह—सामनः, सुप्रेम्नी ।

## ३१. अह्नष्ठ-खरामयोरेव ।

द्व्यहः । ख ईनः—द्व्यहीनः । नियमान्नेह—आह्निकम् ।

---

**अमृता०**—३०. नान्तस्येति । भगवति परे नान्तशब्दस्य संसारहरः स्यात् किन्तु अणि ईपि ( तत्तद्रूपभगवति ) परे संसारहरो न भवति । आग्निशर्मि रिति—अग्नि शर्मणोऽपत्यं पुमानित्यर्थे—अराम बाह्वादिभ्यामिति नृसिह इः । अत्र इराम प्रत्ययस्य भगवत् संज्ञत्वेन तस्मिन् परे शर्मन् इत्यस्य यः संसारः अन्भाग स्तस्य हरः । नेहेति—अणीयोः परयो वर्जनादित्यर्थः । सामन इति—साम अधीते वेद वेत्ति केशवणः, स एवाणित्युक्तः । किञ्च अण् सामान्ये निषेधोऽयं वक्ष्यमाण विशेष विधानेन बाध्यते,—षन् हन् धृतराज्ञामेवानन्तानामण्यरामहर इत्यनेन । तत्र औक्षणमित्याद्युदाहरणम् । सुप्रेम्नः स्त्री सुप्रेम्नीति वमसत्सङ्गहीनस्येत्यनोऽरामहरः ।

**अमृता०**—३१. अह्नरिति । ट·खरामयोरेव परयोः अहन् शब्दस्य संसारहरः स्यान्नान्यत्रेति नियमः । द्व्यह इति—द्वयो रह्नोः समाहार इति त्रिरामी । राजाहः सखिभ्य इति टः, रात्राह्नाहाः पुंसीति पुंस्त्वम् । द्व्यहीन इति—द्वयो रह्नो भूतो भावी वा, द्वेअहनी अधीष्टो वेत्यर्थेखरामः । आह्निकमिति अह्ना निवृत्तमित्यर्थे माधव ठः ।

---

**बाल०**—संसा । भगवति भगवत्संज्ञके परे यथास्वं नाम्नः संसारस्य हरो भवति । अन्त्यसर्वेश्वरादिवर्णाः संसारसंज्ञा इत्युक्तमित्यन्तभवसर्वेश्वरसहितो यावदन्त्यविष्णुजनवर्णः संसारसंज्ञस्तस्य हरो भवतीत्यर्थः । अकृष्णस्थानसर्वेश्वरो भगवदित्यप्युक्तं नामाधिकार-साम्यात् यद्यप्यनेन कृष्णस्थानाद्भिन्नस्य स्वादेस्तद्धितस्यच सर्वेश्वरस्य भगवत्संज्ञत्वं लभ्यते । तथापि यश्चेत्युक्तेन स्वादेरेवाकृष्णस्थानसर्वेश्वरस्य भगवत्संज्ञत्वं न तद्धितस्येति मन्दधियामाशङ्का स्यात् तन्निरासार्थो यश्चेत्यत्र उक्तसमुच्चयकर इति । ननु यद्येवं तर्हि शसादौ राजशब्दस्य संसारहरः कथं न स्यात् तत्राकरणात् । केवलैकाधिकारव्यापित्वात् प्रभुनामायमधिकारः ॥ २९ ॥

**बाल०**—नान्त । भगवति परे नान्तस्य संसारहरो भवति । अनीपोस्तु परयोर्नतु भवति । अग्निशर्मणोऽपत्यं पुमानित्यर्थे बाह्वादित्वात् नृसिहइरिति आग्निशर्मिः । नेहेति, अनीपोर्वर्जनादिति शेषः । साम्ना कृत इति साम्नोऽयमिति वा केशवणः । सामनो यागादिरिति । किञ्च, षन् हन् धृतराज्ञामित्यनेनानोऽरामहरनियमो वक्ष्यते, तेनात्र व-म-सत्सङ्गहीनस्येत्यनेनामहरो न स्यात् । सुप्रेम्नः स्त्रीति शोभनः प्रेमाऽस्या वेति गौरादित्वादीप् सुप्रेम्नीति व-म सत्सङ्गहीनस्येत्यनेनानोऽरामहरः ॥ ३० ॥

**बाल०**—अह्नः । ट·खरामयोरेव पयोरहन्शब्दस्य संसारहरो भवति नान्यस्मिन् । द्वयोरह्नोः समाहार इत्यर्थे राजाहःसखिभ्य इत्यनेन टः द्व्यह इति । द्व्यहीन इति

## ३२. इनो नानपत्याणि न चेपि, नच गाथिविदथिकेशिगणि पणिसत्सङ्गादीनाम् ।

**मैधाविनं कर्म मेधाविनी । गाथिनः पुत्रः । एवं पाणिनः स्राग्विणः । इह तु स्यात्—मैधावः पुत्रः ।**

---

**अमृता०**—३२. इन इति । नान्तस्यैव विशेषोऽयंमादेशः प्रतिषेधश्च । न अपत्यं-अनपत्यम् । अपत्येतरार्थे विहिते अणि प्रत्यये परे तथा ईपि च परे इनन्त शब्दस्य संसार हरो न भवति । गाथ्यादीनान्तु अपत्यार्थे चानपत्यार्थे अणि ईपि च स न भवति, तेषामिनन्तत्वेऽपि पृथग् ग्रहणात् । इनन्तश्च नान्त एव, नान्तस्य नत्वणीपोरित्यनैव गाथ्यादीनामणीपोः निषेधे सिद्धे पुनरिह वचनं—(इनो नानपत्याणीति विशेषेण) अपत्याणि चैषां अपत्याणि चैषां प्राप्तिप्रसङ्गवारणार्थमिति विवेच्यम् ।

मैधाविनमिति—मेधा विद्यतेऽस्येत्यर्थे विन् प्रत्ययेन मेधावी, तत स्तस्येदमित्यर्थे केशव णः । अत्र अण् प्रत्ययस्यानपत्यार्थे—अर्थात् तस्येदमित्थर्थे विहितत्वान्न संसार हरः, अपत्यार्थे तु संसारहर एवेति दर्शितमेव—मैधावः पुत्र इत्यनेन । गाथिनोऽपत्यं पुमान् गाथिनः । एवमनपत्याणि च । गाथिनोऽयं गाथिनो यज्ञः । एवं पाणिन इति च ज्ञेयम् । स्राग्विण इति—स्रग् विद्यतेऽस्य स्रग्वी, तस्यापत्यं तस्यायं वेति स्राग्विणः । सर्वत्रादि सर्वेश्वरस्य वृष्णीन्द्रः । अपत्यार्थे अणि तु इनन्तसामान्यस्य संसारहरः सिद्ध इत्युदाहरति—मैधावः पुत्र इति ।

---

द्वयोरह्नोर्भूतो भावी वा इत्यर्थे खो वक्ष्यते तस्य ईनश्च । आह्निकमिति अह्ना निर्वृत्तमित्यर्थे माधवठः ॥ ३१ ॥

**बाल०**—इनो । न अपत्यं अनपत्यं अनपत्यश्च तत् अण् चेति अनपत्याण् तस्मिन् । अनत्याणि अपत्यभिन्नाणि ईपिच परे इन इनन्तस्य संसारहरो न भवति । अनपत्याणि ईपिच पुनर्गाथ्यादीनामिनन्तानां संसारहरप्रतिषेधो न भवति । तथाहि, नान्तस्येत्यत्र षौ विधिनिषेधौ विहितौ तयोरेव नियमोऽयं इनन्तस्यापि नान्तत्वात् सामान्याणि परे प्राप्तनिषेधनमनपत्याणि नियमनं ज्ञेयमपत्याणस्तु भगवत्सज्ञत्वात् नान्तस्येत्यनेन तस्मिन् इनः संसारहरः स्यात् । तथानपत्याणि इनः संसारहरनिषेधात्याणि नान्तस्येति संसारहरः स्यात् । तथैवेपिच परे सामान्यस्यानः साहचर्यात् पूर्वसूत्रात् प्राप्तनिषेधेऽपि इनन्तस्य संसारहरः स्यादित्याशङ्कानिरासार्थं पुनरीपि चेत्यपि कृतं तेन ईपिच इनः संसारहरो न स्यात् । एवं सति गाथ्यादीनामपीनन्तत्वात् एताहृशविधानं स्यादित्यत आह नच गाथीति । अनपत्यादि ईपिच इनो विहितो यो विशेषः प्रतिषेधः सतु गाथिप्रभृतीनां न स्यादिति नियमप्रतिषेधस्यावखण्डनेन पारिशेष्यात् नत्वनीपोरित्यनेन विहितः सामान्यप्रतिषेधोऽपि गाथ्यादीन् प्रति प्राप्नोति । अतएव गाथिविदथ्यादीनामपत्याणि ईपिच परे संसारहरो न स्यादित्यवधारितमिति । किञ्च, सत्सङ्गादीनामित्यत्र सामान्यसत्सङ्गादेर्न ग्रहणं ।

## ३३. मनश्च न तयो र्न च वर्मणः ।

वैष्णुशर्मणं कुलम्, सुषाम्नी । वैष्णुवर्मणः पुत्रः । इह तु स्यात्—वैष्णुशर्मः पुत्रः ।

---

अमृता०—३३. मनश्चेति । अयमपि नियमः । तयोरनपत्याणि ईपि च परे मनन्तस्य च संसारहरो न स्यात् तथा वर्मणश्च स न भवति । इह च वर्मणः पृथगुपादानात् पूर्ववदपत्येऽनपत्ये चाणि ईपि न भवति स इति बोध्यम् । विष्णुशर्मणः कुलमित्यर्थे तस्येदमिति केशव णः—वैष्णुशर्मणमिति । इहानपत्याणि न संसारहरः । शोभनं साम वस्य स सुषामा, तस्य भार्या सुषाम्नी । वैष्णुवर्मण इति—एवं मित्रवर्मण इदं मैत्रवर्मणं कुलमित्यत्र च न । मनस्तयो र्निषेधात् अपत्येऽणि तु स्यादेव संसारहर इति प्रत्युदाहरति—वैष्णुशर्मः पुत्र इति ।

---

गाथ्यादिसाहचर्यात्तु इनन्तसतसङ्गादेर्ग्रहणमन्यथा नत्वनीपोरिति पूर्वसूत्रेणैव निषेधप्राप्तेऽत्र ग्रहणमनर्थकं स्यात् । ननु यदि गाथ्यादीनां पूर्वसूत्रेणैव संसारहरस्य निषेधः सिद्धस्तर्हि इनोऽपत्याणि इत्येव लक्षणं क्रियतां किमनेन बृहदुद्यमेन तथा सति अपत्याणि परे इनः संसारहरः स्यात् । नत्वनीपोरित्यनुवर्त्तनात्तु अपत्यभिन्नाणीपोः परयोरिनो नान्तत्वात् सुतरां संसारहरो न स्यात् । सत्यं उच्यते । भवदुक्तलक्षणेन यथा अपत्याणि इनः संसारहरो नत्वनीपोरित्यनेन निषेधप्राप्तश्च, तथा गाथ्यादीनामपीनन्तत्वादपत्याणि संसारहरः पूर्वसूत्रेण निषेधश्च तथा सत्यनिष्टमासञ्जेत तदेतत् साधूक्तमिति । मेधा विद्यतेऽस्य मेधावी तस्येदमित्यर्थे केशवणः मैधाविनमित्यत्र अनपत्याण् प्रत्ययान्न संसारहरः । मेधाविनः स्त्रीत्यर्थे गौरादित्वादीप् मेधाविनीति । न चेपीत्यनेनात्र संसारहराभावः । गाथिनोऽपत्यं पुमानिति गाथिनः इत्यत्र नत्वनीपोरित्यनेन संसारहरनिषेध इति । पणयतीति ग्रहादेर्णिनिः पणी तस्यापत्यं पुमान् इति पाणिनः । स्रग्विद्यतेऽस्येत्यर्थे मत्वर्थीयविन् तस्यापत्यं पुमानिति स्राग्विण इति । तथा वैदथिनः कैशिनः गाथिन इति । एवं गाथिन इदं गथिनं कर्म तथा गाथिनः स्त्री गाथिनीत्यादि । इह तु स्यादिति अनपत्याणि निषेधादिति शेषः । मेधाविनोऽपत्यं पुमानिति केशवणः । मैधाव इति नान्तस्य इत्यनेन भगवति संसारहरः ॥ ३२ ॥

बाल०—मनश्च । पूर्ववदयमपि नियमः । तयोरनपत्याणि ईपिच परे मनश्च मनन्तस्यच संसारहरो न भवति । अपत्याणितु नान्तस्येत्यनेन पूर्ववत् संसारहरो भवति, पुनस्तयोर्वर्मणः संसारहरनिषेधो न भवतीति नियमप्रतिषेधस्य निवर्त्तनात् पूर्ववन्नत्वनीपोरिति वर्मणं प्रति सामान्यनिषेधोऽप्यायाति । विष्णुशर्मण कुलमित्यर्थे तस्येदमित्यनेन केशवणः । वैष्णुशर्मणमिति । अत्रानपत्याणि संसारहरो न स्यात् । शोभनं साम यस्य स सुसामा तस्य स्त्री सुसाम्नीति । विष्णुवर्मणोऽपत्यं पुमानिति केशवणः वैष्णुवर्मण इति नत्वनीपोरित्यनेनात्र संसारहरो न स्यात् । विष्णुशर्मणोऽपत्यं पुमानिति वैष्णुशर्मः, तथा सुसाम्नोऽपत्यं पुमानिति सौसामः । इत्यत्रतु नान्तस्येत्यनेन ससारहर इति ॥ ३३ ॥

**३४. सब्रह्मचार्यादेः समूहाद्यणि च, नत्वीपि ।**

संसारहर इत्येव । साब्रह्मचारम् । नेह—सब्रह्मचारिणी । सब्रह्मचारिन् पीठसर्पिन् कलापिन् कुथुमिन् तैत्तिलिन् जाज्वलिन् लाङ्गलिन् शिलालिन् शिखण्डिन् शूकरसद्मन् सुपर्वन् इति गणः ।

**३५. शुनः सङ्कोच-विकारयोरेव ।**

शौवः सङ्कोचः, शौवं मांसम् ।

**३६. अश्मनो विकारे वा ।**

---

**अमृता०**—३४. सब्रह्मेति । सब्रह्मचार्यादेः समूहाद्यर्थे अणि चकारादनपत्येऽणि च संसार हरः स्यात्, ईपि तु स न भवति । एषामिनन्तत्वात् इनो नानपत्याणीत्यादिना अपत्येऽणि यः संसारहरः सिध्यति सएवात्र चशब्देन सूचितः । पुनः समूहाद्यणीति आदि शब्देन अन्यार्थेऽणि च स विधीयत इत्यभिप्रायः । अतएव सामान्यतो ब्रह्मण्युदाहरति—साब्रह्मचारमिति । सब्रह्मचारिण इदं कर्मेत्यर्थः । पुंसि च साब्रह्मचारः पुत्रः समूहो वा । एकादश शब्दाः सब्रह्मचार्यादि गणे पठ्यन्त इति तद्गणमुद्दिशति—सुपर्वन्नित्यन्तेन । शूकरसद्मनित्यत्र सुधाकरसद्मनिति पठन्ति सौपद्माः ।

**अमृता०**—३५. शुन इति । नान्तेषु नियमएषः । सङ्कोच विकारयोरेवार्थयो र्विहितेऽणि श्वन् शब्दस्य संसार हरः स्यान्नत्वन्यत्रार्थे । नान्तस्येत्यनेन अणि निषेधे प्राप्तेऽयं विधिः । शौव इति—वृष्णीन्द्रस्थानेत्यादिना द्वारादित्वात् शुन औव् ।

**अमृता०**—३६. अश्मन इति । विकारेऽर्थे विहिते अणि अश्मन् शब्दस्य संसारहरः स्यात् । इह चाप्राप्ते विभाषा । विकारभिन्नेऽर्थे त्वणि निषेध एवेत्याह—तस्येदमिति ।

---

**बाल०**—स ब्रह्म । समूहाद्यणि अपत्याणिच सब्रह्मचार्यादेः संसारहरो भवति ईपितु न । सब्रह्मचार्यादेरिनन्तत्वात् इनो नानपत्याणीत्यनेनापत्याणि परे सूचितो यः संसारहरः चशब्देनात्र स एव विहित इति । समूहादीत्यत्रादिपदेनानपत्याणि चात्र संसारहर इत्यपि सूचितं । अतएवात्रागमात्रे संसारहर इति प्रतीयते । पूर्वपूर्वसूत्रेऽणः साहचर्यादीपि संसारहरप्राप्त इति नत्वीपीति । उक्तञ्चान्यैः । सब्रह्मचारिण इमे साब्रह्मचारा एवं पैठसर्पा इति । वृत्तिमाह संसारेति । उदाहरणमाह साब्रे ति । सब्रह्मचारिणः समूहादिरित्यर्थे केशवणः । साब्रह्मचारमिति सामान्यात् ब्रह्मलिङ्गं, किन्तु साब्रह्मचारं कर्म साब्रह्मचारः पुत्रः समूहश्चेति । सब्रह्मचारी समानव्रतचारिणीति समासपादे उक्तं, सब्रह्मचारिणः स्त्री सब्रह्मचारिणीति । सब्रह्मचार्यादिगणमाह सब्रह्मचारिन्निति । सब्रह्मचार्यादय एकादश सब्रह्मचार्यादिगण इति ॥ ३४ ॥

**बाल०**—शुनः । सङ्कोचविकारयोर्विहितेऽपि परे श्वन्शब्दस्य संसारहरो भवति । विधिप्राप्तौ नियमः निषेधप्राप्तौ वाधकश्चायमिति । शुनः सङ्कोचो विकारो वा शौव इत्यादि । वृष्णीन्द्रस्थानचतुःसनेत्यनेन शुनो द्वारादित्वादौ व इति ॥ ३५ ॥

आश्मः आश्मनः । तस्येदमित्यणि—आश्मनएव ।

**३७. चार्मःकोषे ।**

साधुः । अन्यत्र चार्मणः ।

**३८. औक्षमनपत्ये ।**

साधुः । अपत्ये तु—औक्ष्णो वत्सः ।

**३९. आत्माध्वनोरखरामे ।**

प्रत्यात्मं प्राध्वम् । नेह—आत्मनीनः अध्वनीनः ।

---

अश्मनः अयमित्यर्थे आश्मनः प्रासादः, अश्मन इदं आश्मनं सिंहासनम् । एवंक्रीताद्यर्थे च ज्ञेयम् ।

**अमृता०**—३७. चार्म इति । कोषे वाच्ये चर्मन् शब्दस्याणि चार्म इति निपात्यते । नान्तस्य नत्वणीपो रिति निषेधे प्राप्तेऽत्र निपातात् संसारहरः । अन्यत्रेति—चर्मणा परिवृतो रथः चार्मण इति ।

**अमृता०**—३८. औक्षमिति । अपत्येतरार्थे विहितेन अणा सह औक्षमिति साधुः स्यात् । पूर्ववन्निपात प्रयोजनम् । उक्षा वृषः, तस्य युद्धं पद वेति तस्येदमित्यर्थे अण् औक्षम् । औक्ष्णइति—वमसत्सङ्गहीनस्येत्यादिना अरामहरः । संसारहरस्याभावे ह्यस्यावकाश इति विवेच्यम् ।

**अमृता०**—३९. आत्मेति । खरामभिन्ने प्रत्यये परे आत्माध्वनोः संसारहरः स्यात् । प्रत्यात्ममिति—आत्मानं प्रति इत्यव्ययीभावे प्रत्यात्मन् शब्दात् अनश्चेति केशवारामः, संसारहरश्च । आत्मनीन इति—आत्मने हितमित्यर्थे—विश्वजनात्मभोगोत्तरपदेभ्य इति खरामः, खईनः । अध्वनो जातादि रित्यर्थे खरामः आध्वनीन इति ।

---

**बाल०**—अश्म । विकारेऽर्थे विहितेऽणि परेऽश्मनः संसारहरो भवति । अश्मनो विकार इत्यर्थे तस्य विकार इत्यनेन केशवणान्तं आत्म इत्यादिद्वयं । तस्येदमित्यर्थेऽणि सति ॥ ३६ ॥

**बाल०**—चार्म । कोषे वाच्ये चर्मणः कोष इति केशवणेन सह चार्म इति साधुः । अन्यत्र चर्मणा परिवृतो रथश्चार्मण इति ॥ ३७ ॥

**बाल०**—औक्ष । तस्येदमित्यादिना अनपत्येऽर्थे विहिताणा सह औक्षमिति साधु । उभयत्र संसारहरो निपातफलमिति । अक्ष्णोऽपत्यं पुमानिति औक्ष्ण इह तु व-म-सत्सङ्ग-हीनस्येत्यनेनानोऽरामहरः ॥ ३८ ॥

**बाल०**—आत्म । अखरामे खरामवर्जिते परे आत्मनोऽध्वनश्च संसारहरो भवति । प्रत्यात्ममिति आत्मानं प्रतीत्यनेनाव्ययीभावे सति अनन्तादद्वक्ष्यते, नान्तस्येत्यनेन संसारहरः। प्राध्वमिति प्रगतमध्वानमिति वाक्ये । प्रादेरध्वन इत्यनेनात्राराम इति

**४०. अनो येतु भाव-कर्मणोरेव ।**

राज्ञो भावः कर्म वा राज्यम् । नेह—राज्ञोऽपत्यं राजन्यः । नतु ये इति निषेधादनोऽरामहराभावश्च । अध्वानमलंगामी अध्वन्यः ।

**४१. यूनो नतु भावविहितेऽणि वुरामे च ।**

यौवः । नेह—यौवनं यौवनकम् । वुरामस्त्वक उच्यते ।

**४२. ब्राह्मो नतु जातौ ।**

तस्यान्तु ब्राह्मणः ।

---

अमृता०—४०. अनइति । अनः अनन्तस्य यरामे प्रत्यये तु भाव कर्मणोरेवार्थयोः संसार हरो भवति नान्यार्थे । स च नान्तस्य नत्वणीपोरिति पूर्वविहितेनैव, इदन्तु नियमवचनम् । तद्धितयरामस्य च भगवत् संज्ञत्वादिहापि प्राप्ते संसारहरे एवकारेण नियम उक्तः । राजन्य इत्यत्राण् प्रत्यये पूर्वोक्तनियमान्नसंसारहरः । राज क्षत्रियाभ्यां यघरामौ इति यरामः । नतु ये इति—वमसत्सङ्गहीनस्येत्यादौ यरामे त्वनोऽरामहरो निषिद्ध एवेत्यर्थः । अत्र, अध्वन्य इत्यत्र च न हि संसारहरः, भाव कर्मणोरेव नियमकरणात् ।

अमृता०—४१. यूनइति । भगवति युवन् शब्दस्य संसारहरोभवति किन्तु भावार्थे विहितेऽणि वुरामे च स नभवति । नान्तस्य नत्वणीपो रित्यणि निषेधे प्रसक्ते विशेष-विधिरयमपवाद स्तस्य । यौव इति—यूनोऽपत्यमित्यर्थ यूनोऽयमित्यर्थे वा अण् । योवन-मित्यादिद्वयन्तु यूनोभाव इत्यर्थे ।

अमृता०—४२. ब्राह्म इति । जातिभिन्नार्थे ब्रह्मन् शब्दस्य अण प्रत्ययेन संसार-हरेण च ब्राह्म इति साधुः स्यात् । ब्रह्मणोऽपत्यं ब्राह्मो भृग्वादिः । ब्रह्मणे जातिः ब्राह्मण इति ।

---

संसारहरः पूर्ववत् । आत्मनीन इति तस्मै हित इत्यर्थे विश्वजनात्मभोगोत्तरपदेभ्यः खराम इति । ख ईनः । अध्वनीन इति अध्वनो जातादिरित्यर्थे खरामः ।। ३९ ।।

बाल०—अनो । अपत्यादिवाच्ये भगवति परेऽनोऽनन्तस्य संसारहरो भवन् नान्तस्येत्यनेनैव भवति । भावकर्मणोस्तु वाच्ययोर्विहिते येऽनोऽन्तस्य संसारहर एव भवति । वाक्योदाहरणादिकं स्वयमेव दत्तं । राजन्य इति राजक्षत्रियाभ्यां यघरामौ जात्यां मनोः ष्यषणाविति यः । नतु ये इति व-म-सत्सङ्गहीनस्यानोऽरामहरो भगवति नतु ये इत्येवं । अध्वन्य इत्यत्रापि न संसारहरो भावकर्मणोर्ये नियमात् ।। ४० ।।

बाल०—यूनो । भवति यूनः संसारहरो भवति । भाववाच्ये विहितेऽणि वुरामेच परे यूनः संसारहरो नतु भवति । यूनोऽपत्यं पुमानिति यूनोऽयमिति वा केशवणः यौव इति । यूनो भाव इत्यर्थेऽणकौ यौवन मित्यादिद्वयं ।। ४१ ।।

बाल०—ब्राह्मो । अजातौ वाच्येऽणा सह संसारहरेण ब्रह्म इति साधुः । जातौ वाच्येतु न । ब्रह्मणोऽपत्यं पुमान् ब्राह्म इति, ब्रह्मणो जातिर्ब्राह्मण इति ।। ४२ ।।

## ४३. कार्मः कर्मशीले ।

अन्यत्र कार्मणः ।

## ४४. आथर्वणिकादयश्च ।

साधवः । अत्राथर्वन्नुकथादौ—आथर्वणिकः । जिह्माशिन् शुभ्रादौ—जैह्माशिनेयः । दण्डिन् हस्तिन् नडादौ—दाण्डिनायनः हास्तिनायनः । वासिन् तिकादौ—वासिनायनिः । भ्रूणहन् धीवन् भावे—भ्रौणहत्यं धैवत्यम् । एते च तत्तत् प्रत्ययार्थं पठिष्यन्ते ।

## ४५. शिरसः शीर्षोऽणि ।

---

अमृता०—४३. कार्म इति । कर्मशीले वाच्ये अणा संसारहरेण च कार्म इति साधुः स्यात् । नान्तस्य नत्वणीपोरिति प्राप्तनिषेधे संसारहरार्थो निपातः । कार्मण इति—कर्मणि कुशलः, कर्मणा निवृत्त इति वार्थे अण् ।

अमृता०—४४. आथर्वणिकेति । एते यथासम्भावितार्थेषु यथा विहितप्रत्ययेन च साधवो भवन्ति । नान्तस्येत्यनेन संसारहरे प्रसक्ते तदपवारणार्था निपाताः । उकथादौ पठ्यत इति—तेन अथर्वणमधीते वेद वेत्यर्थे, उकथादित्वान्माधव ठः—आथर्वणिक इति । शुभ्रादित्वाद् माधव ढः, ढएयः—जैह्माशिनेयः । नडादित्वान्नृसिंह फः, फ आयनः, दण्डिनो जातादि—दाण्डिनायनः । एवं हास्तिनायनः । तिकादित्वात् फिः, फिरायनिः वासनायनिः पुत्रः । भ्रूणघ्नो धीव्नश्च भावार्थे यण्—भ्रौणहत्यं धैवत्यमिति । पठिष्यन्तेऽग्रे इत्यर्थः ।

अमृता०—४५. शिरस इति । अण् प्रत्यये परे शिरस् शब्दस्य शीर्ष इत्यादिश्यते ।

---

बाल०—कार्म । कर्मशीले वाच्ये अणा सह कार्म इति साधुः । कर्मणा निर्वृत्तः कार्मण इति ॥ ४३ ॥

बाल०—आथ । यथा सम्भवाथ यथाविहितप्रत्ययेनाथर्वणिकादयश्च साधवो भवन्ति । अत्र एषु मध्येऽथर्वन्नुकथादौ गणे गृह्यते, तेनाथर्वणमधीते वेद वा इत्यर्थे उकथादित्वान्माधवठः । आथर्वणिक इति । जिह्माशिन् शुभ्रादौ गृह्यते, तस्मात् जिह्माशिनोऽपत्यं पुमानित्यर्थे शुभ्रादित्वान्माधव-ढः जैह्माशिनेय इति । दण्डिन् हस्तिन्नडादौ गणे पठ्यते इति दण्डिनो जातादिरित्यर्थे नडादित्वान्नृसिंहफः । फ आयनः । दण्डिनायनः । एवं हस्तिनायनः इति । वासिन् तिकादौ गृह्यते, तेन तस्यापत्यं पुमानित्यर्थे तिकादित्वात् फिस्तस्यायनिः वासिनायनरिति । अत्र सर्वेषु संसारहराभावो निपातनादिति ज्ञेयं । भ्रूणेति । भ्रूघ्नो भावः धिव्णो भाव इत्यर्थे नृसिंहयस्तस्मिन् परे संसारहराभावो नस्य तश्च निपातफलं । पठिष्यन्ते पश्चादिति शेषः ॥ ४४ ॥

स्थौलशीर्षम् ।

**४६. शिरसः शीर्षन् ये, केशेतु वा ।**

शिरसि भवः शीर्षण्यः, केशेतु शिरस्यश्च ।

**४७. अन्तिकस्य कादे र्हरस्तसि वा, तादेश्च तमे ।**

अन्तितः अन्तिकतः, अन्तमः अन्तितमः अन्तिकतमः ।

**४८. अव्ययस्यारादादि वर्जम् ।**

---

स्थौल शीर्षमिति—स्थूलं शिरो यस्य स स्थूलशिराः, तस्येदमिति केशवणः, शीर्षादेशे च अ-इद्वयस्य हरो भगवतीति वक्ष्यमाणेन अरामहरः ।

**अमृता०**—४६. शिरस इति । यरामे प्रत्यये परे शिरस् शब्दस्य शीर्षन् इत्यादेशो भवति, केशे वाच्ये तु तदादेशो वा भवति । शीर्षण्यो मणिः रोगो वा । अनो ये भाव-कर्मणोरेवेति नियमान्नात्र संसारहरः । यद्यपि संसारस्य हर इति सामान्याधिकार उक्त स्तथापि विशेषतो नान्तस्यैव विधिनिषेधावगमात् तथा अ-इद्वयस्य हर इति वक्ष्यमाणाच्च सूत्रै विहितानामेव संसारहरः स्यान्नान्येषामित्यवधेयम् । अतएवात्र असन्तस्य शिरसो न संसार हरः ।

**अमृता०**—४७. अन्तिकस्येति । तस् प्रत्यये परे अन्तिक शब्दस्य कादिभागस्य हरो वा स्यात्, तमप्रत्यये परे तु तस्य तादिभागस्य कादिभागस्य च हरो वा भवति । अन्तित इत्यादिद्वये अन्तिकादित्यर्थे पञ्चम्याः तस् । अन्तम इति त्रये—गुण प्रकर्ष-युक्तात्तमेष्ठौ इत्यनेन प्रकर्षार्थे तमः ।

**अमृता०**—४८. अव्ययस्येति । आरात् प्रभृतिं वर्जयित्वा अव्ययशब्दस्य संसारहरः

---

**बाल०**—शिरसः । अणि परे शिरसः शीर्ष इत्ययमादेशो भवति । स्थूलं शिरोयस्य स्थूलशिरास्तस्येदमिति केशवणः । शीर्षादेशः अ-इद्वयस्येत्यरामहरः । स्थौलशीर्षमिति ॥४५

**बाल०**—शिर । अकेशे वाच्ये ये परे शिरसः शीर्षन् इत्ययमादेशो भवति । केशे वाच्येतु ये परे वा । शीर्षण्यः मस्तकमणिप्रभृतिः । अनो येतु भावेत्यनेन नियमात् नात्र संसारहरः । केशेत्विति शीर्षण्यः शिरस्यश्चेति । यद्यप्यधिकारसूत्रे सामान्यतः संसारस्येत्तुक्तं । तथापि विधानसूत्रेणान्तस्यैव विधिनिषेधात् शिरस्य इत्यत्र न संसारहरः । एवमन्यत्रापि ॥ ४६ ॥

**बाल०**—अन्ति । तसि परे अन्तिकस्य कादेः कादिवर्णस्य हरो वा भवति । तमे परे त्वन्तिकस्य तादेः कादेश्च हरो वा भवति । कादेस्तादेश्चेत्यत्र तद्गुणसम्विज्ञान-पीताम्बरो ज्ञेयस्तेन कसहितस्य तादिसहितस्यच वर्णस्य हरो भवति । अन्तिकादिति पञ्चम्यास्तम् । अयमन्तिकः अयमन्तिकः अयमन्तिक इत्यतेषां मध्येऽतिशयेनायमन्तिक इत्यर्थे तमो वक्ष्यते ॥ ४७ ॥

संसारहरः । सायम्प्रातिकः, पौनःपुनिकः । नेह—आरातीयः शाश्वतः शाश्वतिकः । संसारहरो निवृत्तः ।

४९. अइ द्वयस्य हरः ।

भगवतीत्यनुवर्त्तते । विष्णुजनादिति यस्य हरो वक्ष्यते । गार्ग्यः गार्गी । वले रयं वालेय इत्यादि । एवं अस्यापत्यं इः ।

## ५०. लक्ष्मी प्रत्ययस्य महाहर स्तद्धितमहाहरे ।

---

स्यात् । मध्ये त्वादेशसूत्रद्वयेनाधिकारविघातमाशङ्क्याह—संसारहर इति । मण्डूकप्लुत्या ह्यत्राधिकारस्यानुवर्त्तनं ज्ञेयम् । सायम्प्रातिक इति—सायं प्रात निर्वृत्तः, तत्र भवो वेत्यर्थे माधव ठः । पुनः पुन र्भव इत्यर्थे माधव ठः—पौनः पुनिकः । उभयत्र संसार हरः, उत्तरत्र आदिसर्वेश्वरस्येति वृष्णीन्द्रः । आरातीय इति—आराद् भव इत्यर्थे—कुशाग्रादित्वात्छः, छ ईयः । शश्वद् भव इत्यर्थे केशव ण-माधव ठौ । समाप्तः संसार हराधिकारः ।

**अमृता०**—४९. अ-इद्वयस्येति । अश्च इश्च अ-इ, अनुकरणत्वान्न संख्योपयोगः, स्पष्टार्थमसन्धिः, तयो र्द्वयमिति अइ द्वयम् । भगवति प्रत्यये परे अ इद्वयस्य हरो भवति । यस्यहरो वक्ष्यत इति—विष्णुजनात्तद्धित यस्य हरो भगवत्यारामं विनेत्यनेन । गार्ग्य इति—गर्गस्य गोत्रापत्यं पुमानित्यर्थे गर्गादे र्माधव यः । गार्गीति—गर्गस्य गोत्रापत्यं स्त्रीति गार्ग्य शब्दादीप्, अरामहरः, ततो यरामहरश्च । वालेय इत्यत्र इरामहरः । अशब्दो विष्णु वाची, तस्यापत्यमित्यर्थे अरामवाह्वादिध्यामित्यनेन नृसिंह इः । अ-इरामरूपभगवति परे अरामस्य हरः, ततोऽवशिष्टे हि लुप्तस्य शक्त्यारोप इति न्यायेन प्रत्ययवर्णे इरामे हि प्रकृत्यर्थः सन्निविष्ट इति बोध्यम् ।

**अमृता०**—५०. लक्ष्मीति । तद्धितमहाहरे सति लक्ष्मीप्रत्ययस्य महाहरः स्यात् । आमलकमिति—आमलकी धात्रीवृक्षः, अवयवे च प्राण्योषधिवृक्षेभ्य इत्यनेन आमलक्या

---

**बाल०**—अव्य । आरादादि वर्जयित्वाव्ययस्य संसारहरो भगवति । सायं प्रातर्निर्वृत्ते इत्यर्थे माधवठः । सायम्प्रातिक इति । पुनः पुनर्भव इत्यर्थे आरादिवेत्यर्थे कुशाग्रादित्वादीयः । शश्वद्भव इत्यर्थे केशवण-माधवठौ शाश्वतः शाश्वतिकः । इति संसार-हरप्रकरणं दर्शितं ॥ ४८ ॥

**बाल०**—अ-इ । अश्च इश्च अ-इ द्वयोर्द्वयं अ-इद्वयं तस्य हरो भवति भगवति परे । एतदेवाह भगवतीति । हरो वक्ष्यते इति विष्णुजनात्तद्धितयस्येत्यनेनेति शेषः । गार्ग्य इति गर्गस्य गोत्रापत्यं पुमानिति गर्गादेर्माधवयरामः । एवं गर्गस्य गोत्रापत्यं स्त्रीति गार्ग्य-शब्दादीप् अ-इद्वयस्येत्यरामहरः ततो यहरः गार्गीति । वलेरयमिति तस्येदमित्यर्थे माधवढस्तस्यैयः । इरिति । एकाक्षरकोषादौ अशब्दो विष्णुवाचीति प्रसिद्धं, अरामवाह्वा-दीत्यनेन इर्नृसिंहस्तस्मिन्नरामहरः ॥ ४९ ॥

आमलक्याः फलं आमलकम्। तद्धितेति किम्—गार्ग्याः कुलं गार्गीकुलम्। महाहरे इति किम्—गार्गीत्वम्। तद्धितमहाहर इति परसप्तमी। तस्मात् अवन्ती कुन्ती कुरूरित्यत्र कुर्वादेर्ण्यस्य अवन्तीकुन्तीत्यादिना महाहरस्तु लक्ष्मीप्रत्ययात् पूर्व इति न तस्य महाहरः।

**५१. उद्धयस्य गोविन्दो नतु धातो र्न च स्त्रीप्रत्यये।**

**माधवः वाभ्रव्यः। धातो स्तु सुधीभुवोरियुवावित्युव—स्वायम्भुवम्। वर्षा पुनर्द्दन्निति पौनर्भ्वम्। एवं खालप्वम्। कथं पौनर्भवम्? पुनर्भव शब्दोऽप्यस्ति।**

---

विकारोऽवयवो वेत्यर्थे केशव णः, मयट् वा पुनः फले तस्य महाहरो वक्ष्यते, ततश्च लक्ष्मी प्रत्ययस्य ईपो महाहरः। ईप् प्रवृत्तेः प्राक् शब्दोऽयं स्वरूपोऽरामान्त एवासीत्, तेन ईपोऽपाये नैमित्तिकस्य अरामहरस्य चापाय इति।

गार्गीकुलमित्यत्र अन्तरङ्गस्वादेरेव महाहरो नतु तद्धितप्रत्ययस्य ततश्च लक्ष्मीप्रत्ययस्य न महाहरः। गार्ग्या भावः गार्गीत्वम्, त्वतापौ ब्रह्मलक्ष्म्यो रिति भावे त्वम्। इह च तद्धित प्रत्ययस्य महाहराभावात् लक्ष्मीप्रत्ययस्येपो न महाहरः। परसप्तमीति परेसतीत्यर्थः। अवन्ति कुन्ति कुरु शूरसेनादे र्लक्ष्म्यामित्यनेन कुर्वादे र्ण्यस्य महाहरस्तु लक्ष्मीप्रत्यात् पूर्वएवभवति, यत स्तत्र लक्ष्म्यामिति परसप्तमी निमित्तीक्रियते, तदपेक्ष्य हि ण्यप्रत्ययस्य प्रवृत्तेः, तस्मादेव लक्ष्मी प्रत्ययस्य नमहाहर इत्यर्थः। महाहरात् परं लक्ष्मीप्रत्यययोगान्नात्र ईपो महाहर इति निष्कर्षः।

**अमृता०—५१.** उद्धयस्येति। तद्धित प्रत्ययेपरे नाम्नउत्तरीद्धयस्य गोविन्दः स्यात् किन्तु धातोरुद्धयस्यतु स न भवति, तथा स्त्रीप्रत्यये च परे स न भवति। माधव इति—मधोरपत्यं पुमानित्यर्थे केशव णः, आदिसर्वेश्वरस्य वृष्णीन्द्रः। वभ्रु र्विष्णु स्तस्यापत्यं पुमान् माधव यः—वाभ्रव्यः। उद्धयस्येति गोविन्दः, ओद्धयस्यावावौ प्रत्यय ये इत्यव्। स्वयम्भुव इदं स्वायम्भुवम्। स्वयं भवतीति क्विपि स्वयम्भु र्ब्रह्मा, क्विप्-सिद्धत्वेन धातुत्वम्। वर्षा पुनर्द्दन्निति भुवो व एवेति शेषः। तेन पुनर्भ्वोरिदं पौनर्भ्वम्। इह च धातुत्वान्न गोविन्दः।

---

**बाल०**—लक्ष्मी। तद्धितमहाहरे सति लक्ष्मीप्रत्ययस्य महाहरो भवति। आमलकमिति फलार्थतद्धितहरो वक्ष्यते, तस्मिन् हरे ईप्प्रत्ययहरस्तस्मिंश्च सति निमित्तापाये नैमित्तिकस्येत्यनेनारामहरापाय इति। गार्गीकुलमित्यत्रान्तरङ्गस्वादेर्महाहरो न तद्धितस्य तेन न स्त्रीप्रत्ययमहाहर इति। गार्ग्या भाव इत्यर्थे त्वतापौ ब्रह्मलक्ष्म्यामित्यनेन त्वं। तस्मादिति इत्यत्र इत्यादौ। अवन्तिकुम्भीत्यादिना सूत्रेण कुर्वादेर्ण्यस्य महाहरस्तु लक्ष्मीप्रत्ययात् पूर्वं प्रागिति हेतोस्तस्य लक्ष्मीप्रत्ययस्य न महाहर इत्यन्वयः॥ ५०॥

## ५२. उद्वयस्य हरो ढरामे नतु कद्रूपाण्ड्वोः ।

ढराम एयः । कामण्डलेयः । नेह—काद्रवेयः ।

## ५३. जनपदपाण्डो नृसिंह ये ।

पाण्ड्यः ।

## ५४. सारवैक्ष्वाक-हिरन्मयानि ।

---

**अमृता०**—५२. उद्वयस्येति । ढरामे प्रत्यये परे उद्वयस्य हरो भवति, कद्रु पाण्डु-शब्दयोस्तु उद्रयहरो न भवति । कमण्डलोरयमित्यर्थे माधव ढः कामण्डलेयः । एवं मृकण्डोरपत्यं पुमान् मार्कण्डेयइति । कद्वा अपत्यं पुमान् काद्रवेयो वासुकिः । अत्र ऊरामस्य नहरः किन्तु उद्वयस्येति गोविन्द एव । एवं पाण्डोरपत्यं पुमान्—शुभ्रादित्वान्माधवढः पाण्डवेयः । बाहुल्यात् केशव णश्च—पाण्डवः ।

**अमृता०**—५३. जनपदेति । जनपदोदेशः, सचासौ पाण्डुश्चेति तथा, तस्य उरानस्य हरो भवति नृसिंह ये परे । पाण्ड्य इति—पाण्डोरपत्यं पुमान् इत्यर्थे नृसिंह यरामः । पाण्डुनामा यः क्षत्रियोराजा पाण्डुदेश विशेषस्य हि स सम्राट् । अतो जनपदसनामभ्यः क्षत्रियेभ्योऽपत्यें तज्जनपद नामभ्यस्तु राजनीत्यधिकारात् पाण्डुनाम्नः क्षत्रियस्यापत्यं तथा पाण्डुदेशस्य सएव राजेत्यर्थः । पाण्डवपिता पाण्डुस्तु न पाण्डुदेशस्य राजा, किन्तुकुरु-देशस्य, ततस्तस्य न नृसिंह यः, नचोरामहरः ।

**अमृता०**—५४. सारवेति । सारवादीनि त्रीणि यथायोग्यप्रत्ययेन साधूनीत्यर्थः । साखमित्यत्र ऊरामहरो, यरामस्य वरामश्च निपातफलम् । ऐक्ष्वाक इत्यत्र निपातादुरामहरः । हिरण्यं सुवर्णम् । तस्य प्राचुर्यं विकारो वेत्यर्थे मयट् । अत्र हिरण्यस्य यरामहरो

---

**बाल०**—उद्व । प्रत्यये परे उद्वयस्य गोविन्दो भवति । भातोरुद्वयस्य नतु भवति । स्त्रीप्रत्यये सति उद्वयस्यच न भवतीत्यर्थः । माधव इति । मधोरपत्यं पुमानिति केशवणः । एवं वभ्रोरपत्यमित्यर्थे माधवयः वाभ्रव्य इति । विपुले नकुले विष्णौ वभ्रुर्ना पिङ्गले त्रिषु इत्यमरः । स्वयम्भुव इदमित्यर्थेऽण् स्वायम्भुवमिति । हन्नितीत्यनेन पुनर्भवमित्यत्र भुवः व एव पूर्ववदत्राण् । यद्येवं तर्हि कथं पौनर्भवमिति सिद्धान्तमाह पुनर्भवेति ॥ ५१ ॥

**बाल०**—उद्वयस्य । ढरामे परे उद्वयस्य हरो भवति । कद्रू पाण्ड्वोरुद्वयस्य तस्मिन् हरो नतु भवति । कामण्डलेय इत्यत्र कमण्डलोरयमित्यर्थे माधवढः । कद्रू वा अपत्यं पुमानिति नृसिंहढः । काद्रवेय इत्यत्र उद्वयेत्यनेन गोविन्दः ॥ ५२ ॥

**बाल०**—जन । नृसिंहये परे जनपदपाण्डोर्देशनामपाण्डोश्चोद्वयस्य हरो भवति । पाण्डौ भव इत्यर्थे नृसिंहयः ॥ ५३ ॥

साधूनि। सरय्वा इदं सारवम्, इक्ष्वाकोरपत्यं ऐक्ष्वाकः, हिरण्यस्य मयटि हिरण्मयम्।

## ५५. विष्णुजनात्तद्धितयस्यहरो भगवत्यारामं विना, तिष्य-पुष्ययो र्नक्षत्राणि, सूर्यागस्त्योरीपि छे च, मत्स्यस्येपि, न राजन्यस्य वुरामे, मनुष्यस्येपि च।

गार्गी। विष्णुजनादिति किम्—कैकेयी। तद्धितेतिकिम्—वैद्यस्य भार्या वैद्यो। आरामंविनेति किम्—गार्ग्यायणः। तिष्येति—तैषः पौषः।

---

निपातफलम्। परसूत्रेण तद्धित यरामस्य हरविधानादिह न प्राप्यत इति निपात-प्रयोजनता।

**अमृता०**—५५. विष्णिवति। आरामं विना भगवति परे विष्णुजनादुत्तरस्य तद्धित यरामस्य हरः स्यात्। नक्षत्र विहिते अणि परे तिष्य पुष्ययो र्यरामस्य हरः स्यात्। ईपि परे छरामे च परे सूर्यागस्त्ययो र्यरामस्य हरः स्यात्। ईपि परे मत्स्यस्य यरामहरो भवति। किन्तु वुरामे परे राजन्यशब्दस्य यरामहरो नभवति, तथा वुरामे ईपि च परे मनुष्यस्य यराम हरो न भवति। अत्र यस्येति सारामनिर्देशेन अइ द्वयस्येत्यादिना अरामहरो निराकृतः, प्रक्रियागौरवात्। प्रथमसूत्रे भगवतीत्युक्त्वा सर्वत्र प्राप्तौ राजन्य-मनुष्ययोः प्रतिषेधमुखेन नियमः कृतः, पुष्यादेस्तु तद्धित यरामाभावादप्राप्ते हि नियमो ज्ञेयः।

गार्गीति—गर्गस्य गोत्रापत्यं पुमान् गार्ग्यः, तस्य भार्या इतीपि यरामहरः। एवं सौम्यादीनां—सौमी वात्सी वैदग्धी औचितीत्यादयश्च। कैकेयीति—केकयदेशे भवः, केकयराजस्यापत्यं वा कैकेयः, प्रलयादीनां यादेरीयश्चेति ईयादेशस्य वृष्णीन्द्र सहचारित्वेन

---

**बाल०**—सार। सरय्वादित्रयाणां यथासम्भवं सारवादीनि त्रीणि यथावत् प्रत्ययेन साधूनि। सारवमित्यत्र ऊरामस्याव: अययोर्हरश्च निपातनात्। ऐक्ष्वाक इत्यत्रोरामहरो निपातफलं। हिरण्यस्य प्राचुर्यं विकारो वेति मयटि सति हिरण्मयं निपादनादत्र हिरण्यस्य यरामहरः। अस्य यरामस्य तद्धितत्वाभावात् परसूत्रेणाप्राप्तेऽनेन हरविधानं। प्रसङ्गात् यरामहरप्रकरणमाह विष्णिवत्यादिना ॥ ५४ ॥

**बाल०**—विष्णु। आरामं विना भगवति परे विष्णुजनात् परस्य तद्धितस्य हरो भवति। यस्येति सारामनिर्देशेन अ-इद्वयस्येत्यनेनारामहरे कृते पश्चाद्यरामहर इति प्रक्रियागौरवं वारितं। तिष्य। नक्षत्रविहिताणि परे तिष्यपुष्ययोर्यस्य हरो भवति। सूर्या। ईपि छेच परे सूर्यागस्त्ययोर्यस्य हरो भवति। मत्स्य। ईपि परे मत्स्यस्य यस्य हरो भवति। नाजरा। वुरामे परे राजन्यस्य यस्य हरो न भवति। मनु। वुरामे ईपिच परे मनुष्यस्य यस्य हरो न भवति। आद्यसूत्रे भगवतीति ग्रहणात् सर्वत्रैव यस्य हरे प्राप्ते

सूर्येति—सूर्यस्य भार्या सूरी एवं अगस्ती। सूर्याददेवताभार्यायामीप् वक्ष्यते। सूरीयः। नामधेयत्वाच्छैविकश्छः, छ ईयः। एवं अगस्तीयः। कथं सौरी अगस्ती, सौरीयं अगस्तीयम्? सूर्यादे रणन्ताच्छेपौ। अराम् हरः, ततः सूर्यस्यैव यरामोऽयमिति तस्यापि हरः। मत्स्येति मत्सी। नेह—मात्स्यो न्यायः प्रवर्त्तते। न राजन्यस्येति राजन्यकम्। मनुष्येति मानुष्यकं मनुष्यो।

---

तद्धितत्वोपचारः, तथापि सर्वेश्वरपरत्वान्नहि यरामहरः। वस्तुत आत्रेयीत्येव सम्यक् प्रत्युदाहरणं ज्ञातव्यम्। भाषावृत्तौ तु कारिकेयमिति प्रत्युदाहृतम्। वैद्यीत्यत्र तु यरामो न तद्धितस्य, किन्तु औणादिक एवेति न तस्यहरः। गार्ग्यायण इति—गर्गस्य गार्ग्यस्य वा युवापत्यं पुमानिति नृसिंह फः, फ आयनः। तिष्य नक्षत्रेण युक्ता पौर्णमासी यत्र मासे स तैषः। एवं पौषः। तिष्यपुष्येति एकस्यैव नक्षत्रस्य नामद्वयम्। सूरीति—सूर्यस्य भार्या मानवीत्यर्थः। देवता भार्यायान्तु सूर्या छायेत्यर्थः। सूरीय इति—सूर्यस्यायं, सूर्ये जातादि वेत्यर्थे नामधेयाद् वेति छरामः।

कथमित्यादि पूर्वपक्षः। सूर्यागस्त्ययोरीपि छे चैव नियमात् कथमादि वृष्णीन्द्रण सह सौरीत्यादि पदं प्रयुज्यते इति शङ्काकोटिः। स्वयमेव तत् समाधत्ते—सूर्यादिरणन्तादिति। सूर्यादिः सूर्यागस्त्ययोरणन्तात् तस्येद मित्यर्थे विहिताण् प्रत्ययान्तात् छराम ईप् च भवत इत्यर्थः। तथाहि सूर्यशब्दात् अण्, अ-इद्वयस्येति अरामहरः, आदिसर्वेश्वरस्य वृष्णीन्द्रः, पुनरणोऽरामेण सौर्य इति इति स्थिते ईप्। अधुनापि यरामः सूर्य शब्दस्यैव, अतो विधानानुसारेण तस्य हरे न कोऽप्यन्तरायः। एवमेव सौरीयं अगस्तीत्यादौ च बोध्यम्। मात्स्य इति—मत्स्यन तन्नाम्ना राज्ञा कृत इत्यर्थे केशव णः।

---

सूत्रपञ्चकेषु नियम इति। गर्गस्य गोत्रापत्यं स्त्री गार्गीति। केकयदेशे भवः कैकेयस्तस्य भार्या कैकेयीति। वैद्यीति नात्र तद्धितयः किन्त्वौणादिक एव। गार्ग्यायण इति गर्गस्य गार्ग्यस्य वा युवापत्यं पुनानित्यर्थे नृसिंहफः तस्यायनः। तिष्ययुक्ता पौर्णमासी यत्र समासे स तैषः। एवं पुष्ययुक्ता पौर्णमासी यत्र स पौष इति। उदाहरणान्तराणि वक्ष्यन्ते। सूर्येतीत्यादि सुगमं। सूर्ये जातादिरिति सूरीय इति। नामधेयत्वादिति नामधेयाद्वा इत्यनेनेति शेषः। पूर्वपक्षयति कथमिति। सिद्धान्तमाह सूर्यादिरिति। सूर्यस्यापत्यं सूर्यस्यायमित्याद्यर्थे अणन्तादिव सूर्यादिरत्तरे छेपौ भवतः। तत्पश्चात् अ इद्वयस्येत्यनेनारामहर एवमनोऽरामे हरे सति निमित्तापाये नैमित्तिकस्येत्यनेन सौर्य ईपित्यादि स्थिते ततः सूर्यस्यैवेत्यत्र सूर्यादिरेवायं यराम इति तस्यापि महाहरः। ननु यद्येवं निमित्तापाये पुनररामान्तसूर्येति तर्हि वृष्णीन्द्रस्याप्यपाये पुनः सूरीत्यादि कथं न स्यात्। उच्यते। सूत्रे प्रत्ययरूपान्निमित्तादिति न्यायेनात्र शवणस्य हरत्वं न महाहरत्वं यतोऽत्र सूत्रे प्राप्ते भगवतीत्यनेन प्रत्ययरूपनिमित्तत्वं। तेन अणः स्थानिवत्वान्न वृष्णीन्द्रस्यापायः। अतएवाणा व्यवधानेन सूर्यादिर्यस्य हराप्राप्ते शिष्टप्रयोगसिद्ध्यर्थं, तस्यापि हरइत्युक्त-

**५६. ईराम एवानपत्ययस्य हरः ।**

तेन साङ्काश्यकः ।

**५७. षन् हन् धृतराज्ञामेवानन्तानामण्यरामहरः ।**

औक्षणः वार्त्रघ्नः धार्त्तराज्ञः । नेह समानः ।

**५८. अद्वय-माभ्यां तदुद्धवाभ्यां विष्णुदासाच्च मतो र्मो वो नतु यवादेः ।**

---

**अमृता०**—५६. ईराम इति । इरामे एव परे अपत्यार्थभिन्नस्य प्रत्ययस्य यस्य हरो भवति नान्यत्र । तद्धितयस्येत्यनेन अपत्यानपत्यस्य च यस्य सामान्यतो हरः प्रसक्तः, तदर्थमनपत्य यस्य हरे नियम एषः—ईराम एवेति । तेन साङ्काश्यक इति प्रत्युदाहरणम् । तदस्मिन्नस्तीत्यादि चातुरर्थिके—सङ्काश्यादे र्ण्य इति साङ्काश्यं, तत स्तस्येदमिति वुनृसिंहः—साङ्काश्यकः । अत्र यरामोऽनपत्ये हि विहितः, किन्तु ईभिन्नप्रत्यय परत्वान्न तस्य हरः । उदाहरणन्तु सौमीति ज्ञेयम् । सोमो देवता अस्येति सौम्यं हविः, ततो लक्ष्म्यामीप् सौमी ऋक् वक्ष्यतेऽग्रे । अत्र पूर्वसूत्रेणैव यरामहरः, अनेन तु नियम एवोक्तः ।

**अमृता०**—५७. षनिति । अणि प्रत्ययेपरे अनन्तानां शब्दानां मध्ये षन् हन् धृतराजन् इत्येतेषामेव अनोतरामहरः स्यान्नान्येषाम् । नान्तस्य न त्वणीपो रित्यणि समास हरो निषिद्धः, अतो नान्तेषु अनान्तानां वमसत्सङ्गहीनस्येत्यादिना अनोऽराम हरस्य योऽवकाशः प्राप्तः सएवात्र नियम्यते । उक्षणः अपत्यं पुमान् औक्षणः । वृत्रघ्नोऽपत्यं धृतराज्ञोऽपत्यं वार्त्रघ्नः धार्त्तराज्ञ इति ।

**अमृता०**—५८. अद्वयेति । अद्वयश्च मश्च अद्वयमौ ताभ्यां, तौ अद्वयमौ उद्धवौ ययो स्तौ तदुद्धवौ ताभ्यां, तथा विष्णुदासाच्च परस्य मतु प्रत्ययस्य मरामो भवति,

---

मिति । मत्सीति मत्स्यस्य भार्येत्यर्थे मत्स्येन कृत इत्यर्थे केशवणः मात्स्य इति । राजन्यकमिति राजन्यस्येदमित्यर्थे राजन्यादिभ्यो वुनृसिंहः । एवं मानुष्यकं मनुष्यस्य भार्या मनुष्यीति ॥ ५५ ॥

**बाल०**—ईरा । विष्णुजनात्तद्धितेत्यनेन प्राप्त-यरामहरं नियमयति ईराम इति । ईराम एव परेऽणप्रत्ययस्य हरो भवति नान्यस्मिन् । सङ्काशस्य भावः साङ्काश्यं तस्येदमित्यर्थे राजन्यादिभ्य इत्यनेन वुनृसिंहः साङ्काश्यक इति । शैषिकछेतु सङ्काशीय इति । नान्तस्य नत्वनीपोरित्यनेन सत्सङ्गहराभावे सति ब-म सत्सङ्गहीनस्येत्यनेन प्राप्तो योऽणोऽरामहरस्तं नियमयति षन् हनिति ॥ ५६ ॥

**बाल०**—षन् । अणि परे अनन्तानां मध्ये षन् हन् धृतराज्ञामेवानोऽरामहरो भवति नान्येषामिति उक्षणोऽपत्यं पुमानिति औक्षणः । एवं वृत्रघ्नो धृतराज्ञोऽपत्यं पुमानित्यर्थे वार्त्रघ्न इत्यादिद्वयं । साम्नोऽयमित्यर्थे सामन इति पूर्वमेव दर्शितं ॥ ५७ ॥

गुणवान् मालावान् किम्वान् पयस्वान् भास्वान् लक्ष्मीवान् कुमुद्वान् । नेह बुद्धिमान् । न तु यवादेः—यवमान् ऊर्मिमान् भूमिमान् कृमिमान् ।

---

यवादे रुत्तरस्य तु मतोः स न भवति । गुणवानिति—गुणोऽस्यास्तीत्यर्थे मतु प्रत्ययः, मस्थाने वरामादेशः । अत्र मरामः केवलो गृह्यते, नतु सर्वेश्वर युक्त इत्युदाहरति—किम्बानिति । पयस्वानित्यादीनि तद्द्वोदाहरणानि, कुमुद्वानिति तु विष्णुदासस्य । बुद्धिमानित्यत्र पूर्वनिमित्तविरहान्न वरामः । प्राप्तौ हि स्यत्यां यवादे निषेधः । तथाहि—यवमानिति अद्वयात् प्राप्तिः, ऊर्मिमानिति त्रये मरामोद्धवात्—

तसाभ्यामिति—तसाभ्यां मत्वर्थीयाः प्रत्यया यादिवत् इत्यतिदेशो वक्ष्यते । यादि वत्वस्य च फलम्—पूर्वस्य विष्णुपदवत्वं स्वादि तद्धितयो रयसर्वेश्वराद्यो रिति विधानतो बिष्णुपदवत्वराहित्यमेव, तत्र य-सर्वेश्वरादि वर्जनात् । अतएव गरुत्मानित्यादीनां तरामादेः स्थाने—विष्णुदासो विष्णुपदान्त इत्यादिना हरिगदादि न भवतीत्यभिप्रायः । अत्र विष्णुदासात् परत्वेन मरामे प्राप्ते यवादित्वात् स न । गरुत् पक्षोऽस्यास्तीति मतुः । यवादित्वादेव—"नित्यं हरिवेणुविधिः प्रत्ययहरिवेणौ" इति तरामस्य नरामोऽपि न स्यात् । एवं हरित् दिक् विद्यते अस्येति हरित्मान् सूर्यः । विदुष्मानिति—विद्वानस्यास्तीति विद्वस् शब्दात् मतुः, तस्येह यादिवत्त्वात् तद्धिते यश्चेति भगवत् संज्ञत्वेन वसो वंस्य उ रिति उत्वेषत्वम्; किन्तु ध्वंसु स्रंसु वस्वनडुहामिति सस्य द स्तु न, यादित्वेन

---

बाल०—अद्वय । अद्वयश्च मश्च तौ अद्वयमौ ताभ्यां । तौ अद्वयमौ उद्धवौ ययोस्तौ तदुद्धवौ ताभ्यां । अद्वयमाभ्यां तदुद्धवाभ्यां विष्णुदासाच्च परस्य मतुप्रत्ययस्य मरामस्य वरामो भवति यवादेरुत्तरस्यतु न भवति । गुणोऽस्यास्तीत्यर्थे सोऽस्यास्तीत्यनेन गुणशब्दात् मतुस्तस्य मस्य वः गुणवान् । एवमुत्तरत्रापि । मालावानित्यारामान्तस्योदाहरणं । तथा क्रमेण किम्वानिति मरामान्तस्य । पयस्वानित्याद्वयमद्वयोद्धवस्य लक्ष्मीवानिति मरामोद्धवस्य । कुमुद्वानिति विष्णुदासाच्चेत्यस्य । यवादेस्तु प्राप्ते निषेध इति सूचयति नेहेति । यवमानित्यत्राद्वयन्तात् प्राप्ते निषेधः । ऊर्मिमानित्यादौ मरामोद्धवत्वेन प्राप्ते निषेध इति । विष्णुदासाच्चेत्यनेन प्राप्ते निषेधस्योदाहरणं दर्शयति तसाभ्यामित्यनेन । तसाभ्यां मत्वर्थीयाः प्रत्ययादिवदिति वक्ष्यते, इति मत्वर्थीयानां यादिवत्वं ज्ञेयं । पूर्वस्य विष्णुपदवत्वं स्वादितद्धितयोरयसर्वेश्वराद्योरित्यनेन पूर्वस्य विष्णुपदवत्वविषये यादि-सर्वेश्वराद्योः स्वादितद्धितयोर्वर्जनात् यादिवत्वेन तेषु मत्वर्थीयेषु परेषु पूर्वस्य विष्णुपदत्वाभाव इति । तेन गरुत्मानित्यादीनां तरामसरामयोः स्थाने विष्णुदासो विष्णुपदान्ते इत्यादिना दरामादयो न स्युरिति । यथा गरुत् पक्षमस्त्यस्येत्यर्थे गरुच्छब्दात् मतुः । अस्य यवादित्वात् विष्णुदासाच्चेत्यनेन मतोर्मो वो न स्यात् । यादिवत्वात् मतौ परे विष्णुदासो विष्णुपदान्त इत्यनेन तरामस्य दरामोऽपि न स्यात् । नित्यं हरिवेणुविधिः प्रत्ययहरिवेणावित्यनेन नरामश्च न स्यात् गरुत्मानिति । एवं हरित्मान । विद्वानस्त्यस्येति विदुष्मानित्यत्रतु ध्वंसु स्रंसु वस्वनडुहामित्यनेन सरामस्य प्राप्तदरामाभावः । मतोर्मरामस्य वरामाभावश्च पूर्ववत् । ननु मत्वर्थीयानां यादिवत्वात् तद्धिते यश्चेत्यनेन प्राप्तभगवत्संज्ञके

तसाभ्यां मत्वर्थीया इति, गरुत्मान् हरित्मान् विदुष्मान्। एते यवादिषु ज्ञेयाः।

## ५८. मरुत्वान् ककुद्वान् साधू।

एवं ककुद्वती।

---

विष्णुपदवत्वाभावात्। अरामोद्भवतया मस्य वरामे प्राप्ते यवादिषु पाठेन तन्निषिद्धः। एते यवादिष्विति—अत्र एवकाराभावादन्येच यवादिषु ज्ञेयाः, यथा—कुञ्चा, वशा, द्राक्षा, इक्षु, द्रुम, मधु, दन्मि इत्यादयः। यवादिराकृतिगण इति प्राञ्चः।

**अमृता०**—५८. मरुत्वानिति। द्वौ साधू भवतः। अनयोश्च यवादिषु पाठात् मतो र्मस्य वरामो न प्राप्नोतीति निपात्येते। मरुत ऊनपञ्चाशद् वायवः सन्ति अस्येति मरुत्वानिन्द्रः। ककुद् (वृषस्य) स्कन्धस्थ मांसपिण्डं, तदस्यास्तीति ककुद्वान् वृषः। ककुदिति दरामान्तोऽयं शब्दो ननु—पूर्णादिः ककुदस्य ककुदवस्थायामित्यनेनादिष्टः तान्तः, समास विषये हि तस्यादेशात्।

---

मतौ विदुषो वस्य डः कथं न स्यात्। उच्यते। मत्वर्थीया यादिवदित्यनेनातिदेशात् आतिदेशिकं कार्यं क्वचिद्व्यभिचरतिच अतएव मत्वर्थीयानां यादिवत्वं ननु यरामत्वमेवेति मत्वादीनां भगवत्संज्ञत्वाभावादत्र मतौ परे वसोर्वस्येत्यनेन विद्वस्शब्दस्य वस्य उर्न स्यादिति। एते यवादयः विद्वसन्ता यवादिषु ज्ञेया इति एभ्यो मतोर्मो वो न स्यादिति भावः॥ ५८॥

**बाल०**—मरु यथासम्भवं मरुत्वान् ककुद्वानिति द्वौ साधू भवतः। एवं ककुद्वतीच साधुर्भवतीत्यर्थः। मरुत ऊनपञ्चाशत् वायवोऽस्य सन्तीत्यर्थे मरुच्छशब्दान्मतुः। विष्णुदासाच्चेति मतोर्मोव इति मरुत्वान् इन्द्रः। ककुदं तालु अस्यास्तीत्यर्थे ककुदशब्दान्मतुः। ककुदस्य ककुदवस्थायामित्यनेनावस्थायां गम्यमानायां ककुदस्य ककुत् इति तान्तादेशे कृते मतोर्यादिवत्वात् पूर्वस्य विष्णुपदत्वाभावे तरामस्य दरामो न स्यादिति मतौ तरामस्य दरामभावार्थं निपात्यते। एवं ककुदमस्त्यस्या इति ककुद्वती। ननु यद्येवं तर्हि ककुद्वानित्येव निपात्यतां किं मरुत्वानिति निपातेन विष्णुदासाच्चेत्यनेन यादिवत्वादित्यनेनच पूर्ववत् सिद्धत्वात्, मैवं। यथा ककुद्वानित्यत्र तरामस्य दरामस्तद्वन्मरुत्वानित्यत्रापि स्यादिति मन्दविधायामाशङ्का स्यात्। तन्निरासार्थमेतदपि निपात्यते इति सर्वमनवद्यं। एतद्वाग्विलाशमात्रं वस्तुतस्तु स्पष्टतार्थमिदं। एतदुपलक्षणं शिष्टप्रयोगानुसारेण यथासम्भवमन्यदप्यूह्यं। किञ्चात्रैवोभयनिपातनार्थं ककुदस्य ककुदिति तान्तमादेशनीयं। समासकार्येतु दान्तमन्यथा औप्रभृत्तौ पूर्णककुदौ इत्यादिर्न स्यादिति। मरुत्वान् ककुद्वानित्यत्र मरुत्मान् ककुद्मान् साधू। एवं ककुद्मतीतिच पाठः क्वचित् पुस्तके दृश्यते। तथा सति विष्णुदासाच्चेत्यनेन प्राप्तो यो मतोर्वरामस्तदभावो निपातफलं। तथा ककुद्मानित्यत्र ककुदस्य ककुदवस्थायामित्यनेन ककुदस्य तान्तादेशे तरामस्य दरामश्च

## ६०. अहीवत्यादयः संज्ञायाम् ।

साधवः । अहीवती कपीवती मुनीवती मणीवती ।

## ६१. अष्ठीवदादयश्च ।

अष्ठीवान्, अस्थिशब्दस्य अष्ठीभावः, अष्ठीवान्नाम ग्रामः, चक्रीवान्, चक्रशब्दस्य चक्रीभावः, चक्रीवान् गर्दभः । कक्षीवान् इत्यादि ।

## ६२. चतुर्भुजान्तादिसन्तादुसन्तात्तान्ताद्दोषश्च ठस्य कः, न तु शश्वदादेः ।

---

**अमृता०**—६०. अहीति । एते संज्ञायामेव निपात्यन्ते । एषामिरामान्तत्वेन वरामाप्राप्ते त्रिविक्रमाप्राप्ते च निपातो बोध्यः । अहीवती नाम नदी । एवं पद्मावती मुनीवती च नद्यौ । कपीवती मणीवती च कयोश्चिन्नामनी ।

**अमृता०**—६१. अष्ठीति । अष्ठीवदादयश्च संज्ञाविशेषेषु मतुना त्रिविक्रमेण च साधवो भवन्ति । कार्यान्तरञ्च निपातस्याह—अष्ठीभाव इति । कक्षीवानित्येकस्य मुनेर्नाम । इत्यादि पदेन—चर्मण्वती नदी, रुमण्वत् पर्वतः, आसन्दीवान् ग्रामः । असंज्ञायान्तु—अस्थिमान् चक्रवान् कक्षावान् चर्मवती रूमणवान् आसनवानित्येव ।

**अमृता०**—६२. चतुरिति । चतुर्भुजसंज्ञको वर्णोऽन्ते यस्य स चतुर्भुजान्तः, तस्मात्, इसन्तात् उसन्तात् तरामान्ताच्च शब्दात् तथा दोष् शब्दाच्चोत्तरस्य ठप्रत्ययस्य क आदिश्यते, किन्तु शश्वदादेरुत्तरस्य ठस्य को न भवति । एषां तरामान्तत्वेन कादेशे प्राप्ते प्रतिषेध इति भावः । टस्त्विक इति वक्ष्यमाणपरिभाषाया अपवादरूपोऽयम् । नैषाद कर्षुक इति—निषाद कर्षू शब्दात्—'तत आगतो जातो जितो वे'त्याद्यर्थे ठः, तस्य कः, 'अनन्तस्य वामनः के' इति वक्ष्यमाणेन वामनः । पितुरागतः पैतृकः । सर्पिषा संस्कृतः सार्पिष्कः ।

---

निपातफलं । किन्त्वेतन्न बहुसम्मतमिति । ननु ककुदस्य तान्तादेशे कृते, एवं मरुत्वानित्यादौच नित्यं हरिवेणुविधिः प्रत्ययहरिवेणावित्यनेन हरिवेणुः कथं न स्यादिति वाच्यं, नच हरिवेणौ हरिवेणुर्वेत्यस्यायं नियमः, अतोऽस्यापि विष्णुपदान्तविषयत्वात् प्रवृत्तिर्न स्यात् ॥ ५९ ॥

**बाल०**—अही । संज्ञायां वाच्ये मतोर्वरामादेशेन तथा पूर्वपदान्तत्रिविक्रमेणच महाहीवत्यादयः प्रयोगाः साधवो भवन्ति । अहिरस्त्यस्या इति, मुनिरस्त्यस्या इति, मरिस्त्यस्या इति, एते संज्ञाविशेषाः ॥ ६० ॥

**बाल०**—अष्ठी । तथा अष्टीवदादयश्च साधवो भवन्ति । अस्थ्यस्येत्यर्थे अष्ठीवानिति साधनप्रकारस्तु स्वयमेवोक्त इति । चक्रमस्यास्ति चक्रीवानिति । कक्षमस्यास्तीति कक्षीवान् पूर्ववत् । इत्यादीत्यादिपदेन यथासम्भवमूह्यं ॥ ६१ ॥

नैषादकर्षुकः, पैतृकः, सार्पिष्कः, धानुष्कः, औदश्वित्कः, दोर्भ्यां तरति दौष्कः। शश्वदादेस्तु—शश्वतिकः।

## ६३. भ्वादेशाशिमेयसोस्त्वादिहरः।

वहो र्भूः भूमा भूयान्। भूतोयुट् इष्ठे—भूयिष्ठः।

---

धनुः प्रहरणमस्येति, तदस्य प्रहरणमित्यर्थे माधव ठः। उदश्विता तक्रेण संस्कृतः औदश्वित्कः। दोर्भ्यां हस्ताभ्यामित्यर्थः। शश्वदेव शाश्वतिकः, स्वार्थे ठः। आदि शब्देन यावतिकः तावतिक इति च।

**अमृता०**—६३. भ्वादेशादिति। बहोर्भूरिति य अदिष्ट स्तदुत्तरयोः इमेयसोः प्रत्यययोराद्यक्षरस्य अर्थादिरामस्य हरो भवति। बहोर्भाव इत्यर्थे पृथ्वादिभ्य इमनि वेति इमन्, तत इरामे हरे भूमन् इति स्थिते त्रिविक्रमः सोर्हरः, नस्यहरश्चेति नामप्रकरणोक्ता प्रक्रियानुसर्त्तव्या-भूमा। भूयानिति—बहु शब्दाद् गुणप्रकर्षार्थे ईयसुः। भ्वादेश उक्त एव नामधातु प्रकरणे। अनेन सूत्रेण ईयसो रीरामहरः, ततश्च त्रिविक्रमादयः। गुणप्रकर्षे इष्ठेयसू वक्ष्येते। नामधातौ—भूतो युडित्यादौ लाघवार्थं यद्यपि णीष्ठेयः स्विति ईयसोश्च पर निमित्ततोक्ता तथापि ईयसौ तु युडागमस्यानर्थकतया इष्ठे हि स इष्ट इत्येवात्र पुटयति—भूतो युट इष्ठ इति। इष्ठस्य यिट् चेति पाणिनीयाश्च। तेत्विष्ठेऽप्यादिहरमिच्छन्तीति यिट् करणमावश्यकम्।

---

**बाल०**—चतु। चतुर्भुजान्तादिभ्यः परस्य ठस्य को भवति। शश्वदादेरुत्तरस्थतु ठस्य को न भवति। निषादकर्ष्वा जितः निषादर्षूमर्हतीति वा निषादकर्षुक इति ऊरामस्य वामनो वक्ष्यते। पितुरागतः पैतृक इति। सर्पिषा संस्कृतः संसृष्टो वा सर्पिष्क इति। धनुषोऽयं धानुष्क इति। उदश्विता संसृष्टः औदशित्कः। शश्वत् अर्हति शाश्वतिक इति ॥६२

**बाल०**—भ्वादे। भ्वादेशात् वहोर्भूरूपादेशादुत्तरयोरिमेयसोरादेर्हरो भवति। वहोर्भाव इत्यर्थे पृथ्वादेरिमनिर्वेत्यनेन इमन्। क्षिप्रस्य क्षेप इत्यनेन वहोर्भूर्णीष्ठेमेयःसु। तत् करोति तदाचष्टे इत्यर्थे णिरित्युक्तं। गुणप्रकर्षे इष्टेयसू वक्ष्यते। भूमा इति नान्त-धातुर्वजितेति त्रिविक्रमः। राधाविष्णुजनाभ्यामिति सोर्हरः। नामान्तस्येति नस्य हरः। अयं बहूनां प्रकर्ष इत्यर्थे ईयसुः। भूतो युट् तथा प्रशस्यस्य श्रज्यावित्यनेन णीष्ठेयःसु भूतो युट्। भूयेयसु इति स्थिते युटः टित्वात् टिदागमः परसम्बन्धीत्यनेन परसम्बन्धित्वात् भवादेशादित्यनेन युटा सह ईयस ईरामस्य हरः। अचश्चतुर्भुजानुबन्धानाञ्चेति नुम् नान्तधातुर्वजितसान्तसत्सङ्गेति त्रिविक्रमः सोर्हरः। सत्सङ्गान्तस्येति सहरः भूयानिति। ननु यदीयसौ परे युटः स्थितिरेव नास्ति, तर्हि भूतो युडित्यत्र ईयसुग्रहणेन किं मैवं, यद्यपि भूतोषुडित्यत्रेयसोः प्रयोजनं नास्ति, तथापि प्रशस्यस्य श्र ज्यावित्यादौ प्रयोजनमिति नेयसुग्रहणमनर्थकं। भूत इति यद्यपि णीष्ठेयःसु भूतो युट् तथाप्यत्र इष्ठे एव युटः प्रयोजनादिष्ठे इति स्पष्टार्थमुक्तं। अयं बहूनां श्रेष्ठ इत्यर्थे भूयिष्ठ इति ॥ ६३ ॥

## ६४. ऋरामस्य रो ये।

पित्र्यम्।

## ६५. अनन्तस्य वामनः के, नतु कपि, आपः कपि वा।

ज्ञका गोपिका वधुका ग्रामणिकः नैषादकर्षुकः। आपः — बहुरमकः बहुरमाकः।

---

**अमृता०**—६४. ऋरामस्येति। यप्रत्यये परे ऋरामस्य रः स्यात्। पितुरागतमित्यर्थे ऋरामात्तु माधव ठः पितु र्यरामश्चेति यः—पित्र्यम्। चकारात् पक्षे ठः—पैत्रिकमिति।

**अमृता०**—६५. अनन्तस्येति। के परे अनन्तसंज्ञकस्य वर्णस्य त्रिविक्रमस्य वामनः स्यात्, कप् प्रत्यये परे तु स न भवति, तस्मिन् परे आपस्तु वामनो वा भवति। ज्ञकेति—जानातीति ज्ञः, ईशोद्धवेत्यादिना कप्रत्ययः कृत्, ततो लक्ष्म्यामाप्—ज्ञा, ततश्च स्वार्थे क स्तद्धितः, आप् च, ज्ञा एव ज्ञकेति। एवं गोप्येव गोपिका, वधूरेव वधुका। उभयत्र स्वार्थे कप्रत्ययादाप्। एतानि स्त्रीप्रत्ययोदाहरणानि। अनन्तस्येति सामान्येन ग्रहणादन्येषाञ्च वामन इष्ट इत्युदाहरणान्तरं दर्शयति—ग्रामणिक इति। ग्रामं नयतीति ग्रामणी, नियः क्विप्। ततः स्वार्थे कः—ग्रामणीरेव ग्रामणिक इति। निषादं कर्षतीति औणादिक ऊङ्—निषादकर्षूः, तस्मात् जाताद्यर्थे माधव ठः, ठस्य कः, वामनश्च—नैषादकर्षुक इति। बह्वो रामा यस्येति पीताम्बरे कप्, अत्र विकल्पेन वामनः। अनायस्तु कपि न वामनः—प्रियग्रामणीकः गोपवधूक इति। अनन्तस्येति किम्—नौका। के इति प्रत्ययस्यैव ग्रहणात् केवल करामे ( प्रकृतिस्थ करामे ) तुन—राका वलाकेत्यादौ।

---

**बाल०**—ऋरा। ये परे ऋरामस्य रो भवति। पितुरागतमित्यर्थे पितुर्यरामश्चेत्यनेन यः। चकारात् माधवठः। इति पैत्र्यं पैत्रिकञ्च॥ ६४॥

**बाल०**—अन। के परे अनन्तस्य अनन्तसञ्ज्ञस्य वामनो भवति कपि परेतु न। कपि परे आपो वामनो वा स्यात् के पुनर्नित्यं स्यात्। ज्ञकेति। जानातीति वाक्ये ईशोद्धवकिरतिगिरतीत्यनेन कप्रत्ययान्तः ज्ञः तस्माल्लक्ष्म्यामाप् ततो ज्ञा एवेति वाक्ये स्वार्थे कस्तस्मादप्याप्। गोप्येव गोपिका वधूरेव वधुकेति उभाभ्यां स्वार्थिकप्रत्ययान्तत्वादाप्। केवललक्ष्मीप्रत्ययान्तस्यानन्तस्येत्याशङ्कानिरासार्थमुदाहरणान्तरमाह ग्रामणिक इति। ग्रामं नयतीति अग्रामणीस्तयो ग्रामणीरेवेति ग्रामणिकः। ज्ञादिचतुर्भ्योऽज्ञातादिष्वर्थेषु क इत्येके। निषादं कर्षतीति कृषादेरूङित्यौणादिक ऊङ् निषादकर्षूकस्ततस्तदर्हतीति माधवठः। चतुर्भुजान्तादिति ठस्य कः नैषादकर्षुक इति। कपितु प्रियग्रामणीक इत्यादि। बह्व्यः रमा यस्येति पीताम्बरे कप् बहुरमक इत्यादिद्वयं। अनन्तस्येति किं गोका नौका इति॥ ६५॥

**६६. तरतमकल्परूपेषु ब्रुवादिष्विव वामनः ।**

ततो ब्राह्मणिब्रुवेत्यादिवत् ब्राह्मणितरेत्याद्युदाहरणीयम् ।

**६७. सर्वाव्ययाभ्यामेकवर्जं संख्या-संख्यातैकदेशेभ्यश्चाहः-शब्दस्याह्नः समाहारवर्जं टे ।**

---

**अमृता०**—६६. तरेति । यथा ईवन्तस्य ब्रुवादिषु परेषु वामनो विहित स्तथैव **तरतम** कल्प रूपेषु प्रत्ययेषु च परेषु बामनो भवति । तत्रेवन्तस्य अनेकसर्वेश्वरस्येति, उक्तपुरुषोत्तमस्येति च विशेषणद्वयं योज्यम् । जात प्रकर्ष तरतमौ । ब्राह्मणि तरा ब्राह्मणितमा । ईषद्समाप्तौ कल्पः—ब्राह्मणिकल्पा, प्रशंसायां रूपः—ब्राह्मणिरूपेति ।

**अमृता०**—६७. सर्वेति । टरामे प्रत्यये परे सर्वाव्ययाभ्यामुत्तरस्य अहः शब्दस्य, तथा एकं वर्जयित्वा संख्या शब्दात् संख्यात शब्दादेकदेशवचि शब्दाच्चोत्तरस्य अहः शब्दस्य अह्नादेशोभवति । समाहार विषये तु टे परे आदेशोऽयं न भवति । अह्न ष्ट खरामयो रित्यनेन टे यः संसारहर उक्तः, सतु समाहारविषयक एव, तद्वर्जमन्त्रैवाह्नादेशः स्यादित्याशयः ।

सर्वाह्न इति—सर्वश्च तदहश्चेति श्यामरामे राजाहः सखिभ्य इति टः समासान्तः, रात्राह्नाहाः पुंसीति पुंस्त्वम्, अह्नादरामस्येति णत्वम् । निरह्न इति—निर्गतोऽह्न इति वाक्ये—निरादयः पञ्चम्या इत्यनेन समासे पूर्ववत् टः, णत्वञ्च । द्वयोरह्नो भव इति विग्रहे—"त्रिरामीतः सर्वेश्वरादि प्रागदीव्यतीयस्य महाहरोऽनपत्ये" इत्यनेन भवार्थो यो नृसिंह ठः, तस्य लुक् महाहर इत्यर्थः । अत्र तद्धितलुग विषये हि समाहारः, टप्रत्ययश्च ।

---

**बाल०**—तर । ब्रुवादिषु परेषु उक्तपुरुषोत्तमस्येवन्तस्यानेकसर्वेश्वरस्य यथा वामनो भवति तथैव तरतमकल्पचेलेषु परेष्वपि, तथाविधस्योक्तपुरुषोत्तमस्य वामनो भवति । ततो हेतोरन्यत् स्पष्टं । इयं ब्राह्मणी इयं ब्राह्मणी इत्यनयोर्मध्ये प्रकर्षेयं ब्राह्मणीति ब्राह्मणितरा, एवं वैष्णवितरेत्यादि ॥ ६६ ॥

**बाल०**—सर्वा । टे परे सर्वाव्ययाभ्यामुत्तरस्याहःशब्दस्याह्न इत्ययमादेशो भवति । समाहारं वर्जयित्वा टेतु परेऽहःशब्दस्याह्नादेशो भवन्, एकं वर्जयित्वा संख्यासंख्यातैकदेशेभ्यः परस्यैव भवति । अह्नष्ट खरामयोरेवेत्यनेन संसारहरे प्राप्ते पुनर्नियमोऽयं । एकवर्जं समाहारवर्जमित्यनयोः परत्रैवान्वयः । सङ्ख्यायाः समाहारत्वात् यावत् सम्भवस्तावन्न्यायेन । सङ्ख्या गणनमात्रं सङ्ख्यातस्तु गणित इति भेदः । सर्वाह्न इति सर्वेषामहः सर्वञ्च तदहश्चेति वा विग्रहे समासः स्वादिहरः राजाहःसखिभ्य इति टस्तस्मिन्नह्नादेश इति । रात्राह्नाहादयः पुंसीत्यनेन पुंलिङ्गतेति । अरामादह्नस्येत्यनेन णत्वं । निरह्न इति निर्गतोऽह्न इति विग्रहे, निरादयः पञ्चम्या इत्यनेन समासे सति पूर्ववत् टप्रत्ययः । अन्तरङ्गत्वादेर्महाहर इति सर्वत्रैव समासान्तप्रत्यये सति योज्यं । निरह्ना रात्रिरिति रक्षितः तन्मतेऽत्र पुंलिङ्गता व्यभिचरतीति । द्वयोरह्नोर्भव इति विग्रहे

सर्वाह्णः निरह्नः, द्वयो रह्नो र्भवः, भावार्थप्रत्ययस्य लुक् द्वयह्नः। संख्याताह्नः पूर्वाह्णः। एकवर्जमिति किम्—एकाहः। समाहार वर्जमिति किम्—द्वयहः।

## ६८. संख्या-वि-सायेभ्योऽह्नस्याहन् वा ङौ।

द्वयह्ने द्वयहनि, व्यह्ने व्यहनि। ईङ्योस्तु वा द्वयह्नि। एवं सायादपि।

---

समाहारे वाच्ये तद्धितार्थविषये च समाहारस्य विधानात् यत्र समाहारो वाच्यस्तत्रैव टप्रत्यये अह्न ट-खरामयो रिति संसारहरः—द्वयह इति। यत्र तु स समाहरस्तद्धितार्थे, समासान्तरे वा तत्र ट प्रत्यये हि अह्नादेश इति विवेकः। संख्यातेति स्वरूपग्रहणं, तेन संख्यातश्च तदहश्चेति श्यामरामे टप्रत्ययः। पूर्वाह्ण इति—'पूर्वापराधरोत्तरादीन्यवयविना' एकदेशशब्देन समासः, पूर्ववत् टप्रत्ययः पुंस्त्वश्च। एकशब्दस्य सङ्ख्यावाचित्वादादेशे प्राप्ते वर्जनम्। एकाह इतिश्यामरामः। अत्रादेशबाधे संसारहरस्यावकाशः। द्वयह इति संसारहरः प्रागुक्त एव।

अमृता०—६८. संख्येति। ङौ विष्णुभक्त्यां परस्यां संख्यावाचिशब्दात् विशब्दात् तथा साय शब्दाच्चोत्तरस्य अह्नस्य अहन् वादिश्यते। व्यह्न इति—विगतमहरिति विग्रहे कुप्रादय इति मध्यपदलोपी समासः। अह्नादेशाभावपक्षे ईङ्योस्तु वेति अनोऽरामहरो वा व्यह्नि। एवं सायादपीति—अनेन साय इत्यवसानवःच्यरामान्तशब्दोऽयमिति सूचितं नतु मरामान्तः। तेन अह्नः सायः ( शेषः ) इत्येकदेशि समासे सायाह्नः, ङौ सायाह्ने सायाहनि सायाह्नि इति। केचित्तु सायमह्न इति विग्रहेण मान्ताव्ययस्य मलोपं विधाय सायाह्न इति साधयन्ति।

---

त्रिरामीतः सर्वेश्वरादिप्राग्दीव्यतीयस्य महाहरोऽनपत्ते इत्यनेन भवार्थप्रत्ययस्य नृसिंहठस्य लुक् महाहर इत्यर्थः। यथा पञ्चगवप्रिय इत्यत्रोत्तरपदे परे तद्धितालुकि विषये गोष्ट-स्तद्धित इति टस्तद्वद्भवार्थप्रत्ययस्य महाहरार्थमनपत्यप्रत्ययान्तराकाङ्क्षायां राजाहः-सखिभ्य इत्यनेन विहितो यष्टः सोऽत्र वर्त्ततेऽतस्तस्मिष्टे अहःशब्दस्याह्नादेशः। द्वयह्न इति। समाहारस्तावद्द्विविधः समाहारवाच्ये तद्धितार्थे विषये चेत्युक्तं। अतोऽत्रेयं व्यवस्था स्वीकार्या। यत्र समाहारवाच्ये समाहारे सति टो भवति, तत्र तस्मिन् टेऽह्नः संसारहारो भवति, यत्र त्वन्यार्थे वाच्ये समाहारे समासान्तरेच सति टो भवति, तत्र तस्मिष्टेऽहःशब्दस्याह्नादेशो भवतीति अत्र भवार्थ एव वाच्यो न समाहार इति टेऽह्नादेशः। सङ्ख्याताह्न इति सङ्ख्यातञ्च तदहश्चेति विग्रहे पूर्ववत् टप्रत्ययः पुरुषोत्तमश्च। पूर्वाह्न इति अह्नः पूर्वमिति। पूर्वापराधरोत्तरादीन्यवयविनेत्यनेन समासः। पूर्ववत् ट पुरुषोत्तमौ। किमिति एकं यर्हि स्यात्तर्हि किं स्यात्। एकाह इति श्यामरामे। अह्नष्ट-खरामयोरेवेत्यनेनसंसारहरः। द्वयोरह्नोः समाहारः द्वयह इति पूर्वमेवोक्तं ॥६७॥

बाल०—सङ्ख्या। ङौ परे सङ्ख्यावाचकात् विशब्दात् सायाच्च परस्याह्नस्याहन् वा स्यात्। व्यह्न इति विगतमह इति विग्रहे कुप्रादयः मध्यपदलोपश्चेति समासः।

## ६८. प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपि, नतु स्वाद्यन्ता-दापि, क्षिपकादेश्च न ।

णकः—कारिका पाचिका। प्रकारार्थे कः—जटिलिका। प्रत्ययस्थादिति किम् ? शक्नोतीति शका। नत्विति—बहुपरिव्राजका काशी। स्वाद्यन्तत्वमत्र भूतपूर्वां गतिमाश्रित्य। बहुशर्मिका विष्णुभक्तिः, इत्यत्र तु केवलाद् वक्ष्यमाणकवन्तादेवापो नतु स्वाद्यन्तादितीरामः स्यादेव।

---

अमृता०—६८. प्रत्ययेति। आपि परे प्रत्ययस्थितात् करामात् पूर्वस्य अरामस्य इरामः स्यात्, स्वाद्यन्तात् कात् पूर्वस्य त्वापि स न भवति, तथा क्षिपकादेश्च स न भवति। कारिकेति—क्रियते इति कारिका णको लक्ष्म्यां भावे। यद्वा 'णकतृलाविति' कर्त्तरि णकः, पश्चादाप्। एवञ्च पाचिकेति। जटिलिकेति—जटा विद्यतेऽस्येति जटिलः तस्य प्रकार इत्यर्थे कः, पश्चादाप्। प्रत्युदाहरति—शक्नोतीति। शकॢ शक्तौ पचादेरत् —शकः, तत आप्। अत्र कः प्रकृतेरेवाङ्ग, नतु प्रत्ययस्य, तस्मादापि नारामस्येरामः। बहु परिव्राजकेति—परिव्रजतीति णकः, परिव्राजकः सन्यासी, बहवः परिव्राजका यत्र सा बहुपरिव्राजका। अत्र स्वाद्यन्तो यः परिव्राजक शब्द स्तस्मात् पश्चात् पीताम्बरे समुदायेनान्यपदार्थत्वादाप्, तस्मादरामस्य नेरामः। बहुशर्मिकेत्यत्र तु बहूनि शर्माणि यस्यामिति पीताम्बरे यः कप् वक्ष्यते तस्मात् केवलात् कप् प्रत्ययादाप् विधीयते नतु सुवन्तात् कप उत्तरमाप्, अतोऽत्र भवत्येवारामस्येराम इति भावः।

---

ईङ्योस्तु वेपि व-म सत्सङ्गहीनस्यानोऽरामहरो भगवति ईङ्योस्तु वेत्यनेन पक्षेऽरामहरः। द्व्यह्नि एवं व्यह्नि। एवं सायादपीत्यनेन सायमिति मान्तमव्ययं प्रसिद्धमस्तीति सर्वसम्मतं तस्मादन्यमरामान्तमप्यस्तीति सूचितं। एतत्सायेभ्य इत्यनेन सूत्रेऽपि दर्शितं। तेन सायञ्च तदहश्चेति सायाह्नस्तस्मिन् सायाह्ने सायाहनि सायाह्नि चेति। विग्रहे मान्ताव्ययस्यापि शेषो वृद्धादित्यनेन मलोपं कृत्वा सायाह्न इति साधयन्तीति ॥ ६८ ॥

बाल०—प्रत्य। आपि परे प्रत्ययस्थात् प्रत्ययस्थितात् करामात् पूर्वस्यारामस्येरामो भवति। नतु। स्वादिरन्ते यस्य स स्वाद्यन्तस्तस्मात् प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपितु न स्यात्। क्षिप। आपि परे क्षिपकादेश्च प्रत्ययस्थात् कात् पूर्वस्यारामस्येरामो न भवति। णक इति, णको लक्ष्म्यां भावे इत्यनेन कर्त्तृणौ कर्त्तरीत्यनेन वा णको भवतीति। क्रियते करोतीति वा कारकः पश्चादाप् कारिकेति शास्त्रसमाधानपद्यं, तथा पच्यते पचतीति वा पाचकः पश्चादाप् पाचिकेति प्रकारार्थे कस्तद्धित इत्यर्थः। जटा विद्यतेऽस्य जटिलस्तस्य प्रकारा इत्यर्थे क आप् जटिलिका। शक्नोतीति शकॢ शक्तौ पचादेरत् शकस्तत आप् शका। अत्र प्रकृतेः क इत्यादि पूर्वस्यारामस्य नेराम इति। परिव्रजतीति णकः परिव्राजकः सन्न्यासी बहवः परिव्राजकाः यस्यां सा बहुपरिव्राजका

**७०. ममक-नरकयोश्च वक्तव्यम् ।**

ममेयमित्यण्—ममकादेशः, अजादिपाठात् मामिका । नरान् कायति नरिका, कैशब्दे । नरान् कामयत इति ड प्रत्ययादिति च वर्द्धमानः ।

**७१. त्यण्-त्यचोश्च ।**

वक्ष्यमाणविकल्पापवादः । दाक्षिणात्यिका इहत्यिका । क्षिपकादेस्तु—क्षिपका ध्रुवका चटका उपत्यका अधित्यका देवदत्तका । क्षिपकादि-राकृतिगणः ।

---

**अमृता०**—७०. ममकेति । आपि परे ममक-नरकयोश्च कात् पूर्वस्य अरामस्य इरामः स्यादिति वक्तव्यम् । ममेयमित्यर्थे केशवणः, तत्र ममेत्यस्य ममकादेशे कृते अजादित्वादाप्, वृष्णीन्द्रः, इरामश्च । नरान् कायतीति कर्मण्यनुपेन्द्रादिति कः, तत आप् इरामश्च—नरिकेति । एतयोः प्रकृतेरङ्गभूत करामत्वादप्राप्ते विधानम् । वर्द्धमानमते स्वार्थ णिङन्त कमुधातो डंप्रत्ययः, टेर्लोपो डितीति तल्लक्षणम्, ततः संसाहहरे नरकः, तस्मादाप् ।

**अमृता०**—७१. त्यणिति । आपि परे त्यण्-त्यचोश्च प्रत्यययोः कात् पूर्वस्यारामस्य इरामः स्यात् । वक्ष्यमाणेति—यकपूर्वस्यापश्च वेत्यनेन विकल्पस्यापवादोऽयमित्यर्थः । दाक्षिणात्यिकेति—दक्षिणा पश्चात् पुरोभ्यो नृसिंह स्त्यइति त्यणि, दक्षिणस्यां दिशि भवेत्यर्थः । ततः स्वार्थे कपि आप् । इहत्यिकेति—इह भवेत्यर्थे-अमाविः क्वेह तसित्रेभ्य स्त्यराम इति त्यः—इहत्या, ततः स्वार्थे कः, आप् च । उभयत्र अनन्तस्य वामनः के इति वामन स्तत्रैवेराम इति बोध्यम् । क्षिपकाश्चेरामे प्राप्ते प्रतिषेधः । तथा हि—क्षिपतीति क्षिपा, ईशोद्धवेत्यादिना कः, सा एव क्षिपका । एवं ध्रुवकादयश्च । क्षिपकादि राकृति गण इति—तेन सेवका करका कटका अवका अलका कण्यका प्रभृतिभ्यश्चेरामो न भवतीतिभावः ।

---

काशीति । स्वाद्यन्तत्वमिति । स्वादेर्भूतपूर्वामतीतपूर्वा गतिं प्राप्तिमाश्रित्यात्र स्वाद्यन्तत्वं गृहीतं, तेन बहवः परिव्राजका यस्यामिति विग्रहे पूर्वप्राप्तोऽन्तरङ्गत्वादिहरं कृत्वा पश्चात्तस्मादाप् इति तस्मिन्नापि कस्य प्रत्ययस्थत्वेऽपि पूर्वस्यारामस्येरामो न स्यादिति भावः । पीताम्बरे यः कप् प्रत्ययो वक्ष्यते, तस्मात् केवलात् कप् प्रत्ययादाप् न स्वाद्यन्ता-दिति हेतोरापीरामः स्यादवेति ज्ञेयं ॥ ६९ ॥

**बाल०**—मम । आपि परे ममक-नरकयोश्च कात् पूर्वस्यारामस्येरामः स्यादिति वक्तव्यं । मम इयमित्यर्थे तस्येदमिति केशवणस्तस्मिन् सति ममकादेशेच कृते अजादि-गणपाठादाप् मामिकेति । नरान् कायति शब्दयतीति कर्मण्यनुपेन्द्रादित्यनेन कः ततः आप् नरिकेति । अत्रोभयत्रापि प्रकृतेः करामत्वादप्राप्ते विधानं । वर्द्धमानमतमाह नरान् कामेति । डप्रत्ययात् डप्रत्ययान्तादाप् इति शेषः । एतन्मते कामयते इति स्वार्थणिङन्त-प्रयोगेण कमधातोर्डः संसारस्य हरो डिति नरकस्तस्मादाप् नरिका ॥ ७० ॥

**७२. उत्तरपदलोपे च न ।**

देवदत्तैव देवका ।

**७३. तारका नक्षत्रे ।**

अन्यत्र तारिका ।

**७४. अष्टका पितृदैवत्ये काले च ।**

अन्यत्र अष्टिका खारी ।

---

**अमृता०**—७२. उत्तरेति । उत्तरपदस्य लोपे सति आपिपरे कात् पूर्वस्यारामस्येरामो न स्यात् । देवदत्ता एवेत्यर्थे संज्ञायां कः, तत्र "द्वितीयात् सर्वेश्वरात् चतुर्थादपि परभागस्य सर्वेश्वरे" इत्यनेनोत्तर पदस्य दत्तस्य लोपः ।

**अमृता०**—७३. तारकेति । तारैवेत्यर्थे तारकेति नक्षत्रे वाच्ये हि निपात्यते । नक्षत्रादन्यस्मिन्नर्थे तु स्यादेव इरामः—तारिकेति । तारयतीति तारा कालिका देवी, सैव तारिकेत्यर्थः ।

**अमृता०**—७४. अष्टकेति । पितृदैवत्ये कार्ये काले च वाच्ये अष्टकेति साधुः स्यात् । अष्टका श्राद्धविशेषः कालविशेषश्च । अष्टिकेति—अष्टौ परिमान मस्या इति वाक्ये संख्याया अतिशदन्ताया इति कः, तत आप् इरामश्च ।

---

**बाल०**—त्यण । आपि परे त्यणत्ययोश्च कात् पूर्वस्य अनन्तस्य वामन इत्यनेन विहितस्यारामस्येरामः स्यात् । वक्ष्येति । अपवाद इत्यस्मादयमिति शेषः । दक्षिणस्यां भवा इत्यर्थे दक्षिणपश्चात्पुरोभ्यो नृसिंहस्तस्य इणि त्यण् दक्षिणात्या सैवेति कः दाक्षिणात्यिकेति । इह भवा इति अमा किं क्वेह तसित्रेभ्यस्तस्त्यरामः इहत्या ततः स्वार्थेकः पूर्वस्य वामन इहत्यिका । क्षिपकादेस्तु रूपं दर्श्यते इति शेषः । क्षिपति या सा क्षिपा सैव क्षिपका । एवं ध्रुवका क्षिप प्रेरणे ध्रु गतिस्थैर्ययोरित्येताभ्यामदन्ताभ्यां क आप् । तथा चटैव उपत्यैव अधित्यैव देवदत्तैवेति ॥ ७१ ॥

**बाल०**—उत्त । उत्तरपदस्य लोपे हति प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपि न स्यात् । देवदत्तैवेत्यर्थे क उत्तरपदलोपश्च देवकेति ॥ ७२ ॥

**बाल०**—तार । तारैवेत्यर्थे नक्षत्रे वाच्ये तारका इति निपात्यते । अस्मिन्नेव वाच्ये तरतेर्णकः तारका उपचारात् कणीनियाकाञ्चेत्येके । नक्षत्रादन्यत्र वाच्ये तारयतीति तारा भगवती सैव तारका ॥ ७३ ॥

**बाल०**—अष्ट । पितृदैवत्ये कार्ये कालेच वाच्ये अष्टका इति साधु । अष्टका श्राद्धविशेषः कालविशेषश्चेति । अशूङ् व्याप्तौ इष्यशोस्तक इति अशधातोस्तकः । छशराजेत्यनेन ष इत्यन्ये । अन्यत्रेति स्पष्टं ॥ ७४ ॥

**७५. वर्णका प्रावरण विशेषे ।**

अन्यत्र वर्णिका । साधवः ।

**७६. यत्तददसाञ्च ।**

यका सका असकौ, यकाभ्यां तकाभ्यां अमुकाभ्याम् ।

**७७. आशिषि च ।**

जीततात् जीवका, नन्दका ।

**७८. सूतकादीनां वा ।**

---

**अमृता०**—७५. वर्णकेति । प्रावरण विशेषे वाच्ये वर्णका इति साधुः स्यात् । वर्णकाचन्द्रातप इत्यर्थः । वर्ण स्तुति क्रिया विस्तार गुणवचनेष्विति चौरादिक धातो र्णकः । अन्यत्र वर्णिकेति व्याख्यात्रीत्यर्थः । सर्वत्रेरामावेन निपातः ।

**अमृता०**—७६. यत्तदिति । न इत्यनुवर्त्तते । आपि परे यत् तत् अदस् इत्येतेषाञ्च कात् पूर्वस्यारामस्येरामो न भवति । यका सकेत्यादौ भाविनि भूतवदुपचारात् स्वादि-परत्वमङ्गीकृत्यैव—'तदादिसप्तानामि'त्यादिना यथायोग्यं कार्यं विधाय पश्चात्—"बहूनां जाति प्रश्नेऽतमजकौ" इत्यनेन अक् प्रत्ययः, आप् च ।

**अमृता०**—७७. आशिषीति । आशिषि गम्यमानायाञ्च कात्पूर्वस्यारामस्येरामो न स्यात् । जीवतादित्यर्थे जीवकः, 'अक आशिषि' इत्यकः, पश्चादाप् । एवं नन्दतादिति नन्दका ।

**अमृता०**—७८. सूतकादीनामिति । एषामापिपरे कात् पूर्वस्यारामस्येरामो वा

---

**बाल०**—वर्ण । प्रावरणविशेषे वाच्ये वर्णका इति साधु । वर्णका चन्द्रातपादिः । वर्ण वर्णस्तुतिक्रियाविस्तारगुणवचनेष्विति चौरादिकः ततो णक इति केचिदपि । अन्यत्रेति वर्णिका शास्त्रस्य टीकाव्याख्यात्रीति । साधव इति तारकादय इत्यर्थः ॥ ७५ ॥

**बाल०**—यत्त । आपि परे यत्तददसाञ्च कात पूर्वस्यारामस्येरामो न भवति क्षिपकादित्वात् । कतमा भवतीनां ब्राह्मणीत्यर्थे बहूनां जातिप्रश्नेऽतमजकावित्यनेनाक् । भाविनि भूतवदुपचारात् स्वादिपरताङ्गीकारेणैव तदादिसप्तानामित्यादिना यथासम्भवं कार्यं विधाय पश्चादाप् यका सकेत्यादयः ॥ ७६ ॥

**बाल०**—आशि । आशिषिच गम्ये आपि परे कात् पूर्वस्यारामस्येरामो न स्यात् क्षिपकादित्वात् । जीवतादिति जीवका नन्दतादिति नन्दका उभयत्रापि णकान्तादाप् । क्षिपकादिराकृतिगण इत्यन्येऽपि द्रष्टव्याः ॥ ७७ ॥

सूतका सूतिका, वर्त्तका वर्तिका शकुनिः, पुत्रका पुत्रिका सत्पुत्रका सत्पुत्रिका, वृन्दारका वृन्दारिका ।

**७९. यकपूर्वस्यापश्च वा ।**

इभ्यका इभ्यिका, चटकका चटकिका । आप इति किम्—शशकायतेः क्विप् ततः कः—शशकिका नित्यम् ।

**८०. धात्वन्त यकपूर्वस्यापो नित्यम् ।**

सुनायिका; सुष्ठु पच्यते सुपाकिका यवागू ।

---

स्यात् । सूतैव सूतका सूतिका । वर्त्तत इति वर्त्तकेत्यादि । पुत्रकेति अल्पार्थे कः, तत आप् । सत्पुत्रकेति प्रशंसार्थे कः । वृन्दारकेति प्रशस्तार्थे कः ।

**अमृता०**—७९. यकेति । आपि परे यपूर्वस्य कपूर्वस्य च आपः सम्बन्धिनः अरामस्येरामो वा भवति । आद्यसूत्रेण नित्यमिरामे प्राप्ते विकल्पार्थमिदम् । इभ्या धनवती, सैव इभ्यका स्वार्थे कः, अनन्तस्येति वामनः, ततस्तस्यैनारामस्येरामः । एवं चटकैव चटकेत्यादि द्वयं । शशकायतेरिति—शशक इवाचरतीत्यर्थे शशकायं धातोः क्विवित्यर्थः । अरामहरो रामधातुके, यवयो र्हरो बले इति यरामहरः, ततः कः, आप् च । अत्रारामस्येरामो नित्यं, स च प्रथमसूत्रेणैव ।

**अमृता०**—८०. धात्वन्तेति । धात्वन्तस्थितौ यकौ पूर्वौ यस्य तादृशस्यापो विहितारामस्य स्थाने नित्यमिरामो भवति । पूर्वस्यापवादोऽयम् । सुनयिकेति—नयतीति नया, ईशादल् आप् च, शोभना नया यस्या सा सुनयिका पीताम्बरे कः, आप्, आपः कपि वेति वामन स्तस्येरामः । सुष्ठु पच्यत इति सुपाका, भावे घण्, ततः प्रागिवीय कः, आप्, अनन्तस्येति वामनः, तस्येरामः ।

---

**बाल०**—सूत । आपि परे सूतकादीनां कात् पूर्वस्यारामस्येरामो वा भवति । सूतकेति सूतैवेति सूतकादिद्वयं । वर्त्तत इति णक आप् वर्त्तकादिद्वयं । शकुनिरिति पक्षिविशेषः अन्यत्र वर्त्तिका काशिकासूत्रस्य व्याख्या । क्षुद्रा पुत्रा इति निन्द्यार्थे कस्तस्मादाप् पुत्रकेत्यादिद्वयं । सन् साधुः पुत्रो यस्या इति प्रशस्यार्थे कः सत्पुत्रकेति द्वयं । प्रशस्तार्थ-कप्रत्ययेन वृन्दारकेति द्वयं ॥ ७८ ॥

**बाल०**—यक । यश्च कश्चेति यकौ तौ पूर्वौ यस्य स यकपूर्वः तस्य आपश्च सम्बन्धिनोऽरामस्येरामो वा स्यादापि परे । इत्यैवेत्यर्थे कः । अनन्तस्य वामन इत्यनेनापो वामन इत्यकादिद्वयं । तथा चटकैवेति चटककादिद्वयं । इति किं किमर्थं । शशक इवाचरतीति क्यङ् । शशकायत क्विविति शशकायते इति वाक्ये क्विप् । अरामहरो रामधातुके इत्यरामहरः । यवयोर्हरो बले इति यरामहरः । पश्चात् कापौ शशकिकेति नित्यं पूर्वेणैव सिद्धं ॥ ७९ ॥

## ८१. द्व्येषयोश्च वा ।

द्वके द्विके, एषका एषिका । नञ्पूर्वयोस्तु समासे सति जात स्वा-दित्वान्न । अद्वके अनेषका ।

## ८२. भस्त्रा-जा-ज्ञा-स्वानां जातस्वादीनामपि वा ।

भस्त्रका भस्त्रिका, अजका अजिका, ज्ञका ज्ञिका, स्वका स्विका ।
अभस्त्रकेत्यादि च ।

---

अमृता०—८१. द्व्येषयोरिति । आपि परे द्वि एष इत्येतयोः कात् पूर्वस्याराम-स्येरामो वा स्यात् । एतयोः कृष्ण नामत्वेन संसारात् प्राक् अक्, ततो भाविनि भूतवदुपचर्य स्वादिविहितं कार्यं कृत्वा पश्चादाप् । द्वके द्विके इति द्विवचनान्तम् । स्वार्थिका क्वचित् प्रकृतितो लिङ्गवचनमतिक्रामन्तीति वचनात् केचिदेक वचनमपि मन्यन्ते—द्वका द्विकेति । नेति—नस्वाद्यन्तादापीति निषेधात् कात् पूर्वस्यारामस्य नेराम इत्यर्थः ।

अमृता०—८२. भस्त्रेति । जातस्वादीनामपि भस्त्रा अजा ज्ञा स्वा इत्येषां कात् पूर्वस्यारामस्येरामो वा स्यात् । भस्त्रकेति—भस्त्रा इवेति सादृश्ये कः, अनन्तस्य वामनः । एवमजकादयः । जातस्वादित्वे चोदाहरति—अभस्त्रकेति । नञ पूर्वत्वात् समासे जात-स्वादित्वमित्यर्थः । एवं निर्भस्त्रिका बहुभस्त्रिकेत्यादि । आदि पदेन—अनजका अनजिका, अज्ञका अज्ञिका, अस्वका अस्विकेति बोध्यम् ।

---

बाल०—धात्व । धात्वन्तौ यकौ पूर्वौ यस्य तादृशस्यापो विहितारामस्य आपि नित्यमिरामो भवति । नाययति या सा नाया इत्यत्र कर्त्तरि ण्यन्तनीधातोः पचादेरत् तस्मादाप् । नाया इति । पच्यते इति भाव इत्यनेन घण् पाका इत्यत्राजादिगणपाठादाप् । ततः शोभना नाया यस्याः शोभना पाका यस्या इति पीताम्बरे असमासान्तविधेर्वा इत्यनेन पाक्षिकः कप् तस्मिंश्च पूर्वस्य वामने कृते सुनायिका सुपाकिका इति । नीङ् प्रापणे ऋदृङादेर्ङ इति ङः पचेर्घण् ततो बहुव्रीहिः । अकृतसमासान्ताद्वेति क इति जुमर-टीकाकृत्, तन्मते सुनयिका इति ॥ ८० ॥

बाल०—द्वेष । आपि प्रत्ययस्थात् कात् पूर्वस्य द्व्येषयोश्चारामस्येरामो भवति । कृष्णनामत्वात् प्रशंसादावर्थेऽन्त्यसर्वेश्वरात् पूर्वमक्, ततो भाविनि भूतमङ्गीकारेणैव स्वादौ यथाविहितं कार्यं कृत्वा, तत आपञ्च विधाय द्वके द्विके इत्यादयः । स्वार्थिकाः क्वचित् प्रकृतितो लिङ्गवचनान्यतिक्रम्य वर्त्तन्ते, इति द्विशब्दोदेकवचनमिति तन्मते द्वका द्विका इत्यपि । चान्द्रास्तु द्विवचनमेवेच्छन्तीति नञिति स्पष्टं । नेति नतु स्वाद्यन्ता-दापीत्यनेन पूर्वारामस्येरामो न स्यादित्यर्थः । न द्वके अद्वके । न एषका अनेषकेति ॥ ८१ ॥

बाल०—भस्त्रा । जातस्वादीनामजातस्वादिनामपि भस्त्राजाज्ञास्वानां प्रत्यय-स्थात् कात्पूर्वस्य कृतवामस्येराम आपि वा स्यात् । भस्त्रेव भस्त्रका भस्त्रिका ।

**८३. स्वभावलक्ष्मीतः कपूर्वस्यापो वामनश्च वा आपि ।**

रमाका रमका रमिका । एवं अरमाका इत्यादि । स्वभावेति किम् ? शोभनिका । तथा अविद्यमाना रमा यस्याः सा, अल्पत्वादौ को वाच्यः —अरमिका अतिरमिका ।

इरामो निवृत्तः ।

**८४. वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् त्रादिषु नतूङ् ।**

त्रतसी, तरतमौ, चरट्जातीयौ, कल्पदेश्यदेशीया रूप-पाशौ त्रादयः ।

---

**अमृता०**—८३. स्वभावेति । स्वभाव लक्ष्मीतो विहितो यः कः, तत् पूर्वस्यापो वामनो वा स्यादापि, चकारादरामस्येरामश्च वा भवति । रमैव रमाका, रमकेति वामन-पक्षे, रमिकेति इरामपक्षे । जातस्वादित्वेऽपि पूर्व वदिराम इष्ट इत्याह—एवमरामाकेति । न रामा अरामा सैवारामाका । इत्यादि पदेन—अरमका अरमिकेति । प्रत्युदाहरति—शोभनिकेति । शोभनैव शोभनिका, अनन्तस्येति वामनः, तत इरामः । शोभनशब्दस्य स्वभावलक्ष्मीत्वाभावान्नित्यमिरामः । तथेति—अविद्यमाना रमा यस्या इति विग्रहे पीताम्बरः, पश्चादल्पार्थे कः, तत आप् । एवमतिक्रान्ता रमा यया सा अतिरमा, ततः कः । पीताम्बरस्यान्यपदार्थं वाच्यत्वेन स्वभाव लक्ष्मीत्वापगमान्नविकल्पः ।

**अमृता०**—८४. वाच्येति । त्रादिषु प्रत्ययेषु परेषु वाच्यलिङ्गलक्ष्मीः पुरुषोत्तम वद्भवति; ऊङन्तशब्दस्तु वाच्यलिङ्गलक्ष्मीरपि पुरुषोत्तमवन्न भवति । तत्रादि पदं विवृणोति—त्रतसी इत्यादिना । त्रादयः पाशान्ता एकादश तद्धितप्रत्यया स्त्रादि शब्द वाच्या इत्यर्थः । सर्वत्रेति सप्तम्या त्र इति त्रप्रत्ययः । तत इति पञ्चम्या स्तसि रिति तस् । एवं द्वित्वबहुत्वयोरपि—सर्वयोः सर्वासु वा सर्वत्र । ताभ्यां ताभ्यो वा ततः ।

---

एवमजकादयः । न विद्यते भस्त्रका यस्या इत्यभस्त्रकेत्यादि चेति जातस्वादेरुदाहरण-मित्यादीत्यादिनान्यदूह्यं ॥ ८२ ॥

**बाल०**—स्वभा । स्वभावलक्ष्मीतो विहितो यः कस्तत्पूर्वस्यापो वामनस्तद्विधस्याप इरामश्च वा भवति आपि परे । रमैव रमाका रमका । एवमिति नास्ति रमा यस्या इति अरमाकेत्यादि । स्वभाव्येति किं किमर्थं स्वभावलक्ष्मीतः यर्हि न स्यात्तर्हि किं स्यात् । शोभवनैव शोभवनिका इत्यत्र अनन्तस्येत्यनेन वामनस्ततः प्रत्ययस्थात् कादित्यनेन पूर्ववदिरामः । तथेति सुगमं । अन्यात्वादावर्थे को वक्तव्य इति केशवणात् कप्रत्ययान्ताप् न स्वाद्यन्तादिति पूर्वारामस्येरामः । एवमतिक्रान्ता रमा यया सा अतिरमिका ॥ ८३ ॥

**बाल०**—वाच्य । त्रादिषु परेषु वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवद्भवति । ऊङवाच्य-लिङ्गलक्ष्मीस्तु न । त्रादिगणं स्वयमाह एतसीति । त्रादयः पाकान्ता एकादश त्रादयः ।

सर्वस्यां सर्वत्र। तस्यास्ततः। एवं वैष्णवतरा, वैष्णव तमा, वैष्णव चरी, वैष्णवजातीया, वैष्णवकल्पा, वैष्णवदेश्या, वैष्णवदेशीया, वैष्णव-रूपा, वैष्णवपाशा।

**८५. बह्वल्पार्था शसि।**

बह्वीभ्यो देहि बहुशो देहि। एवमल्पशः।

**८६. गुणवचनी त्व-तापोः।**

---

वैष्णवतरेति—द्वयो वैंष्णव्यो मध्ये इयं प्रकृष्टा वैष्णवीति प्रकर्षार्थे तरः, तत आप। वैष्णवतमेति—बह्वीनां वैष्णवीनां मध्ये इयं श्रेष्ठा इत्यर्थे तमः, तत आप्। वैष्णवचरीति—वैष्णवीपूर्वा इत्यर्थे भूतपूर्वे चरट्, टित्वादीप्। वैष्णवजातीयेति—वैष्णव्याः प्रकारा इत्यर्थे प्रकारवति जातीयः। वैष्णवकल्पेति—ईषदसमाप्ता वैष्णवीत्यर्थे ईषदसमाप्तौ कल्प देश्यदेशीया इत्यनेन वैष्णव कल्पादित्रयम्। वैष्णवरूपेति—प्रशस्ता वैष्णवीत्यर्थे प्रशंसायां रूपः। वैष्णवपाशेति—निन्दिता वैष्णवीत्यर्थे गर्हायां पाशः।

**अमृता०**—८५. वह्वीति। शस्प्रत्यये परे बह्वार्था अल्पार्था च वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवद् भवति। बहुश इति—बह्वीः प्रकारा देहीत्यथैं शस्। एवमल्पाः प्रकारा देहीत्यर्थे अल्पशो देहीति।

**अमृता०**—८६. गुणेति। त्वतापोः प्रत्ययोः परयो र्गुणबचनी वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवद् भवति। पटुत्वमिति—तस्यभाव स्त्वतापौ ब्रह्म लक्ष्म्यो रित्यनेन त्वतापौ। शब्दप्रवृत्तिनिमित्तं जात्यादि वस्तु धर्मोभाव इति वक्ष्यते। कठीत्वमिति—कठ्याभावः,

---

सर्वत्रेति सप्तम्यास्त्रस्तद्धित इति। तत इति पञ्चम्यास्तसिरिति तस्। तकवचनमत्रातन्त्रं तेन सर्वयोः सर्वासु इति द्विवचनबहुवचनयोरपि सर्वत्रेति। तथा ताभ्यां ताभ्य इत्यत्रापि तत इति। एवमिति पुरुषोत्तमवद्दृश्यते इति शेषः। वैष्णव्योरियं एकर्षेति प्रशंसायां तरस्तरस्तत आप् वैष्णवतरेति। एवमुत्तरत्रापि पश्चादाप् सर्वत्र। वैष्णवीनामियं श्रेष्ठा वैष्णवतमेति। वैष्णवीपूर्वा इति भूतपूर्वार्थे चरट् टित्वादीप् वैष्णवचरीति। एवमनर्पित-चरीं चिरादित्यत्रादत्तपूर्वामिति टीकाकृद्भिर्व्याख्यातमिति। वैष्णव्याः प्रकारा इत्यर्थे प्रकारवति जातीय इत्यनेन जातीयः वैष्णवजातीयेति। वैष्णव्या ईषदसमाप्तिरित्यर्थे ईषदसमाप्ताविल्यनेन कल्पदेश्यदेशीया इति वैष्णवकल्पादित्रयमिति। वैष्णश्याः प्रशंसा इति प्रशंसायां रूपः वैष्णवरूपेति। वैष्णव्या निन्दा इति गर्हायां पाशः वैष्णवपाशेति ॥८४

**बाल०**—वह्व। शशि परे वह्वर्था अल्पार्थाच वाच्यलिङ्गलक्ष्मीः पुरुषोत्तम-वद्भवति। वह्वीः प्रकारा देहीति प्रकारार्थे शस् बहुशो देहीति एवमन्या प्रकारा देहीति अल्पशो देहीति ॥ ८५ ॥

**पट्व्या भावः पटुत्वं पटुता। गणवचनीति किम्? कठीत्वम्। कथं व्यभिचारित्वं युक्तीनामिति? सामान्योपक्रमेण। कातन्त्र विस्तरे तु विशेषः। गुणग्रहणेनात्र जाति संज्ञयो र्निवृत्तिः क्रियते, नतु पटु शुक्लादि विशेष प्रतिपत्तिः।**

**तेन पाचिकायाः पाचकत्वं, मद्रिकायाः मद्रकत्वं, अनुकूलिकायाः अनुकूलकत्वं, आक्षिक्याः आक्षिकत्वं, द्वितीयायाः द्वितीयत्वं, पञ्चम्याः**

---

कठीशब्दो जातिवचनो वेदशाखाध्यायित्वादिति वक्ष्यते। अतो गुण वचनत्वाभावान्न पुंवत्त्वम्।

आशङ्कते—कथमित्यादि। ननु यदि गुणवचन्या एव पुरुषोत्तमवत्त्वं भवति तर्हि—युक्तीनां व्यभिचारित्वमित्यत्र क्रियावचनत्वे कथं पुंवत्त्वमिति शङ्कापक्षः। तत्र सिद्धान्तयति—सामान्योपक्रमेणेति। सूत्रे गुणवचनीति यल्लक्षितं तत्रगुण शब्देन सामान्यगुणार्थी आरभ्यते। तथाहि—त्वतापौ जाति गुणक्रियाणां भावे तथा स्वरूपे (संज्ञायां) च विधास्यते। इहतु गुण शब्देन जाति संज्ञे एव व्यावृत्येते, नतु विशेषगुणो लक्ष्यते। यतो व्याभिचारित्वमित्यत्र क्रियावचनत्वेऽपि यथा कथञ्चिद् गुणवचनत्वं विद्यत एवेति सामान्य वचनत्वम्। कातन्त्र यिस्तरे यो विशेषो दृश्यते तमपि वक्ति—गुणग्रहणेनेति। एतेन प्रोक्तस्वमतमपि पोषितम्। उदाहरणैश्च तदेव स्पष्टीकृतम्।

उदाहरणेषु जाति संज्ञारूपयो र्धर्मयो रभावेन सर्वत्र गुणसामान्यरूप वस्तु धर्मस्य विद्यमानत्वात् पुरुषोत्तमवत्त्वमिति भावः। दृश्यते चेति—एतन्मतानुकूलः प्राचीन कवि प्रयोग समूहो दृश्यते चेत्यर्थः। कामिनामित्यादि माघप्रयोगः। ११। ३३। दयितकर्त्तृकावलोकनेन हि कामिजनानां मण्डनशोभा फलवती भवतीत्यर्थः। मण्डनश्री सफलत्वयोः सामान्येन गुणि गुणत्व सम्बन्धः। एवं सर्वत्र सम्बन्धः कल्पनीयः। कन्येति प्राचीनकाव्यस्य प्रयोगः। कन्यायाः सौन्दर्यस्य उपभोगविरहेण निष्फलत्वं भवतीति शेषः।

---

**बाल०**—गुण। अतापोः परयोर्गुणवचनी वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् स्यात्। वाक्योदाहरणे दर्शयति पट्व्येति। त्वतापौ ब्रह्मलक्ष्योरित्यनेन सर्वत्रैव त्वतापौ वक्ष्यते। अस्माच्छब्दाद्भवत इति भावलक्षणमपि वक्ष्यते। किमिति किमर्थमित्यर्थः। कठ्या भावः कठीत्वमिति कठ्यत्र जातिवचनी न गुणवचनीति न पुरुषोत्तमवत्त्वतिति। कथमिति। ननु यदि गुणवचन्या एव पुरुषोत्तमवत्त्वं युक्तीनामित्यत्र व्यभिचारित्वमित्यस्मिन् कथं पुरुषोत्तमवत्त्वमित्याक्षेपार्थः। सिद्धान्तमाह सामान्येति। सामान्यं ज्ञात्वा आरम्भेणेत्यर्थः। तथाहि, यथाकथञ्चिद्रूपेण या गुणं वक्ति तद्रूपा गुणवचन्येवात्र गृह्यते, नतु पटुशुक्लादिविशेषगुणवचनीति। किञ्च, युक्तयो व्यभिचारिण्य इति प्रथमतो विशेष्यविशेषणबोधकाले व्यभिचारिणीत्यत्र विशेषणे व्यभिचारधर्मविशिष्टता प्रतीयते। अतएव व्यभिचारिणीनां भावो व्यभिचारित्वमिति पुरुषोत्तमवत्त्वं। एवं सर्वत्रैव पूर्वं विशेष्यविशेषणभाव

पञ्चमत्वं, माथुर्याः माथुरत्वं, श्रौघ्न्याः श्रौघ्नत्वं, चन्द्रमुख्याः चन्द्र-
मुखत्वम् । दृश्यते च,—
कामिनीनां मण्डनश्री व्रजति हि सफलत्वं वल्लभालोकनेन ।
कन्याश्रियामनुपभोगनिरर्थकत्वम् ।
बभौ बहुच्छत्र तया पताकिनी ।
व्याकोष कोकनदतां दधते नलिन्यः ।
इयेष सा कर्त्तुमबन्ध्यरूपताम् ।

---

बभाविति किरातार्जुनीयप्रयोगः । पताकिनी सेना तदा बहुच्छत्र रूपेण शुशुभे इत्यर्थः । व्याकोषेति माघ प्रयोगः । नलिन्य स्तत्र विकशितरक्त पद्मस्य शोभां धृतवत्य इत्यर्थः । इयेषेति कुमार सम्भवम् । सा पार्वती अबन्ध्यरूपाया भावमात्मानं कर्त्तुमर्थात् रतिविषये दुःखमनन स्वभावं तस्याजेत्यर्थः । यदङ्गनेति माघः । ३ । ४२ । यस्यां द्वारकायामङ्गनानां रूपस्य सारूप्याद्भेदकं कश्चिद् गुणमिच्छतीभिरप्सरोभिराराधितो मनुः स्वाः प्रजा सनिमेषचिह्नाः ( पक्ष्मपतनरूप व्यावर्त्तकधर्मयुक्ता श्चक्रे इत्यन्वयार्थौ । निरीक्ष्येति किराते ८ । ९ । पूर्वचरणञ्च—सुतेन पाण्डोः कलमस्य गोपिकामिति । पाण्डोः सुतेन अर्जुनेन कलमस्य धान्य विशेषस्य गोपिकां रक्षकां वीक्ष्य शरदः कृतार्थता सफलता मेने इत्यर्थः ।

---

कल्पयित्वा विशेषणे भावप्रत्ययं विधायच पश्चात् गुणगुणिसम्बन्धविवक्षया विशेष्ये षष्ठी यदि बाधकान्तरं न स्यात्, भावप्रत्ययान्तेतु यथास्वं प्रथमादय इति । स्वमतमुक्त्वा पोषकत्वेन परमतप्याह कातन्त्रेति । कातन्त्रविस्तरः कलापपरिशिष्टस्तस्मिंस्तु विशेषो दृश्यते इत्यर्थः । तदेवाह गुणग्रहण इति । अत्र गुणग्रहणे जातिसंज्ञयोर्निवृत्तिर्निवर्त्तनं क्रियते अर्थात् कातन्त्रविस्तरकृता पटुशुक्लादिविशेषस्य प्रतिपत्तिः अतिग्रहस्तु न क्रियते इत्यर्थः । तेन जातिसंज्ञानिवर्त्तनपुर्वकविशेषग्रहाभावेण । पाचिकाया भावः पाचकत्वमिति । अत्र या पचति सैव पाचिकेति न जातिसंज्ञे इति पुम्वत्त्वं । एवं मद्रिकाया इत्यादावपि षष्ठ्यन्तात् भाव इति पदं दत्त्वा वाक्यं विधाय पश्चात् त्वतापाविति । यथा पाचकत्व-मित्यादयस्तथा पाचतादेयोऽपि ज्ञेयाः । दृश्यते चेति । प्राचीनानामप्येतन्मतं दृश्यते इत्यर्थः । अथात्र स्वमतपरिपोषार्थमुत्थापितानां यथाकथञ्चिदन्वितमात्रं क्रियते समुदाय-पद्यानामभावेन वास्तवार्थग्रहाभावात् । क्वचित् पद्यपादं क्वचित् पद्यार्द्धं क्वचित् समग्र-पद्यमपि वर्त्तते, किन्तु समग्रपद्यं विना तत्तत्प्रकरणं विनाच यथार्थप्रतीतिर्न स्यादिति तदर्थं तत्तत्प्रकरणमनुसन्धेयं बुभुत्सा चेत् । कामिनीति । वल्लभस्य वल्लभानां प्रियस्या-वलोकनेन दर्शनेन कामिनाम्सां युवतीनां मण्डनश्रीर्भूषणशोभा सफलत्वं व्रजति प्राप्नोत्येवे-त्यन्वयः । अत्र मण्डनश्रीः फलेन सह वर्त्तमाना तस्याः भावः सफलत्वमिति । अत्रापि मण्डनश्रियाः सफलत्वं धर्म इति गुणगुणिसम्बन्धे गुणिनि षष्ठ्यां प्राप्तायामपि कर्त्तृत्व-विवक्षया प्रथमेति । कश्चित् खेदितः कन्यां दृष्ट्वाह कन्येति । कन्यायाः श्रियामिदानीमुप-भोगाभावेनैव निरर्थकत्वं स्यात् । अत्र कन्याश्रीर्निरर्थका तस्या भावो निरर्थकत्वं

सा मुमोच रतिदुःखशीलताम् ।
यदङ्गनारूपसरूपतायाः ।
निरीक्ष्य मेने शरदः कृतार्थता ।
वपुरन्वलिप्त, परिरम्भसुख व्यवधानभीलुकतया न वधूः ।
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपङ्गमः ।
शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया ।

---

वपुरिति माघः । कापि वधूः आलिङ्गनसुखस्य व्यवधानं मन्यमाना स्वं वपुश्चन्दनादिना न अन्वलिप्त न लिप्तवतीत्यर्थः । भर्त्तुरिति शाकुन्तलम् । भर्त्रा विप्रकृतापि कदर्थितापि क्रोधवशतया तस्य प्रतीपं विरुद्धं यास्म गमः, भर्त्तुरनभिप्रेतं मा कुरु इति शकुन्तलां प्रति कण्वमुनेरुपदेशः । शिष्यतामिति कुमारे ८ । १७ । रहसि निधुवनोपदेशिनः सुरतविद्या-गुरोः शङ्करस्य शिष्यतां प्रपन्नया पार्वत्या यद् युवति नैपुण्यं शिक्षितं तदेव गुरुदक्षिणी—कृतमिति शेषः । बद्धेति किरातः । काचिद् रामा कोपजातविकारे सत्यपि अभिमतां चारुतां रमणीयतामुपनिन्ये प्राप्तवतीत्यर्थः । धृष्टतेति माघः । १० । ७१ । रससि ताभिः

---

किन्त्वधिकरणविवक्षया गुणिनि सप्तमीति । बभाविति ! बहुच्छत्रतयोपलक्षिता पताकिनी बभौ विराजते । पताकिन्यत्र बहुच्छत्रा तस्या भावो बहुच्छत्रता तयो विशेषलक्षणात् तृतीयेत्यनेनात्र गुणे तृतीयाविधानात् गुणिनि प्रथमेति । व्याकोषेति । नलिन्यः कमलानि व्याकोषकोकनदतां दधते धारयन्तीत्यर्थः । नलिन्यो व्याकोषेण विकाशेन कोकनदा रक्तवर्णास्तासां भावः, व्याकोषकोकनदता तां । अत्र गुणिनि कर्त्तृविवक्षया प्रथमेति । इयेषेति । सा नायिका अवन्ध्यरूपतां कर्त्तुमियेष इष्टवतीत्यन्वयः । सा अबन्ध्यरूपा तस्या भावोऽबन्ध्यरूपता तां । अत्रापि गुणिनि पूर्ववत् प्रथमेति । सेति । सा बाला तदानीं रतिदुःखशीलतां मुमोच जहावित्यर्थः । सा रतिदुःखशीला तस्या भाव इत्यादि पूर्ववत् । यदिति यत् यस्मादङ्गना नायिका शरदः कृतार्थतां निरीक्ष्य आत्मनोऽपि शरदो रूपसमान-रूपतायाः कृतार्थता मेने, तस्मात् शरत् सर्वाङ्गनाभिः प्रार्थ्या इत्यन्वयः । रूपस्य समानं रूपं यस्याः सा रूपसरूपा तस्या भावः रूपसरूपता तस्या रूपसरूपतायाः । शरत् कृतार्था तस्या भावः कृतार्थता तां धर्मधर्मिसम्बन्धेऽत्र षष्ठीति । वपुरिति नववधूर्नवोढा परिरम्भ-सुखव्यवधानाय भीलुकतया वपुरनुलिप्ता वपुष्यनुलेपनविशिष्टा वर्त्तते इत्यर्थः । नववधूर्हि परिरम्भणसुखस्य व्यवधानार्थं भयशीलेति लोकप्रसिद्धं । नववधूः परिरम्भसुखव्यवधान-भीलुकाता तस्या भावःपरिरम्भसुखव्यवधानभीलुकता तया इत्यत्र विशेषलक्षणात् तृतीयेति गुणिनि कर्त्तरि प्रथमेति । भर्त्तुरिति । काचित् भर्त्रा विप्रकृतापि धिष्ठीकृतापि रोषणतया भर्त्तुः प्रतीपङ्गमो मास्म भूत् । भर्त्तुः शत्रुतां प्राप्ता नाभूदित्यन्वयः । प्रतीसङ्गम इति विशेषणत्वेऽपि केचिच्छब्दाः स्वलिङ्गं न त्यजन्तीत्यनेन पुलिङ्गत्वं न त्यजति, विप्रकृता रोषणा तस्या भावः रोषणता तयेति पूर्ववत्तृतीयादि । शिष्यतामिति । बद्धकोपेन विकृतौ विकारपन्नायामपि रहसि निर्जने निधूवनोपदेशिनः शृङ्गारोपदेष्टुः शिवस्य

बद्धकोपविकृतापि रामा, चारुतामभिमतामुपनिन्ये ।
धृष्टता रहसि भर्त्तृषु ताभिः, क्षीवतामुपगतास्वनुवेलम् । इति ।
जाति संज्ञयोस्तु व्यावृत्तिः । कठीत्वं गार्गीत्वं दत्तात्वम् ।
त्वतापोरिति किम्—पट्वीमयम् । अनूङित्येव, पङ्गूत्वम् ।

## ८७. भगवति नतु ढरामे ।

हस्तिनीनां समूहो हास्तिकम् ।

---

रमणीभिर्भर्त्तृषु धृष्टता विदधे इति शेषः । क्षीवतामिति माघः । १० । ३४ । क्षीवतां मत्ततामुपगतासु अनुक्षणं रोषतृप्तासु ललनासु विषये अनङ्गः सशरं धनु रग्रहीत् नु इत्युत्प्रेक्षा ।

कठीत्वमिति—कठी चरणजाति र्वक्ष्यते, गार्गी च गोत्रजातिरिति न तयोः पुरुषोत्तमवत्त्वम् । दत्तात्वमिति—दत्तेति कस्याश्चिन्नाम, अतः संज्ञायां नपुंवत्त्वम् । पट्वीमयमिति—पट्वचाः भावः पटीत्वमिति भावे मयट् । इह गुणवचनत्वेऽपि त्वतापोः परत्वाभावात् न पुंवत्त्वम् । सर्वत्र भावे हि त्व·तापौ ।

**अमृता०**—८७. भगवतीति । भगवत् प्रत्यये परे वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवद् भवति, किन्तु ढरामरूपे भगवति परे तन्न भवति । हास्तिकमिति—समूहार्थे नृसिंह ठः, इकः । पुंवत्त्वे सति नान्तस्येति संसारहरः । ढरामे तु हास्तिनेयः । पुंवत्त्वविरहादत्र अ·इद्वयस्येति हस्तिनीत्यस्य ईरामहरः ।

---

शिष्यतां प्रपन्नया प्राप्तया रामा पार्वती चारुतां मनोहरतामभिमतामुपनिन्ये उपजगामेत्यन्वयः । शिष्यायाः भाव शिष्यता तां । तथा चार्व्या भावः चारुता तामिति । शिष्यतामिति रामाया धर्मः । चारुतामित्यभिमताया इति पूर्वत्र गुणिनि कर्त्तरि प्रथमा परत्र गुणिनितु कर्मणि द्वितीया इति । किञ्च, प्रपन्नया इत्यस्य समानाधिकरणविशेषणत्वे सम्भवे सत्यपि वक्तृवैचित्र्यात् विशेषलक्षणातृतीयेति । धृष्टेति । अनुवेलमनुक्षणं भर्त्तृषु क्षीवतां मत्ततामुपगतेषु ताभिरपि धृष्टता नीतेत्यन्वयः । ता धृष्टास्तासां भावः धृष्टतेति गुणिन्यनुक्तकर्त्तरि तृतीयेति यथासम्भवं व्याख्यातमिति । इत्येवं सर्वेषां मतेऽपि जातिसंज्ञाव्यावृत्तिरित्याह जातीति । कठ्या भाव इति कठीत्वं । कठीति चरणजातिः । गार्ग्या भाव इति गार्गीत्वं । गार्गीति गोत्रजातिरिति । दत्ताया भावः दत्तात्वमित्यत्र संज्ञात्वं । किमिति किमर्थं । पट्व्या भाव इति पट्वीमयमिति भावे मयटि न पुम्वत्त्वं । अनूङिति त्वतापोः परयोरपि अनूङ् वाच्यलिङ्गलक्ष्मीरेव पुरुषोत्तमवत् त्रादय इत्यादिशब्दग्रहणात् । तेन पङ्ग्वा भावः पङ्गूत्वमिति ॥ ८६ ॥

**बाल०**—भग । भगवति परे वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवद्भवति ढरामेतु न । हास्तिकमिति समूहार्थे नृसिंहठः । ठ इकः । तस्मिन् पुम्वत्त्वे सति नान्तस्येत्यनेन संसारहरः । ढरामेतु हास्तिनेयः पुम्वदभावादत्र अ इद्वयस्येत्यनेनेरामहर इति ॥ ८७ ॥

**८८. भवत्या छठरामयोः ।**

भवत्याश्छात्रा भावत्का भवदीयाः ।

**८९. तिथटि च दृश्यते ।**

बह्वीनां पूरणी बहुतिथि ।

**९०. वामनात् सस्य षस्तादौ न त्वाख्यातात् ।**

यजुष्ट्वम् । वामनात् किम् ? गीस्त्वं धूस्त्वम् । आख्यातात्तुभेजुस्तराम् ।

**९१. पुंस्त्वमित्यादौ षत्वनिषेधो वाच्यः ।**

---

**अमृता०**—८८. भवत्या इति । छ-ठरामयोः प्रत्यययोः परयोः भवतीशब्दस्य पुंवत्त्वं स्यात् । भावत्का इति—पुंवद्भावे सति चतुर्भुजान्तादित्यादौ तान्तादिति ठस्य कः, आदिसर्वेश्वरस्येति वृष्णीन्द्रः । भवदीया इति—छईयः, सएवार्थः ।

**अमृता०**—८९. तिथटि चेति । तिथट् प्रत्यये च परे वाच्यलिङ्ग लक्ष्म्याः पुरुषोत्तमवत्त्वं दृश्यते । बहुतिथीति—पूरणार्थे तिथट्, टित्त्वादीप् ।

**अमृता०**—९०. वामनादिति । तादौ प्रत्यये परे वामनादुत्तरस्य सस्य षत्वं भवति, किन्तु आख्यातरूपवामनात् परस्य तस्य तन्न भवति । यजुष्ट्वमिति—यजुषो भाव इति त्व प्रत्ययः । पूर्वस्य विष्णुपदवत्त्वं स्वादि तद्धितयो रिति विष्णुपदवत्त्वात् षत्वापाये सरामस्य स्थितिः, प्रत्ययविरिञ्चित्वाभावेन पूर्वसामान्येनाप्राप्ते तस्य पुनरनेन षत्वं विहितमिति बोध्यम् । गीस्त्वमित्यादौ इरुरन्तधातोरुद्धवस्येति त्रिविक्रमे जाते वामनात् परत्वाभावान्नषत्वम् । भेजुस्तरामिति प्रकर्षार्थे आख्यातात् तराम् ।

**अमृता०**—९१. पुंस्त्वमिति स्पष्टम् । पुमः सरामो हरिकमलेत्यादिना सरामस्य

---

**बाल०**—भव । ठछरामयोः परयोः भवत्या इत्यस्याः पुम्वत्त्वं स्यात् । भवत्याश्छात्रा इत्यर्थे भवतीशब्दात् ठछरामौ भावत्का इत्यत्र भवत्याः पुम्वद्भावे कृते चतुर्भुजान्तादित्यनेन तान्तात् ठस्य कः । भवदीया इत्यत्रतु छ ईयः ॥ ८८ ॥

**बाल०**—तिथ । तिथटिच परे वाच्यलिङ्गलक्ष्म्याः पुरुषोत्तमवत्त्वं दृश्यते । बहुतिथीत्यत्र पुरणार्थे तिथट् इति टित्त्वादीप् ॥ ८९ ॥

**बाल०**—वाम । त आदिर्यस्य स तादिस्तस्मिन् परे वामनादुत्तरस्य सस्य षत्वं स्यात् । आख्याताद्वा वनात्तु न स्यात् । यजुषः भाव इति त्वप्रत्ययः अन्तरङ्गस्वादेर्महाहरः विष्णुपदान्तत्वात् षत्वापायः, विष्णुसर्गस्तस्य षत्वं यजुष्ट्वं । किमिति वामनात् यर्हि न स्यात् तर्हि किं स्यात् । गीस्त्वं धूस्त्वमित्यत्र इरुरन्तधातोरुद्धवस्येत्यनेन त्रिविक्रमः । अतिप्रकर्षेण इमे भेजुरिति भेजुस्तरामिति ॥ ९० ॥

पुंस्त्वं पुंस्ता । उक्तानि तद्धितकार्याणि ।

**९२. अथ तद्धिताः ।**

वासुदेवोऽयम् ।

**९३. तत्र समासान्ताः ।**

महाविभुरयम् ।

**९४. अरामः ।**

प्रभुरयम् ।

**९५. ऋक्पथिपुरपः ।**

**अरामः सामासान्तः स्यात् । अर्द्धमृचः, पुंस्त्वं—अर्द्धर्चः । नान्तस्येति**

---

विरिञ्चित्वात् षत्वे प्राप्ते निषेधोऽयम् । पुंस्त्वमिति—पुंसो भाव इत्यर्थे त्वप्रत्ययः, सान्तसत्सङ्गस्य हरः, पुमः सस्य विष्णुचक्र पूर्वः सरामः । एवं पुंस्तेति । व्याख्यातानि तद्धित कार्याणि ।

**अमृता०**—९२. अथेति बृहदधिकार आपादपरिसमाप्तेः ।

**अमृता०**—९३. तत्रेति । तत्र तद्धितेषु प्रथमं तावत् समासानामन्ते प्रयोक्तव्या इति समासान्ता स्तद्धिता उच्यन्त इति शेषः । विभुनामा मध्यमोऽधिकारोऽयम् ।

**अमृता०**—९४. अरामइति । समासान्तेषु प्रत्ययेषु मध्ये प्रथमं अरामः दर्श्यते । प्रभुनामा स्वल्पाधिकार एषः ।

**अमृता०**—९५. ऋगिति । ऋक् च पन्थाश्च पुश्च आपश्चेति ऋक्पथिपुरप्, सर्वेऽपि रामकृष्णा विभाषयैकवद् भवन्तीत्येकवचनम् । तस्मादुत्तरे अरामः समासान्तः स्यात् ।

---

**बाल०**—पुंस्त्व । पुंस्त्वमित्यादावुदाहरणे षत्वस्य निषेधो वाच्यः वक्तव्य इति । पुमः सरामो हरिकमलेत्यनेन पुमः सरामादेशस्य विरिञ्चित्वात् षत्वे प्राप्तेऽयं विधिः । पुंसो भाव इति त्वतापौ सत्सङ्गान्तस्य हरो विष्णुपदान्त इत्यनेन सत्सङ्गान्तहरे कृते पुमः मस्य सरामः सच विष्णुचक्रपूर्व इति विष्णुचक्रादिपूर्वश्च । पुंस्त्वं पुंस्ता तथा पुँस्त्वं पुँस्तेतिच । इति तद्धितकार्याणि समापिताणि ।। ९१ ।।

**बाल०**—अथ । अथानन्तरं तद्धितकार्यानन्तरं तद्धितः प्रत्यया दर्श्यन्ते । अस्य स्वजातीयविजातीयानेकाधिकारव्यापित्वात् वासुदेवतेत्याह वासुदेवेति ।। ९२ ।।

**बाल०**—तत्र । तत्र तद्धितेपु मध्ये समासान्तास्तद्धिता दर्श्यन्ते । अस्यतु वासुदेवान्तरत्वादाह महाविभुरिति ।। ९३ ।।

**बाल०**—अरा । समासान्तेषु मध्येऽरामः समासान्तो दर्श्यते । अस्यैकाधिकारव्यापित्वाद्प्रभु नामतेत्याह प्रभुरिति ।। ९४ ।।

**संसारहरः—मथुरापथः । पुरः कृष्ण पुरुषे ब्रह्मण्यभिधानम्—यदुपुरम् । त्रिराम्यान्तु— द्विपुरी त्रिपुरी । अपः—विमलापं सरः ।**

---

अर्द्धं ऋच इतिविग्रहे—अर्द्धं समविभागे वेति कृष्णपुरुष समासः, अर्द्धर्चादयः पुंसीति पुंस्त्वम्, तत्रत्य चकारेण ब्रह्मणि च—अर्द्धर्चमिति । मथुरापथ इति—मथुरायाः पन्था इति षष्ठीकृष्णपुरुषः । नगर वाची पुर शब्दोऽरामान्तोऽप्यस्ति, तेनापि यदुपुरमिति सिध्येत् किन्तु विष्णुजनान्त पुरशब्दस्य समासे यदुपूरित्येवमनिष्ट रूपमापद्येत, अतस्तद्वारणार्थमेव विधानमिदम् । द्विपुरीति—द्वेपुरौ समाहृते इति, द्वयोः पुरोः समाहार इति वा विग्रहे त्रिरामी, त्रिराम्या ईविति ईप् । एवं त्रिपुरीति च ।

ननु पुरः कृष्णपुरुषे ब्रह्मण्यभिधानमित्युक्तम्, त्रिरामी च कृष्णपुरुषान्तर्गत त्वेन दर्शिता, तर्हि कथमिह लक्ष्मीत्वम् ? तत्रपुनररामान्ता त्रिरामी लक्ष्मी रिति यल्लक्षितं तत्तु प्रतिपदोक्तारामान्तस्यैव ग्रहणमिति चेत्तदुच्यते,—कृष्णपुरुषेषु समाहारप्रधान चिह्नत्वेन त्रिराम्याः पृथगुपादानतो विशेषत्वात् खलु लक्ष्मीत्वम् । समासान्तप्रत्ययस्य समासावयवत्वान्न जातु लाक्षणिकता मन्तव्या, तेन बिना समासाप्रवृत्तेरिति । विमलापमिति—विमला आपो यस्मिन् तदिति विग्रहः । सूत्रमिदं कृष्णपुरुषविषयकमेवेति शङ्कानिरासार्थं पीताम्बरे दृष्टान्तितम्, तस्य च परिस्फुटार्थः सर इत्युपन्यासः ।

---

**बाल०**—ऋक् । वृत्तिमाह अराम इति । ऋक्च पन्थाश्च पूश्च आपश्चेति विग्रहे सर्वेऽपि रामकृष्णा विभाषयैकवद्भवतीति ऋक्पथिपुरप इत्येकवचनान्तं । समासमात्रे ऋक्पथिपुरप उत्तरस्मात् समासान्तोऽरामः स्यात् । अर्द्धमृच इति विग्रहे अर्द्धं समविभागे वेत्यनेन कृष्णपुरुषसमासे सत्यत् अर्द्धर्चादयः पुंसि चेत्यनेन विहितं यत् पुंस्त्वं तदेवोक्तं पुंस्त्वमिति । अर्द्धर्चं इति अर्द्धर्चमित्यपि सूत्रस्थचशब्दात् । मथुरायाः पन्था इति विग्रहे मथुरापथ इति । पुर इति कृष्णपुरुषे समासे पुर इत्यस्य ब्रह्मणि ब्रह्मलिङ्गेऽभिधानं, तेन यदूनां पूः इति वाक्ये यदूपुरमिति । यद्यप्यरामान्तपुरशब्देनैव यदुपुरमिति सिध्यत्येव, तथापि विष्णुजनान्ते न समासे यदुपूरित्यादि स्यात्, तन्निरासार्थं सूत्रे पुरो ग्रहणं । त्रिराम्यान्त्विति रूपं दर्श्यते इति शेषः । द्वे पूरौ समाहृते इति द्वयोः पुरोः समाहार इति वा द्विपुरीति । तथा तिस्रः पुर इत्यादि त्रिपुरीति । ननु पुरः कृष्णपुरुष इति ब्रह्मण्यभिधानात् समासप्रकरणेऽरामान्ता त्रिरामीलक्ष्मीरित्यत्र प्रतिपदोक्तारामान्तत्रिराम्या ग्रहणाच्च द्विपुरीत्यादौ ब्रह्मत्वे प्राप्ते द्विपुरी त्रिपुरीति कथं सिध्यतु इति चेत् केनाप्युच्यते तदैवं वाच्यं, यतः पुरः कृष्णपुरुष इति ब्रह्मण्यभिहितमतएव कृष्णपुरुषेषु मध्ये त्रिराम्याः पृथक् सङ्गत्वेन विशेषत्वात् लाक्षणिकारामान्तत्वेऽपि द्विपुरी त्रिपुरीत्यादावीप् स्यात् । शिष्टप्रयोगानुरोधादन्यत्रतु ब्रह्मत्वमेव तेन चतुष्पथमित्यादिकं स्यादिकं स्यादिति सर्वमनवद्यं । अप इति रूपं दर्श्यते इति शेषः । सूत्रस्यास्य कृष्णपुरुष एव विषय इत्याशङ्कानिरासार्थं पीताम्बरेतु विमलापमित्याद्युदाहरति । विमला आपो यत्र तद्विमलापमिति पीताम्बरप्रतीत्यर्थं सर इति विशेष्यमपि दत्तमिति ॥ ८५ ॥

**९६. अनृचो मानवके, बह्वृचश्चरणविशेषे ।**

साधू । नत्वन्यत्र, अनृकक्कं साम, बह्वृक्कंसूक्तम् । त्रिपुरन्तु क्वचित् । बह्वपानि सरांसि । कथं बह्वाम्पि ? समाधान्तविधेरनित्यत्त्वात् । गङ्गाप इत्यादिकं पुंस्येक वचनं चेति पद्मनाभः ।

**९७. अनक्षस्य धुरः ।**

---

**अमृता०**—९६. अनृच इति । मानवकः शिशुः, तस्मिन् वाच्ये नञ्समासेन अरामेण च अनृच इति साधुः स्यात्, तथा वेदस्य चरणविशेषे वाच्येऽरामेण वह्वृच इति साधुर्भवति । उभयत्र संज्ञाविशेषे हि समासान्तप्रत्ययानु बन्धिसाधुत्वम् । अतएव व्यावृत्तिमाह—नत्वन्यत्रेति । न विद्यते ऋक् मन्त्रो यत्र तत् अनृक्कं, सामवेदः । असमान्तविधे र्वेति कप् । बह्व ऋचो यस्य तत् बह्वृचं सूक्तं मन्त्र इत्यर्थः । त्रिपुरमिति तु कस्यचिन्मते, तिस्रः पुरः समाहृता इति त्रिरामीसमासेऽपि लक्ष्मीत्वं न मन्यते किन्तु पुरः कृष्णपुरुषे ब्रह्मण्यभिधानमिति वचनस्य हि बलवत्तां मत्वा ब्रह्मत्वमेव केनचिन्निर्द्धायित इति गूढार्थः । कथमिति—कथं न समासान्तोऽराम इति शङ्का । तत्र सिद्धान्तमाह—समासान्तविधेरिति । समासान्तविधयो नहि नित्याभवन्ति, शिष्टप्रयोगेषु तद्व्यभिचार दर्शनादिति भावः । अत्र समासान्तारामे सति अप् शब्दस्य नपुंसकत्वमेव स्यादिति न नियमः, एतच्च पद्मनाभमतोट्टङ्कनेन दर्शयति—गङ्गापइति । कृष्णपुरुषेकृते त्वत्रोत्तर पदवल्लिङ्गत्वेन लक्ष्मीत्वं बहुत्वञ्च स्यात् । तस्मादिह गङ्गाया आपो—यस्मिन्घटादौ स गङ्गाप इति पीताम्बरः । तत्र त्वन्यपदार्थप्रधानत्वान्नहि लिङ्गनियम इति हृदयम् ।

**अमृता०**—९७. अनक्षस्येति । अक्षभिन्नस्येतरपदार्थस्य याधूः तदुत्तरं समासान्तोऽ-

---

**बाल०**—अनृ । मानवके वाच्ये सामासान्तारामेण सह नञ् पूर्वादृचोऽनृच इत्ययं साधुः । चरणविशेषे वाच्ये समासान्तारामेण सह बहुपूर्वादृचो वह्वृच इत्ययमपि साधुः । अतएव वृत्तौ साधू साधू इत्युक्तं । न विद्यते ऋग् यस्य सोऽनृच इति । मानबक इत्युपनयने प्रवर्त्तमानबालस्य संज्ञा वटुरिति प्रसिद्धिः । वह्वृ । वह्वय ऋचो यस्य स वह्वृच इति, चरणविशेष इति जातिविशेष इत्यर्थः । चरणं वेदशाखा इत्यन्ये । मानवकचरणाभ्यामन्यत्र वाच्चे नेत्याह नत्विति । नास्ति ऋक् यस्येति असमासान्तविधेर्वेति कप् अनृक्कमिति । सामेति वेदः । तथा वह्वय ऋचो यस्येति वह्वृक्कमिति । सूक्तमिति वेदोक्तमन्त्रविशेषः । त्रिपुरमिपि क्वचिन्मते तिस्रः पुरः समाहृता इत्यादिवाक्ये त्रिपुरमिति तु दृश्यते इति शेषः । वह्वयः आपः येषु सरःसु तानि वह्वपानीति । कथमिति । ननु यदि खक्पथीत्यनेन समासान्तारामस्तर्हि वह्वाम्पीति कथं सिध्येदित्याक्षेपार्थः । सिद्धान्तमाह समासान्तेति । गङ्गाया आप इति वाक्येऽरामे कृतेऽत्र षष्ठीकृष्णपुरुषस्योत्तरप्राधान्यात् अप् शब्दस्य नित्यबहुवचनान्तत्वेन गङ्गापा इत्येव भवितुमर्हतीति पुंस्त्वादित्वाय पद्मनाभमतमाह गङ्गाप इति । गङ्गाप इत्यादिकमुदाहरणं पुंसि पुंलिङ्गे वर्त्तमानं सदेकवचनञ्च भवतीति पद्मनाभ आहेत्यर्थः ॥ ९६ ॥

द्विधुरं, कृष्णधुरा । अक्षस्यतु—अक्षधूः ।

**९९८. प्रत्यन्ववेभ्यः सामलोमभ्याम् ।**

प्रतिसामं प्रतिलोमम् ।

**९९९. संख्यातो नदी गोदावरीभ्याम् ।**

द्विनदं, सप्तगोदावरम् ।

---

रामः स्यात् । द्विधुरमिति—द्वयो र्धुरोः समाहार इति त्रिरामी । कृष्णस्य धू र्भार इति कृष्णधूः । कृष्णपुरुषत्वादुत्तरपदवत् लिङ्गम् । अक्षस्य शकटावयवस्य धूरित्यत्र नारामः, अक्षस्यवर्जनात् ।

अमृता०—९९८. प्रतीति । प्रति अनु अव इत्यतेभ्य उत्तराभ्यां सामलोमभ्यामरामः स्यात् समासान्तः । समास सामान्ये विधानमेतत् । तेन साम सामप्रति इत्यव्ययीभावे, प्रतिगतं साम इति अत्यादयो द्वितीययेति कृष्णपुरुषे, तथा प्रतिगतं सामयत्रेति मध्यपद-लोपि पीताम्बरे च प्रतिसाममित्यरामः प्रत्ययः । एवं प्रतिलोममिति च । उभयत्र नान्तस्येति संसारहरः ।

अमृता०—९९९. संख्यात इति । संख्याया उत्तराभ्यां नदी-गोदावरी शब्दाभ्यां समासान्तोऽरामः स्यात् । द्विनदमिति—द्वयो र्नद्योः समाहार इत्यादि वाक्ये नदीभिश्च समाहारे इत्यव्ययीभावः, अ-इद्वयस्येति ईरामहरः । एवं पञ्चनदमित्यादि च । स्वरूप ग्रहणमिह विवक्षितम्, गोदावरीत्यस्य पृथगुपादानात् ।

---

बाल०—अन । अनक्षस्य सम्बन्धिनो धुर उत्तरे समासान्तारामो भवति अक्षस्य सम्बन्धिनो नेत्यर्थः । द्वयोर्धुरोः समाहार इति द्वे धुरौ यत्र कुले इति वा द्विधुरमिति । कृष्णस्य धूरिति कृष्णधूरेति । धूशब्दस्य लक्ष्मीत्वात् समासान्तारामप्रत्ययेऽपि लक्ष्मीता अतोऽत्राप् । अक्षस्यविति अक्षसम्बन्धिनो रूपं दर्श्यत इत्यर्थः । अक्षस्य धूरिति अक्षधूः नात्रारामः धूरोऽक्षसम्बन्धित्वात् । नाक्षावयवधुर इति जुमरः । अक्षारयवाचिनोऽत्र भवतीति तट्टीकाकृच्च । अतएव तन्मते धूःशब्देनैवाक्षावयवोऽभिधीयते इति दृढधूरक्ष इति पीताम्बरेऽपि अत्र स्यात् । चक्रसम्बन्धिकाष्ठविशेषः शकटावयवोऽक्ष इति रक्षितः ॥ ९९७ ॥

बाल०—प्रत्य । समासमात्रे प्रत्यन्ववेभ्य उत्तराभ्यां सामलोमभ्यामुत्तरे समासान्तारामो भवति । प्रतिसाममिति साम साम प्रतीत्यव्ययीतावे प्रतिगतं सामेति अत्यादयो द्वितीययेत्यनेन कृष्णपुरुषे प्रतिगतं साम यत्रेति मध्यपदलोपिपीम्बरेच प्रति-पूर्वसाम्नोऽत्प्रत्ययः । नान्तस्येत्यनेन संसारहर इति । एवं प्रतिलोपमिति ॥ ९९८ ॥

बाल०—सङ्ख्या । संख्यातः सङ्ख्याया उत्तराभ्यां नदीगोदावरीभ्यां समासान्ता-रामः स्यात् । द्वयोर्नद्योः संमाहार इत्यादिवाक्ये दिक्सङ्ख्ये तद्धितार्थेत्यनेन समाहारे-ऽत्प्रत्ययः । अ-इद्वयस्येति ईरामहरः द्विनदमिति । एवं सप्तानां गोदावरीणां समाहार इति सप्तगोदावरमिति ॥ ९९९ ॥

**१००. संख्या कृष्ण पाण्डूदग्भ्यो भूमेः ।**

दशभूमो देशः, कृष्णभूमः, पाण्डुभूमः, उदग्भूमः ।

**१०१. अक्ष्णोऽप्राण्यङ्गे ।**

गवाक्षः पुंसि । प्राण्यङ्गे तु गवाक्षि ।

**१०२. ब्रह्मराजहस्तिपण्येभ्यो वर्चसः ।**

ब्रह्मवर्चसम् ।

---

**अमृता०**—१००. संख्येति । संख्यावाचकात् कृष्ण पाण्डु उदक् शब्देभ्यश्चोत्तरस्य भूमेरुत्तरे समासान्तारामः स्यात् । अत्र तु पीताम्बरे ह्यराम इष्यते । दश भूमयो यत्र स दशभूमो देशः, अ इद्वयस्येति इरामहर । एवं द्विभूमः त्रिभूम इत्यादि । कृष्णाभूमिरस्मिन् देशे इति कृष्णभूमः । एवं पाण्डुभूमः । उदीची ( उच्चा ) भूमिरस्मिन्निति उदगभूमः ।

**अमृता०**—१०१. अक्ष्णइति । प्राणिनामङ्गादितरे वाच्ये अक्षिशब्दादुत्तरे समासान्तोऽरामः स्यात् । गोरक्षीव गवाक्षः, इरामहरः, गोरोरव इत्यवादेशः : पुंस्येव वर्त्ततेऽयम्, गवाक्षो गृहरन्ध्रे इति समासप्रकरणोक्त्या हि तत् सूचनात् । एवं पुष्करमिव अक्षि पुष्कराक्षम् । उपमेयं व्याघ्रादिभिरिति समास इति तु पद्मनाभः । गवाक्षीति— गोरक्षि इति षष्ठीसमासः । अत्रापि अवादेशः, कृष्णपुरुषत्वादुत्तरपदवल्लिङ्गम् ।

**अमृता०**—१०२. ब्रह्मेति । ब्रह्मादि चतुर्भ्यः परस्माद् वर्चसउत्तरे अरामः समासान्तः स्यात् । ब्रह्मणो वर्चः तेज इति ब्रह्मवर्चसम् । एवं राजवर्चसं हस्ति वर्चसं पण्यवर्चसमिति । पण्यं विक्रयद्रव्यम् ।

---

**बाल०**—संख्या । समासमात्रे संख्यावाचकात् कृष्णापाण्डूदकशब्देभ्यः परस्याः भूमेरुत्तरे समासान्तारामो भवति । दश भूमयो यत्र स दशभूमो देशविशेष इति । कृष्णा भूमिरस्येति कृष्णभूम इति कृष्णा चासौ भूमिश्चेति कर्मधारये कृष्णभूमा इत्येके । कर्मधारयस्योभयपदप्राधान्यात् कृष्णभूमा इत्यावन्तेति । अस्माकमप्येतद्भवतीति ज्ञेयं । पाण्डुर्भूमिरस्येति पाण्डुभूम इति श्यामरामेतु पाण्डूभूमा इति । उदीची भूमिरस्येति उगग्भूमः । श्यामरामे पूर्ववदुदग्भूमा इति ॥ १०० ॥

**बाल०**—अक्ष्णो । प्राणिनोऽङ्गं प्राण्यङ्गं न प्राण्यङ्गं अप्राण्यङ्गं तस्मिन् वाच्येऽक्षिशब्दात् समासान्तारामः स्यात् । गोरक्षीति अत् अ-इद्वयस्येतीरामहरः, ततोऽक्षे परे गोरोरव इत्यनेनारामान्तावादेशे कृते गवाक्ष इति । एतदेव समासकार्ये उक्तं गवाक्षो गृहरन्ध्रे इत्यनेन । पुंसीति गवाक्षः पुंसि वर्त्ततेऽभिधानादिति शेषः । प्राण्यङ्गे त्विति रूपं यथा । गवामक्षि गवाक्षीति । अत्रापि गोशब्दस्यावादेशः किन्त्वक्षिशब्दस्य स्वभावब्रह्मत्वात् समासान्तत्वेऽपि ब्रह्मता ॥ १०१ ॥

## १०३. अवसमन्धेभ्यस्तमसः ।

अवतमसम् । क्षीणेऽवतसमं तमः ॥

## १०४. निःश्वोभ्यां श्रेयसः ।

निःश्रेयसं, श्वश्रेयसं शिवं भद्रमिति ।

---

**अमृता०**—१०३. अवेति । अव सम् अन्धेभ्यः परस्मात् तमस उत्तरे समासान्तोऽरामः स्यात् । अवतमसमिति—अवहीनं तमसा, अवहीनं तम इति वा विग्रहे कुप्रादयो मध्यपदलोपश्चेति समासः । अल्पतमः अवतमसमुच्यत इत्यमर वाक्येन बोधयति—क्षीण इति । एवं सङ्गतं तमसा, सङ्गतं तम इति वा सन्तमसम् । अन्धं करोतीति अन्ध शब्दात् णिः, तत अन्धयतीति—पचादेरत्, णे र्हरः—अन्धम्, तच्च तत्तमश्चेति श्यामरामे अन्धतमसम् । यत्तमः अन्धं करोति तदन्धतमसमुच्यते, गाढतम इत्यर्थः ।

**अमृता०**—१०४. निरिति । निर् श्वस् इत्यव्ययाभ्यां परस्मात् श्रेयस उत्तरे अरामः समासान्तः स्यात् । निश्चितं श्रेयो यत्र तन्निःश्रयसं कैवल्यमित्यर्थः : श्वः आगामि श्रेयः अत्रेति श्वःश्रेयसमिति क्षीरस्वामी । शिवं भद्रमिति अमरधृतौ तत् पर्याय शब्दौ ।

---

**बाल०**—ब्रह्म । ब्रह्मराजहस्तिपण्येभ्यः परस्मात् वर्चस उत्तरे समासान्तारामो भवति । ब्रह्मणो वर्च इति वाक्ये ब्रह्मवर्चसमिति, एवं राज्ञो वर्च इति वाक्ये राजवर्चसमिति । तथा हस्तिवर्चसं पण्यवर्चसमिति । वर्चस्तेज इति । यत्र पलालरज्ज्वा व्रीहिं वेष्टयित्वा स्थापयन्ति तत् पण्यमिति धातुपारायणं ॥ १०२ ॥

**बाल०**—अव । अवसमन्धेभ्य उत्तरस्मात् तमःशब्दात् समासान्तारामो भवति । अव हीनं तमसा, अवहीनं तम इति वा कुप्रादयो मध्यपदलोपश्चेति समासेऽवतमसमिति । अमरमतेनैवार्थं दर्शयति क्षीण इति । तथा सन्ततं तमसा सन्ततं तम इति वा सन्तमसमिति । अन्धं करोतीति तत् करोतीति तदाचष्टे इत्यन्धशब्दाण्णिः पश्चादन्धयतेः पचादित्वादत् णेर्हरः, ततः अन्धश्च तत् तमश्चेति श्यामरामेऽन्धतमसमिति यत्तमोऽन्धं करोति तदिहोच्यते । अरामान्तस्तमसशब्दोऽप्यस्ति तेनैवावतमसादिसिद्धेऽपि सूत्रमिदमवतम इत्यादिनिरासार्थं । इत्यादिनिरासार्थं । तमादेरस इत्यसप्रत्ययान्तेन तमसशब्देन सन्तमसादिसिद्धौ लक्षणमिदं सन्तम इत्यादिरूपनिवृत्त्यर्थमित्यन्येनाप्युक्तं ॥ १०३ ॥

**बाल०**—निःश्वो । निःश्वोभ्यामुत्तरस्मात् तमसः समासान्तामरामः स्यात् । निर्गतं प्रेयस इति निरादयः पञ्चम्या इत्यनेन समासः निःश्रेयसमिति । स्वःपूर्वस्यामरभते-नैवोदाहरणमाह स्वःश्रेंयसमिति । स्वर्गस्य श्रेय इति षष्ठीकृष्णपुरुषः । भद्रमित्यत्रामर इति शेषः ॥ १०४ ॥

**१०५. श्वसो वसीयसः ।**

श्वोवसीयसम् ।

**१०६. अन्ववतप्तेभ्यो रहसः ।**

अनुरहसम् ।

**१०७. प्रादेरध्वनः ।**

प्रगतोऽध्वानं प्राध्वः दुरध्वः ।

इति सामान्यसमासान्ताः ।

---

**अमृता०**—१०५. श्वस इति श्वस् शब्दात् परस्मात् वसीयस उत्तरे अरामः समासान्तः स्यात् । श्वः आगामि वसीयः कल्याणमत्रेति श्वोवसीयसम् । मयूरव्यंसकादिभिरिति समास इति पाणिनीयाः ।

**अमृता०**—१०६. अन्विति । अनुअव तप्त इत्येतेभ्यः परस्मात् रहस् शब्दादुत्तरे अरामः समासान्तः स्यात् । रह शब्दोऽप्रकाशार्थकः । अनुगतं रहसा, अनुगतं रह इति वा, कुप्रादय इति समासः । अनुगतो रहोऽस्मिन्निति पीताम्बरो वा । एवमवरहसम् । तप्तञ्च तद् रहश्चेति श्यामरामे तप्तरहसम् । यदुत्पन्नं रहो लोके न केनचिदवगम्यते तद् तप्तरहसमुच्यत इति न्यासः, अतिगुप्तमिति भावः ।

**अमृता०**—१०७. प्रादेरिति । प्राद्यव्ययात् परस्मात् अध्वन उत्तरे अरामः समासान्तः स्यात् । प्राध्व इति—अत्यादयो द्वितीययेति कृष्णपुरुषः, नान्तस्येति संसार हरः । एवं दुर्गतोऽध्वानं दुरध्वः, निष्क्रान्तोऽध्वनः निरध्व इत्यादयो ज्ञेयाः । प्रादिरत्र न किलोपेन्द्रः, धातुयोगाभावात् । प्रादेरिति किम्—परमाध्वा ।

---

**बाल०**—श्वसो । श्वशब्दादुत्तरस्माद्वर्षीयसः समासान्तारामो भवति । श्वो भविष्यत् कल्यश्च तत् वर्षीयः श्रेष्ठश्चेति श्वोवर्षीयसमिति ।। १०५ ।।

**बाल०**—अन्व । अनु अव तप्त इत्येतेभ्य उत्तरस्मात् रह इत्यस्मात् समासान्तारामो भवति । अनुगतं रहसा अनुगतं रह इति वा पूर्ववत् समासः अनुरहसमिति । तथा अव हीनं रहसा अव हीनं वह इति वा अवरहसमिति । अव हीनं निन्दितं रहोऽत्रेति बहुव्रीहौ अवरहसमित्यन्ये । तप्तञ्च तद्रहश्चेति श्यामरामे तप्तरहसमिति । अत्यन्तं यद्रहो न केनापि ज्ञायते तत् तप्तरहसं तप्तमिव तप्तमिति । सर्वत्रैवात्र रहःशब्दोऽप्रकाशवचनः । रहस्तत्त्वे रहो गुहे इति मेदिनीकोषात् ।। १०६ ।।

**बाल०**—प्रादे । प्रादेरुत्तरस्मादध्वन उत्तरः समासान्तारामः स्यात् । प्रगतोऽध्वानमिति वाक्ये अत्यादयो द्वितीययेत्यनेन मध्यपदलोपी द्वितीयाकृष्णपुरुषः । नान्तस्येत्यनेन संसारहरः प्राध्व इति । एवं दुर्गतोऽध्वानं दुरध्व इति, तथा व्यध्वादयोऽपि ज्ञेयाः । प्रादेरिति किं परमाध्वा । इत्येवं सामान्यसमासान्ताः प्रत्यया दर्शिताः ।। १०७ ।।

**१०८. जात महद् वृद्धेभ्य उक्षणः श्यामरामे ।**

जातोक्षः ।

**१०९. द्वित्रिभ्यामायुष स्त्रिराम्याम् ।**

द्व्यायुषं त्र्यायुषम् ।

**११०. कृष्णपुरुषे ।**

प्रभुरयम् ।

**१११. संख्याव्ययाभ्यामङ्गुलेः ।**

अराम इत्यनुवर्त्तते । द्वे अङ्गुली प्रमाणमस्येति तद्धितार्थे त्रिरामी,

---

**अमृता०**—१०८. जातेति । श्यामरामसमासे जात महद् वृद्ध शब्देभ्यः परस्मात् उक्षन् शब्दादुत्तरे अरामः समासान्तः स्यात् । जातोक्ष इति—जातश्चासौ उक्षा चेति विग्रहः, नान्तस्येति संसार हरः । एवं महांश्चासौ उक्षा चेति महोक्षः, महतः संसारस्यारामः, युवा षण्ड इत्यर्थः । वृद्धोक्षस्तु जरद्गव इत्यमरः ।

**अमृता०**—१०९. द्वित्रिभ्यामिति । त्रिरामी समासे द्वित्रिभ्यां परस्मादायुष उत्तरे अरामः समासान्तः स्यात् । द्व्यायुषमिति—द्वयोरायुषोः समाहार इत्यादि विग्रहः, पात्राद्यन्तत्वान्न लक्ष्मीत्वम् । पात्राद्यन्त आकृतिगणः ।

**अमृता०**—१११. संख्येति । कृष्णपुरुषे समासे संख्याशब्दादव्ययाच्च परस्मादङ्गुलि शब्दादरामः समासान्तो भवति । तद्धितश्च मात्रटिति—मात्रट् परिमाणे इति, प्रमाण-

---

**बाल०**—जात । श्यामरामसमासे जातमहद्वृद्ध इत्येतेभ्य उत्तरस्मात् उक्षन् शब्दात् समासान्तारामो भवति । जातश्चासौ उक्षा चेति जातोक्ष इति एवं महांश्चासौ उक्षा चेति । महतः संसारस्याराम इत्यनेनारामः महोक्ष इति । तथा वृद्धश्चासौ उक्षा चेति वृद्धोक्ष इति । वृद्धोक्षस्तु जरद्गव इत्यमरः । श्यामराम इति किं जात उक्षा यस्येति जातोक्षा इत्यादि ॥ १०८ ॥

**बाल०**—द्वित्रि । त्रिराम्यां समासे द्वित्रि इत्येताभ्यामुत्तरस्मादायुः शब्दात् समासान्तारामः स्यात् । द्वे आयुषी समाहृते द्वयोरायुयोः समाहारो वेति त्रिरामी, समासे सति अरामान्ता त्रिरामीत्यनेन लक्ष्मीत्वमत्र न स्यात्, त्रिराम्या ईवित्यनेन ईप् इतिच स्यात् पात्राद्यन्तादेराकृतिगणत्वात् लाक्षणिकारामान्तत्वाच्च । एवं त्रीणि आयूंषि समाहृतानीत्यादि वाक्ये त्र्यायुषमितिच त्रिराम्यामिति किं द्वयोरायुः द्व्यायुरिति ॥१०९॥

**बाल०**—कृष्ण । कृष्णपुरुषे समासे सति यथास्वं कार्यं स्यात् । अधिकारोऽयं ॥११०

**बाल०**—सङ्ख्या । कृष्णपुरुषे सङ्ख्यावाचकात् अव्ययाच्च परस्मादङ्गुलिशब्दादुत्तरे समासान्तारामो भवति । पूर्वस्मादरामोऽनुवर्त्तत इति वृत्तित्वेनाह अराम इति । द्वे इति द्वे अङ्गुली प्रमाणमस्येति विग्रहे तद्धितार्थे विषये त्रिरामी स्यात् । ततस्तस्याः

तद्धितश्च मात्रट्, तस्य लुक् च वक्ष्यते, द्व्यङ्गुलम्। निर्गतमङ्गुलिभ्यः निरङ्गुलम्।

## ११२. पुरुषादायुषः।

पुरुषायुषम्।

## ११३. वर्षा-दीर्घ-संख्यात-सर्व-पुण्यैकदेशाव्यय-संख्याभ्यो रात्रेः।

---

वाचिभ्यो महाहर इत्यनेन तस्य लुक् च वक्ष्येते। अ-इद्वयस्येति इरामहरः। निरङ्गुलमिति निरादयः पञ्चम्येति कृष्णपुरुषः। विना युद्धं न देयं भूमेरर्द्धमप्यङ्गुलमित्यत्र तु यवमाण वाचकोऽङ्गुल शब्दः प्रयुक्तो नत्वङ्गुलिरिति ज्ञेयम्।

**अमृता०**—११२. पुरुषादिति। कृष्णपुरुषे पुरुषशब्दात् परस्मादायुष उत्तरे अरामः समासान्तः स्यात्। पुरुषस्य आयुः पुरुषायुषम्।

**अमृता०**—११३. वर्षेति। कृष्णपुरुषे समासे वर्षादिशब्देभ्य स्तथा एकदेश वाचकात्, अव्ययशब्दात् संख्यावाचकाच्च शब्दात् परस्य रात्रि शब्दस्योत्तरे अरामः समासान्तः स्यात्। वर्षारात्र इति—वर्षाणां रात्रिरिति विग्रहः, अइ द्वयस्येति इरामहरः। दीर्घरात्रादीनान्तु दीर्घा चासौ रात्रिश्चेति विशेषणं तुल्याधिकरणेन समासो बोध्यः। दीर्घरात्रः संख्यातरात्रः सर्व रात्रः पुण्यरात्र इति।

तद्विशेषा इति रात्रेरेवभेदविशेषा इत्यर्थः। पूर्वरात्र इति—रात्रेः पूर्वमिति विग्रहे—पूर्वापराधरोत्तरादीनीत्यादिना कृष्णपुरुषः। एवं अपररात्रः उत्तररात्रः पश्चिमरात्रः मध्यरात्र शेषरात्र इत्यादयश्च। नीरात्र इति—निर्गतो रात्रिभ्य इति विग्रहे—निरादयः

---

तद्धितश्च मात्रडिति मात्रट् परिमाण इति मात्रट् वक्ष्यते। प्रमाणवाचिभ्यो महाहर इत्यनेन तस्य मात्रट् प्रत्ययस्य लुक्च वक्ष्यते। अ-इ-द्वयस्य इत्यनेन इरामहरः। द्व्यङ्गुलमिति द्वयङ्गुलं क्षेत्रमित्यन्ये। तथा द्वे अङ्गुले प्रमाणमस्या द्व्यङ्गुला भूमिरित्यपि, किन्तु टित्त्वाभावादत्रेप् न स्यात्। निर्गतमङ्गुलिभ्य इति विग्रहे निरादयः पञ्चम्या इत्यनेन समासे विरङ्गुलमिति। ननु यद्यत्र कृष्णपुरुषसमासेऽरामप्रत्ययस्तदा भूमेरप्यर्द्धभङ्गुलमित्यत्र समासाभावे कथमराम इति चेत् केनाप्युच्यते तदैवं वाच्यं, यवमानवचनोऽङ्गुलशब्दोऽप्यस्ति तस्यैवेदं नत्वत्प्रत्ययान्ताङ्गुलिशब्दस्येति सत्यं यद्येवं तर्ह्यङ्गुलशब्देन द्व्यङ्गुलमित्याद्यपि सिद्धं किं सूत्रेण तदेतत् कृतं द्व्यङ्गुलीत्यादि निरासार्थं॥ १११॥

**बाल०**—पुरु। कृष्णपुरुषे पुरुषशब्दादुत्तरस्मादायुष उत्तरे समासान्तारामो भवति। पुरुषायुषमिति पुरुषस्यायुरिति वाक्ये॥ ११२॥

**बाल०**—वर्षा। कृष्णपुरुषे सति वर्षाशब्दात् सङ्ख्यातशब्दात् सर्वशब्दात् पुण्यशब्दात् एकदेशवाचकात् अव्ययात् सङ्ख्यावाचकाच्च परस्या रात्रेरुत्तरे समासान्तारामा

वर्षारात्रः। एकदेशादयस्तद्विशेषाः। पूर्वरात्रः नीरात्रः पञ्चरात्रः। रात्राह्नाहाः पुंस्येव। अरामो निवृत्तः।

**११४. टित् केशवसंज्ञः।**

**११५. अथ केशवारामः।**

प्रभुरयम्। अयमेव टइत्युक्तः।

**११६. राजाहः सखिभ्यः।**

केशवारामः स्यात्। यदुराजः। राजानमतिक्रान्ता अतिराजी।

---

पञ्चम्येति समासः, रोरे लोप्य इति विष्णुसर्ग लोपः, पूर्वस्य त्रिविक्रमश्च। पञ्चरात्र इति—पञ्च रात्रयः समाहृता इति वाक्ये त्रिरामी, इरामान्त त्रिराम्या ब्रह्मत्वे सिद्धे विशेषमाह—रात्राह्नाहाः पुंस्येवेति।

**अमृता०**—११४. संज्ञासूत्रमिदम्। ट इट् यस्य तादृश्य प्रत्ययः केशवनामा भवति।

**अमृता०**—११५. अथेति अधिकारसूत्रम्। अयमेवेति—अयं केशवाराम एव समास प्रकरणे टप्रत्ययत्वेन निर्दिष्ट इत्यर्थः। टित्त्वादस्मादीप् भवतीति भावः।

**अमृता०**—११६. राजेति। राजन् अहन् सखिशब्देभ्य उत्तरे केशवारामः स्यात्। यदुराज इति—यदूनां राजेति विग्रहे षष्ठी कृष्णपुरुषः, नान्तस्येति संसारहरः। उदाहरणान्तराणि दर्शयिष्यन्तेऽग्रे। अतिराजीति—अतिक्रान्ता राजानमिति विग्रहे—अत्यादयो द्वितीययेति कृष्णपुरुषः, अण् केशवगौरादिभ्य इत्यनेन ईप् वक्ष्यते।

---

भवति। वर्षारात्र इति वर्षाणां रात्रिरिति। दीर्घा चासौ रात्रिश्चेति दीर्घरात्र इति। तथा सङ्ख्यातरात्रः सर्वरात्रः पुण्यरात्र इतिच। तद्विशेषा इति तद्भेदा इत्यर्थः, तदिति रात्रिः। पूर्वरात्र इति रात्रेः पूर्वमिति विग्रहे पूर्वापराधरोत्तरादीन्यवयविनेति समासे। नीरात्र इति निर्गतो रात्रिभ्य इति निरादयः पञ्चम्या इति समासे, किन्तु रो रे लोप्यः पूर्वस्येत्यनेन निरस्त्रिविक्रमः। पञ्चरात्र इति पञ्चानां रात्रिरिति विग्रहे रात्राह्नादयः पुंसीत्यनेन एते पुंस्येव वर्त्तन्ते। निवृत्त इति समाप्त इत्यर्थः॥ ११३॥

**बाल०**—टित्। ट इत यस्य स टित् टित्प्रत्ययः केशवसञ्ज्ञो भवति। अथ। अथानन्तरं सामान्यसमासान्तारामस्य दर्शनानन्तरं समासान्तः केशवारामो दर्श्यते। केवलैकाधिकारव्यापित्वात् प्रभुनामायमधिकारः। इत्युक्त इत्यस्मात् समासादाविति शेषः॥ ११४॥

**बाल०**—राजा। राजाहःसखिभ्य उत्तरः समासान्तकेशवारामो भवति। यदुराज इति यदूनां राजेति विग्रहे नान्तस्येति संसारहरः। अतिराजीति अण् केशवगौरादिभ्य इत्यनेन लक्ष्म्यामीप्॥ ११५॥

**११७. नतु राज्ञ्याः ।**

**यदुराज्ञी । अह्नष्टखेति द्व्यहः । कृष्णसखः, अतिसखी ।**

**११८. गोरतद्धितलुकि ।**

**केशवारामः स्यात् । पञ्चगवं, स्त्रीगवी । तद्धितलुकि तु पञ्चभि र्गोभिः क्रीतः पञ्चगुः पटः ।**

---

**अमृता०**—११७. नत्विति । राज्ञीशब्दात्तु केशवारामो न भवति । नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायेन राजन् शब्दग्रहणात् स्त्रीलिङ्गान्तस्य चतस्य प्राप्ते प्रतिषेधः । यदूनां राज्ञी यदुराज्ञी । द्व्यह इति—द्वयो रह्नोः समाहार इति त्रिरामी, अह्नष्टखरामयोरेवेति संसारहरः । सर्वाव्ययाभ्यामित्यादिना अहः शब्दस्याह्लादेश सूत्रे—'समाहारवर्जं टे' इति निषेधान्नेह अह्लादेशः । अन्यत्र द्वयोरह्नोर्भव इति द्व्यह्नः, तथा सर्वाह्णः पूर्वाह्ण इत्यादौ चाह्लादेश स्यादिति दर्शितं प्राक् । रात्राह्नाहाः पुंसीति विशेष वचनात् त्रिराम्यामपि पुंस्त्वम् । कृष्णस्य सखा कृष्णसखः श्रीदामादिः । अतिक्रान्ता सखायं अतिसखी ।

**अमृता०**—११८. गोरिति । तद्धितमहाहरस्याविषये गोशब्दात् केशवारामो भवति । पञ्चगवमिति–पञ्चानां गवां समाहार इति वाक्ये समाहारार्थे त्रिरामी ब्रह्मत्वञ्च । ब्रह्मान्तत्रिविक्रमस्य वामन इति वामने कृते, इद्वयस्येति गोविन्दः, गोरोरव इत्यवादेशः, तत अइ-द्वयस्येत्यरामहरः । स्त्रीगवीति—स्त्रीचासौ गौश्चेति विग्रहे श्यामरामः । एवमुत्तम गवी परमगवः राजगव इत्यादयश्च । पञ्चगुरिति—अत्र क्रीतार्थे यप्रत्ययस्तद्धितः, तस्य पुनः—अध्यर्द्धपूर्वात् त्रिराम्याश्चार्हीयस्येति महाहरो वक्ष्यते । तद्धितार्थे त्रिरामीति वाच्यस्य पटस्य पुंस्त्वादस्य च पुंस्त्वम्, गोरीपआप इत्यादिना वामनः ।

---

**बाल०**—नतु । राज्ञ्या उत्तरे समासान्तकेशवारामे नतु स्यात् । नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् राजाह इत्यनेन राज्ञ्या अपि प्राप्ते प्रतिषेधोऽयं । यदूनां यदुषु वा राज्ञी यदुराज्ञीति । द्व्यह इति द्वयोरह्नोः समाहार इत्युक्त । कृष्णसख इति कृष्णस्य सखेति । अतिसखीति अतिक्रान्ता सखायमिति पूर्ववत् ॥ ११६ ॥

**बाल०**—गोर । अतद्धितलुकि तद्धितानुगतभावे गोशब्दात् समासान्तकेशवारामो भवति । पञ्चगवमिति पञ्चानां गवां समाहार इत्यादिवाक्ये, समाहारे ब्रह्मत्वमेकत्वञ्चे-त्यनेन ब्रह्मत्वात् । ब्रह्मान्तत्रिविक्रमस्य वामन इति वामने कृते उद्वयस्य गोविन्द इत्यनेन गोविन्दः ओ अव, किन्तु गोरोरव सर्वेभ्य इत्येवे कृते ततः अ इद्वयस्येत्यरामहर इतिच । स्त्रीगवीति स्त्री चासौ गौश्चेति विग्रहे । एवं दारस्य दाराणां वा गौरिति दारगवो दारगवीत्यादिच दारशब्दः स्त्रीवाचक एकद्विवनान्तो नित्यं बहुवचनान्तोऽप्यस्तीत्यन्येच । तद्धितलुकित्विति रूपं दर्श्यते इति शेषः । क्रीड इत्यस्माद्विग्रह इति शेषः । पञ्चगुरित्यत्र अध्यर्द्धपूर्वात् त्रिराम्याश्चार्ही यस्य महाहर इति तद्धितमहाहरः गोरीप आप ऊङश्चेत्यनेन वामन इति ॥ ११७ ॥

**११९. ग्रामकौटाभ्यां तक्षणः ।**

ग्रामतक्षः कौटतक्षः स्वतन्त्रः ।

**१२०. अति गोष्ठाभ्यां शुनः**

अतिश्वः गोष्ठश्वः ।

**१२१. मृग पूर्वोत्तरेभ्यः सक्थ्नः ।**

मृगसक्थम् ।

---

**अमृता०**—११९. ग्रामेति । ग्रामकौटाभ्यां परस्मात् तक्षन् शब्दात् केशवारामः स्यात् । तक्षा सूत्रधारः, काष्ठशिल्पीत्यर्थः । ग्रामस्य तक्षा ग्रामतक्षः, नान्तस्येति संसारहरः । कुट्यां भवः कौटः, कौटस्य तक्षा कौटतक्षः । स्वकुटीरे स्थित एव यः काष्ठशिल्पेन जीविकामर्जयति स कौटतक्ष उच्यते, तदेवोक्तं स्वतन्त्र इत्यनेन ।

**अमृता०**—१२०. अतीति । अति गोष्ठाभ्यामुत्तरस्मात् श्वन् शब्दात् केशवारामः स्यात् । अतिक्रान्तः श्वानं अतिश्वः । गोष्ठस्य श्वा गोष्ठश्वः । नान्तस्येति संसारहरः ।

**अमृता०**—१२१. मृगेति । मृग पूर्व उत्तर इत्येतेभ्यः परस्मात् सक्थि शब्दात् केशवारामो भवति । मृगसक्थमिति—मृगस्य सक्थि इति विग्रहे षष्ठी कृष्णपुरुषः, अ-इद्वयस्येति इरामहरः । एवं पूर्वसक्थमित्यादि ।

---

**बाल०**—ग्राम । ग्रामकौटाभ्यामुत्तरस्मात् तक्षन्शब्दात् केशवारामो भवन् समासान्तः स्यात् । तक्षा शिल्पकारी सूत्रधारादिः । ग्रामतक्ष इति ग्रामस्य तक्षेति । कुट्यां भवः कौटः स चासौ तक्षा चेति कौटतक्ष इति । स्वतन्त्र इत्यनेन स्वगृहस्थः शिल्पकारीति सूचितं । कौटतक्षः स्वतन्त्रकर्मजीवी न कस्यचित् प्रतिबन्ध इत्यन्ये ॥११८॥

**बाल०**—अति । अतिगोष्ठाभ्यामुत्तरस्मात् श्वन्शब्दात् समासान्तकेशवारामो भवति । अतिक्रान्तः श्वानमिति वाक्ये अतिश्वो वराह इति । गोष्ठस्य श्वा गोष्ठश्व इति ॥ ११९ ॥

**बाल०**—मृग । मृग पूर्व उत्तर इत्येतेभ्य उत्तरस्मात् सक्थिशब्दात् समासान्तकेशवारामो भवति । मृगसक्थमिति मृगस्य सक्थीति विग्रहे अ इद्वयस्येत्यनेनेरामहरः सक्थ्नः पूर्वमिति विग्रहे पूर्वसक्थमिति पूर्वापराधरेत्यनेनात्रावयविसमासः । पूर्वश्च तत् सक्थि चेति श्यामरामो वा । एवमुत्तरसक्थमिति ॥ १२० ॥

**बाल०**—उप । अप्राणिनि विषये उपमानरूपाभ्यां ताभ्यां श्वसक्थिभ्यां परस्मात् समासान्तकेशवारामः स्यात् । फलकः श्वेवेति विग्रहे उपमेयं व्याघ्रादिभिरित्यनेन समासः फलकश्व इति । एवं फलकः सक्थीव फलकसक्थमिति । फलकश्वर्मनिर्मितो वर्त्तुलाकारः ढाल इति प्राकृतोक्तः । उपमानेति किं न श्वा अश्वा लोष्टः ॥ १२१ ॥

## १२२. उपमानाभ्यां ताभ्यामप्राणिनि ।

फलकः श्वेव फलकश्व, फलकसक्थम् ।

## १२३. उरसः प्रधानार्थात् ।

हस्त्युरसं गवोरसम् ।

## १२४. कु-महद्भ्यां ब्रह्मणो वा ।

कुब्रह्मः कुब्रह्मा ।

---

**अमृता०**—१२२. उपमानाभ्यामिति । अप्राणिनि वाच्ये उपमानभूताभ्यां श्व-सक्थिभ्यामुत्तरे केशवारामो भवति । फलकश्व इति—उपमेयं व्याघ्रादिभिरूपमानैरित्यनेन कृष्णपुरुषः । फलक श्चर्मनिर्मित आघातनिवारकास्त्रविशेषः । अप्राणिनि किम्—वानरः श्वेव वानरश्वा ।

**अमृता०**—१२३. उरस इति । प्रधानार्थदुरः शब्दादुत्तरे केशवारामः स्यात् । हस्त्युरसमिति—हस्तिनामुरः प्रधानमिति षष्ठी कृष्णपुरुषः, मुख्यो हस्तीत्यर्थः । गवोरस-मिति गवामुरः श्रेष्ठ इति पूर्ववत् समासः, गोरोरव इत्यवादेशः । एवं रथोरसमित्यादिच ।

**अमृता०**—१२४. कु महद्भ्यामिति । कुशब्दात् महच्छब्दाच्च परस्मात् ब्रह्मण उत्तरे केशवारामः स्यात् । कुब्रह्म इति—कुत्सितश्चासौ ब्रह्मा चेति विग्रहे कुपापेषदर्थयो-रित्यनेन समासः, कुप्रादय इत्यनेन वा । नान्तस्येति संसारहरः । एवं महाब्रह्म महा-ब्रह्मा । ब्राह्मण—पर्यायोऽयं ब्रह्मन् शब्दः ।

---

**बाल०**—उर । प्रधानार्थादुःशब्दात् समासान्तकेशवारामो भवति । हस्त्युरस-मिति हस्तिन उर इति विग्रहे । गवोरसमिति गोरुर इति विग्रहे गोरोरव इत्यनेनात्र गोरवादेशः ।। १२२ ।।

**बाल०**—कुम । कुमहद्भ्यामुत्तरस्मात् ब्रह्मणः परः समासान्तकेशवारामो भवति । कु कुत्सितश्चासौ ब्रह्मा चेति विग्रहे कुब्रह्म इति द्वयं । कुः पापेषदर्थयोरित्यनेनात्र समासः कुप्रादय इत्यनेन वा । ब्रह्मात्र ब्राह्मणः ।। १२३ ।।

**बाल०**—काशि । काशिब्रह्म आदिर्येषां ते काशिब्रह्मादयः । देशे विषये समासान्त-केशवारामान्ताः काशिब्रह्मादयः प्रयोगाः साधवो भवन्ति । अर्थात् देशनाम्नः परस्मात् ब्रह्मशब्दात् पर समासान्तकेशवारामो भवतीति निर्गलितोऽर्थः । काश्यां ब्रह्मा काशिब्रह्म इति सप्तमी शौण्डादिभिरित्यनेनात्र समासः, निपातनात् काशिशब्दस्येरामस्य वामनश्च । आदिशब्दात् सुराष्ट्रब्रह्म इत्यादयोऽपि ज्ञेयाः । देशे इति किं, देवस्य ब्रह्मा देवब्रह्मा नारद इत्यादि । निवृत्त इति समाप्त इत्यर्थः ।। १२४ ।।

## १२५. काशि ब्रह्मादयो देशे ।

साधवः । कृष्णपुरुषो निवृत्तः ।

## १२६. त्रिराम्याम् ।

प्रभुरयम् ।

## १२७. नावः ।

केशवाराम इत्येव स्यात् । द्विनावं, द्विनावप्रियः, द्विनावरूप्यं काष्ठम् ।

---

**अमृता०**—१२५. काशीति । देशे वाच्ये काशिब्रह्मप्रभृतयः केशवारामेण सह साधवो भवन्ति । काश्यां ब्रह्मेति काशिब्रह्मो देशः । सप्तमी शौण्डादिभिरिति संज्ञाशब्दानां यथाकथञ्चिद् व्युत्पत्तिः । अस्य देश वाचित्वं काशीशब्दस्य वामनत्वञ्च निपातफलम् । आदिपदेन अवन्तिब्रह्मः सुराष्ट्र ब्रह्म इत्यादयः । देश इति किम्—देवानां ब्रह्मा देव ब्रह्मा देवर्षि र्नारदः ।

**अमृता०**—१२७. नाव इति । त्रिरामीसरामे नौ शब्दात् केशवारामो भवति । द्विनावमिति—द्वे नावौ समाहृते, द्वयो र्नावोः समाहार इति वा विग्रहः । समाहार वाच्यत्वेऽपि पात्राद्यन्तत्वाद् ब्रह्मत्वम् । द्विनावप्रिय इति—द्वे नावौ प्रिये यस्येति विग्रहे प्रथमुत्तरपदप्रधानत्रिरामी, ततः समुदायेनान्यपदार्थत्वे पीताम्बरः । द्विनावरूप्यमिति—द्वाभ्यां नौभ्यामागतमिति तद्धितार्थे त्रिरामी । तत आगत इत्यर्थे रूप्यो वक्ष्यते । एवं द्विनावमयमिति च ।

---

**बाल०**—त्रिरा । त्रिराम्यां समासे यथास्वं कार्यं स्यात् । अधिकारोऽयं ।। १२५ ।।

**बाल०**—नारः । त्रिराम्यां नावः नौशब्दात् समासान्तकेशवारामो भवति । केवलसमासान्तारामोऽप्यनुवर्त्तितुं शक्नोति तन्निरासार्थमेवकारेण सह वृत्तिमाह केशवेति । द्विनावमिति द्वे नावौ समाहृते द्वयोनावोः समाहार इति वा विग्रहे समाहार-वाच्येऽत्र त्रिरामी पूर्ववदत्र ब्रह्मत्वं न लक्ष्मीतेति । द्विनावप्रिय इति द्वे नावौ प्रिये यस्येति । अत्रोत्तरपदे त्रिरामी समुदायेनान्यपदार्थत्वात् पीताम्बरः । द्विनावरूप्यमिति द्वाभ्यां नौभ्यामागतमिति तद्धितार्थेऽत्र त्रिरामी । तद्धितश्च रूप्यः सतु तत आगत इत्यर्थे हेतोर्मानवनाम्नश्च रूप्यो वेत्यनेन वक्ष्यते । ततोऽत्र द्विनावहेतुकमागतं यत् तत् कथनार्थं काष्ठमिति विशेष्यमपि दर्शितं ।। १२६ ।।

**बाल०**—अर्द्ध । अर्द्धं पूर्वं यस्य सोऽर्द्धपूर्वस्तस्मात् अर्द्धपूर्वाच्च नौशब्दात् समासान्त-केशवारामो भवति । अर्द्ध समविभागे वेत्यनेन यः समासः श्यामरामान्तः सतु श्यामराम एवेत्याह अयन्त्विति । अर्द्धनावीति अर्द्धं नाव इति विग्रहे टित्त्वान्न लक्ष्म्यामीप् । नार्द्धा-मलक्यादय इत्यनेन न वामनः । अर्द्धनावञ्चेति भवतीति शेषः । किन्त्वत्र ब्रह्मत्वं लोकाल्लोकव्यवहारात् । जुमर इत्याहेति शेषः । अर्द्धनौराजादिः स्यात् सच त्रिषु लिङ्गेषु वर्त्तत इति तन्मते अर्द्धनाव इतिच ।। १२७ ।।

## १२८. अर्द्धपूर्वाच्च ।

अयन्तु श्यामरामः । अर्द्धनावी अर्द्धनावञ्च; ब्रह्मत्वं लोकात् । पुंस्त्वमपीति जुमरः—अर्द्धनावः ।

## १२९. खार्या वा ।

द्विखारं द्विखारि ।

## १३०. द्व्यञ्जल-त्र्यञ्जले ।

साधुनी । त्रिराम्यामित्येव, द्वयोरञ्जलिः द्व्यञ्जलिः ।

---

**अमृता०**—१२८. अर्द्धेति । अर्द्धं पूर्वं यस्य सोऽर्द्धपूर्वः, तथाभूतात् नौ शब्दादुत्तरं केशवारामः स्यात् । तद्धितार्थोत्तरपदसमाहारविरहान्नेह त्रिरामी सम्भवेदित्यत आह—अयन्तु श्यामराम इति । अर्द्धं समविभागे वेति प्रोक्तलक्षणेन समासादयं श्यामराम इति भावः । अतएव सूत्रे चकारः अधिकारातिरिक्ते श्यामरामेऽपि प्राप्त्यर्थः । अर्द्धनावीति —उत्तरपदवल्लिङ्गं रामकृष्णेत्यादि शासनेन प्राप्तमेव लक्ष्मीत्वम्, किन्तु तद्व्यभिचारोऽत्र दृश्यते लोकव्यवहारादित्यर्थः । एवमेव सुपद्मे चोदितम् । पाणिनीयेऽपि तथा । पुंस्त्वमपीति—अर्द्धान्नौराजादः स्यात् स च त्रिषु लिङ्गेषु वर्त्तत इति जुमरमते अर्द्धनाव इत्यपि ।

**अमृता०**—१२९. खार्या येति । त्रिराम्यां समासे खारीशब्दादुत्तरेकेशवारामो वा स्यात् । द्विखारमिति द्वयोः खार्योः समाहार इत्यादि विग्रहः । पात्राद्यन्तत्वाद् ब्रह्मत्वम् । अरामाभावपक्षे द्विखारीति, ब्रह्मान्तत्रिविक्रमस्येति वामनः ।

**अमृता०**—१३०. द्व्यञ्जलेति । त्रिराम्यां द्व्यञ्जल-त्र्यञ्जल इति द्वे केशवारामेण साधुनी स्याताम् । द्वयोरञ्जल्योः समाहार इत्यादि विग्रहे समाहार त्रिरामी । त्रिरामीतोऽन्यत्र षष्ठी कृष्णपुरुषादौ केशवारामो न भवतीति व्यावृत्ति र्दशिता द्व्यञ्जलिरिति । पाणे र्निकुब्जः प्रसृत स्तौ युतावञ्जलिः पुमानित्यमरः ।

---

**बाल०**—खार्या । त्रिराम्यां समासे खार्या उत्तरे समासान्तकेशवारामो वा भवति । द्विखारमिति द्वयोः खार्योः समाहार इति विग्रहे पूर्ववदत्र ब्रह्मत्वं । तथा द्विखारीति ब्रह्मान्तेत्यनेनात्र वामनः ॥ १२८ ॥

**बाल०**—द्व्यञ्ज । द्वयोरञ्जल्योः समाहारः त्रयाणामञ्जलीनां समाहार इत्यादि विग्रहे द्व्यञ्जलद्व्यञ्जले द्वे केशवारामान्तत्वेन साधुनी भवतः । वृत्तिमाह त्रिराम्यामिति । वृत्तावेवकारात् द्वयोरञ्जलिरिति विग्रहे द्व्यञ्जलिरित्यत्र केशवारामो न स्यादिति । पाणेर्निकुब्जः प्रसृतस्तौ युतावञ्जलिः पुमानित्यमरः ॥ १२९ ॥

**बाल०**—नावा । तद्धितमहाहरे सति नवादेरुत्तरे समासान्तकेशवारामो न भवति । पञ्चभिर्नौभिः क्रीतः पट इति विग्रहे तद्धितार्थे त्रिराम्यां सत्यां अध्यर्द्धपूर्वात् त्रिराम्याभ्यार्हीयस्येत्यनेन ठस्य महाहरो वक्ष्यते । पञ्चनौरित्यत्रादिशब्दात् शर्द्धनौः द्विखारि द्व्यञ्जलि त्र्यञ्जलि चेति । निवृत्तेति समाप्तेत्यर्थः ॥ १३० ॥

## १३१. नावादे र्न तद्धितमहाहरे ।

पञ्चभि र्नौभिः क्रीतः पटः पञ्चनौरित्यादि । त्रिरामी निवृत्ता ।

## १३२. रामकृष्णे ।

प्रभुरयम् ।

## १३३. ह-ष-द-चवर्गेभ्यः समाहारे ।

---

**अमृता०**—१३१. नावादेरिति । तद्धितमहाहरे सति नावादेरुत्तरे विहितो यः केशवारामः स नभवति । पञ्चनौरित्यत्र क्रीतार्थे यो माधव ठो विधास्यते, तस्य च—अध्यर्द्ध पूर्वादित्यादिना महाहरो भविष्यतीति नात्र केशवारामः । आदि शब्देन तद्धित लुकि—अर्द्ध नौः द्विखारि द्वचञ्जलीत्येव, नत्वरामः ।

**अमृता०**—१३३. ह-षेति । रामकृष्णसमासे ह-ष-द-चवर्गान्तेभ्यः केशवारामः स्यात् । कंस-कंसद्रुहमिति—नित्यवैरिणामित्यनेन समाहारः, समाहारे ब्रह्मत्वमेकत्वञ्चेति

---

**बाल०**—राम । रामकृष्णे समासे यथास्वं कार्यं स्यात् । अयमधिकार ॥ १३१ ॥

**बाल०**—ह-ष । रामकृष्णसमाहारे ह-ष-द-चवर्गेभ्यो ह-ष-द-चवर्गान्तेभ्यः समासान्तकेशवारामो भवति । कंसश्च कंसध्रुक्च तयोः समाहार इति विग्रहे नित्य-वैरिणामित्यनेन समासः । कंसकंसद्रुहमिति समाहारे ब्रह्मत्वमेकत्वञ्चेति ब्रह्मत्वं । एवं केशीच केशिद्विट्च तयोः समाहारः केशिकेशिद्विषं तथा भक्तिश्च सम्वित् ज्ञानञ्च तयोः समाहारः भक्तिसम्विदमिति । लक्ष्मीश्च वाक्च तयोः समाहारः लक्ष्मीवाचमिति ॥ १३२ ॥

**बाल०**—धेन्व । धेन्वनडुह-स्त्रीपुंसावादी येषां ते धेन्वनडुह-स्त्रीपुंसादयः रामकृष्ण-समासे समासान्तकेशवारामान्ता धेन्वनडुह स्त्रीपुंसादयः प्रयोगाः साधवो भवन्ति निपात्यन्ते इत्यर्थः । धेनुश्च अनड्वांश्च धेन्वनडुहाविति । तथा स्त्रीच पुमांश्च स्त्रीपुंसा-विति । सूत्रे चादिग्रहणादन्योऽपि प्रयोगा दर्श्यन्ते । किञ्च, न केवलमिदमितरेतरे प्रवर्त्तते निपातसामर्थ्यात् समाहारेऽपीति । ऋक्च यजुश्च तयो समाहार इति विरोधिनामद्रव्याणां वेति समाहारे ऋग्यजुषमिति । एतदितरेतरेऽपि साधयितुं शक्यते सर्वेऽपि रामकृष्णा विभाषयैकवद् भवतीत्युक्तेः । यजुःशब्दस्य ब्रह्मलिङ्गत्वेन उत्तरपदवल्लिङ्गमिति प्राप्तेश्च । ऋक्सामे इति ऋक्च साम चेति विग्रहे । पूर्ववत् समाहारे प्राप्तेऽपि न दधिपय आदीना-मित्यनेनात्र न समाहार इति । एवं वाङ्मनसे इत्यत्र बोद्धव्यं समासप्रकरणे एकत्रै-वोक्तत्वात् । अक्षिभ्रुवमिति प्राण्यङ्गानामित्यनेन समाहारः । दारगवमिति गवाश्वा-देराकृतिगणत्वात् समाहारः । उर्वष्ठीवमिति यद्यपि अष्ठीवच्छब्दो ग्रामवाची तथाप्येक-देशेऽस्तीति प्रतीतेः । प्राण्यङ्गानामित्यनेन समाहारः । यदात्वष्टीवच्छब्दो जानुवाची तदाऽनेन समाहारोऽयत्नसिद्ध एव जानूरुपर्वाष्ठीवदस्त्रियामित्यमरः । निपातसामर्थ्यादष्ठी-वतः संसारहरश्चेति । एवं पदष्ठीवमित्यपि । किञ्च, पादशब्दस्य पदित्यादेशोऽष्ठीवतो-ऽद्भागहरः निपातफलं । नक्तन्दिवमित्यादित्रयाणां विरोधिनामद्रव्याणामित्यनेन समाहारः ।

केशवारामः स्यात् । कंस-कंसद्रुहं, केशि-केशिद्विषं, भक्तिसम्विदं, लक्ष्मीवाचम् ।

## १३४. धेन्वनडुहौ स्त्रीपुंसादयश्च ।

तत्रैवोक्तम् । एवं केशि केशिद्विषमिति च । भक्तिश्च सम्बिच्चेति पूर्ववत् समाहारः । शुष्काद्वैतज्ञानमत्र सम्विद् गृह्यते, तस्यैव भक्तिविरोधित्वावगमात् । वाच्शब्देनात्र तद-धिष्ठात्री वाणी लक्ष्यते, लक्ष्मी वाण्यो हि नित्यवैरित्वप्रसिद्धेः । समाहार इति किम्— प्रावृट् शरदौ, गीष्मप्रावृषौ । रामकृष्ण इत्येव, अन्यत्र उत्तमवाक् ।

**अमृता०**—१३४. धेन्विति । रामकृष्णसमासे केशवारामेण धेन्वनडुहौ साधूभवतः, तथा स्त्रीपुंसादयश्च प्रयोगाः साधवो भवन्ति । नात्र केवलसमाहारे किन्तु इतरेतरेऽपीति बोध्यम् । समासे व्यवस्थापि निपातनादेव प्रतिपत्तव्या, तेन क्वचित् समासान्तरे न ह्येषामरामप्रवृत्तिः स्यादिति निष्कर्षः । धेनुश्च अनड्वान चेति इतरेतरयोगे धेन्वनडुहौ । एवं स्त्री च पुमांश्चेति स्त्रीपुंसौ । स्त्रियाः पुमानिति षष्ठी समासे विवक्षिते तु स्त्रीपुमानिति न समासान्तः प्रत्ययः । ऋक् च यजुश्च, तयोः समाहारः, विरोधिनामद्रव्यानां वेति समाहारः । ऋक् च साम च ऋक् सामे, अत्र समाहारे प्राप्ते—न दधिपय आदीनामिति निषेधादितरेतरद्वन्द्वः । एवं वाङ्मनसी इति च । अक्षिभ्रुवमिति—अक्षिणी च भ्रुवौ

अ-इयस्येति अ इरामयोर्हरः सर्वत्रेति । नक्तमिति मान्तमव्ययं दिवेत्यारामान्तमव्यय-मित्यनयो रात्रिदिवसवाचित्वाद्विरोधित्वं । अहोरात्राविति न दधिपय आदीति समाहारा-भावः । रात्रेरिरामहरः, आदगोपालयोरित्यह्नो विष्णुसर्गस्योराम इति रात्राह्नादय इति पुरषोत्तमता अहोरात्राविमौ पुण्याविति हि दृश्यते । रात्रिन्दिवमिति सर्वं पूर्ववत् किन्त्वत्र निपातनाद्रात्रिशब्दान्मुगागमोऽपीति । अर्हदिवन्त्विवति अहश्च दिवा चेतीत८ तररामकृष्णः । अह्नो विष्णुसर्गस्य र इति रःसर्वेऽपि रामकृष्णा इत्येकवत् । दिवाशब्द-स्याव्ययत्वात् शिष्टव्यवहाराद्वा ब्रह्मत्वञ्चेति । नन्वेवं भवतु समानार्थानाञ्च भिन्नरूपाणां क्वचिदित्येकशेषः कथं न स्यात्, सत्यं भवितुमर्हति, किन्तु समानार्थाञ्चेति क्वचिद् ग्रहणादत्र न स्यात् । स्वाभिप्रेतार्थमाह प्रतिदिनमिति प्रकारान्तरेणैतदन्यैरप्युक्तं । तद्यथा । अर्हदिवमिति अहनिच दिवाच स्वभावात् सप्तम्यर्थवृत्तौ दिवाव्ययं । नक्तन्दिवमिति नक्तं च दिवाच अत्रापि द्वे आधारप्रधाने सप्तम्यर्थेवृत्ते अव्यये यद्यप्याधेयसापेक्षत्वेनागमकत्वात् द्वन्द्वोऽत्र न प्राप्नोति, तथापि द्वन्द्वेऽद्विधानसामर्थ्यादिव भवति । प्लक्षन्यग्रधयोरस्तीति समासव्युत्पत्तिकालेनाधेयापेक्षेति समासस्तत्र सुकर एव । नन्वहर्दिवमिति प्रयोग कथं अर्थावगत्यर्थो हि प्रयोगः पर्यायाणाञ्चैकेनैवार्थस्य लब्धत्वात्, द्वितीयप्रयोगो नास्तीति अहःपर्यायश्च दिवाशब्दस्तत् कथमुभयशब्दप्रयोगोऽस्मिन्निति चोद्य आह प्रतिदिनमित्यर्थः । वीप्सात्रार्थं इति भावः । वीप्सात्रार्थ इति भावः । वीप्सार्थद्योतनार्थंञ्च उक्तार्थस्यापि क्वचित् प्रयोगो दृश्यते । वीप्सार्थेच द्वन्द्वोऽद्विधानसामर्थ्यादिवागन्तव्य इति । रामकृष्णा-धिकारः समाप्तः ॥ १३३ ॥

साधवः। आदि ग्रहणात्—ऋग्यजुषं, ऋक्सामे अक्षिभ्रुवं, दारगवं, उर्वष्ठीवं, पदष्ठीवं, नक्तन्दिवं, अहोरात्रौ, रात्रिन्दिवम्। अर्हदिवन्तु प्रतिदिवमित्यर्थः। रामकृष्णो निवृत्तः।

**१३५. अव्ययीभावे।**

**प्रभुरयम्।**

**१३६. शरदादेः।**

---

चेति विग्रहे—प्राण्यङ्गानामिति समाहारः। दारगवमिति—दाराश्च गावश्चेति गवाश्वादे राकृतिगणत्वात् समाहारः। गोरोरव इत्यवादेशः, अइ द्वयस्येत्यरामहरः।

उर्वष्ठीवमिति—ऊरूच अष्ठीवन्तौ चेति प्राण्यङ्गानामिति समाहारः। अत्र संसार हरश्च निपातसामर्थ्यादिव। एवं पादौ च अष्ठीवन्तौ च पदष्ठीवम्। इह संसारहरः, पादस्य पद्भावश्च निपातबलात्। नक्तन्दिवमिति—नक्तं च दिवा चेति विरोधिनामिति समाहारः। नक्तं दिवा चेति विरोधिनामिति समाहारः। नक्तं दिवा चेति सप्तम्यर्थक मव्ययद्वयम्। सप्तम्यर्थवृत्त्यो द्वयोरव्यययोस्तु न कुत्र समासो विहितः, स चेह निपातादेव भवति। अहश्च रात्रिश्च अहोरात्रौ, अत्र त्वितरेतरयोगः, नदधिपय आदीनामिति समाहार निषेधात्। अइ-द्वयस्येति रात्रेरिरामहरः, रात्राह्नाहाः पुंसीति पुंस्त्वम्। रात्रिश्च दिवा च रात्रिन्दिवं, मुमागमश्चात्र निपात कार्यम्। अह र्दिवमिति—अहनि च दिवा चेति इतरेतर द्वन्द्वः। सर्वेऽपि रामकृष्णा विभाषयैकवद्भवन्तीत्येक वचनम्।

ननु अर्थलाभार्थमेव शब्दः प्रयुज्यते, पर्याय शब्दानामेकेनैवार्थस्योक्तत्वात् द्वितीयस्य प्रयोगो नोपपद्यते, इह तु अहन् दिवा चेति दिवस वाचि पर्यायशब्दयोः कथमेकत्र समासे प्रयोग इति चेत्? सत्यम्, अत्र वीप्सायां द्विरुक्तिः, वीप्सा द्योतनार्थमुक्तस्यापि प्रयोगो न विरुध्यते, किन्तु चार्थ उत्पद्यमानो द्वन्द्वो वीप्सार्थे न प्राप्नोतीत्यत इह निपातित इति विमर्शः। दिवा शब्दस्याव्ययत्वादिह च ब्रह्मत्वम्।

**अमृता०**—१३६. शरदादेरिति। अव्ययीभावे शरदादे रुत्तरे केशवारामः स्यात्।

---

**बाल०**—अव्य। अव्ययीभावे समासे यथास्वं कार्यं स्यात् अधिकारोऽयं॥ १३४॥

**बाल०**—शर। अव्ययीभावे शरदादेरुत्तरः समासान्तकेशवारामो भवति। केशवा-रामः पूर्वतोऽनुवर्त्तत इति सूचयन् वृत्तित्वेनाह केशवेति। उपशरदमिति शरदः समीपमिति अव्ययं सप्तम्याद्यर्थेषु नित्यमित्यनेन समीपेऽव्ययीभावः। उपविपाशमिति। विपाशा नदीविशेषः तस्याः समीपमिति पूर्ववदव्ययीभावः। अ इद्वयस्येत्यारामहरः। उपदिवमिति दिवः स्वर्गस्य समीपमिति पूर्ववत्। उपदृशमिति दृशः नेत्रस्य समीपमिति। उपदिशमिति दिशः पूर्वादेः समीपमिति। प्रतिदृशमिति वीप्सायां दृशं दृशं लक्ष्मीकृत्येत्यर्थः। एवं प्रतिदिशमित्यपि। उपचतुरमिति चतुर्णां समीपमिति॥ १३५॥

केशवारामः स्यात्। उपशरदं उपविपाशं उपदिवं उपदृशं उपदिशं प्रतिदृशं प्रतिदिशं उपचतुरम्।

**१३७. प्रते रुरसः सप्तम्यर्थे।**

उरसि वर्त्तते प्रत्युरसम्।

**१३८. समनुप्रतिभ्योऽक्ष्णः।**

---

उपशरदमिति—अव्ययं सप्तम्याद्यर्थेषु नित्यमिति सामीप्यार्थे अव्ययीभावः। एव मुपविपाशमिति च। विपाशा सिन्धुनदस्य शाखा नदी, अइ द्वयस्येत्यारामहरः। दिवः स्वर्गस्य समीपं उपदिवम्। दृशो र्नेत्रयोः मीपमित्युपदृशम्। एवमुपदिशमिति। दृशं दृशं प्रति दृशमिति वीप्सायामव्ययीभावः। एवं प्रतिदिशम्। चतुर्णां समीपमुपचतुरम्। किञ्च प्रतिमनसं प्रत्युपानहं उपानडुहं उपहिमवतं प्रत्यनसमित्येते चादि पदेन ग्राह्याः।

**अमृता०**—१३७. प्रतेरिति। अव्ययीभावे विषये प्रतिपूर्वात् सप्तम्यर्थे वर्त्तमानाद्दुरस् शब्दात् केशवारामः स्यात्। उरसिवर्त्तत इति विग्रहः। सप्तम्यर्थ इति किम्—उरः उरः प्रति प्रत्युरः। वीप्सार्थेऽव्ययीभावान्न केशवारामः।

**अमृता०**—१३८. समिति। अव्ययीभावे सम् अनु प्रति इत्येतेभ्यः परस्मात् अक्षि शब्दात् केशवारामो भवति। अक्ष्णोः समीपं, अक्ष्णा सङ्गतमिति वा समक्षम्। अव्ययीभावे सम् शब्देन समासविधानाभावात् तिष्ठद् ग्वादित्वात् समासो ज्ञेयः। अक्ष्णोः समीपं अन्वक्षम्, अक्ष्णो र्योग्यमिति वा। अनु र्यस्य समीपमाहेत्यादिना समासः, पश्चाद् योग्ययो

---

**बाल०**—प्रते। अव्ययीभावे विषये सप्तम्यर्थे वर्त्तमानादुरसः परः समादान्तकेशवारामः स्यात्। उरसि उर्त्तत इति विग्रहे अव्ययं सप्तम्याद्यर्थेष्वित्यव्ययीभावः प्रत्युरसमिति। सप्तम्यर्थ इति किं यदातु उरः उरः प्रतिप्रत्युरः तदा वीप्सासायामव्ययीभावः, किन्तु न केशवारामः॥ १३६॥

**बाल०**—सम। अव्ययीभावे समनुप्रतिभ्य उत्तरस्मादक्ष्नः परः समासान्तकेशवारामो भवति। समक्षमिति अक्ष्नोः साक्षादिति विग्रहः। यद्यप्यत्राव्ययीभावविधायकं सूत्रं न दृश्यते, तथाप्यनेन केशवारामविधानात् संशब्दस्य साक्षादर्थत्वेन साक्षाच्छब्दस्यतु समीपार्थत्वेन अव्ययं सप्तम्येत्यनेन समीपे अव्ययीभावः करणीय इति। अन्वक्षमिति अक्ष्नोः समीपमिति अनुर्यस्य समीपमाहेत्यनेनात्राव्ययीभावः। प्रत्यक्षमिति अक्षिणी आभिमुख्येनेति। अभिप्रतिलक्षणेनाभिमुख्ये इत्यनेनात्राव्ययीभावः। ननु यद्येवं तर्हि कथं प्रत्यक्षो घट इति उच्यते, प्रतिगतोऽक्षिणी इति विग्रहे अत्यादयो द्वितीययेत्यनेनात्र मध्यपदलोपी द्वितीयाकृष्णपुरुष इति। लक्षणाभावात् समाधानपूर्वकं परोक्षमिति साधयति कृताव्ययीति। अक्ष्नोऽक्ष्नोर्वा परमविषय इति कृताव्ययीभावे प्रत्यक्षमिति निपात्यते इत्यन्वयः॥ १३७॥

समक्षं अन्वक्षं प्रत्यक्षम्। कृताव्ययीभावे निपात्यते—अक्षणः परं परोक्षम्।

**१३९. नदीगिरि पौर्णमास्याग्रहायणीभ्यो वा।**

उपनदं उपनदि।

**१४०. उपशुनोपजरस-सरजसानि, अनुगवमायामे।**

साधूनि।

---

रित्यनेन वा। अक्ष्णोः प्रति अभिमुखं प्रत्यक्षम्। अभिप्रती लक्षणेनाभिमुख्ये इत्येनेन समासः। अक्ष्णोः परं पश्चादित्यर्थः। अव्ययीभावे कृते आराम स्थाने ओरामो निपात्यत इत्याशयः।

**अमृता०**—१३९. नदीति। अव्ययीभावे नदीप्रभृति चतुर्भ्यं उत्तरे केशवारामो वा भवति। उपनदमिति नद्याः समीपमिति विग्रहः। उपनदि इत्यत्र ब्रह्मान्तत्रिविक्रमस्येति वामनः। एवमुपगिरं उपगिरि, उपपौर्णमासं उपपौर्णमासि, उपाग्रहायणं उपाग्रहायणीति।

**अमृता०**—१४०. उपेति। अव्ययीभावे केशवारामेण सह उपशुन-उपजरससरजस इत्येतानि साधूनि भवन्ति। शुनः समीपमुपशुनम्। शुनः सङ्कोच-विकारयो रेवेति नियमेन तदन्यत्र संसारहर विरहादत्र निपातादेव संसारहरः। जरायाः समीपमुपजरसम्। जराया नित्यं जरस्भाव इइ निपातफलम्। रजसा सर साकल्यमिति सरजसम्। साकल्यार्थेऽव्ययीभावः, सहस्य स भव स्तत्रैवोक्तः केशवाराम इह निपातादेव। अनुगवं शकटं, गोवद् दीर्घमित्यर्थः आयाम इति किम्—गोः पश्चात् अनुगु।

---

**बाल०**—नदी। अव्ययीभावे नदी गिरि पौर्णमासी आग्रहायणी इत्येतेभ्यः समासान्तकेशवारामो वा स्यात्। उपनदमिति नद्या समीपमिति पूर्ववत् समीपेऽव्ययीभावः। उपनदीति अव्ययीभावस्याव्ययत्वब्रह्मत्वाभ्यां ब्रह्मान्तत्रिविक्रमस्य वामन इति वामनः। एवं उपगिरं उपगिरि उपपौर्णमासं उपपौर्णमासि उपाग्रहायणं उपाग्रहणायणीति॥ १३८॥

**बाल०**—उप। अव्ययीभावे समासान्तकेशवारामेण सह उपशुनोपजरससरजसानि त्रीणि। आयामेऽर्थे अनुगवञ्च साधूनि भवन्ति। शुनः समीपमिति उपशुनमिति समीपेऽव्ययीभावः। श्वन् युवन् मघवन्नित्येषामित्यनेन वस्य उर्भगवति। नान्तस्येत्यनेन प्राप्तसंसारहराभावोऽत्र साधोः फलं। तथा जरायाः समीपमिति उपजरसमिति। जराया जरस् वेत्यनेन जरसादेशे विकल्पे प्राप्ते नित्यं जरसादेशो निपातफलं। जरसा साकल्यमिति सरजसमिति केशवाराम एवत्र निपातफलं सहस्य सभावस्तूक्त इति॥१३९॥

**बाल०**—अन। अव्ययीभावे अनश्चानन्तात् समासान्तकेशवारामो भवति। उपशार्ङ्गधन्वमिति शार्ङ्गधन्वनः समीपमिति पूर्ववदव्ययीभावः। नान्तस्येति संसारहरः। पीताम्बरे धनुषो धत्वन्नित्युक्तं तस्यैवेदं॥ १४०॥

**१४१. अनश्च ।**

उपशार्ङ्गधन्वम् ।

**१४२. ब्रह्मणि तु वा ।**

उपकर्म उपकर्म ।

**१४३. विष्णुदासाद् वा ।**

उपमुरभिदं उपमुरभित् । अव्ययीभावो निवृत्तः ।

**१४४. स्वतिभ्यां नतौ प्रत्ययौ प्रशंसायां किमस्तु क्षेपे ।**

---

**अमृता०—१४१.** अनश्चेति । अव्ययीभावे अनन्ताच्चोत्तरे केशवारामः स्यात् । उपशार्ङ्गधन्वमिति—शार्ङ्गधन्वनः समीपमिति विग्रहे अव्ययीभावः । नान्तस्येति संसारहरः, शार्ङ्गधन्वन्निति तु पीताम्बरः, धनुषो धन्वन्नित्यादेशस्य तत्रैवोक्तत्वात् । एवं राज्ञः समीपमुपराजं, दशानां समीपमुपदशमित्यादि ।

**अमृता०—१४२.** ब्रह्मणीति । अव्ययीभावे ब्रह्मणिवर्त्तमानादनन्तादुत्तरे तु विभाषया केशवारामो भवति । कर्मणः समीपं उपकर्ममित्यादिद्वयम् । अरामपक्षे नान्तस्येति संसार हरः । एवं प्रत्यहं प्रत्यहरिति ।

**अमृता०—१४३.** विष्ण्विति । अव्ययीभावे विष्णुदासादुत्तरे केशवारामो वा स्यात् । उपमुरभिदमिति पूर्ववत् सामीप्याथ अव्ययीभावः । एवमुपदृषदं उपदृषत्, प्रतिसमिधं प्रतिसमिदित्यादि ।

**अमृता०—१४४.** स्वतिभ्यामिति । प्रशंसायां गम्यमानायां सुअति इत्येताभ्यां परेभ्यः पूर्वविहितशब्देभ्यः तो अराम-केशवारामौ प्रत्ययौ न भवतः, तथा क्षेपे निन्दायां सत्यां किम् शब्दादुत्तरस्मान्नाम्नश्च तौ प्रत्ययौ न भवतः । स्वृगित्यत्र ऋक्पथिपुरप

---

**बाल०—ब्रह्म ।** अव्ययीभावे ब्रह्मलिङ्गे वर्त्तमानादनस्तु समासान्तकेशवारामो वा स्यात् । कर्मणः समीपमिति उपकर्ममित्यादिद्वयं ॥ १४१ ॥

**बाल०—विष्णु ।** अव्ययीभावे विष्णुदासात् परः समासान्तकेशवारामो वा स्यात् । मुरभिदः समीपमिति उपमुरभिदमित्यादिद्वयं निवृत्त इति पूर्ववत् ॥ १४२ ॥

**बाल०—स्वति ।** प्रशंसायां गम्यमानायां स्वतिभ्यामुत्तरेभ्यः पूर्वोक्तनामभ्यः तौ पूर्वोक्तौ प्रत्ययौ न भवतः । किं । क्षेपे आक्षेपे गम्ये किम्शब्दादुत्तरेभ्यो नामभ्यस्तु तौ न भवतः । पूर्वोक्तावित्यस्मात् समासान्ताविति योज्यं । शोभनेति श्यामरामविग्रहो दर्शितः । स्वृगित्यत्र ऋक्पथीत्यनेन प्राप्तारामो न स्यात् । अत्यृगिति अतिक्रान्तः ऋचमिति । सुराजेति मतिक्रान्तो राजानमतिराजेत्यत्रापि । किंपुरिति किं कुत्सिता चासौ पुश्चेति । एवं किंराजेति । किमिति कुत्सितार्थं मान्तमव्ययं ॥ १४३ ॥

तौ पूर्वोक्तारामकेशवारामौ । शोभना ऋक् स्वृक् । एवमत्यृक्, सुराजा, अतिराजा, किंपूः किंराजा ।

**१४५. नञ्कृष्णपुरुषाच्च न, पथस्तु वा ।**

अनृक् अराजा, अपथं अपन्थाः ।

**१४६. पीताम्बरे ।**

विभुरयम् ।

**१४७. संख्येयादच् नतु वहोः ।**

उपदशाः ।

---

इत्यनेन प्राप्तोऽरामो न स्यात् प्रशंसावगमात् । अत्यृगिति—अतिक्रान्त ऋचमिति प्रशंसा बोध्यते । सुराजेति—शोभनो राजेति विग्रहे कुप्रादय इत्यनेन श्यामरामः । अत्र राजाहः सखिभ्य इति प्राप्त केशवारामो न, एवमतिराजेति । किंपूरिति—कुत्सिताचासौ पूश्चेति विग्रहे पूर्ववत् समासः । किमिति निन्दार्थकं मान्ताव्ययम् । एवं किंराजेति । स किंसखा हितान्न यः शृणोतीति भारविः ।

**अमृता०**—१४५. नञिति । नञ् कृष्णपुरुषात् च तौ प्रत्ययौ नभवतः, नञ् कृष्णपुरुषे पथ उत्तरे तु तौ वा भवतः । पूर्ववत् प्राप्ते प्रतिषेधः ।

**अमृता०**—१४६. पीताम्बर इत्यधिकार सूत्रम् । पीताम्बर समासे वक्ष्यमाण कार्याणि स्युरित्यर्थः ।

**अमृता०**—१४७. संख्येयादिति । पीताम्बर समासे संख्येयशब्दात् अच प्रत्ययः स्यात्, बहु शब्दादुत्तरे तु स न भवति । उपदशा इति—दशानां पदार्थानां समीपे इमे इति विग्रहे—अव्ययादूराधिकासन्नाः संस्येयवाचिसंख्ययेत्यनेन पीताम्बरः । चित्त्वात् संसारहरः । अष्टादशपर्यन्ताः संख्याशब्दाः संख्येये वर्त्तन्त इति प्रागुक्तम् ।

---

**बाल०**—नञ् । नञ्कृष्णपुरुषाच्च तौ न भवतः नञ्कृष्णपुरुषात् पथस्तु वा भवतः । अनृगिति न ऋगिति अत्रापि प्राप्ते पूर्ववन्निषेधः । एवमराजेति । न पन्थ इत्यपथमित्यादिद्वयं, किन्तु सङ्ख्याव्ययाभ्यां पथ इत्यनेनापथमित्यत्र ब्रह्मत्वं । अपन्था इत्यत्रतु पथ्यादीनामिरामस्येत्यनेन पथिशब्दस्येरामस्यारामः थात् पूर्वं नुक् चेति ॥ १४४ ॥

**बाल०**—पीता । पीताम्बरे यथास्वं कार्यं स्यात् । अधिकारोऽयं ॥ १४५ ॥

**बाल०**—सङ्ख्ये । पीताम्बरे सङ्ख्येयशब्दादच् भवति । पीताम्बरे बहुशब्दादच् नतु भवति । दशानां पदार्थानां समीपे इमे इति विग्रहे उपदशा इति । अव्ययादूराधिकासन्नाः खङ्ख्येयवाचिसङ्ख्ययेत्यनेनात्र पीताम्बरः । अष्टादशपर्यन्ताः सङ्ख्याः सङ्ख्येये वर्त्तन्ते ततः पराः सङ्ख्याः सङ्ख्याने चेत्युक्तं ॥ १४६ ॥

## १४८. विंशते स्तिहरश्चिति ।

आसन्नविंशाः । द्वित्राः पञ्चषाः लक्षकोटाः ।

वहोस्तु—उपवहवः ।

## १४९. अव्ययादि संख्यान्तात् कृष्णपुरुषादच् ।

त्रिंशतो निर्गतो निस्त्रिंशः, निश्चत्वारिंशः ।

---

**अमृता०**—१४८. विंशतेरिति । च इत् यस्य स चित्, तादृशि प्रत्यये परे विंशति शब्दस्य तिभागस्य हरः स्यात् । विंशतेरासन्नाः आसन्नविंशाः पदार्थाः । अत्र संसारस्य हरश्चितीति प्राप्ते तिलोपो विधीयते । द्वित्रा इति—द्वौ वा त्रयो वेति विग्रहे—संख्या गुणितत्ये वार्थे चेति पीताम्बरः । पञ्च वा षड् वेति पञ्चषाः । लक्षं वा कोटि र्वेति लक्ष कौटाः । उपवहव इति—बहूनां समीपे इमे इति विग्रहः । उद्वयस्य गोविन्दः ।

**अमृता०**—१४९. अव्ययादीति । अव्ययादिश्चासौ संख्यान्तश्चेति अव्ययादि संख्यान्तः, तादृशात् कृष्णपुरुषादुत्तरे अच् प्रत्ययो भवति, सतु समुदायेन पीताम्बरः स्यात् । निर्गतः त्रिंशत इति विग्रहे—निरादयः पञ्चम्या इत्यनेन कृष्णपुरुषः, सच समुदायेनान्य पदार्थ वाचकत्वात् पोताम्बरः । निस्त्रिंशः खड्ग इत्यर्थः । एवं निर्गतः चत्वारिंशत इति निश्चत्वारिंशः कश्चित् पदार्थः ।

---

**बाल०**—विंश । चिति परे विंशतेस्तिहरो भवति । आसन्नविंशा इति विंशते-रासन्ना इमे इति । द्वित्रा इति द्वौ वा त्रयो वेति विग्रहे । सङ्ख्यागुणितत्वेवार्थे चेत्यनेनात्र पीताम्बर इति । एवमुत्तरत्रापि । पञ्चषा इति पञ्च वा षड् वा इति लक्षं वा कोटयो वा इति । वहोस्विति रूपं दर्श्यते इति शेषः । उपवहव इति बहूनां समीपे इति । उद्वयस्य गोविन्द इति गोविन्दः ॥ १४७ ॥

**बाल०**—अव्य । अव्ययादिश्चासौ सङ्ख्यान्तश्चेति तस्मात् कृष्णपुरुषादित्यनेन कृष्णपुरुषान्तो गृह्यते । तेन पीताम्बरेऽव्ययादिसङ्ख्यान्तात् कृष्णपुरुषसमासान्तादुत्तरोऽच् भवति । पीताम्बरस्य विभ्वाधिकारत्वात् तस्मादन्यस्मिन् समासेऽपि प्रत्ययो भवतीति भङ्ग्या दर्शयन् वाक्यं दर्शयति त्रिंशेति । निस्त्रिंशः खड्गः । एवं चत्वारिंशतो निर्गतः निश्चत्वारिंश इति उभयत्रैवात्र निरादयः पञ्चम्या इति समासः ॥ १४८ ॥

**बाल०**—स्वाङ्गा । स्वाङ्गवाचकाभ्यामक्षिसक्थिभ्यां परः पीताम्बरे समासान्त-केशवारामो भवति । सूत्रे प्रत्ययनिर्देशाभावात् अच्प्रत्यय एवानुवर्त्तितुमर्हतीति तद्वारणार्थं न्यायघटितवृत्तिमाह मण्डूकेति । मण्डूकप्लुत्या इत्यस्मान्न्यायेनेति पूरणीयं । तथाहि, मण्डूको भेको यथा प्लुत्या लम्फेनोपवेशनस्थानात् किञ्चिद्देशं परित्यज्य स्थानान्तरे पतति तद्वदत्रापि केशवारामः पूर्वस्मादनुवर्त्तते इत्यर्थः । कमलाक्ष इति कमले इवाक्षिणी यस्येति अ-इद्वयस्येतीरामहरः । एवं कमले इवाक्षिणी यस्या इति कमलाक्षीति टित्त्वादीप् । दीर्घसक्थ इति दीर्घे सक्थि यस्येति पूर्ववदिरामहरः । अस्वाङ्गत्वे सतितु

## १५०. स्वाङ्गाभ्यामक्षि-सक्थिभ्याम् ।

मण्डूकप्लुत्या केशवाराम एव । कमलाक्षः, कमलाक्षी, दीर्घ सक्थः । अस्वाङ्गत्वेतु—दीर्घसक्थि शकटम्, स्थूलाक्षिरिक्षुः । अद्रवंमूर्त्तिमद-विकारजं प्राण्यङ्गं स्वाङ्गम् ।

## १५१. अङ्गुले दारुणि ।

द्व्यङ्गुलं दारु ।

---

अमृता०—१५०. स्वाङ्गाभ्यामिति । स्वाङ्गवाची योऽक्षिशब्दः, यश्च तादृश एव सक्थिशब्दः, ताभ्यामुत्तरे केशवारामः स्यात् पीताम्बरे । अनुवृत्तिशङ्का वारणाय न्याय-मुट्टङ्कयति—मण्डूक प्लुत्येति । मण्डूको भेको यथा प्लुतेन उल्लङ्घनेन गच्छति तथा चेयमनुवृत्तिः प्लुतेन अच् प्रत्ययाधिकारमुल्लङ्घ्य आगच्छतीति भावार्थः । कमलाक्ष इति —कमले इव अक्षिणी यस्येति विग्रहः, अइद्वयस्येति इरामहरः । कमलाक्षीतिटित्त्वात्—अण् केशव गौरादिभ्य इति ईप् । दीर्घसक्थ इति—दीर्घ सक्थि यस्येति पूर्ववदिरामहरः । सक्थि ऊरुरित्यर्थः । दीर्घ सक्थीत्यादौ स्वाङ्गत्वाभावान्न केशवारामः । पूर्वोक्त स्वाङ्गस्य लक्षणं स्मारयति—अद्रवमित्यादिना । पीताम्बरादन्यत्र तु न केशवाराम.—सुन्दराक्षि, स्थूलसक्थीत्यादि ।

अमृता०—१५१. अङ्गुलेरिति । दारुणि काष्ठे वाच्ये पीताम्बरे अङ्गुलिशब्दात् केशवारामः स्यात् । अङ्गुलिशब्देनात्र तदुपमानत्वं लक्ष्यते, काष्ठस्याङ्गुलेरनुपत्तेः । द्वे अङ्गुली इवाङ्ली यस्य तत् द्व्यङ्गुलं काष्ठम्, धान्यादि चालन काष्टमित्यर्थः । अइ-द्वयस्येति इरामहरः ।

---

रूपं दर्श्यते । दीर्घसक्थीति दीर्घं सक्थि यस्येति । स्थूलान्यक्षीणि यस्येति स्थूलाक्षिरिति । अत्र सक्थ्यक्षिशब्दौ न स्वाङ्गवाचकौ भवतः, किन्तु ताभ्यां शकटस्य कश्चिदवयवस्तथा इक्षोरपि अक्षिसादृश्यात् कश्चिदवयवोऽभिधीयते इति साङ्गत्वाभावादत्र न केशवारामः । पीताम्बराभावत्वेतु परमश्च तत् सक्थि चेति श्यामरामे परमसक्थीति तथा परमाक्षि चेति । कारकपादोक्तस्वाङ्गव्यवस्थापिकया ज्ञापितस्वाङ्गस्यात्रापि ग्रहणमिति सूचयन् तत्कारिकाफलभूतमाहाद्रवमिति ॥ १४८ ॥

बाल०—अङ्गु । दारुणि वाच्ये पीताम्बरेऽङ्गुलिशब्दात् केशवारामो भवन् समासान्तो भवति । द्वे अङ्गुली इवाङ्गुली यस्य तत् द्व्यङ्गुलं दार्विति । अङ्गुलि-सदृशावयवं धान्यानां चालनकाष्ठमुच्यते । दारुणि वाच्ये मुख्याभिरङ्गुलिभिः सम्बन्धो न भवतीति अङ्गुलिसादृश्यादङ्गुलिसदृशेषु दार्ववयवेषु वर्त्तमानोऽङ्गुलिशब्दोऽत्राश्रीयते । तथा पञ्चाङ्गुलमित्यप्यन्ये ॥ १५० ॥

बाल०—द्वित्रि । पीताम्बरे द्वित्रिभ्यामुत्तरस्मात् मूर्द्ध्नः समासान्तकेशवारामो भवति । द्विमूर्द्ध इति द्वौ मूर्द्धानौ यस्येति । निवृत्त इति समाप्त इति ॥ १५१ ॥

## १५२. द्वित्रिभ्यां मूर्द्ध्नः ।

द्विमूर्द्धः । केशवारामो निवृत्तः ।

## १५३. अरामः ।

प्रभुरयम् ।

## १५४. नञ् सु-दुर्भ्यो हालि-सक्थिभ्यां वा ।

अहलः अहलिः, असक्थः असक्थिः ।

---

**अमृता०**—१५२. द्वित्रिभ्यामिति । पीताम्बरे द्वित्रि शब्दाभ्यामुत्तरस्मात् मूर्द्धन् शब्दात् केशवारामः स्यात् । द्विमूर्द्धइति द्वौ मूर्द्धानौ यस्येति विग्रहः । नान्तस्येति संसारहरः । एवञ्च त्रिमूर्द्ध इति ।

**अमृता०**—१५४. नञिति । पीताम्बरे नञ् सु दुर् इत्येतेभ्यः पराभ्यां हलि सक्थिभ्यामुत्तरे अरामः प्रत्ययो वा भवति । न विद्यते हलि र्यस्येति अहल इति द्वयम् । एवमसक्थइति द्वयम् । तथा सुहलः सुहलिः, सुसक्थः सुसक्थिः, दुर्हलः दुर्हलिः, दुःसक्थः दुःसकथिरिति च प्रयोज्यम् । अत्रैव दुःषक्तः दुःषक्तिरिति जुमरः, तत्तु न बहुप्रयोजनकम्, षन्ज सङ्गे इत्यस्माद्धातोः क्त क्ति प्रत्ययाभ्यां सिद्धयोः सक्त सक्ति शब्दयोः पीताम्बरे तत्तत्सिद्धेरिति ।

---

**बाल०**—अरामः । यथास्वं नाम्नोऽरामः स्यात् । अराम इति समासान्ताराम इत्यर्थः । अन्तरालाधिकारोऽयं पीताम्बरस्त्वनुवर्त्तते ॥ १५२ ॥

**बाल०**—नञ् । नञ्सुदुर्भ्यो हलिसक्थिभ्यामुत्तरः समासान्तारामो वा भवति पीताम्बरे । नास्ति हलिर्यस्येति अहल इति द्वयं । तथा नास्ति सक्थि यस्येति असक्थ इति द्वयं । एवं सुहल इति द्वयं । तथा सुसक्थ इति द्वयं तथा दुर्हल इति द्वयं, दुःसक्थ इति द्वयञ्च । एतदेव जयादित्यादीनामपि मतं । अत्रैव दुःषक्त इत्यपि जुमरः । जुमरटीकाकारस्तु तत् सूत्रमेवं व्याख्यायते । तद्यथा । नञ् सु दुर् इत्येतेभ्यो यथाक्रमं हलि सक्थि सक्ति इत्येतेभ्यो बहुव्रीहौ वा अद्भवतीति । अतएव तन्मते अहलः अहलिः सुसक्थः सुसक्थिः दुःषक्तः दुःषक्तिरित्येवोदाहरणं । किञ्च, दुःषक्त इतिद्वये सञ्ज परिष्वङ्गे क्तिः स्थादेर्द्विरङ् व्यवायेऽपीति षत्वं, दन्त्यादिरपि क्वापि दृश्यते, तदा सच समवाये इत्यस्य रूपमिति यदुक्तं तत्तु नावकलितं बहुव्रीहौ पदद्वयसमासत्वेनैव दुःषक्तादिद्वये दुरव्ययस्य धातुना योगाभावेनोपसर्गत्वाभावात् । हलहलि-सक्थसक्थिसक्तसक्ति-शब्दानामेव रूपद्वयसिद्धौ समासान्तविधानमेकस्मिन्नेवार्थे प्रयोगद्वयसिद्ध्यर्थमिति यदुक्तं तत्त्वस्माकमप्यभीष्टं ॥ १५३ ॥

**बाल०**—लक्ष्मी । लक्ष्मीरूपः पूरणप्रत्ययः लक्ष्मीपूरणप्रत्ययस्तस्मात् प्रमाणीशब्दाच्च समासान्तारामो भवति पीताम्बरे । कृष्णा पञ्चमी यासां रात्रीणां ता रात्रयः

**१५५. लक्ष्मी पूरणप्रत्ययात् प्रमाणी शब्दाच्च ।**

**कृष्णापञ्चमा रात्रयः । वैष्णवीप्रमाणाः शक्तयः ।**

**१५६. नाभेः संज्ञायाम् ।**

**पद्मनाभः । उर्णनाभिरित्येके ।**

---

**अमृता०**—१५५. लक्ष्मीति । लक्ष्मीश्चासौ पूरणप्रत्ययश्चेति लक्ष्मीपूरणप्रत्ययः, तस्मात् तथा प्रमाणीशब्दाच्चोत्तरे अरामः स्यात् पीताम्बरे । कृष्णापञ्चमा इति—कृष्णा पञ्चमी यासां रात्रीणां ताः रात्रयः कृष्णापञ्चमाः । अइ द्वयस्येति ईरामहरः । कृष्णा इत्यत्र वाच्यलिङ्गलक्ष्मीरित्यादिना पुंवत्त्वन्तु न, "न च पूरणीप्रियादिषु" इति तत्रैव निषेधात् । लक्ष्मी पूरणप्रत्ययादित्यत्र पूरण प्रत्ययस्य लक्ष्मीत्वेऽपि अन्यपदार्थस्य च लक्ष्मीत्वे ह्ययमत् प्रत्ययः, पुंस्त्व निषेधश्च । तस्य पुरुषोत्तमत्वे ब्रह्मत्वे वा न हि ते कार्ये इति तत्रैव विवृतमस्ति—तुल्यार्थान्यपदार्थत्व एव निषेधः: समासान्तोऽत् प्रत्ययश्च, अन्यत्र तु न तौ किन्तु कप् प्रत्ययः । कृष्णापञ्चमी रात्रि यत्र पक्षे स कृष्णपञ्चमीकः पक्ष इति । प्रमाणीति स्वरूप ग्रहणम् । वैष्णवी (शक्तिः) प्रमाणी यासु ताः शक्तयो वैष्णवीप्रमाणाः । अत्रापि नपुंस्त्वम्, नवृष्णीन्द्रहेतु तद्धितलक्ष्मी रिति निषेधात् ।

**अमृता०**—१५६. नाभेरिति । संज्ञायां गम्यमानायां पीताम्बरे नाभिशब्दादुत्तरे अत्प्रत्ययः स्यात् । पद्मनाभ इति—पद्मं नाभौ यस्य, पद्ममिव नाभिर्यस्येति वा पद्मनाभो विष्णुः । एवं उर्णा स्तन्तवो नाभौ यस्य स उर्णनाभः कीट भेदः, अईद्वयस्येति इरामहरः । संज्ञायामपि नाभेरुत्तरे सर्वत्रारामं नेच्छन्ति केचिन्मुख्या इत्याह—उर्णनाभिरित्येक इति ।

---

कृष्णापञ्चमा इति, वाच्यलिङ्गलक्ष्मीरित्यत्र नतूङ् नच पूरणीप्रियादिष्विति निषेधात् पूर्वपदस्यात्र पुरुषोत्तमवन्न भवति । किञ्च, लक्ष्मीपूरणप्रत्ययादित्यत्र पूरणप्रत्ययादिति कृतेऽपि प्रयोगसिद्धेः यत् लक्ष्मीति कृतं तदेतत् ज्ञापकं, यदा पीताम्बरेऽपि लक्ष्मीर्वाच्या तदैव लक्ष्मीरूपपूरणप्रत्ययान्तात् समासान्तारामः यदातु पुरुषोत्तमो वाच्यस्तदा ऋरामगोपी सर्पिरिति वक्ष्यमाणेन कप् । एतदेव समासे तुल्यार्थान्यपदार्थत्वे इत्यनेन विवृतं । वैष्णवी प्रमाणी यासु ताः शक्तयः वैष्णवीप्रमाणा इति न वृष्णीन्द्रहेतुतद्धितान्तेत्यनेनात्र न पुम्वत् ॥ १५४ ॥

**बाल०**—नाभेः । संज्ञायां वाच्यायां पीताम्बरे नाभेरुत्तरेः समासान्तारामो भवति । पद्मनाभ इति पद्मं नाभौ यस्य पद्ममिव नाभिर्यस्येति वा विग्रहः । उर्णनाभ इति उर्णास्तन्तवो नाभौ यस्येति विग्रहः । उर्णनाभिरिति तन्मतेऽत्र समासान्तान्न भवति ॥ १५५ ॥

**बाल०**—गोधूलः । कालविशेषे वाच्ये पीताम्बरे समासान्तारामेण सार्द्धं गोरुत्तरस्य धूलेः गोधूलः साधुः । गवा धूलिर्यत्र स गोधूलः सन्ध्यायाः प्राक्काले इत्यर्थः । केषाञ्चिदभीष्टं गोधूलिं पशुपतिमतेनैव दूषयति गोधूलिरिति । पशुपतिः शिरः सत्वत्र न सम्भवति यतो माहेशे कस्यापि मतं नोत्थापयति न दूषयतिच, तत् पूर्वं व्याकरणानामभावत्वात्, पशुपतिः कश्चित् पण्डित इति ॥ १५६ ॥

## १५७. गोधूलः कालभेदे ।

गोधूलिरित्यसाधुरिति पशुपतिः ।

## १५८. नक्षत्रेभ्यो नेतुः ।

मृगो मृगशिरो नेता यासां ता मृगनेत्रा रात्रयः ।

## १५९. त्रि-नञ्-सु-व्युपेभ्यश्चतुरः ।

त्रिगुणिता श्चत्वारो यस्मिन् त्रिचतुरः अचतुरः ।

---

**अमृता०**—१५७. गोधूल इति । कालविशेषे वाच्ये पीताम्बरे अरामप्रत्ययेन गोधूल इति साधुः स्यात् । गवां धूलि र्यत्रकाले स गोधूलः, सन्ध्यायाः प्राक् काल इत्यर्थः । केचित्तु गोधूलि शब्दाररामं न स्वीकुर्वन्तीति तन्मतं पशुपति वाक्येन दुषयति—असाधुरिति । पशुपति वैयाकरणः ।

**अमृता०**—१५८. नक्षत्रेभ्य इति । पीताम्बरे नक्षत्र वाचिभ्यः परस्मान्नेत्रशब्दादुत्तरे अरामो भवति । मृगशिरो नक्षत्रस्य नाम, तस्यैकदेशो मृगइति । नेता नायक इत्यर्थः । ऋरामस्य हरविधानाभावात् ऋद्वयं र इति सन्धिना मृगनेत्रः, पश्चादाप् लक्ष्म्यम् ।

**अमृता०**—१५९. त्रि नञिति । पीताम्बरे त्रि-नञ् सु-वि-उप इत्येतेभ्य उत्तरस्मात् चतुर् शब्दादरामः स्यात् । त्रिचतुर इति—संख्यागुणितत्वे इत्यादिना समासः । एवं त्रयो वा चत्वारो वेति विग्रहेऽपि त्रिचतुरः। नविद्यन्ते चत्वारो यस्मिन् सोऽचतुरः। एवं शोभनाश्चत्वारो यस्मिन् स सुचतुरः, विगताश्चत्वारो यस्मात् स विचतुरः, उपगताश्चत्वारो यस्मिन्, चतुर्णां समीपेऽयमिति वा उप चतुर इति ।

---

**बाल०**—नक्ष। पीताम्बरे नक्षत्रवाचिभ्यो नेतृशब्दात् समासान्तारामो भवति । मृग इति स्पष्टं । नेता नायक इत्यर्थः । एवं पुष्पनेत्रादयोऽपि ॥ १५७ ॥

**बाल०**—नि-नञ् । त्रि नञ् सु वि उप इत्येतेभ्य उत्तरस्माच्चतुःशब्दात् समासान्तारामः स्यात् पीताम्बरे। त्रिचतुर इत्यत्र सङ्ख्यागुणितार्थे वार्थे चेत्यनेन पीताम्बरः । अतएव त्रयो वा चत्वारो वेत्यपि विग्रहः । अचतुर इति न सन्ति चत्वारो यस्मिन्निति विग्रहः । न चत्वारो यस्य विषयीभवन्तीत्यर्थः । एवं शोभनाश्चत्वारो यस्मिन् सुचतुर इति विगताश्चत्वारो यस्मिन् विचतुर इति । विवधं यस्य चत्वारो विषयीभवन्तीत्यर्थः । उपगताश्चत्वारो यस्मिन् चतुर्णां समीपेऽयं इति वा उपचतुर इति ॥ १५८ ॥

**बाल०**—अन्त । पीताम्बरेऽन्तःशब्दात् वहिस्शब्दाच्च परस्माल्लोम्नः समासान्तारामो भवति । अन्तर्लोम इति अन्तर्वक्षसि लोमान्यस्येति । वहिर्लोम इति वहिः सर्वाङ्गे लोमान्यस्येति ॥ १५९ ॥

**१६०. अन्तर्वहिर्भ्यां लोम्नः ।**

अन्तर्लोमः वहिर्लोमः ।

**१६१. प्रादे र्नासिकाया नस् च ।**

प्रणसं उन्नसं मुखम् ।

**१६२. स्थूलेतरात् संज्ञायाम् ।**

द्रुणसः गोनसः । नेह—स्थूलनासिकः ।

---

अमृता०—१६०. अन्तरिति । पीताम्बरे अन्तर्वहिः शब्दाभ्यामुत्तरस्मात् लोमन् शब्दादरामः स्यात् । अन्तलोमान्यस्येति अन्तलोमः । एवं वहिर्लोम इति नान्तस्येति संसारहरः ।

अमृता०—१६१. प्रादे रिति । पीताम्बरे प्राद्यव्ययादुत्तरस्मात् नासिका शब्दात् अरामः स्यात्, तस्मिन् सति नासिकाया नस इत्यादेशश्च भवति । प्रणसमिति—प्रगता नासिका यत्र तत् मुखमित्यर्थः । एवमुन्नता नासिका यत्र तदुन्नसमिति । पूर्वत्र प्रादे र्नस इति णत्वम् ।

अमृता०—१६२. स्थूलेति । पीताम्बरे संज्ञायां गम्यमानायां स्थूलभिन्नशब्दादुत्तरस्या नासिकाया अत्प्रत्ययो नसादेशश्च स्यात् । द्रुणसइति—द्रु वृक्ष इव नासिका यस्येति समुदायेन संज्ञा गम्यते । संज्ञायां नतु गादिति पूर्वपदाण्णत्वम् । गो र्नासिकेव नासिका यस्य स गोनसः । स्थूलनासिक इति—गोरीप आप इति वामनः । स्थूलनासिको वराहः । संज्ञायामिति किम्—तुङ्गनासिकः ।

---

बाल०—प्रादे । पीताम्बरे प्रादेरुत्तरस्या नासिकायाः परः समासान्ता रामः स्यात् । तस्मिन् परे नासिकाया नस्च । प्रणसमिति प्रगता नासिका यत्रेति । प्रादेर्नस इत्यनेनात्र णत्वं । उन्नसमिति उत्कृष्टा नासिका यत्रेति ॥ १६० ॥

बाल०—स्थूले । संज्ञायां गम्यमानायां पीताम्बरे स्थूलेतरात् परस्या नासिकायाः समासान्तारामो भवति तस्मिंस्तस्या नस्च । द्रुर्वृक्ष इव नासिका यस्य स द्रुणस इति समुदायेनात्र संज्ञा गम्यते, संज्ञायां नतु गादित्यनेन पूर्वपदान्नस्य णत्वं । गोर्नासिकेव नासिका यस्य स गोनस इति । स्थूला नासिका यस्येति स्थूलनासिको वराह इति नात्रारामः किन्तु गोरीप आप इति वामनः ॥ १६१ ॥

बाल०—काला । पीताम्बरे संज्ञायां कालयस महानसादयश्च प्रयोगा अरामान्तत्वेन साधवो भवन्ति । कालमयो यस्येति कालायसः कश्चित् । महती नासिका यस्येति महानसः पाकस्थानं । एवं वार्द्धीणस इत्यादयोऽपि । वृद्धा नासिका यस्येति वृद्धस्य वार्द्धीभावः साधोः फलं । णत्वञ्च द्रुणसवत् । एवं निपातत्वेन यथासम्भवं शिष्टप्रयोगानुसारेण कार्यं परिकल्पनीयं । वार्द्धीणस इति वृधुधातोः स्फायादेव इति रः गुणः तस्य बिकार इति टण्

## १६३. कालायस-महानसादयश्च संज्ञायां साधवः ।

अमृता०—१६३. कालायस इति । पीताम्बरे संज्ञायां कालायसं महानसादयश्च अत्प्रत्ययेन साधवो भवन्ति । कालमयो यस्येति कालायसं लौहम्, संज्ञाशब्दानां यथा कथञ्चिद् व्युत्पत्तेः । महती नासिका यस्य स महानसः पाकगृहम् । आदिपदं विवृणोति—खरादीति । खरादि पूर्वायाः खर-खुर-वि पूर्वाया नासाया इत्यर्थः, पीताम्बरे अत् प्रत्ययेन खरणस प्रभृतयो वा निपात्यन्ते, पक्षे खरणा इत्यादयश्च । खरस्य गर्दभस्य नासेव नासा यस्य स खरणसः, खरणा वा । खुर इव नासा यस्य स खुरणसः खुरणा वा । अत्र नासाया नसादेशश्च निपातादेव । संज्ञायां नतु गादिति पूर्वपदात् णत्वम् । अरामप्रत्ययाभाव पक्षेऽपि नसादेशः, अत्वसन्तोद्धवस्येति त्रिविक्रमः । विगता नासा अस्येति विनसः, विग्रा

वार्द्धीव नासिकास्येति वृद्ध्यर्थतद्धितेत्यादिना पुम्वन्निषेध इत्यन्ये। खर आदिर्यस्य स खरादिः स पूर्वो यस्याः सा खरादिपूर्वा तस्याः । पीताम्बरे समासान्तारामेण सार्द्धं खरादिपूर्वाया नासायाः स्थाने खरणसादयस्त्रयः । खरण आदयस्त्रयश्च वा निपात्यन्ते । वाशब्दो व्यवस्थार्थो विकल्पार्थश्चेति उभयसामञ्जस्यात् । खरादीत्यत्रादिपदेन खुरशब्द-विशब्दयोर्ग्रहणं नान्येषां । विग्रा इत्यत्र क्वचित् क्वचित् पुस्तके विग्रा इति नराम-सत्सङ्गश्च पाठो दृश्यते निपातबलात् सोऽपि भवितुमर्हति, किन्तु पाठीनमतेनानैक्यात् न बहुप्रयोजनक इति खरा तीक्ष्णा नासा यस्येति खरस्य नासेव नासा यस्येति वा मध्य-पदलोपी पीताम्बरः । खरशब्दात् नासायाः समासान्तारामस्तस्या नस्च निपातात् संज्ञायां नतु गादिति पूर्वपदाण्णत्वञ्च । अस्मन्मते सूत्रेऽस्मिन् नासाया ग्रहणमन्येयान्तु नासिकाया इति । एवं खुर इव नासा अस्येति खुरणस इति पूर्ववत् सर्वं । तथा विगता नासा अस्येयि विनस इतिच पूर्ववत् । खरणा इति पूर्ववद्विग्रहसमासौ । एवं खुरणा इत्यपि । किन्त्वत्र द्वये निपातसामर्थ्यात् समासान्तारामस्तस्मिन् नसादेशो नसादेशेच सत्यरामहरश्च । पूर्ववदत्रापि णत्वञ्च । अत्वसन्तोद्धवस्य त्रिविक्रम इति त्रिविक्रमः । राधविष्णुजनाभ्यामिति सोर्हरः, सररामयोरिति विष्णुसर्गः । विग्रा इत्यत्रापि पूर्ववद्वि-ग्रहादि सर्वं, किन्तु नासाया ग्रस् इत्यादेश एव विशेष इति । किञ्च, खरखुराभ्यां प्रत्यय-लुग्वेति वेः ख्रश्चेति जुमरसूत्रद्वयं । तन्मते खरखुराभ्यां वेश्च नासिकाया अत्प्रत्यय-स्तस्मिंस्तु नसादेशः । पक्षे, खरादिद्वाभ्यां तस्या नसादेशे कृते अत्प्रत्ययस्य लुक्च भवति । वेस्तूत्तरस्याः ख्रादेशश्च भवतीति सर्वं तुल्यं विख्र इत्येव विशेषः । वेग्रं इति भाष्यमिति जयादित्य इत्युभयमतदर्शतात् विग्र इत्यरामान्तोऽपि तन्मत इति । विग्र इत्युदाहरणे नसादेशं बाधित्वा ग्रादेश एव नित्यं भवतीति चान्द्रमतं न बहुसम्मतं । विनसा हतबान्धवा इति भट्टिप्रयोगात् (५।८) विनसा सूर्पणखेति ।। १६२ ।।

बाल०—सुप्रा । पीताम्बरे समासान्तारामेण सह सुप्रातादयश्च प्रयोगाः साधवो भवन्ति । सुप्रात इति समासान्तारामः प्रातःशब्दस्य संसारहरश्च निपातफलं । सुश्व इति शोभनं श्वः भविष्यत् कल्यः यस्येति पूर्ववदरामसंसारहरौ निपातफलं । सुदिव इति शोभनं

खरादिपूर्वाया नासायाः खरणसः खुरणसो विनस इत्येते खरणाः खुरणाः विग्रा इत्येते वा निपात्यन्ते।

**१६४. सुप्रातादयश्च।**

साधवः। शोभनं प्रातरस्य सुप्रातः। एवं सुश्वः, सुदिवः। शारिरिव कुक्षिरस्य शारिकुक्षः। चतस्रोऽश्रयोऽस्य चतुरस्रः, एणीपदः। आरामो निवृत्तः।

---

इति वा। अत्र नासाया ग्रस् भावश्च निपातफलम्। पाणिनीयास्तु—"वे ग्रो वक्तव्यः" इति वार्त्तिकान्नित्यमेव ग्रसादेशं मन्यन्ते। तत्तु—"यद्यहं नाथ नायास्यं विनसा हत वान्धवा", इति भट्टि प्रयोगेण विरुध्यते, अतश्च—'विगतया नासिकयोपलक्षिता' इत्येवं समाहितं दीक्षितेन।

**अमृता०**—१६४. सुप्रातेति। पीताम्बरे अत् प्रत्ययेन सुप्रातादयश्च प्रयोगाः साधवो भवन्ति। सुप्रात इत्यत्र प्रातर् शब्दस्यात् प्रत्ययः संसारहरश्च निपातफलम्। सुश्व इति शोभनं श्वः आगामि कल्पं यस्येति पूर्ववन्निपात फलम् शोभनं दिवा यस्य स सुदिवः, अरामो निपातात्, अइ द्वयस्येत्यारामहरः। शारिः पक्षिविशेषः, इरामहरः। अश्रय इति—नञ् पूर्व श्रा पाके इत्यस्मादिक् धातुनिर्देशे, चतुरश्रोऽस्त्र विशेषः। एणीपद इति—एण्याः पादाविव पादौ यस्येति विग्रहः। अराम प्रत्ययः, पादस्य पदभावश्च निपात-कार्यम्। चकारात् अजपदः प्रोष्ठ पदश्च ग्राह्यः। प्रोष्ठो गौ स्तस्येव पादौ यस्य प्रोष्ठपद इति वामनः। एवं शुनः पदानीव पदानि यस्य स श्वापदो हिंस्र प्राणीति। आरामाधिकारः समाप्तः, पीताम्बर इत्यनुवर्त्तत एव।

---

दिवा यस्येति निपातादरामः अ-इद्वयस्येत्यारामहरः। दिवाशब्दः स्वभावादधिकरणार्थाव्ययं, तेन शोभनं दिवा अस्येत्यत्र शोभनमिति कर्मणो विशेषणं, शोभनं दिवा काले कर्मास्येति निर्गलितोऽर्थः। शारिरिवेति। शारिरिति इण्प्रत्ययान्तः पक्षिविशेषः। शारिकुक्षः कश्चित् पूर्ववदरामादि। चतस्र इत्यत्र अश्रय इत्यस्मात् परं कोटय इति प्रयोक्तव्यं। अश्रिरिति नञ्पूर्व श्रा पाके इकस्तिप्धातुनिर्देश इतीक् चतुःशब्दस्य विशेषण-त्वात् बहुवचनान्तः प्रयोगः। चतुरश्रोऽस्त्रविशेषः। एण्याः पादाविव पादावस्येति एणीपद इति। अत्रापि निपातत्वादरामः पादशब्दस्य पदादेशश्च। चशब्दस्यानुक्तसमुच्चयादेवं प्रकारेण अजश्छागस्तस्य पादावस्य अजपद इति। प्रोष्ठपदभद्रपदावन्यैः पठितौ तावप्यत्र ज्ञेयौ। प्रोष्ठा गौः तद्वत् पादावस्य प्रोष्ठपद इति भद्रौ पादावस्य भद्रपद इतिच पादसमानार्थेन पदशब्देनैषां सिद्धिरिति चान्द्रादयः। आरामो निवृत्तः पीताम्बरस्त्वनु-वर्त्तत एव॥ १६३॥

**बाल०**—नञ्। नञ् सु दुरित्येतेभ्यः प्रजाया अल्पाच्चेत्युक्तसमुच्चयार्थचशब्दात् नञादिभ्यः अन्यशब्दाच्च परस्या मेधायाश्चासिः स्यात् पीताम्बरे। अप्रजा इति न सन्ति प्रजाः यस्येति। अव्ययश्चेति पीताम्बरः। नञोऽरामः शेषः। असेरिराम इत्।

## १६५. नञ्-सु-दुर्भ्यः प्रजाया असि रल्पाच्च मेधायाः ।

अप्रजाः सुप्रजाः । अल्पमेधाः अमेधाः ।

---

**अमृता०**—१६५. नञिति । पीताम्बरे नञ्-सु-दु रित्येतेभ्यः परस्मात् प्रजाशब्दात् असि प्रत्ययः स्यात् तथा नञ् सुदुरल्पेभ्यः परस्मात् मेधाशब्दाच्च असिः स्यात् । अप्रजा इति—नविद्यन्ते प्रजाः यस्येति विग्रहे—अव्ययञ्चेत्यनेन पीताम्बरः । असेरिराम इत्, अइ-द्वयस्येत्यरामहरे अप्रजस् शब्दः सिद्धः, ततः अत्वसन्तोद्धवस्येति त्रिविक्रमः, सोर्हरश्च । एवं शोभनाः प्रजा यस्य स सुप्रजाः, दुष्टाः प्रजा यस्येति दुष्प्रजाः । अल्पा मेधा यस्य सोऽल्पमेधाः । एवं सुमेधाः दुमेधा इति च ।

---

अ-इद्वयस्येत्यारामहरः । अत्वसन्तोद्धवस्येति त्रिविक्रमः सोर्हरः । एवं शोभनाः सुस्थिता वा प्रजा अस्य इति । एवं दुष्टाः प्रजा अस्य दुष्प्रजा इति । अल्पा मेधा अस्य अल्पमेधा इति । नास्ति मेधा यस्य अमेधा इति । तथा सुमेधा दुर्मेधा इतिद्वयमपि । मन्दाल्पाभ्यां मेधाया इति चन्द्रो वर्द्धमानश्चेति तन्मते मन्दमेधा इत्यपि । अतएवास्मन्मतेऽल्पाच्चेत्यल्पशब्देनाल्पार्थो लक्ष्यते । श्रोत्रियस्यैव ते राजन् मन्दकस्याल्पमेधसः । अनुवाकहता बुद्धिर्नैषा सूक्ष्मोपदर्शिनीति शिष्टप्रयोगो जयादित्यादिना दर्शितः ॥ १६४ ॥

**बाल०**—सूत् । सु उत् पूति सुरभि इति पूर्वो यस्य स सूत्पूतिसुरभिपूर्वस्तस्मात् गुणवाचिनो गन्धशब्दात् पर इरामः स्यात् पीताम्बरे । अल्पा । अल्पः अर्थो यस्य सोऽल्पार्थः उपमानं पूर्वं यस्य स उपमानपूर्वस्तस्मात् तस्माच्च गुणवचनाद्गन्धशब्दात् पीताम्बरे इरामः स्यात् । किम्वा यावत् सम्भवस्तावद्विविधिरितिन्यायेनाल्पार्थात् परस्माद्गन्धादिरामः स्यात् । अल्पार्थोऽत्र गम्यो न वाच्य इति गन्धे तत्पूर्वपदेच विवक्षावशात् सोऽर्थः कल्पनीय इति । सुगन्धीति शोभनो गन्धो यस्येति । उद्गतो गन्धो यस्य तदुद्गन्धीति अस्यापि पुष्पं विशेष्यं । एवं पूतिगन्धिरिति सुरभिगन्धिरितिच । अल्पार्थादेरिति रूपं दर्श्यते इति शेषः । घृतस्य गन्धो यत्र तद्घृतगन्धीति । प्रायोग्रहणात् क्वचिद्व्यधिकरणानाञ्चेति समासः । अल्पघृतस्य गन्धो यत्र घृतस्याल्पगन्धो वा यत्रेत्यर्थः । पद्मस्य गन्ध इव गन्धो यत्र तत् पद्मगन्धि क्वचिन्मध्यपदलोपश्चेति पीताम्बरः । पद्मस्य यादृशो गन्धस्तादृशो गन्धो हरेर्मुखेऽस्तीत्याह हरेर्मुखमिति । गन्धशब्दस्य गुणवाचीति विशेषाभिनिवेशः सर्वेषामेव सम्मत इति सुगन्धा विपणिरित्यत्र सुगन्धीति न स्यात् । विपणिः पण्यवीथिकेत्यमरः । गन्धशब्दोऽत्र गन्धद्रव्यवाची न गुणवाचीति विपणेः सम्बन्धे विद्यमानत्वेऽप्यस्मादिप्रत्ययो न भवति । स्वाभाविकगुणसमवायिनो वाच्यतायामेव गन्धादिरामो न सांसर्गिकगुणसमवायिनो वाच्यतायामिति भङ्ग्या सूचयन्नाह समेति । समवेतत्वमपृथग्देशोद्भवत्वमिति तस्तिन् सत्येव गन्धादिप्रत्यय इष्यते नतु पृथग्देशोद्भवत्वे इत्यर्थः । तेन नेह, सुगन्धो गन्धवाह इति पृथिव्या एव गन्धगुणित्वात् । गन्धवाहः समीरस्तु न गन्धवान् किन्त्वरविन्दसङ्गवत्त्वात् । संयुक्तसमवायेन सुगन्ध इति विशेषणं तस्मादयं गन्धशब्दोऽरविन्दसम्बन्धी सन्नरविन्दमाचष्टे इति नात्र सुगन्धिरिति । भग्नवालसहकारसुगन्धाविति माघोदाहरणेतु सुगन्धावित्यस्य मधुनीति विशेष्यं द्रष्टव्यं । आम्रश्चूतो

## १६६. सूत्पूति-सुरभिपूर्वाद् गन्धादिरामः, अल्पार्थादुपमान-पूर्वाच्च ।

सुगन्धिपुष्पं, उद्गन्धि । अल्पार्थादेः—घृतगन्धि भोजनम् पद्मगन्धि

---

अमृता०—१६६. सूदिति । पीताम्बरे सु उत् पूति सुरभि इत्येतेभ्यः शब्देभ्यः गन्ध शब्दादुत्तरे इरामः स्यात्, तथा अल्पार्थादुपमानपूर्वाच्च गन्धादुत्तरे इरामो भवति । सुगन्धीति—शोभनो गन्धो यस्येति विग्रहः । उद्गतो गन्धो यस्य तत् गद्गन्धि पुष्पम् । एवं पूतिगान्धः शवदेहः, सुरभिगन्धि हरिनिर्माल्यमिति । अल्पार्थादिति—गन्धशब्द एवाल्प पर्यायिकश्चेत् नत्वाल्पार्थवाचकशब्दयोगे । घृतगन्धीति—घृतस्य गन्धः ( अल्पघृत प्रक्षेपो ) यत्र तदिति क्वचिद्व्यधिकरणानाञ्चेति पीताम्बरः । एवं क्षीरगन्धि भोजन-मित्यादि च । पद्मगन्धीति—पद्मस्य गन्धइव गन्धों यत्र तदिति क्वचिन्मध्यपदलोपश्चेति पीताम्बरः । एवमुत्पलगन्धि, कस्तूरीगन्धि, करीषगन्धि इत्यादि च ।

समवेतत्व इति—समवायो नित्यसम्बन्धः, तत्सम्बन्धित्वे हि गन्धशब्दादिराम इष्यते । सच सम्बन्धो गुण-गुणिनोः, अवयवावयविनोश्च भवति, गन्धस्तु पृथिव्या गुणः, पृथिवी तद्गुणवती, अत स्तत्रैव समवाय सम्बन्धेन गन्धस्तिष्ठति नान्यत्र । सुगन्धोगन्धवाह इत्यत्र पवनस्य स्वकीयगुणः स्पर्शएव, नतु गन्धः, सौरभस्तु तत्र पुष्पसङ्गवत्त्वात् परम्परया संयुक्तसमवायेन ततश्च साक्षात् समवायविरहान्नात्र इराम इत्याशयः । मग्नवालेति—

---

रसालोऽसौ सहकारोऽतिसौरभ इत्यमरः । भग्नवालसहकार इव शोभनो गन्धो यत्रेत्युप-मानपूर्वाच्चेत्यनेन इरामः । किम्वा शोभनो गन्धो यत्रेति सूत्पूतीत्यनेन प्रथमत इप्रत्ययान्तः सुगन्धिः, पश्चात् भग्नवालसहकारस्य सुगन्धिर्भग्नबालकसहकारसुगन्धिस्तस्मिन् । गुण-वाच्येवात्र गन्धशब्दः । तथाच पूर्ववाक्यानुसारेण सहकारसंक्रमणादन्यत् यस्य कस्यापि मधुगुणवत् परवाक्यानुसारेणतु सहकारस्यैव मधुगुणवदिति । ननु यद्येवं तर्हि मधुनो विशेषणत्वे सुगन्धावित्यत्र सुगन्धिनीति कथं न स्यादिति चेत्तदेवं वाच्यं पुरुषोत्तम-तार्हमीशान्तं ब्रह्मपुरुषोत्तमवद्वेति टादिसर्वेश्वरे ब्रह्मत्वस्य वैकल्यात्, पक्षे पुरुषोत्तम-वत्त्वेऽपि न दोष इति । एतस्यैव दृष्टान्तत्वेन भट्टवार्त्तिकेनापि सिद्धान्तकारिका दर्शिता । तद्यथा, तिलाश्चस्पकसम्पर्कात् प्राप्नुवन्त्यधिवासतां । रसालगन्धास्तद्गन्धं सर्वेषां क्रमिका गुणाः । रसालस्याम्रमुकुलस्य गन्धाः यत्र ते तिलाः तद्गन्धं रसालगन्धं प्राप्नुवन्तीत्यन्वयः । रसालगन्धादिति वा पाठः, तथा सति रसालसम्पर्कादित्यर्थः । सांक्रामिकाः सांसर्गिका इत्यर्थः । ये वैशेषिकादयो न गुणसंक्रान्ति मन्यन्ते तन्मते भग्नवालसहकारसुगन्ध इति भवति । अतएव गन्धाद्वेति चान्द्राः । दुर्गन्धिरितितु दुष्टः गन्धः यस्येति विग्रहे पूतिपर्या-यत्वात् उपमानकल्पनाद्वा दुःशब्दात् परस्मादपि गन्धशब्दादिप्रत्ययेन सिद्धमिति ज्ञेयं ॥१६५

बाल०—धर्मात् । पीताम्बरे केवलात् शब्दान्तरसंयोगरहितात् धर्मात् धर्मशब्दात् परोऽनिः स्यात्, इराम इत् । वैष्णवो विष्णुसम्बन्धी धर्मो यस्येति वैष्णवधर्मन् सु नान्तेति

हरेर्मुखम् । समवेतत्व एवेष्यते । नेह— सुगन्धो गन्धवाहः । भग्नवाल-सहकारसुगन्धाविति माघे । १० । ३ ।

## १६७. धर्मात् केवलादनिः ।

वैष्णवधर्मा । केवलात् किम्—तदन्ते नेष्यते । परमो वैष्णवधर्मोऽस्य परमवैष्णवधर्मः । साक्षात्कृतो धर्मो यै स्ते साक्षात् कृतधर्माणो मुनय इतिभाष्यम् । जयादित्य स्त्वत्र न मन्यते ।

---

भग्नाः क्षिप्ताः बालसहकाराः नवाम्रपल्लवा स्तै सुष्ठु गन्धो यस्य तादृशि मधुनि मद्ये इन्द्रियवर्गो निर्ववार तृप्तोऽभूदिति शेषः । मद्यस्य पार्थिवत्वात्तत्र समवेतत्वेन हि गन्धो विद्यत इति युक्तएवात्र इराम इतिभावः ।

**अमृता०**—१६७. धर्मादिति । पीताम्बरे केवलात् एकाकिनो धर्मशब्दात् अनि प्रत्ययः स्यात् । इरामइत् । ततः सु, नान्तेति त्रिविक्रमः सोर्हरः, नामान्तस्येति नराम-हरः । तदन्तत्वे इति—धर्मशब्दे अन्ते अर्थात् समासे सतीत्यर्थः, अनि र्नेष्यत इतिभावः । परमवैष्णवधर्मोऽस्येति—प्रथमं वैष्णवश्चासौ धर्मश्चेति श्यामरामः । अत इह समासान्तात् धर्मात् अनि र्न भवति । भूतपूर्वात् समासाद्धि निषिध्यते, युगपदेक वाक्ये बहुपदान्तात्तु स्यादेवेति भाष्यमतेन दर्शयति—साक्षात् कृत इति । तथैव भाषावृत्तौ—"यदा तु त्रिपदी बहुव्रीहिः—परमः स्वो धर्मोऽस्य तदा केवल एव धर्मशब्द इति परमस्वधर्मेत्येव भवतीति ।" एवमनुष्ठितो वैष्णवो धर्मो येनेति युगपत् पदत्रय समासे अनुष्ठित वैष्णवधर्मा इति भवत्येव । प्रागजातसमासस्यान्तत्वेतु मतं स्वाभीष्टं भाष्यादि सम्मतञ्चेति फलितम् । जयादित्यस्तु तन्मतंनाङ्गीकरोति, किन्तु भाष्यविरोधि मतमपि न मन्तव्यमित्यलमत्यालोचनया ।

---

त्रिविक्रमः सोर्हरः नामान्तस्येति नहरः । वैष्णवधर्मा इति केवलात् किं किमर्थं तदन्तत्वेतु समासान्तरान्तत्वेतु नेष्यतेऽनिरिति शेषः । परम इति विग्रहदर्शनं, वैष्णव इति वैष्णवश्चासौ धर्मश्चेति श्यामरामसमासान्ताद्धर्मात्, पश्चात् पीताम्बरेऽप्यनिर्न स्यात् । समासान्तरान्न स्यात्, एकवाक्ये बहुपदान्तादपि स्यादिति भाष्यमतेनैव दर्शयति साक्षादित्यादि । जयादित्यः पण्डितस्त्वत्रानिं न मन्यते इति यत् तत्त्वकिञ्चित्करं नहि प्रत्यक्षा स्मृतिर्बाधनीया भवति । अनुपालितकुलधर्म इत्येके । प्रथमं कुलस्य धर्मः कुलधर्मस्ततः अनुपालितः कुलधर्मो येनेति पीताम्बरे पूर्ववदनिर्न स्यात् । अनुपालितं कुलं येन सोऽनुपालितकुलः स एव धर्मोऽस्येति अनुपालितकुलधर्मा इत्यत्र चन्द्र-वर्द्धमानादयो विकल्पेनानमिच्छन्ति । एवं वदन्तिच अनुपालितकुल इत्ययं समासान्तो न धर्मशब्द इत्यन् ॥ १६६ ॥

**बाल०**—सुह । सुहरित-तृण-सोम इत्येतेभ्य उत्तरस्मात् भोजने दन्तभेदेच वर्त्तमानात् जम्भात् पीताम्बरेऽनिर्वा भवति । प्रकारान्तरेण वृत्तिमाह जम्भ इति । शोभनो जम्भो भोजनं दन्तभेदो वा यस्येति सुजम्भेतिद्वयं । एवं रहितो जम्भो भोजनं दन्तभेदो

**१६८. सु-हरित-तृण-सोमेभ्यो जम्भादनि र्वा ।**

**जम्भो भोजनं दन्तभेदश्च । सुजम्भा सुजम्भः ।**

**१६९. दक्षिणेर्मा व्याधव्रणितदक्षिणाङ्गे ।**

**साधुः ।**

**१७०. कप् ।**

**प्रभुरयम् ।**

---

**अमृता०**—१६८. सुहरितेति । पीताम्बरे सु-हरित-तृण-सोम शब्देभ्य उत्तरस्माद् जम्भ शब्दात् अनि र्वा स्यात् । शोभनो जम्भो भोजनं दन्तो वा यस्य स सुजम्भा सुजम्भो वा । एवं हरितजम्भा हरितजम्भः । दन्तवाचित्वे तृण मिव जम्भः, सोम इव जम्भो यस्येत्येवं विग्रहः । भोजनवाचित्वे तु तृणं जम्भः, सोमः सोमरसो जम्भो यस्येत्येवं विग्रहो ज्ञातव्यः ।

**अमृता०**—१६९. दक्षिणेर्मेति । व्याधेन व्रणितं दक्षिणाङ्गं यस्य स व्याधव्रणित-दक्षिणाङ्गः, तस्मिन् वाच्ये पीताम्बरे अनिप्रत्ययेन दक्षिणेर्मा इति साधुः स्यात् । इर्मं व्रणम्, तत्तु व्याधकृतमेवेह गृह्यते, तदर्थे हि साधुता । दक्षिणेर्मा कुरङ्गः, अन्यत्र तु दक्षिणेर्मं शकटम् ।

**अमृता०**—१७०. कवित्यधिकारः, पीताम्बरे इति चानुवर्त्तते ।

---

वा यस्येति हरितजम्भेतिद्वयं । तथा तृणजम्भा सोमजम्भेत्यादयश्चत्वारः । एभ्योऽन्यतस्तु पतितजम्भ इत्येव । जम्भो भोजनं दन्तभेदश्चेत्यर्थोपदर्शनं स्पष्टतार्थं नत्वर्थान्तरनिरासार्थं तदितरासम्भवात् । दन्तेऽर्थे जम्भस्त्रिलिङ्ग इति वर्द्धमानो नत्वन्ये ॥ १६७ ॥

**बाल०**—दक्षि । व्याधेन व्रणितं दक्षिणाङ्गं यस्य तस्मिन् वाच्ये पीताम्बरेऽनिप्रत्ययेन सह दक्षिणेर्मा साधुर्भवति । अर्थाद्दक्षिणात् परस्मादिर्मशब्दादनिर्भवतीति । इर्मः व्रणः सतु व्याधकृतोऽत्र गृह्यते, दक्षिणशब्देनतु दक्षिणाङ्गं गृह्यत इत्यभिप्रायः । तथाच दक्षिण इर्मो यस्येति दक्षिणेर्मा मृगो गौर्वा विशेषाग्रहणात् । जुमरटीकाकृत्तु व्याध-व्रणितदक्षिणाङ्गे मृगवाच्येऽनं विधाय दक्षिणेर्मा मृग इति साध्नोति । पश्चात् मृग इति किं इत्युक्त्वा दक्षिणेर्मो वराह इति प्रत्युदाहृत्य दक्षिणर्मो गौरिति साधनार्थं, मृग इत्युप-लक्षणं व्याधव्रणितदक्षिणाङ्गेऽन्यस्मिन्नपि भवति वदतिच । अतएव तन्मतीयमेतत् प्रत्युदाहरणसिद्धयर्थश्चास्मन्मते तद्धितबहुलमास्थेयं । व्याधव्रणितदक्षिणाङ्ग इति किं स्वयं जाते व्रणेतु दक्षिणेर्मो मृग इत्येव ॥ १६८ ॥

**बाल०**—कप् । समासान्तान्नाम्नो यथास्वं कप् भवति । अधिकारोऽयमवान्तरः पीताम्बरोऽनुवर्त्तत एव ॥ १६९ ॥

## १७१. ऋराम-गोपी-सर्पिरादिभ्यः ।

**ऋरामात्—नन्दपितृकः । गोपीसंज्ञत्वात् सगोपीकः सवधूकः । प्रिय-सर्पिष्कः श्रीवत्सोरस्कः मुक्तोपानत्कः । एवं दधि मधु शालयः ।**

---

**अमृता०**—१७१. ऋरामेति । पीताम्बरे ऋरामान्तात् गोपीसंज्ञकात् तथा सर्पिरादिभ्य उत्तरे कप् प्रत्ययो भवति । नन्दः पिता यस्य स नन्दपितृकः । सगोपीक इति—गोप्या सह वर्त्तमान इति विग्रहे—"सहशब्दस्तृतीयान्तेनैकक्रियायोगे" इत्यनेन पीताम्बरः, सहस्य सहादेशश्च । एवं सगोपबधूक इति गोपीसंज्ञत्वात् कप् । एवंबहुतन्त्रीकः बहुस्त्रीक इत्यादि च । प्रियसर्पिष्क इति प्रियं सर्पि र्यस्ये त विग्रहः । श्रीवत्सः श्वेत रोमावलिः उरसि यस्येति श्रीवत्सोरस्कः, ईश्वरारासाभ्यामित्यादिना षसौ । आदिपदेनान्यानि संगृह्णाति—मुक्तोपानत्क इत्यादि । मुक्ता उपानत् पादुका येनेति विग्रहः । पूर्वस्य विष्णुपदवत्त्वं स्वादि तद्धितयोरित्यादिना विष्णुपदवत्त्वात् हस्य ढ इत्यादौ नहो धः, ततो यादवमात्रेति हरिकमलम् । एवमिति—प्रियदधिकः, पीतमधुकः, भुक्तशालिक इति ।

---

**बाल०**—ऋरा । सर्पिः आदि र्यस्य स सर्पिरादिः ऋरामश्च गोपीच सर्पिरादिश्च ते ऋरामगोपीसर्पिरादयः तेभ्यः ऋरामगोपीसर्पिरादिभ्यः पीताम्बरे कप् भवति । ऋराम इति ऋरामान्तो गृह्यते, ऋरामादिति कप्प्रत्ययो दर्श्यते इति शेषः । नन्दपितृक इति नन्दः पिता यस्येति अनेकमन्यपदार्थं इति पीताम्बरः । गोपीशब्देनात्र गोपीसंज्ञा गृह्यते, न गोपजातिवाचको गोपीशब्द इत्याह गोपीति । सगोपीक इति गोप्या सह वर्त्तमान इति सहशब्दस्तृतीयान्तेनैकक्रियायोग इत्यनेनात्र पीताम्बरः । एवं गोपवध्वा सह वर्त्तमानः सगोपवधूक इति गोपीसंज्ञाग्रहणात् बहुकुमारीक इति । यस्तु वीणावाचकः अनन्तादीप्-सिद्धस्तन्त्रीशब्दः तस्मादपि बहुतन्त्रीक इति । ईप्सिद्धात् । स्त्रीशब्दादपि बहुस्त्रीक इत्येके ते त्वेवं साधयन्ति तं, पूर्वात्रातेर्ब्रूत्रादेरिति इप्रत्ययान्तस्तन्त्रिशब्दः तत इदन्ता-दक्त्यर्थादिति ई । तस्ता तन्त्रीक इति । प्रियं सर्पिर्यस्येति प्रियसर्पिष्क इति । श्रीवत्सः श्वेतरोमावलिः उरसि यस्य स श्रीवत्सोरस्क इति । ईश्वराराभ्यां पाशकल्पकेष्वन-व्ययस्येति तथाक्रममनयोः यसौ । मुक्ता उपानत् येनेति मुक्तोपानत्क इति । पूर्वस्य विष्णु-पदवत्त्वं स्वादितद्धितयोरित्यनेन पूर्वस्य विष्णुपदवत्त्वं । स्वादितद्धितयोरित्यनेन पूर्वस्य विष्णुपदवत्त्वात् हस्य टः नहो ध इत्यनेन हस्य ध् पश्चात् यादवमात्रे हरिकमलमिति तरामः । एवमिति । यथा सर्पिरादिरित्यत्रादिशब्दात् उरूपानहोर्ग्रहणं । एवं दध्यादी-नामपि । रूपं यथा । प्रियदधिकः प्रियमधूकः प्रियशालिक इति ।। १७० ।।

**बाल०**—बुद्धे । पूज्यपुत्रे वाच्ये बुद्धेतु परे मातृकस्य मात इत्ययमादेशो वाच्यो वक्तव्यो भवति । यशोदा माता यस्येति हे तथाविध । मात इत्यरामान्तादेशात् एतु वामनेत्यनेन बुद्धस्यादर्शनं । नेहेति मातादेश इति अपूज्यपुत्रवाच्यत्वात् । क्षितिर्माता यस्य हे तथाविध । पूर्वत्र कृष्ण इति विश्वपूज्यः सर्वेश्वरत्वात्, अयन्तु न तथाविधः प्रत्युत निन्द्य एवासुरजातित्वात् ।। १७१ ।।

**१७२. बुद्धे तु मातृकस्य मातादेशो वाच्यः पूज्य पुत्रे वाच्ये ।**

हेयशोदामात कृष्ण । हे क्षितिमातृक नरकासुर ।

**१७३. नञोऽर्थात् ।**

अनर्थकम् ।

---

**अमृता०**—१७२. बुद्ध इति । पीताम्बरे पूज्यपुत्रेवाच्ये बुद्धे तु मातृकस्य मात इत्यादिश्यते । यशोदा माता यस्य स यशोदामातृक स्तस्य बुद्धे हे यशोदामातेति । क्षितिः पृथिवी माता यस्येति तथा । इहतु पूज्यत्वं नगम्यते किन्तु असुरजातित्वान्निन्द्यत्वमेवेति नमातादेशः ।

**अमृता०**—१७३. नञ इति । पीताम्बरे नञः परस्मात् अर्थशब्दात् कप् स्यात् । नास्ति अर्थोयस्य तदनर्थकम्, नञोरामशेषः सर्वेश्वरे तु नुट् चेति नुडादेशः ।

---

**बाल०**—नञो । पीताम्बरे नञ उत्तरस्मादर्थशब्दात् कप् भवति । नास्त्यर्थो यस्येति अनर्थकमिति, नञोऽरामः शेषः सर्वेश्वरेतु लुट् चेति सामान्यब्रह्मत्वं ।। १७२ ।।

**बाल०**—इनो । लक्ष्म्यामभिधेयायामिनन्तात् पीताम्बरे कब्भवति । ध्यातः शार्ङ्गी यया सा ध्यातशार्ङ्गिकेति पूर्वस्य विष्णुपदत्वात् नामन्तस्येति न हरः । वह्वो वाग्मिनो वाग्जल्पा यस्यां सा बहुवाग्मिकेति पूर्ववन्नरामहरः । उभयोरपि वाच्यपदं वैष्णवास्व-णीति । वाग्मिन्नित्यग्रे साध्यते । लक्ष्म्यामिति किं ध्यातशार्ङ्गी वैष्णव इत्यादि । चिन्त्य-मिति दुष्टं भाव्यश्चेति, दुष्टत्वे सर्पिरादीत्यादिपदेन दधिग्रहणात् कवेव प्राप्नोतीति प्रियदध्नेत्यशिष्टं प्रियदधिकेनेत्येव साधु । भाव्येतु प्रियश्च तत् दधि चेति श्यामरामे प्रियदध्नेति भवितुमर्हदपि न पीताम्वराधिकारात् तस्मात् समासान्तविधेरनित्यत्वात् कदाचित् कप् न भवतीति । केवलेति । एके मुख्यान्यकेवला इत्युक्तदिशा केवलमेकं पूर्वं येषां ते केवलपूर्वास्तेषां भावः । केवलपूर्वास्तेषां भावः । केवलपूर्वत्वं तस्मिन् सत्येव ऋरामादिभ्यः कप् स्यादिहतु न स्यादनेकपूर्वत्वात् । यथेति प्राचीनैरुक्तमिति शेषः । प्लवेन लम्फेन गच्छतीति पुरन्दरभुजङ्गमादयो भुजगभुजङ्गादयश्च संज्ञाशब्दा इत्यनेन खप्रत्ययान्तनिपातात् प्लवङ्गा वानरास्तेषां नखानां कोटिभिरग्रैः क्षतं दृढमुरो येषां ते क्षतदृढोरसः । समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरित्युक्तप्रकारेणैवात्रान्वय इति । प्लवङ्गनखकोटिभिः क्षतदृढोरसो राक्षसाः स्युरित्यर्थः । न केवलं दृढमेवात्र पूर्वपदं, किन्तु क्षतमपीति कप् न स्यादिति भावः । ननु प्रियाः तिस्रो यस्येति विग्रहे प्रियतिसेति कथं सिध्यतु, ऋरामसम्भवादस्मिन् कप् कस्मान्न स्यादित्याशङ्कायां सिद्धान्तमाह प्रत्ययेति । प्रकृत्याश्रितं प्रकृतावपि पूर्वपूर्वमन्तरङ्गं प्रकृतेर्वहिराश्रितं वहिरङ्गमिति न्यायात् प्रत्यया-श्रियत्वेन हेतुना तिसृभावस्य वहिरङ्गत्वे प्राप्ते क्वचिदन्तरङ्गे कार्ये क्रियमाणे तदनिमित्तमिति न्यायेन वहिरङ्गस्य प्रकृत्याश्रितं कपं प्रत्यसिद्धत्वात् कप् न स्यादिति भावः । अतएव लक्ष्मीस्थयोरिति विशेषणात् पश्चात् पुंस्त्वेऽपि तिस्रादेशेन सौ प्रियतिसा इति स्यात् ।। १७३ ।।

## १७४. इनो लक्ष्म्याम् ।

ध्यातशार्ङ्गिका, बहुवाग्मिका वैष्णवश्रेणी। प्रियदध्नेति चिन्त्यम्। केवलपूर्वत्वएव स्यात्। नेह, यथा—प्लवङ्गनखकोटिभिः क्षतदृढोरसो राक्षसा इति। कथं प्रियतिसा? प्रत्ययाश्रितत्वेन बहिरङ्गस्य तिसृभावस्य कपं प्रत्यसिद्धत्वात्।

---

अमृता०—१७४. इनइति। लक्ष्म्यां पीताम्बरे इनन्यशब्दादुत्तरे कप् स्यात्। ध्यातः शार्ङ्गी यया सा ध्यातशार्ङ्गिका। पूर्वस्य विष्णुपदवत्त्वात् शार्ङ्गिन् शब्दस्य नामान्तस्येति नस्य हरः। बहवो वाग्मिनो यस्यां सा बहुवाग्मिका। चिन्त्यमिति—प्रयोगोऽयमशिष्ट इतिभावः। प्रागुक्त सूत्रे सर्पिरादिभ्य इत्यत्रादिपदेन दधिग्रहणात् कप् प्रत्ययेन प्रियदधिकेन इत्येवमेव भवितव्यमित्याशयः। किन्तु समासान्तविधेरनित्यतां मत्वैवेह कप् न विहित इति प्रयोक्तुः साहसः। केवल पूर्वत्व इति—असहाय एवेनन्त इह गृह्यत इति भावः। प्रत्युदाहरति—प्लवङ्गेति। प्लवङ्गानां वानराणां नखकोटिभिर्नखाग्रैः क्षतं दृढमुरो येषां तेराक्षसाः। अत्र न केवलं दृढमेव पूर्वपदं, अपितु क्षतमिति च, अतोनेहकप्। कथमिति—प्रियास्तिस्रो यस्येति वाक्ये प्रियतिसृशब्दस्य कथं प्रियतिसा इति सिध्यति, ऋरामन्तत्वेन कवेव भवितुमुचितमिति शङ्कापक्षः। तत्र समाधत्ते—प्रत्ययेति। प्रकृत्याश्रितं प्रकृतावपि पूर्वपूर्वमन्तरङ्गमित्यादि न्यायतो लक्ष्मीस्थयो स्त्रिचतुरो—स्त्रियसृचतसृ विष्णुभक्ताविति लक्षितस्य तिसृभावस्य बहिरङ्गत्वं, कप् विधेस्तु प्रकृत्याश्रितत्वेनान्तरङ्गत्वमिति स्थिते, क्वचिदन्तरङ्गे कार्ये क्रियमाणे तदनिमित्तं बहिरङ्गमसिद्धं स्यादिति परिभाषया कृते तु कपि तिसृभाव एवासिद्धो भवेदिति ऋरामान्तत्वाभावे कुतः कपः प्रवृत्तिरिति भावः।

---

बाल०—लक्ष्मी। पीताम्बरे एकवचनान्तेभ्यो लक्ष्म्यादिपञ्चभ्यः कब्भवति। द्विव। द्विवचनान्त आदिर्येषां ते द्विवचनान्तादयः। एतद्विधेभ्यो लक्ष्म्यादिभ्यस्तु पीताम्बरे कब् वा स्यात्। अत्रापिपदेन बहुवचनान्तानामपि ग्रहणं। लक्ष्मीशब्दस्य स्त्रीत्वेऽपि गोपीसंज्ञत्वाभावादत्र ग्रहणं। सुलक्ष्मीक इति शोभना लक्ष्मीः सम्पत्तिः शोभा वा यस्येति। हंसानडुत्क इति हंस इवानड्वान् यस्येति। श्रंसुध्वंसुवस्वनडुहां द इति दः। यावदमात्रेति तः। एवं सुपुंष्कः पीतपयस्कः लब्धनौक इति। किञ्च, नुमा सर्वोऽप्यनुस्वारो लक्षत इत्युक्तदिशा सुपुंष्क इत्यत्र विष्णुचक्रव्यवायेऽपि यत्वं सस्य विरिञ्चित्वात्। एते सर्वेऽप्येकवचनान्तानां। द्विवचनान्तादीनां यथा, द्वे लक्ष्यौ यस्येति द्विलक्ष्मीरिति द्वयं। बह्व्यः लक्ष्यो यस्येति बहुलक्ष्मीरिति द्वयं। एवं बहुपुंष्कः बहुपुमानित्यादयो यथायोग्यमूह्याः। अन्यैस्तु एते पूर्वेषाञ्च कतिचित्। एवं पठ्यन्ते तद्यथा। उरः सर्पिरुपानात् स्त्री दधिशालिमधूनिच। उरः प्रभृतयो ज्ञेया नौरनड्वान् पुमान् पयः। लक्ष्मीश्चापि समुद्दिष्टाः पञ्चनवादयो गणे ॥ १७४ ॥

**१७५. लक्ष्मीः पुमान्पयो नौरनड्वान् इत्येतेभ्य एकवचनान्तेभ्यः, द्विवचनान्तादिभ्यस्तु वा ।**

सुलक्ष्मीकः, हंसानडुत्कः, द्विलक्ष्मीः द्विलक्ष्मीकः, बहुलक्ष्मीः बहुलक्ष्मीकः ।

**१७६. चितेस्त्रिविक्रमश्च ।**

एकचितीकः द्विचितीकः ।

---

**अमृता०**—१७५. लक्ष्मीरिति । पीताम्बरे एकवचनान्तेभ्यो लक्ष्म्यादि पञ्चभ्यः कप् स्यात्, द्विवचनान्तादिभ्यस्तु तेभ्यः कप् वा भवति । सुलक्ष्मीक इति—शोभना लक्ष्मीः शोभा सम्पत्ति र्वा यस्येति बिग्रहः । हंस इव अनड्वान् यस्य सहंसानडुत्कः । एवं सुपुंस्कः पीतपयस्कः दीर्घनौक इति । द्वे लक्ष्म्यो यस्येति विभाषया कप् । बह्वो लक्ष्म्यो यस्येति बहुलक्ष्मीरिति द्वयम् । एवंद्विपुंस्कः द्विपुमान्, बहुपयस्कः बहुपया नदः, बहुनौः बहुनौकः, बह्वनडुत्कः बह्वनड्वानिति ।

**अमृता०**—१७६. चितेरिति । बहुव्रीहौ चिति शब्दात् कप् स्यात्, तस्मिन् सति चिते स्त्रिविक्रमश्च भवति । एकाचिति र्ज्ञानं यस्य स एकचितीकः । इह द्विवचनान्तत्वेऽपि नित्यमेव कप् भवतीति सूचयन्नुदाहरति—द्विचितीक इति । द्वेचिती यस्येति विग्रहः । एवं बहुचितीक इति च ।

---

**बाल०**—चितेः । पीताम्बरे चितेः कप् तस्मिन् परे चितेस्त्रिविक्रमश्च भवति । सम्भवात् स चान्ते प्रवर्त्तते । एका चितिर्यस्य स एकचितीक इति अत्रैकवचनमतन्त्रमिति सूचयति द्विचितीक इति । एवं बहुचितीक इत्यपि । चितिर्ज्ञानं ॥ १७५ ॥

**बाल०**—अस । नास्ति समासान्तो विधिर्यत्र सोऽसमासान्तविधिस्तस्मात् । विधिपदेनात्र विधेयप्रत्ययो लक्ष्यते, विधेर्विधानार्थानुपलब्धेः । तेन पीताम्बरे सत्यसमासान्तविधेरसमासान्तप्रत्ययान्नम्नः कव् वा भवति । नतू । ऊङिकार्ये कर्त्तव्ये त्वसमासान्तविधेर्नाम्नः कप् न स्यात् । बह्वचो रमा यस्येति विग्रहे । आपः कपि वेत्यनेन विकल्पवामन विधानात् । बहुरमाक इति द्वयं । कप्प्रत्ययाभावपक्षेतु गोरीप आप इत्यनेन वामनविधानात् बहुरम इत्यपि । दृष्टः शार्ङ्गी येनेति दृष्टशार्ङ्गीति द्वयं । शिष्टप्रयोगानुसारेणान्यदप्यूह्यं । समासान्तविधेस्त्विति रूपं दर्श्यते इत्यर्थः । कमले इव अक्षिणी यस्येति कमलाक्ष इति स्वाङ्गाभ्यामक्षिसक्थिभ्यामित्यनेनात्र समासान्ताराम इति पूर्वोक्तं ज्ञेयं । नतूङि कार्य इति ऊङि कार्ये रूपं यथेति शेषः । वामावुरू यस्याः सा वामोरूः गोपिका । कृतेत्विति ऊङि कृतेतु ई ऊरामान्ता लक्ष्मीर्गोपीत्यनेन गोपीसंज्ञत्वात्, पश्चात् कप् भवेदेव । प्रिया गोपी वामोरूर्यस्येति प्रियगोपरामोरूक इति वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणेत्यनेन प्रियागोप्योः पुरुषोत्तमत्वं । किम्वा गोपस्य वामोरूः गोपवामोरूस्ततः पर्ववत् प्रियया सह पीताम्बर इति ॥ १७६ ॥

## १७७. असमासान्तविधे र्वा, न तूङि कार्ये ।

बहुरमाक बहुरमः, दृष्टशार्ङ्गी दृष्टशार्ङ्गिकः । समासान्तविधेस्तु कमलाक्षः । नतूङि कार्ये—वामोरूः । कृते तु गोपीसंज्ञत्वात्, कप्—प्रियगोपवामोरूकः ।

## १७८. न दक्षिणपूर्वादिषु ।

दक्षिणपूर्वा ।

---

**अमृता०**—१७७. असमासान्तेति । नविद्यते समासान्तविधिः समासान्तप्रत्ययो यस्य सोऽसमासान्तविधिः, तादृशान्नाम्नः कप् वा स्यात् पीताम्बरे । ऊङि तु कर्त्तव्ये तादृशान्नाम्नः कप् न भवति । बहुरमाक इति—बह्वो रमा यस्येति विग्रहे विभाषया कप् । अनन्तस्य वामनः के नतु कपि, आपः कपि वेति वामन पक्षे बहुरमक इति च ज्ञेयम् । बहुरमइति कपोऽभावपक्षे गोरीप आप इत्यादिना वामनः । आवन्तशब्दात् समासान्त प्रत्ययस्याविहितत्वादत्र कप् वा । दृष्टः शार्ङ्गी येन स दृष्टशार्ङ्गीत्यादिः । अत्र च समासान्त प्रत्ययविधानाभवात् विकल्पेन कप् । कमलाक्ष इति—स्वाङ्गाभ्यामक्षि सक्थिभ्यामिति समासान्तः अरामः । वामोरू रिति—वामौ सुन्दरौ उरू यस्याः सा गोपीत्यर्थः । कृते तु—ईऊ रामान्ता लक्ष्मी र्गोपीत्यनेन गोपीसंज्ञत्वात् ऋराम गोपीत्यादिना कप् भवत्येवेत्यर्थः । ऊङ्विधान काले तु स न भवतीतिभावः । प्रियेति—गोपी चासौ वामोरूश्चेति गोपवामोरूः, साप्रिया यस्य स प्रियगोपवामोरूकः कृष्णः । वाच्यलिङ्गलक्ष्मीरित्यादिना पुरुषोत्तमवत्त्वम् ।

**अमृता०**—१७८. नेति । पीताम्बरे दक्षिणपूर्वादिषु प्रयोगेषु कप् न भवति । असमासान्तविधेर्वेत्यनेन विकल्पे प्राप्ते निषेधोऽयम् । दक्षिणस्याः पूर्वस्याश्चदिशोरन्तरालं दक्षिणपूर्वा विदिक् । एवमुत्तरपूर्वादौ च न स्यात् ।

---

**बाल०**—न दक्षि । पीताम्बरे दक्षिणपूर्वादिषु प्रयोगेषु कप् न स्यात् । असमासान्तविधेर्वेत्यनेन विकल्पे प्राप्ते प्रतिषेधोऽयं । दक्षिणपूर्वेति दक्षिणस्याश्च पूर्वस्याश्च तयोरन्तरालदिगिति विग्रहे । दक्षिणपूर्वादयस्यदन्तराल इत्यनेन समासः । तथोत्तरपूर्वा इत्यादयोऽपि ॥ १७७ ॥

**बाल०**—न स्वाङ्गा । स्वाङ्गाभ्यां स्वाङ्गवाचिभ्यां नाडी तन्त्री इत्येयाभ्यामुत्तरः पीताम्बरे कप् न स्यात् । ऋरामगोपीत्यनेन प्राप्ते प्रतिषेधोऽयं । बहुनाडिरिति बह्वचो नाड्यो यस्येति गोरीप आप इत्यनेनात्र वामनः । बहुतन्त्रीति बह्वचस्तन्त्र्यो यस्यामिति उणादेरीप्रत्ययेन सिद्धात् तन्त्रीशब्दात् श्रीयं लक्ष्मीयमित्यनुसारेण ईप् वक्ष्यते । तेन गोपीसंज्ञत्वात् प्राप्तकप् न स्यात् । किञ्च, गोरीप आप इति वामने कृते ग्रीवाया वाच्यत्वात् इरामादक्तचर्थादित्यनेन पुनरीप् । तन्त्रीशब्दोऽत्र धर्मनिवचनः । अस्वाङ्ग इति रूपं दर्श्यते इति शेषः । बहुतन्त्रिक इति पूर्ववद्विग्रहः । ऋरामगोपीत्यनेनात्र कप् ।

**१७९. न स्वांगाभ्यां नाडीतन्त्रीभ्याम् ।**

बहु नाडि कायः, बहु तन्त्री ग्रीवा । अस्वाङ्गे—बहुतन्त्रीका वीणा ।

**१८०. न संज्ञायाम् ।**

कृष्णो देवोऽस्य कृष्णदेवः ।

**१८१. निष्प्रवाणि र्नवपटे ।**

साधुः ।

---

**अमृता०**—१७९. न स्वाङ्गाभ्यामिति । पीताम्बरे स्वाङ्गवाचि नाडी तन्त्री-शब्दाभ्यां कप् न स्यात् । गोपीसंज्ञत्वेन ऋरामगोपीत्यादिना कपि प्राप्ते प्रतिषेधः। बह्वो नाड्यो यस्य स बहुनाडिः कायः । गोरीप आप इत्यादिना वामनः । तन्त्रीशब्दो धमनी-वाची । बहुतन्त्रीत्यत्र तु न वामनः, कृद्गोप्यानिषेध इति वचनात् । बहुतन्त्रीकेत्यत्र तन्त्री शब्दो वीणाङ्गवाचीति प्राण्यगत्वाभावेन स्वाङ्गत्वाभावान्ननिषेधप्रवृत्तिः ।

**अमृता०**—१८०. न संज्ञायामिति । संज्ञायां वाच्यायां नाम्नः पीताम्वरे कप् न भवति । कृष्णदेव इति कस्यचिद्भक्तस्य नाम, विग्रहस्तु यथा—कथञ्चिद् व्युत्पत्त्यभि-प्रायेणोक्तः ।

**अमृता०**—१८१. निप्रवाणिरिति । नूतन वस्त्रे वाच्ये कपं बिना निप्रवाणि रिति साधुर्भवति । यस्यां शलाकायां वस्त्रं युज्यते सा प्रवाणीति कथ्यते । निर्गता प्रवाणी यस्य स निष्प्रवाणिः, अपनीत—शलाको नवपट इत्यर्थः । गोपीसंज्ञत्वेन कपि प्राप्तेऽयं निपातविधिः ।

---

तन्त्रीवीणायामितितु तन्त्रयतेरणन्तत्वादीपि सिद्धेत्युक्तत्वात् तन्त्रीशब्दोऽत्र वीणाया गुणवाचीति । तथा बहुनाडिक इतिच । नाडीशब्दोऽत्र दिनस्य त्रिशद्भागवाचीति विशेषः ॥ १७८ ॥

**बाल०**—न सं । संज्ञायां वाच्यायां पीताम्बरे नाम्नः कप् न स्यात् । कृष्णदेवः कश्चित् । संज्ञाशब्दानां यथाकथञ्चिद्व्युत्पत्तिरिति विग्रहं दर्शितवान् । एवं विश्वदेवः विश्वयशा इत्यादि । अत्रासमासान्तविधिर्वेत्यनेन प्राप्ते निषेधः ॥ १७९ ॥

**बाल०**—निष्प्र । पीताम्बरे नवपटे वाच्ये कवभावेन निष्प्रवाणिरित्ययं साधुः । निर्गता प्रवाणी यस्य स निष्प्रवाणिरिति । यस्यां शलाकायां वस्त्रं युज्यते सा प्रवाणी । वेञ्धातोरधिकरणवाचिटण्सिद्धा । अत्राप्यसमासान्तेत्यनेन प्राप्ते निषेधः ॥ १८० ॥

**बाल०**—नेय । ईयस उत्तरे पीताम्बरे कप् न स्यात् । बहवः प्रेयांसो यस्येति बहुप्रेयानिति । नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति सूचयन् दर्शयति बहुप्रेयसीति । बह्वयः प्रेयस्यो यस्येति विग्रहे नचेयस्याः पीताम्बरे इति वामनो न स्यात् । किञ्चानी युवां पश्चात् पुंस्त्वेऽपीत्यादिना शसं विना गोपीवदिति देशात् सोर्हरोऽपि स्यात् ॥ १८१ ॥

**१८२. नेयसः ।**

बहुप्रेयान् बहुप्रेयसी कृष्णः ।

**१८३. न भ्रातु स्तुतौ ।**

सुभ्राता रामः ।      उक्ताः समासान्ताः ।

---

**अमृता०**—१८२. नेयस इति । ईयस उत्तरे कप् न भवति पीताम्बरे । बहुप्रेयानिति—बहवः प्रेयांसोऽस्येति विग्रहः । नाम्ना ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् जाते वन्तत्वेन गोपीसंज्ञत्वेऽपि कप् न भवतीति दर्शयति—बहुप्रेयसीति । बह्वः प्रेयस्योऽस्येति विग्रहः । नचेयस्याः पीताम्बरे इति वामनाभावः । अनियुवां पश्चात् पुंस्त्वेऽपि इत्यादि प्रकरणोक्तसिद्धान्ते शसं बिना गोपीवदित्युक्तितः सो हॅर. ।

**अमृता०**—१८३. नभ्रातुरिति । स्तुतौ अर्थात् प्रशंसायां गम्यमानायां पीताम्बरे भ्रातृ शब्दात् कप न स्यात् । ऋरामान्तत्वेन कपि प्राप्ते निषेधः । शोभनो भ्राता यस्य स सुभ्राता बयरामः, दाशरथि रामो वा । भ्रातृ वाच्यस्यैव स्तुति रिह गम्यते ( कृष्णस्य लक्ष्मणस्य वा ) । स्तुतौ किम्—दुष्ट भ्रातृकः विभीषणः ।

इति समासान्ता व्याख्याताः ।

---

**बाल०**—न भ्रातुः । स्तुतिरत्र प्रशंसा तस्यां गम्यमानायां भ्रातुः कप् न स्यात् पीताम्बरे । ऋरामेत्यनेन प्राप्ते निषेधोऽयं । शोभनो भ्राता यस्येति सुभ्राता इति । स्तुतिरत्र भ्रातृवाच्यस्यैवेति राम इति विशेष्यं । उक्ताः समासान्ता इति समासान्ताः समाप्ताः इति निर्गलितोऽर्थः प्रकरणसमाप्तेः ॥ १८२ ॥

**बाल०**—नाम्नो । लक्ष्म्यां लक्ष्मीलिङ्गविषये नाम्न उत्तरे यथास्वं वक्ष्यमाणा आवीवावूङ्च भवति । बासुदेवावान्तर-सजातीयविजातीयानेकाधिकारिव्यापित्वात्, महाविभुनामायमधिकारः पादसमाप्ति यावत् । यद्यपि धातुनां तिवादीनाञ्च लक्ष्म्यां वर्त्तमानाभावात् पारिशेष्यान्नाम्न एव आवादयो लभ्यन्ते, तथापि नाम्न इति स्पष्टार्थं ग्रन्थकृता कृतं न्यायलभ्यार्थाब्धि शब्दोपेतार्थस्यातिस्पष्टत्वात् । किञ्च, टिदादिनिबन्धनद्वारा येभ्यः प्रत्ययोत्पत्तिस्तेषामतिदुर्लभत्वात्, पारिभाषिकमपीदं एकस्योभयलिङ्गत्वे इति समासटीकायामुक्तत्वात् । यद्यपीदं प्रकरणं प्राचीनैरत्र न पठ्यते, तथाप्युपयुक्तत्वादस्माभिः पठनीयमित्याह लक्ष्मीति । यद्यपीदं लक्ष्मीप्रकरणं तद्धिते कतिचिद्वृद्धा न पठन्ति, तथाप्यविगीतशिष्टाचारत्वेन नामप्रकारकप्रत्ययसादृश्याद्वयन्त्वत्र पठितवन्त इत्यर्थः । किञ्च, स्तनकेशवती नारी लोमशः पुरुषः स्मृतः । उभयोरन्तरं यच्च तदभावे नपुंसकमित्युक्तदिशा यदपि संस्थानविशेषव्यङ्ग्य स्तनवसनश्मश्रुवादिकं लक्ष्मीत्यादिव्यञ्जकं लोकप्रसिद्धमस्ति, तदपि न सर्वत्र प्रवर्त्तत इति वृद्धोपदेशपरम्परामङ्गीकृत्य यथायोग्यं लक्ष्मीप्रत्यया दर्श्यन्ते । यतस्तनाद्यभावेऽपि खट्वावास्यादीनां लक्ष्मीत्वं योषिद्वाचकस्य दारशब्दस्य पुरुषोत्तमत्वं, आकाशगोकुलादीनां ब्रह्मत्वं, अशन्यादीनां द्विलिङ्गता, तटशब्दस्य

**१८४. नाम्नो लक्ष्म्याम् ।**

महाविभुरथम् । लक्ष्मीप्रकरणमिदं न प्राचीना स्तद्धिते पठन्ति । वयन्तु नाममय प्रत्ययसादृश्यात् पठितवन्तः ।

**१८५. कृष्णादाप् ।**

---

**अमृता०—१८४.** नाम्न इति । लक्ष्म्यां विषये नाम्नउत्तरे यथास्वं वक्ष्यमाणाः प्रत्यया भवन्ति । न प्राचीनास्तद्धिते पठन्तीति—यथा हि पाणिनीये चतुर्थाध्यायस्य प्रथमपादे तृतीय सूत्रे—स्त्रियामित्यधिकारः, ततश्च स्त्री प्रत्यया उह्याः । अथ तत्रैव पादे—तद्धिता इत्यधिकारः ७६ संख्यकसूत्रे प्रोक्तः । एतेन स्त्रीप्रत्यया स्तद्धितप्रत्ययेभ्योमिन्न-जातीया इति सुतरामवगम्यते । तथैव वोपदेवेन प्रक्रियाकारेण च पृथक् प्रकरणे हि ते व्यवस्थापिताः ।

ननु तर्हि कथं भवता तद्धिताधिकारे लक्ष्मीप्रकरणमनुप्रवेशितमिति शङ्कांयुक्त्या निरस्यति—नाममयेत्यादि । अत्रायं विवेकः—प्रत्ययास्तावद्द्विविधाः, तत्र केचिन्नाम्न-उत्तरे प्रयोज्याः, केचित्तु धातोरुत्तरे । तत्र धातो रुत्तरे तिवाद्याः कतश्च प्रयोज्याः, अथ नाम्नउत्तरे स्वादयस्तद्धिताश्चेति शब्दशास्त्र नीतिः । स्वादिभिः खलु कर्त्रादिकारकार्थ वैशिष्ट्यमुच्यत इति तत्प्रकरणे प्रतिपादितम् । तद्धितास्तु नाम्नामेव विशिष्टानर्थानभि-व्यञ्जन्ति, तथैव स्त्रीप्रत्यया नाम्नां स्त्रीलिङ्गरूपं विशेषार्थमेव प्रकाशयन्तीति तद्धित प्रत्ययैः समं लक्ष्मीप्रत्ययानां सादृश्यलाभाद् न्यायतएवतत्रान्तः पाताः कृता स्तेऽस्माभि रिति । पद्मनाभो नन्वस्माकं दिग्दर्शक इति दृष्टव्यम् ।

**अमृता०—१८५.** कृष्णादिति । लक्ष्म्यां कृष्णसंज्ञकान्नाम्न उत्तरे आप् भवति ।

---

त्रिलिङ्गाच भवति । यद्यपि लक्ष्म्यामिति प्रकृतिविशेषणं प्रत्ययविशेषणञ्च सम्भवति । तथापि नाम्न इत्यस्य सन्निधौ लक्ष्म्यामिति दर्शयतो ग्रन्थकृतः स्वकृत्या विशेषण-मेवाभिप्रेतं । अतएव लक्ष्म्यां वर्त्तमानस्य नाम्नः प्रत्ययो लक्ष्मीत्वद्योतक एवेति ॥ १८३ ॥

**बाल०—कृष्णा ।** लक्ष्म्यां कृष्णात् कृष्णसंज्ञकात् आप् भवति । नाम्न इत्यस्या-विकरत्वेन विधायकत्वाभावाद्विधिरयं । अरामान्तकृष्णसज्ञ इत्युक्तं । टाविति पाणिनीयानां मते टाप् भवति । आ इति कृतेऽपि प्रयोगः सिध्यत्येव, तथापि आविति यत् कृतं तत्फलन्तु आरामहरो यदुसर्वेश्वर इत्यनेनैव दर्शितं । रमाशब्दस्य साध्यार्थं वाक्यं स्वयं दर्शयति रमयतीति । तत आप् अ इद्वयस्येत्यरामहरः । रमा लक्ष्मी राधाविष्णुजनाभ्या, मिति सोर्हरः । एवमिति राध साध संसिद्धौ राध्नोतीति पचाद्यत् पश्चादाप् राधा कृष्ण-प्रेयसीनां मुख्या, कृष्णप्रियावलीमुख्या गान्धर्वा राधिका सखीत्युक्तेः । परं परमेश्वरं मातीति मा माने इत्यस्मात् कर्मण्यनुपेन्द्रादारामात् क इति क आरामहरः कंसारीत्य-नेनारामहरः । पश्चादाप् परमा लक्ष्मीः शोभा वा । ईष्टे इति ईश ऐश्वर्ये ईशोद्धव-किरतीत्यनेन कः ततः आप् ईशा परमेश्वरी । एवं रामा श्यामा यमुना गङ्गा पद्मा दुर्गाप्रभृतयः । कृष्णादित्यनेन सोमपाप्रभृतिभ्य आप न स्यात् ॥ १८४ ॥

टाप् पाणिनिः । रमयतीति पचाद्यत् रमा । एवं राधा परमा ईशा ।

**१८६. पाद ईप् वा ।**

पाच्छब्दस्येति भगवति ग्रहणाद् वामनः—द्विपदी द्विपात् ।

**१८७. द्विपदा ऋचि, त्रिपदा गायत्र्याम् ।**

साधू ।

**१८८. गिरादेराप् वा ।**

---

पित्करण फलं—आरामहरो यदुसर्वेश्वरे न त्वाप इत्यादौ ज्ञेयम् । पचाद्यदिति—अत् प्रत्ययान्त रम शब्दादाप्, अइ द्वयस्येत्यरामहरः । राधेतिराध साध संसिद्धौ धातोरत्—राधः, तत आप् । परमेति—परं परमेश्वरं मातीति मा माने इत्यस्मात् कर्मण्यनुपेन्द्रादा-रामादिति कः—परमः, तत आप्, परमा लक्ष्मीरित्यर्थः । ईशेति—ईष्टे इति ईशः, ईशोढ्रोवेत्यादिना कः, पश्चादाप् । एवं रामा दुर्गा पद्मा गंगेत्यादयः ।

**अमृता०**—१८६. पाद इति । लक्ष्म्यां पात् शब्दादीप् वा स्यात् नत्वाप् । संख्याव्ययाभ्यां पादस्यान्तहर इत्यादिष्टस्य पाच्छब्दस्य हि अत्र ग्रहणम् । द्विपदीति—द्वौपादौ यस्या इति विग्रहे पादादेशः, वामन ईप् च । तदभाव पक्षे भगवत् परत्वाभावान्न वामन इति द्विपात् ।

**अमृता०**—१८७. द्विपदेति । ऋक् वेदमन्त्रः, तस्यां वाच्यायां द्विपदा इति तथा गायत्र्यां वाच्यायां त्रिपदा इति द्वौ साधूभवतः । अत्र आपा सह तत्तदर्थ वैशिष्ट्यं हि निपात कारणम् । द्वौ पादौ यस्या द्विपदा ऋक्, एवं त्रिपदा ब्रह्मगायत्री, सापि मन्त्र एव ।

**अमृता०**—१८८. गिरादे रिति । लक्ष्म्यां गिर् प्रभृति शब्देभ्य आप् वा स्यात् । अप्राप्ते विकल्प विधानमीपोऽपवादः । क्विप् धातुमात्रादयं विधिरित्यनेन गिर् दिश् क्षुध्

---

**बाल०**—पाद । लक्ष्म्यां पाद इत्यस्मात् ईप् वा स्यात् । सङ्ख्याव्ययाभ्यां पादस्यान्तहर इत्यनेनान्तहरपाच्छब्दस्यैवात्र ग्रहणं । ननु सूत्रे पाच्छब्दो गृहीतः तर्ह्युदाहरणे कथं वामन इत्याह पाच्छेति । पाच्छब्दस्य वामनो भवतीतत्र भगवतीत्यस्य ग्रहणादत्र वामनः । द्वौ पादौ यस्या इति द्विपदी पक्षे द्विपात् । उभयत्रापि राधाविष्णुजनाभ्यामित्यनेन सोर्हरः । कस्यचिन्मते द्विपदा इत्यपि ॥ १८५ ॥

**बाल०**—द्वि । ऋचि वाच्ये द्वौ पादावस्या इति आपा सह द्विपदा इयं साधुः । तथा गायत्र्यां वाच्ये त्रयः पादा अस्या इत्यापा सह त्रिपदा इयमपि साधुः ॥ १८६ ॥

**बाल०**—गिरा । लक्ष्म्यां गिरादेराप् वा स्यात् । गॄ निगरणे दिश अतिसर्जने क्षुध वुभुक्षायां त्रि तृषा पिपासायां उत्पूर्वः स्निह प्रीतौ इत्येतेभ्यः सम्पदादेः क्विप्क्तौ इत्यनेन क्विप् ततः पाक्षिक आप् गिरादयः पक्षे गीरादयश्च उष्णिहा इति तत्रैव निपातसिद्धं । अत्र केवलमाप् ॥ १८७ ॥

गिरा गीः, दिशा दिक्, क्षुधा क्षुत्, तृषा तृट्, उष्णिहा उष्णिक् इत्यादयः ।

**१८६. अन आप् वा पीताम्बरे, मनस्त्वन्यत्रापि ।**

माथुर यज्वे माथुरयज्वानौ तुर्यौ । सुपटिमे सुपटिमानौ, अतिपटिमे अतिपटिमानौ गोप्यौ । सीमे सीमानौ ।

**१९०. ईप् ।**

विभुरयम् । ङीप् ङीष् ङीन् पाणिनिः ।

---

तृषः क्विवन्ताः, उष्णिगिति च क्विपा साधुः । एभ्यः पाक्षिक आप्—गिरा इत्यादि । तदभावे विष्णुजनान्ता एव स्वभाव लक्ष्मीका इत्याशयः ।

**अमृता०**—१८९. अन इति । पीताम्बरे लक्ष्म्यामनन्तशब्दादाप् वा भवति, मनन्तात्तु पीताम्बरे तदन्यत्र च आप वा भवति । माथुरेति—मथुरायां भवो माथुरः । यज्वेति यजते वंनिप् । माथुरो यज्वा यत्र सा माथुरयज्वा पुरी । एकवचने आपः स्पष्टतामनुपलभ्य द्विवचने उदाहरति—माथुरयज्वे इत्यादी । आप पक्षे नान्तस्येति संसारहरः । पक्षान्तरे नान्तस्येत्यादिना त्रिविक्रमः । सुपटिमे इति—पटोर्भावः पटिमा, शोभनः पटिमा ययो रिति तथा द्वयम् । गोप्याविति न्यासेन एषां पीताम्बरेऽन्यपदार्थ प्राधान्यं दर्शितम् । पीताम्बरादन्यत्र—सीमे इति द्वयम्, इह स्वार्थे आप् ।

---

**बाल०**—अन । लक्ष्म्यां पीताम्बरे अनोऽनन्तात् आप् वा स्यात् । मनः मनन्तात्तु पीताम्बरेऽन्यत्राप्याप् वा स्यात् । मथुरायां भवः माथुरः । यज देवपूजादावित्यस्मात् वनिप् यज्वा माथुरो यज्वा ययोरिति माथुरयज्वे इति नान्तस्येति संसारहरः । एकवचने रूपभेदाभावाद्द्विवचनान्तमुपन्यस्तं राधाब्रह्मभ्यामितीरामः । अद्वयमिद्वय इत्येरामः पक्षे माथुरयज्वानाविति नान्तेति त्रिविक्रमः । एवमुत्तरत्रापि । पुर्याविति काञ्चचवन्त्यौ पटोर्भावः पटिमेति ततः शोभनं पटिमा ययोरिति सुपटिमे इतिद्वयं पूर्ववत् । अतिक्रान्ते पटिमानमिति अतिपटिमे इतिद्वयं । चतुर्णामपि विशेष्यं गोप्याविति । अन्यत्रेति यदुक्तं तस्यान्यदप्युदाहरणं सीमे इतिद्वयं स्वार्थेऽत्राप् ॥ १८८ ॥

**बाल०**—ईप् । नाम्नो लक्ष्म्यामीप् यथास्वं स्यात् । महाविभोरवान्तरत्वादयं विभुनामा । ङीरिति पाणिनीयानां मते ङीप् ङीष् ङीनिति त्रयो दृश्यन्ते, तेतु भार्या जात्यपत्याद्यर्थापेक्षयेत्यभिप्रेयते । अधिकन्तु तत्र विचार्यं । ग्रन्थकृतातु स्वमते एकेनैव ईपा सर्वसिद्धेऽपि शिष्यहितार्थं प्राचीनमतं प्रदर्शितमिति ॥ १८९ ॥

**बाल०**—ऋरा । मातृपश्चानावादी येषां ते मातृपश्चादयः । मन्च मातृपश्चादयश्च मन्मातृपश्चादयस्तान् वर्जजित्वेति अत्वरायाश्चेति णमु, मन्मातृपश्चादिवर्जं । मनं

## १६१. ऋरामाच्चतुर्भुजानुबन्धान्नरामादञ्चते र्वाहश्च मनूमातृ पश्चादि वर्जम्।

**कर्त्री भगवती भवती अतिभगवती विदुषी रुक्मिणी प्राची कृष्णौही।**

---

**अमृता०**—१६१. ऋरामादिति। लक्ष्म्यां मनूमातृ पश्चादीन् वर्जयित्वा ऋरामान्तात् चतुर्भुजानुबन्धात् नरामान्तात् अञ्चतेः वाहश्चोत्तरे ईप् स्यात्। मनिति मनन्तशब्दो गृह्यते। कर्त्रीति—डुकृञः तृल् कर्त्तृ, तत ईप्। ऋरामान्तस्योदाहरणमेतत्। भगोऽस्यास्तीति भगवतु शब्दादीप्—भगवती। भवतेरुणादौ अवतुच्—भवतु, ततईप्। अतिक्रान्तो भगवान् यया सा अतिभगवती। विदुषीति—वेत्तेः शतु र्वसु वेति निष्पन्नाद् विद्वसुशब्दादीप्, वसो र्वस्य उः, षत्वञ्च। एतानि चतुर्भुजानुबन्धस्योदाहरणानि। रुक्मिणीति—रुक्म अस्यास्तीति रुक्मिन् शब्दादीप्। कृष्णौहीति—कृष्णं वहतीति ण्वि प्रत्ययान्तात् कृष्णवाह शब्दादीपि बाहो र्वा ऊठ्, अद्वयादूठो वृष्णीन्द्र इति ऊरामस्य औरामरूपवृद्धिः।

---

पश्चादींश्च वर्जयित्वा ऋरामान्तात् चतुर्भुजानुबन्धात् नरामान्तात् अञ्चतेः वाहश्चोत्तरः लक्ष्म्यामीप् भवति। अञ्चतेः पृथगुपादानेन धात्ववस्थायां चतुर्भुजानुबन्धस्याग्रहणमिति ज्ञाप्यते, एतदेव वक्ष्यतेच। करोति येति कृधातोः शतृ तत ईप् कर्त्रीति। भगः षडैश्वर्याऽस्त्यस्या इति मतुः। अद्वयमाभ्यामित्यनेन मतोर्म व इति वः तत ईप् भगवती। भूधातोः उणादेरवतूच्। भवतुरिति कश्चित्। संसारहरश्चितीति संसारहरश्चितीति संसारहर ईप् भवतीति। अतिक्रान्तो भगवान् यया सातिभगवती। वेत्तीति वेत्तः शतुर्वसुर्वेत्यनेन वसु ईप्। वसोर्वस्य उरिति उः षत्वं विदुषीति। रुक्म अस्त्यस्या इति रुक्मिणी। प्राञ्चतीति क्विप् न लोप ईप् प्राचीति। कृष्णं वहतीति तुरासाह इत्यनेन विप्रत्ययान्तं कृष्णवाह इति साधु तत ईर्। वाहो वा ऊट् भगवतीति ऊट्। अद्वयादूटो वृष्णीन्द्र इति वृष्णीन्द्रः कृष्णौहीति नौः काचिद्गोपी वा॥ १६० ॥

**बाल०**—यूनो। लक्ष्म्यामीपा सह यूनो युवतिरियं साधुः। ईपो वामनः नरामस्य तरामः वस्योरामाभावश्च निपातफलं। मनूपदेनात्र मनन्तो गृह्यते, भङ्ग्येति सूचयन्नाह मनन्तादेस्त्विति मनन्तादेस्तु रूपं दर्श्यते इति शेषः। मनन्तादेः प्राप्ते वर्जनमित्यनुसन्धेयं। सीमेति सोऽन्तः कर्मणि चतुर्भुजेत्यारामान्तः पाठः। तत औणादिकः क्वनिप् दामोदरमास्थेति ईरामः सीञ बन्धने इत्यस्माद्वा स एव क्मनिप् सीमन्। नान्तधातुवर्जितेति त्रिविक्रमः नान्तात् प्राप्तेऽत्र वर्जनं। मातेति माङ् माने तृन् ऋरामसखिभ्यामिति सोराच। एवं दुह प्रपूरणे तृन् इट् दुहितेति। स्वसा ननन्दा इति द्वावुणादिसिद्धौ संज्ञाशब्दौ। स्वस् प्राणने नदि आह्लादे यङ् लुगन्त इत्येताभ्यामुणादयो बहुलमिति ऋत्ययः बहुलवचनात् ननन्द इत्यत्र नारायणारामस्य त्रिविक्रमः स्वसृशब्द कर्त्तृवत्। एवं ननन्द यातेति या प्रापणे तृन्। तिस्र इति चतस्र इति 'लक्ष्मीस्थयोस्त्रिचतुरोस्तिसृचतसृविष्णुभक्ताविति तिसृचतस्रोः रः सर्वेश्वर इति तिस्राद्यादेशः। एभ्य ऋरामान्तत्वात् प्राप्ते

## १९२. यूनोयुवतिः ।

साधुः । मनन्तादेस्तु—सीमा माता दुहिता स्वसा ननन्दा याता तिस्रः चतस्रः । पञ्चादि र्नान्त संख्या, पञ्च सप्त नव गोप्यः । तदन्तत्वेऽपि

---

**अमृता०**—१९२. यून इति । लक्ष्म्यामीप् प्रत्ययेन युवन्शब्दस्य युवतिरिति साधुर्भवति । अत्र ईपो वामनः, नरामस्य तरामः, वरामस्य भगवति उरामाभावश्च निपातकार्यम् । पूर्वसूत्रे मनमातृ पञ्चादीत्यत्र आदिशब्दः प्रत्येकमभिसम्बध्यत इति दर्शयति—मनन्तादेरिति, यथा सीमा तथाहि पामादयः । एतेभ्य आवेव स्यादिति भावः । मातृ इति मा माने तृन्, सोराच् माता । एवं दुह तृन् दुहिता । स्वसृ ननन्दृ शब्दौ उणादि सिद्धौ । याते स्तृन् याता । लक्ष्मीस्थयो स्त्रिचतुरोरिति तिसृचतस्रादेशौ । ऋरामान्तत्वे-नैषामीपि प्राप्ते वर्जनम् । मात्रादिशब्दाः स्वतो लक्ष्मीलिङ्गकाः, पञ्च प्रभृति नान्त संख्या शब्दास्तु वाच्यलिङ्गा इत्युक्तमेव प्राक् । अत्र नरामान्तत्वेन लक्ष्म्यामीपि प्राप्ते वर्जनम् ।

वर्णेन विधौ तदन्तस्य कार्यं स्यान्नाम्ना तु क्वचिदिति न्यायेन अत्र नाम्ना निषेधे तदन्तस्य निषेधो भवति न वेति संशये प्राह—तदन्तत्वेऽपि नेति । तत्तन्नामान्तत्वेन हमासेऽपि ईप् न भवतीत्यर्थः । अतिक्रान्ता सीमानमिति, अतिक्रान्तः सीमा ययेति वा विग्रहे अतिसीमा । एवमतिमातेति । काचिदितिभातुः सकाशादप्यधिक स्नेहवतीत्यर्थः । प्रियपञ्चान इति—प्रियाः (प्रीत्यास्पदं) पञ्च (भ्रातरः) यासां ताः पांडवप्रजाः ।

---

वर्जनं । मात्रादिर्गणोऽयं । पञ्चादीत्यादिना नान्तसङ्ख्या गृह्यते इत्याह पञ्चादिरिति । पञ्चेत्यादिषु त्रिषु सनान्तसङ्ख्यातः कतेश्चेति जस्शसोर्महाहरः । त्रयाणां विशेष्यं गोप्य इति । वर्णेन विधौ तदन्तस्य कार्यं नाम्नातु क्वचित्युक्तत्वात् । नाम्नातु क्वचिदित्युक्त-त्वात् । नाम्न वर्जनात् तदन्तत्वेऽपि तद्वर्जनमायातीत्याह तदन्तत्व इति तदन्तत्वेऽपि समासान्तत्वेऽपि एभ्य ईप् न स्यादित्यर्थः । अतिसीमेति अतिक्रान्ता सीमानमिति अत्यादयो द्वितीययेति द्वितीयाकृष्णपुरुषः । अतिक्रान्तः सीमा यया इति पीताम्बरो वा । एवमतिमातेति । प्रियपञ्चाल इति प्रियाः पञ्च यासां ता इति । ङिसेति । ङिसाहचर्यात् ङिसहपाठादीङ्योस्तु वेत्यत्र सूत्रे विष्णुभक्तिरेव गृह्यते इति राधाब्रह्मभ्यामित्यनेन विहितो य ईप्रत्ययस्तस्मिन्नेव वम सतसङ्गहीनस्यानोऽरामहरो वा भवति । अतएव ईपि नित्य-मरामहरो भवतीति भावः । राज्ञः स्त्री राज्ञीति शुनः स्त्री शुनीति । सुं विनेति न अनञ् पूर्वस्यार्वनोऽर्वतृ सुं विनेत्यत्र प्रत्ययमात्र गृह्यत इति ईपि चार्वनोऽर्वतृभावः । अर्वनः स्त्री अर्वतीति घोटकी । सूत्रे चतुर्भुजानुबन्धादिति कृत्वा यदञ्चतीति गृहीतं ज्ञापकत्वेन तत्फलं दर्शयति अञ्चतीति । सूत्रेऽञ्चतिग्रहणाद्धेतोर्धातोश्चतुर्भुजानुबन्धादीप् न स्यादित्यर्थः । हिमालयस्रदिति हिमालयात् स्रंसते इति स्रंसु अधःपतने इत्यस्मात् सम्पदादेः क्विप् ॥१९१

**बाल०**—वनो । असमासे, समासेऽपि वनो वनन्तादीप् तस्मिन् वनो नश्च नरामस्यच रो भवति । पीताम्बरे समासेतु वन ईप् वा भवति, तस्मिन् वनो नश्च रो

न; अतिसीमा अतिमाता काचित्। प्रिय पश्चानः पाण्डवप्रजाः। ङि साहचर्यात् ईङ्च्योस्तु वेत्यत्र विष्णुभक्तिरेव गृह्यते, ततो नित्यमेवाराम-हरः। राज्ञी शुनी। सुंविनेति प्रत्ययमात्रं गृह्यते—अर्वती। अश्वति ग्रहणाद्धातो श्चतुर्भुजानुबन्धान्न—हिमालयस्त्रत् गङ्गा।

**१९३. वनोनश्चरः पीताम्बरे तु वा।**

**धीवरी कृष्णदृश्वरी। बहुकृष्णदृश्वरी बहुकृष्णदृश्वा मथुरा।**

---

ननु वमसत्सङ्गहीनस्येत्यादौ ईङ्चो स्तु वेत्यनेन राज्ञी प्रभृतौ विभाषया अनोऽरामहरो भवितुर्महति, कथं नित्यनिति चेत्तत्र समाधानमाह—विष्णुभक्तिरेव गृह्यत इति। तत्र च हेतुः—ङिसाहचर्यादिति। तस्मादिह भगवति नित्यमरामहर इति भावः। सुंविनेति—अर्वनेऽर्वतृ सुं विनेति लक्षणम्। पूर्ववदिहापि विष्णुभक्ति साहचर्यमननेन ईपि तृ तदप्राप्ति प्रसङ्गः स्यादिति तन्निरासार्थमाह—प्रत्ययमात्रं गृह्यत इति। ततश्चेपि भवत्येवादेश इति भावः। ननु चतुर्भुजानुबन्धग्रहणेनैव सिद्धेऽपि कथमञ्चतेः पृथगुपादानमित्याशङ्कायां तदभिप्रायं प्रकाशयति—धातोश्चतुर्भुजानुबन्धान्नेति। अत्राञ्चतेः पृथगुपादानं धातो श्चतुर्भुजानुबन्धत्वे त्वीपो निषेधज्ञापकम्, यथा अचश्चतुर्भुजानाञ्चेत्यत्र नुम्प्रसङ्गे-सिद्धान्तितं तद्वदिहापि कर्त्तव्यमित्यर्थः। तेन स्रसुधातोः क्विपि हिमालयात् स्रंसत इति हिमालयस्रदित्यत्र ईप् नभवतीति निष्कर्षः।

**अमृता०**—१९३. वन इति। लक्ष्म्यां वनन्तशब्दादीप् स्यात्, तत्र च नरामस्य ररामो भवति, पीताम्बर समासे तु वनन्तादीप् ररामौ वा भवतः। धीवरीति—दधातेः क्वनिप्—धीवन्, तत ईप्, नस्य रश्च। कृष्णदृश्वरीति—कृष्णं दृष्टवानित्यर्थे दृशेः क्वनिप्—कृष्णदृश्वन्, तत ईप् रश्च। बहवः कृष्णदृश्वानो यस्यां सा बहुकृष्णदृश्वरी मथुरा। ईपः अभावपक्षे बहुकृष्णदृश्वा।

---

भवति। वन इत्यत्र सम्बन्धसामान्ये षष्ठ्येव तस्याः सकाशात् यथायथं पञ्चम्यर्थोऽपि प्रतीयते। धीवरीति डु धाञ् धारणपोषणयोरित्यस्मात् क्वनिप्। दामोदरमास्थेति ईरामः धीवन् तत ईप्। कृष्णदृश्वरीति कृष्णं दृष्टवतीति दृशधातोः क्वनिप् तत ईप्। बहवः कृष्णदृश्वानो यस्यामिति बहुकृष्णदृश्वरीतिद्वयं॥ १९२॥

**बाल०**—गोपा। गोपालः पूर्वो यस्य सगोपालपूर्वस्तस्य वनस्तौ ईप्ररामौ न भवतः। भीष्मं योधितवतीति युधधातोः क्वनिप्। नान्तेति त्रिविक्रमः भीष्मयुध्वेति। भवति। वन इत्यत्र सम्बन्धसामान्ये षष्ठ्येव तस्याः सकाशात् यथायथं पञ्चम्यर्थोऽपि प्रतीयते। धीवरीति डु धाञ् धारणपोषणयोरित्यस्मात् क्वनिप्। दामोदरमास्थेति ईरामः धीवन् तत ईप्। कृष्णदृश्वरीति कृष्णं दृष्टवतीति दृशधातोः क्वनिप् तत ईप्। बहवः कृष्णदृश्वानो यस्यामिति बहुकृष्णदृश्वरीतिद्वयं॥ १९३॥

**१৯४. गोपालपूर्वस्य तु न तौ ।**

भीष्मयुध्वा शिखण्डिनी । कथं अतिशुनी ? सार्थक निरर्थकयोः सार्थकस्यैव ग्रहणमिति न्यायेन प्रत्ययस्यैव वनो ग्रहणात् ।

**१৯५. पीताम्बरे ।**

प्रभुरयम् ।

**१৯६. ऊधसः सो नश्च ।**

---

**अमृता०**—१৯४. गोपालेति । गोपालो पूर्वो यस्य तथाभूतस्य वनन्तस्य तु तौ ईप् ररामौ न भवतः । भीष्मयुध्वेति—भीष्मं योधितवतीति क्वनिप् । अत्र धरामरूप गोपालपूर्बत्वान्नेप्-ररामौ । शिखण्डिनी द्रुपद राजकन्या, सातु यक्षस्य पुंस्वग्रहणेन पुरुषोभूत्वा शिखण्डीति नाम्ना ख्यातो भीष्मस्य युद्धं निवारयामासेति महाभारत वार्त्ता । अत्र तु युध धातो र्युद्धनिवृत्त्यर्थे ललणा । ननु श्वन् शब्दस्य च वनन्तत्वदर्शनात् समासे—अतिक्रान्ता श्वानं–अतिशुनीत्यत्र कथं नस्य ररामो न क्रियत इति चेत्तत्र सङ्गतिं करोति—सार्थकेत्यादि । अर्थशब्देनात्र यदर्थं गृहीत्वा यत् कार्यक्रियते स एवाभिधीयते नत्वभिधेय-मात्रम्, अर्थवद् ग्रहणेऽनर्थकस्य न ग्रहणमिति वत् । तेन वन् शब्देन प्रत्ययस्य हि वन इष्टत्वात् प्रकृत्यवयवस्य तु न तत् कार्यम्, अतो नात्र नरामस्य ररामः किन्तु ऋरामा-दित्यादिसूत्रे नरामान्त लक्षणेन ईप् तु स्यादेवेति हृदयम् ।

**अमृता०**—१৯६. ऊधस इति । पीताम्बरे लक्ष्म्यां ऊधस् शब्दादीप् स्यात् तत्र

---

**बाल०**—गोपा । गोपालः पूर्वो यस्य सगोपालपूर्वस्तस्य वनस्तौ ईप् ररामौ न भवतः । भीष्मं योधितवतीति युधधातोः क्वनिप् । नान्तेति त्रिविक्रमः भीष्मयुध्वेति । ध-गोपालपूर्वत्वादत्रेप् न स्यादीपि परे नरामस्य ररामश्च न स्यात् । शिखण्डिनीति भीष्मस्य युद्धनिवर्त्तनार्थं कश्चित् स्त्रीवेशधारीति महाभारते प्रसिद्धं । ननु श्वन्शब्दस्यापि वन इत्यवयवदर्शनात् अतिक्रान्ता श्वानमिति वाक्येऽतिशुनीति कथं भवत्वित्याक्षेपे सिद्धान्तमाह सार्थकेति । अर्थेन सह वर्त्तमानः सार्थकः निर्गतोऽर्थान्निरर्थकः तयोर्मध्ये सार्थकस्यैव ग्रहणमिति न्यायेन प्रत्ययरूपस्यैव वनो ग्रहणाद्धेतोः श्वन्शब्दस्य वन्रूपा-वयवत्वेऽपि ऋरामादित्यत्र नरामादित्यनेन ईप् स्यात्, नरामस्य ररामस्तु न स्यात् ॥१৯३

**बाल०**—पीता । पीताम्बरे समासे लक्ष्म्यां नाम्न ईप् यथास्वं स्यात् । एकाधिकार-व्यापित्वात् प्रभुनामायं ॥ १৯४ ॥

**बाल०**—ऊध । पीताम्बरे लक्ष्म्यामूधःशब्दादीप् स्यात् । तस्मिन् प्रत्यूधसः सरामो नरामश्च स्यात् । सो नश्चेत्युभयत्राप्यराम उच्चारणार्थः । कुण्डोध्नीति कुण्डमिबोधोऽस्या ईति ईप् नौ ततो व-म-सत्सङ्गहीनस्यानोऽरामहर इत्यनेनारामहरः । चतुरूध्नीति चत्वारि ऊधांसि अस्या इति सर्वं पूर्ववत् ॥ १৯५ ॥

कुण्डौध्नी चतुरूध्नी ।

**१९७. संख्यातो दाम्नो हायनात्तु वयसि ।**

द्विदाम्नी, त्रिहायणी गौः ।

**१९८. अन उद्धवहर योग्याद्वा, नैवास्मात् ।**

---

चोधसः सरामस्य नराम आदिश्यते । न इत्यराम उच्चारणार्थः । कुण्डोध्नीति—कुण्डमिव ऊधोऽस्या इति विग्रहे ईपि नादेशे च वमसत्सङ्गहीनस्येत्यादिना अनोऽरामहरः । चत्वारि ऊधांसि यस्याः सा चतुरूध्नी, पूर्ववदरामहरः ।

**अमृता०**—१९७. संख्यात इति । पीताम्बरे लक्ष्म्यां संख्यावाचकात् परस्मात् दाम्न उत्तरे ईप् स्यात् । वयसि गम्यमाने तु संख्यात उत्तरस्मात् हायनादीप् भवति । तु शब्द एवार्थे । द्वे दाम्नी बन्धनरज्जू यस्याः सा गौ द्विदाम्नी, पूर्ववदनोऽरामहरः । त्रीणि हायनानि वत्सरा यस्याः सा गौः त्रिहायणी ।

**अमृता०**—१९८. अन इति । पीताम्बरे लक्ष्म्यामुद्धवहरस्य योग्यो योऽन् तस्मा-

---

**बाल०**—सङ्ख्या । पीताम्बरे लक्ष्म्यां सङ्ख्यातः सङ्ख्यावाचकादुत्तरस्माद्दाम्न उत्तर ईप् भवति । वयसि गम्यमानेतु सङ्ख्यातः परस्माद्धायनादीप् भवति । द्विदाम्नीति द्वे दाम्नी यस्या इति । सङ्ख्येति किं उद्दामा । त्रिहायणीति त्रीणि हायनानि यस्या इति ॥ १९६ ॥

**बाल०**—अनः । उद्धवहरस्य योग्यं उद्धवहरयोग्यं तस्मात् पीताम्बरे लक्ष्या-मुद्धवहरयोगात् अनोऽनन्तादीप् वा स्यात् । अन्यस्मादुद्धवहरानर्हादन ईप् नैव स्यात् । यद्यप्युद्धवहरयोग्यादित्यनेनैवान्यस्मान्न स्यात् तथाप्यन्यस्मादिति स्पष्टार्थं । नरामादित्यनेन नित्यप्राप्ते विकल्पार्थमिदं । कृष्णो राजा यस्यामिति कृष्णराज्ञी द्वारका । व-म-सत्सङ्गेत्य-रामहरः । कृष्णो राजा यत्र कुलद्वये इति विग्रहे ब्रह्मलिङ्गस्य द्विवचनेऽपि ईवभावेन कृष्णराज्ञीति भवितुमर्हतीत्याशङ्कानिरासार्थं कृष्णः राजा ययोरिति कृष्णराज्ञ्याविति द्विवचनान्तमुपन्यस्तं, किन्तु वान्यपदमत्र द्वारकामथुरे इति । पक्ष इति ईवभावपक्षेतु अन आप् वेतीत्यनेनाप् । विकल्पत्वात् पक्षे तस्यापि आपोऽप्यप्राप्तिः कृष्णराजा इति पूर्ववद्विग्रहसमासौ आप्, नान्तस्य नत्वनीपोरिति संसारहरः । आपोऽभावेऽपि कृष्णराजेति भवितुमर्हतीत्यपरितुष्यन् कृष्णराजे इति द्विवचनान्तं दर्शितं । प्रथमैकवचने आवन्त-नान्तयोरभेदरूपत्वात् । अभावपक्षेकृष्णराजानावित्यपि द्विवचनान्तं दर्शितं । नेहेति उद्धवहरयोग्याभावादिति शेषः । सुपर्वेति शोभनानि पर्वाणि प्रतिपत्प्रभृतीनि यासां ता इति विग्रहः । अन आप् वेति आप् वा स्यात् तत्राविशेषेणैवानो ग्रहणात् । सुपर्वा इत्यत्रापि गोप्य एव विशेष्यं । पीताम्बर इत्यस्मात् पूर्वं पीताम्बराधिकारत्वेनेति योज्यं । अतिक्रान्त पर्व इति अत्यादयो द्वितीययेति समास स्ततो नरामादितीप अतिपर्वणीति ॥ १९७ ॥

कृष्णराज्ञी कृष्णराज्ञ्यौ। पक्षे त्वन आप् वा इत्याप्। पक्षे तस्याप्य-प्राप्तिः। कृष्णराजा कृष्णराजे कृष्णराजानौ। नेह—सुपर्वाणो गोप्यः। अन आप् वेति पक्षे सुपर्वाः। पीताम्बर एव नियमात् अतिपर्वणी हरिभक्तिः।

## १९९. स्वाङ्गपूर्वात् क्तान्तान्नतु जातादेः।

---

दीप् वा स्यात्, अन्यस्मादनन्तादीप् नेति तु स्पष्टार्थं वचनम्। ईपोऽभाव पक्षे—अन आप् वेति आप्, तत्रापि वा करणात् तस्यचाभाव पक्षे यथावत् शब्दस्थिति रिति स्पष्टी-कृतम्। कृष्णो राजा यस्यामिति कृष्णराज्ञी सखिमण्डली। वमसत्सङ्गहीनस्येत्यराम-हरः। नपुंसक द्विवचनेऽपि कृष्णराज्ञीति पदं सम्भवेदिति शङ्कमानं प्रति ईवन्तद्विवचन-मुदाहरति—कृष्णराज्ञ्याविति। कृष्णराजा इत्यावन्तोदाहरणम्। अत्रैकवचने केवलो वा आबन्तो वेति संशये पुन द्विवचनान्तमुपन्यस्यति—कृष्णराजे कृष्णराजानाविति। प्रथममावन्तेपदम्, अपरन्तु केवलरूपम्।

सुपर्वाण इत्यत्र वरामरूपसत्सङ्गयुक्तत्वेन उद्धवहरस्यायोग्यत्वान्न ईप्। तत्र आप् पक्षे शोभनानि पर्वाणि उत्सवा यासां ताः सुपर्वाः गोप्यः। अतिपवाणीत्यत्र द्वितीया कृष्णपुरुषे भवत्येव ईप्, तत्र हेतुः—पीताम्बरे एव नियमादिति, निषेधस्येति शेषः। अत्रोद्धवहरायोग्यत्वात् अन इत्यादि विधौ निवृत्ते, ऋरामादित्यादिषु नरामान्त सामान्य-विधेरवकाश इत्याशयः।

**अमृता०**—१९९. स्वाङ्गेति। स्वाङ्गं स्वाङ्गवाचकशब्दः पूर्वं यस्य तस्मात्

---

**बाल०**—स्वाङ्ग। स्वाङ्गं पूर्वं यस्य तस्मात्। पीताम्बरे स्वाङ्गपूर्वात् क्तान्तात् लक्ष्म्यामीप् भवति। स्वाङ्गपूर्वात् जातादिक्तान्तात्तु न भवति। पूर्वोक्तं स्वाङ्गमत्रापि ज्ञेयं। उरुर्भिन्नो यस्या इति वा विग्रहः। शङ्खभिन्नीति शङ्खं भिन्नं यस्या इति। शङ्खशब्दोऽत्र मस्तकास्थिवाचको गृह्यते न। कम्बुपर्यायकः सूत्रे स्वाङ्गेत्युक्तत्वात्। केशविलूनीति केशा विलूना अस्या इति। कर्णच्छिन्नीति कर्णश्छिन्नोऽस्याः कर्णौ छिन्नावस्या वेति। एषु भिदिर् छिदिर् द्वैधकरणे लूङ छेदने इत्येतेभ्यः क्तः रदाभ्यामित्यादिना क्त-तस्य न इति। यद्यप्यनेनैव पाणिगृहीतीति सिध्येत्। तथापि शिष्टाचारानुरोधात् पाणिर्गृहीतो यस्या इति वाक्ये भार्यायां वाच्यायामेव पाणिगृहीती स्यादित्याह पाणीति। सख्यवृत्तादिना भार्याभिन्नाया अपि पाणिग्रहणं सम्भवतीत्याह पाणिगृहीतेति। जाता-देस्त्विति रूपं दर्श्यते इति शेषः। दन्तजातादिषु दन्ता जाता अस्याः, दन्ताः कृता अस्याः, दन्ता मिता अस्या इत्यादि विग्रहो ज्ञेयः। एवं दन्तनता इत्यादयोऽपि यथायथमूह्याः। दुःखादित्वादिति जातिकालसुखादिभ्यः क्तस्येत्यत्र सुखादिभ्य इत्यादिपदेन सुखादेराकृति-गणत्वात् उर्वादीनामपि सुखादित्वमित्यस्मादेभ्यः क्तस्य परनिपातः, अन्यथा क्तस्य पूर्वनिपातः स्यात्॥ १९८॥

ऊरुभिन्नी शङ्खभिन्नी केशविलुनी कर्णच्छिन्नी। पाणि गृहीतीतु भार्यायामेव। पाणिगृहीतान्यत्र। जातादेस्तु दन्तजाता दन्तकृता दन्तमिता। सुखादित्वात् क्तस्य परनिपातः।

## २००. जाते र्वा नत्वाच्छादनात्।

सारङ्गजग्धी सारङ्गजग्धा, पलाण्डुभक्षिती पलाण्डुभक्षिता, सुरापीती

---

क्तान्तात् लक्ष्म्यां पीताम्बरे ईप् स्यात्। स्वाङ्गपूर्वात् जातादेस्तु ईप् न भवति। ऊरू भिन्नौ यस्याः सा उरुभिन्नी। शङ्खो देहावयवविशेषो भिन्नो यस्याः सा शङ्खभिन्नी। केशाः विलूना यस्याः, कर्णौ छिन्नौ यस्या इत्यादि विग्रहाः। पाणि गृहीतो यस्या इति वाक्ये भार्यार्थे एव ईप्—पाणिगृहीतीति। अन्यत्र अर्थात् सख्यभावादिना पाणिग्रहणे त्वाप एवभवतीत्याचष्ठे—पाणिगृहीतान्यत्रेति। जातादयो ये क्तान्ताः, तेभ्यस्तु आप् स्यादिति दर्शयति—दन्तजातेत्यादि। सर्वत्र सप्तमी विष्णुनिष्ठेत्यादिना क्तान्तस्य पूर्वनिपाते प्राप्ते "जाति कालसुखादिभ्य" इत्यनेन यः परनिपात उपदिष्ट स्तत्रैव सुखादिषु एषां गणनात् परनिपात इत्यभिप्रायः।

**अमृता०**—२००. जातेरिति। पीताम्बरे लक्ष्म्यां जातेः परस्मात् क्तान्तादीप् स्यात्, आच्छादन वाचकाज्जातेः परस्मात् क्तान्तात्तु स न भवति। किन्तु आप भवतीत्सर्थः। सारङ्गो मृगविशेषो जग्धो यथा सा सारङ्गजग्धी, पक्षे कृष्णादाप् सारङ्गजग्धा। एवं सर्वत्र ज्ञेयम्। मासजातेति—मासी जातोऽस्या इति कालात् क्तस्य परनिपातः, मासस्य तु जातित्वाभावान्न ईवित्यर्थः। वस्त्रं छन्नं परिहितं ययेति वस्त्रच्छन्ना। अत्र वस्त्रस्य जातित्वेऽप्याच्छादन बोधकत्वान्न ईप्। नतु जातादेरिति पूर्वतोऽनु वर्त्तत इत्याह—

---

**बाल०**—जातेः। पीताम्बरे लक्ष्म्यां जातेरुत्तरस्मात् क्तान्तात् पर ईप् वा स्यात्। आच्छादनवाचिजातेस्तु परस्मात् क्तान्तान्न स्यात्। सारङ्गो जग्धो ययेति ईप् अ-इद्वयस्येत्यरामहरः, सारङ्गजग्धीति पक्षे कृष्णादाप् इत्याप् सारङ्गजग्धेति। सारङ्गश्चातके मृगे इति नानार्थवर्गात् जातित्वं प्रसिद्धं। एवं पलाण्डुर्भक्षितो ययेति पलाण्डुभक्षितीति द्वयं। पलाण्डुर्निन्द्यकन्दजातिविशेषः, पेयाज इति नीचोक्तिः। तथा सुरा पीता ययेति सुरापीति द्वयं। किमिति किमर्थं, जातेरुत्तरो यर्हि न स्यात्तर्हि न स्यात्। मासो जातोऽस्या मासजातेति। आच्छादनात्त्विति उदाह्रियत इत्यर्थः। वस्त्रं छन्नं यस्याः वस्त्रं छन्नं ययेति वा वस्त्रच्छन्नेति। वस्त्रच्छादनजातिवाचकत्वादत्र क्तान्तादीप् न स्यात्। जातेर्वेत्यत्र विशेषग्रहणाभावात् क्तान्तमात्रात् पाक्षिकेऽपि प्राप्ते भङ्ग्या वृत्तित्वेन नियमयति अजातेति। जातेरुत्तरस्मादजातादेरेव क्तान्तादीप् वा स्यादित्यर्थः। तेन वृक्षो जातो यस्या इति विग्रहे वृक्षस्य जातित्वेऽपि वृक्षजाता इत्येव। सारङ्गादीनामपि सुखादित्वमस्तीति एतेभ्योऽपि क्तस्य परनिपातः। पीताम्बराधिकारः समाप्तः॥ १९९॥

**बाल०**—परः। परः अन्यः अर्थः यत्र तत् परार्थं परार्थमेव परार्थमात्रं तस्मिन्

सुरापीता। जातेरिति किम्—मासजाता। आच्छादनात्तु वस्त्रच्छन्ना। आजादेरित्येव—वृक्षजाता। पीताम्बरो निवृत्तः।

## २०१. परार्थमात्रे।

प्रभुरयम्। समासे गुणीभूतं परार्थम्।

---

अजातादेरेवेति। जातादिरूपात् क्तान्तात्तु ईप न भवतीत्यर्थः। पीताम्बराधिकारो निवृत्तः, लक्ष्म्यां नाम्न इति तु वर्त्तत एव।

**अमृता०**—२०१. परार्थेति। परः अन्यः अर्थो यत्र तत् परार्थम्। मात्रशब्द इह साकल्ये। सर्वविधपरार्थे हि लक्ष्म्यां वर्त्तमानाः प्रत्यया भवन्तीत्यधिकार एषः। परार्थत्वं स्पष्टयति—समासेगुणीभूतमिति, अप्रधानभूतमित्यर्थः। पीताम्बरेऽपि समासे समस्तशब्दा गुणीभूता भवन्ति अन्यपदार्थं प्रधानत्वात्। तदन्यत्रापि भवन्ति, अतिगङ्गः एहीहमित्यादौ कृष्णपुरुषे दर्शितमेव। एवं सर्वत्र हि गुणीभूतार्थे समासे प्राप्त्यर्थः खल्वधिकार एष इति निष्कर्षार्थः।

---

यथास्वं प्रत्ययः स्यात्। अयमपि प्रभुनामाधिकारः। समास इति यस्मिन् कस्मिन् समासे सति केनापि यस्यार्थं गुणीभूतमप्रधानीभूतत् तत् परार्थं मित्यर्थः॥ २००॥

**बाल०**—स्वाङ्गा। परार्थामात्रे स्वाङ्गात् स्वाङ्गवाचकाच्छब्दाल्लक्ष्म्यामीप् वा भवति। सत्सङ्गोद्भवात् बहुसर्वेश्वरात् क्रोडादिभ्यस्तु स्वाङ्गेभ्य ईप् न भवति। सह नञ् विद्यमान-पूर्वेभ्यश्च स्वाङ्गेभ्य ईप् न भवति। प्राप्ते निषेधोऽयं। स्वाङ्गमत्र पूर्वोक्तं ग्राह्यं। अतिक्रान्ता केशानिति अत्यादयो द्वितीययेति समासः। गोरीप आप इति वामनः, ईप् अ-इद्वयस्येत्यरामहरः अतिकेशीति, पक्षे कृष्णादाप् लक्ष्म्यामित्याप् अतिकेशेति। कृष्णाः। श्यामवर्णाः केशा अस्या इति कृष्णकेशीति द्वयं। शोभनं मुखं यस्या इति सुमुखीति द्वयं। बहवः केशा अस्या इति बहुकेशीति द्वयं। प्रयोगे वेणी यस्याः सा प्रयागवेणीति, पक्षे प्रयोगवेणिरिति। प्रकृतिकृतेः प्राणित्वाभावेन प्राण्यङ्गस्वाङ्गमित्यस्यागमनात् तत्प्रवेशाय प्रकारमाह प्राणित्वेति। नेहेति सत्सङ्गोद्भवादित्वात्। शोभनः स्कन्धो यस्या इत्यादि विग्रहे सुस्कन्धाद्यास्त्रयः, किन्तु सुजघनेति बहुसर्वेश्वरस्योदाहरणं। सुक्रोडेति स्पष्टं। क्रोडादिगणं दर्शयति खुरेति। रूपन्तु सुखुरा सुभगा सुगुदा सुगणा, एवं क्षुद्रस्कन्धा मध्यमस्कन्धा विपुलस्कन्धा इत्यादयोऽपि यथायथं ज्ञेयाः। सहादिपूर्वाणां प्रयोगान् दर्शयति सकेशेत्यादिना। केशैः सह वर्त्तमाना सकेशेति न विद्यन्ते केशा यस्या इत्यकेशा विद्यमानाः केशा यस्या इति विद्यमानकेशा। अस्वाङ्गात्त्विति ईप् न स्यादिति शेषः। अस्वाङ्गत्वमेषाममूर्त्तिमत्त्वात् द्रवत्वात् विकारजत्वाच्च। शोभनं ज्ञानं यस्या इत्यादित्रयं। शोथो विकारजो द्रवविशेषः॥ २०१॥

## २०२. स्वाङ्गाद् वा, न तु सत्सङ्गोद्भव-बहुसर्वेश्वर-क्रोडादिभ्यो न च सह नञ् विद्यमानपूर्वेभ्यः ।

अतिकेशी अतिकेशा, कृष्णकेशी कृष्णकेशा, सुमुखी सुमुखा, बहुकेशी बहुकेशा प्रयाणवेणी। प्राणित्वोपचारात् सुमुखी प्रतिमा। नेह—सुस्कन्धा सुजघना सुक्रोडा। खुर-भग-गुद-गलादयः क्रोडादयः। सकेशा अकेशा विद्यमानकेशा। अस्वाङ्गात्तु—सुज्ञाना सुशोणिता सुशोथा।

## २०३. नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-पुच्छ-शृङ्गाङ्ग-गात्रान्त्र-नेत्र कण्ठेभ्यो न निषेधः।

---

**अमृता०**—२०२. स्वांगादिति। परार्थमात्रे लक्ष्म्यां स्वांगवाचि शब्दादीप् वा स्यात्, किन्तु सत्सङ्गोद्भवात् बहुसर्वेश्वरात् तथा क्रोडादिभ्यश्च स्वांगेभ्ये ईप् न भवति, तथा सहपूर्वात् नञ्पूर्वात् विद्यमानपूर्वाच्च स्वाङ्गात् स न भवति। अतिक्रान्ता केशान् अतिकेशीत्यादिद्वयम्। अत्यादयो द्वितीययेति कृष्णपुरुषः। कृष्णाः श्यामवर्णाः केशा अस्याः कृष्णकेशीति द्वयम् प्रयागवेणीति—प्रयाग क्षेत्रे गंगा यमुना सरस्वतीनां तिसृणां संगमः त्रिवेणीति कथ्यते; तत्र बहवः केशाः विद्यन्ते, तैर्थिकानां मण्डनविधानात्। नेहेति—सत्सङ्गोद्भवत्वान्न ईप्। सुजघनेति बहुसर्वेश्वरत्वात्, सुक्रोडेति क्रोडादित्वान्न। सकेशेति—केशैः सहवर्त्तमाना सहस्य सः। नविद्यन्ते केशा अस्याः अकेशा, नञोऽराम-शेषः। अस्वांगादिति—सुज्ञानेति ज्ञानस्य मूर्त्तिमत्त्वाभावात् तथा सुशोणितेति सुशोथेति द्वययो द्रवत्वाद् विकारत्वाच्च न स्वांगमिति ईपोऽभावे आप्।

**अमृता०**—२०३. नासिकेति। स्वांगवाचिनो ये नासिकादय स्त्रयोदशशब्दा स्तेषां लक्ष्म्यामीप् निषेधो न भवति। तत्र नासिकोदरयो र्बहुसर्वेश्वरत्वेन शेषाणां सत्संगोद्भवत्वेन निषेधे प्राप्ते तत्खण्डनरूपं विधानमिहोच्यते। ततः स्वांगाद् वेति विभाषया ईप् भवतीति फलितार्थः। तुंग नासिका यस्या इति तुंगनासिकीत्यादी। एवं पृषोदरी पृषोदरा,

---

**बाल०**—नासि। परार्थमात्रे लक्ष्म्याः नासिका उदर ओष्ठ जङ्घा दन्त कर्ण पुच्छ शृङ्ग अङ्ग गात्र अन्त्र नेत्रकः इत्येतेभ्यस्त्रयोदशसङ्ख्यकेभ्यो वैकल्प्येपो निषेधो न स्यात्। नासिकोदरयोर्बहुसर्वेश्वरत्वेन प्रतिषेधे प्राप्ते तत्खण्डनमन्येषान्तु सत्सङ्गोद्भवत्वेन। तुङ्गा नासिका यस्या इति तुङ्गनासिकीति द्वयं। एवं तुङ्गोदरी तुङ्गोदरा, बिम्बोष्ठी बिम्बोष्ठा, ह्रस्वजङ्घी ह्रस्वजङ्घा, श्यावदन्ती श्यावदन्ता, छिन्नपुच्छी छिन्नपुच्छा, वक्रशृङ्गा, विशुद्धगात्री विशुद्धगात्रा, पद्मनेत्री पद्मनेत्रा, शुष्ककण्ठी शुष्ककण्ठा इत्येते। एवं क्षुद्रनासिकी छिन्ननासिकीत्यादयः। क्षुद्रनासिकेत्यादयश्च यथासम्भवं पूर्वपदं कल्पयित्वा साधनीयः॥ २०२॥

तुङ्गनासिकी तुङ्गनासिका ।

**२०४. पुंस् शब्दात् पाण्डवे नित्यं कपं विना ।**

प्रियपुंसी प्रियपुंस्यौ । एवमतिपुंसी । यदुषु तु प्रियपुंस इत्यादि ।
कपि—प्रियपुंस्का ।

**२०५. कवर-मणि-विष-शरेभ्यः पुच्छात् ।**

कवरपुच्छी ।

---

बिम्बोष्ठी बिम्बोष्ठा, मृदुजङ्घी मृदुजङ्घा, कुन्ददन्ती कुन्ददन्ता, ह्रस्वकर्णी ह्रस्वकर्णा प्रभृतयो ज्ञेयाः ।

**अमृता०**—२०४. पुंसिति । परार्थमात्रे पाण्डवे विषये लक्ष्म्यां पुंसशब्दान्नित्यमीप्, कप्पक्षे त्वाप् इति फलितम् । प्रियः पुमान् यस्याः सा प्रियपुंसी । अतिक्रान्ता पुंमासमिति अतिपुंसी । प्रियपुंस्केत्यत्र कृष्णादाप् इत्यनेनाप् ।

**अमता०**—२०५. कवरेति । परार्थमात्रे लक्ष्म्यां कवर-मणि-विष शरेभ्य उत्तरस्मात् पुच्छशब्दादीप् नित्यमेव भवति । नासिकोदरेत्यादि मूत्रे पुच्छ ग्रहणं विकल्पार्थमिह तु नित्यतार्थमिति बोध्यम् । कवरः पुच्छे यस्याः सा कवरपुच्छी । सप्तमीविष्णुनिष्ठेत्यादिना सप्तम्यन्तस्य पूर्वनिपातस्तु न, तत्रैव दण्डहस्तादे वर्जनात्, एषामपि तदन्तःपातादिति । एवं मणि पुच्छी विषपुच्छी शरपुच्छीति च ।

---

**बाल०**—पुंस । परार्थमात्रोपण्डवे विषये कपं विना पुंस्शब्दात् लक्ष्म्यां नित्यमीप् स्यात् । प्रियः पुमान् यस्या इति प्रियपुंसीति, ब्रह्मणो द्विवचनप्रतीतिनिवृत्तर्थं प्रियपुंस्यावित्यप्युदाहृतं । एवमिति । एवम्प्रकारेण अतिक्रान्ता पुमांसमित्यतिपुंसीति । पाण्डवविषये ईब्विधानादन्यत्र न स्यादित्याह यदुषु त्विति । कपि सति प्रियपुंस्केति आवेव ॥२०३

**बाल०**—कवर । परार्थमात्रे कवर मणि विष शर इत्येतेभ्यः परस्मात् पुच्छात् लक्ष्म्यामीप् स्यात् । कवरः कर्वुरः पुच्छो यस्याः कवरः पुच्छे यस्या इति वा कवरपुच्छीति । मणियुक्तो पुच्छो यस्या इति मणिः पुच्छे यस्या इति वा । क्वचिन्मध्यलोपः प्रायोग्रहणात् क्वचिद्व्यधिकरणानाञ्चेत्येताभ्यां समासः मणिपुच्छतिच । एवं विषपुच्छी शरपुच्छीतिच । विषोऽत्र पद्मभृणालखण्डो लताविशेषखण्डो वा ॥ २०४ ॥

**बाल०**—उप । परार्थमात्रे उपमानादुत्तराभ्यां पक्षपुच्छाभ्यां लक्ष्म्यामीप् स्यात् । गरुडपक्षीति गरुडपक्ष इव पक्षो यस्या इति । एवं मयूरपुच्छी उलूकपुच्छीत्यादयोऽपि । अत्रापि पूर्ववन्मध्यपदलोपी पीताम्बरः । परार्थाधिकारेऽपि केचित् केवलबहुव्रीहावेतान् साधयन्तीति यत् तत्तु गोस्वामिपादानां नाभिमतं, पीताम्बरेणैतैषां सिद्धत्वेऽपि परार्थमात्राधिकारकरणादित्यभिप्रेयते । परार्थसमाप्तिमाह परार्थ इति ॥ २०५ ॥

२०६. उपमानात् पक्षपुच्छाभ्याम् ।

गरुडपक्षी । परार्थो निवृत्तः ।

२०७. स्वार्थे ।

प्रभुरयम् ।

२०८. अण् केशवगौरादिभ्यः ।

ईप् स्यात् । अण्—सृष्टिकारी यादवी । केशवात्—वृन्दावनचरी

---

अमृता०—२०६. उपमानादिति । परार्थमात्रे लक्ष्म्यामुपमानादुत्तराभ्यां पक्ष पुच्छाभ्यां नित्यमीप् स्यात् । गरुडस्यपक्ष इव पक्षो यस्याः सा गरुडपक्षी । एवं मयूरस्य पुच्छ इव पुच्छो यस्याः सा मयूरपुच्छीति ।

अमता०—२०७. स्वार्थ इति । नाम्नः स्वे स्वे अर्थे हि लक्ष्म्यां यथास्वं प्रत्यया भवन्तीत्यधिकारः ।

अमृता०—२०८. अणिति । स्वार्थे लक्ष्म्यां अणन्तात् केशवसंज्ञकात् गौरादेश्च शब्दादीप् स्यात् । अणिति कृत्तद्धितयोरविशेषेण हि ग्रहणमिति दर्शयति—सृष्टिकारीति द्वयेन । सृष्टिं करोतीति 'कर्मण्यनिति' अण्, तत ईप । यादवीति—यदोरपत्यं स्त्रीति केशवणो वक्ष्यते—यादवः । केशवसंज्ञकश्च कृत्तद्धितयोरेव गृह्यत इत्युदाहरणेषु सुव्यक्त-मेव, तत ईप् । वृन्दावनचरीति—अधिकरणेभिक्षा सेनेत्यादिना चरेष्टः, टित्त्वात् केशव-संज्ञः । गायनीति—"गायते स्थक-ट्णनौ" इति ट्णन् प्रत्ययः कृत, केशवत्वादीप् ।

---

बाल०—स्वा । स्वस्यार्थः स्वार्थः तस्मिन् लक्ष्म्यां विषये नाम्नो यथास्वमीप स्यात् । अयमपि प्रभुनामा ॥ २०६ ॥

बाल०—अण् । अण्च केशवश्च गौरादिश्च तेऽण्केशवगौरादयस्तेभ्यः । अण्केशवेति कृत्तद्धितयोरनियमात् अणन्तात् केशवान्ताद्गौरादेश्चोत्तरो लक्ष्मीविषयके स्वार्थे ईप् भवति । अणिति अणन्तो यथोदाह्रियते सृष्टिकारीति । सृष्टिं करोतीति कर्मण्यणित्यण् ईप् । यादवीति यदोपत्यं स्त्रीति, तेन दीव्यतीत्यतः प्रागर्थे केशवण इति णः । अस्य टित्त्वेऽप्यणं सप्राधान्यस्त्रीकारादनन्तादीप् । केशवादिति ईप् दर्श्यते इति शेषः । वृन्दावन-चरीति अधिकरणे भिक्षासेनेत्यनेन अधिकरणपूर्वात् चरेष्टः टित्त्वात् केशवत्वेनास्मादीप् । गायनीति गायतेस्थकट्, नणाविति टनण् अतोऽस्मात् टित्त्वादीप् । तर्हि कथं गाथकी भार्यार्थत्वात् । वैनतेयीति विनताया अपत्यं स्त्रीति लक्ष्मीशुभ्रादिभ्यामित्यनेन शुभ्रा-दित्वात् माधव ढः, ढ त्रय ईप् । शाक्तिकीति शक्तिः प्रहरणमस्या इति शक्तिपष्टिभ्यां ठीर्माधव इति ठीः, ठीस्त्वीक् ईप् । पठिता गीता इत्यत्रतु कृत इट् यस्य तथाविधस्य केशवत्वाभावो भवति । तस्यैव इट एव । तत्सङ्गात् केशवसङ्गत्वात् । अतएवान्त-केशवत्वाभावादीप् न स्यादिति शेषः । गर्गस्येति गार्ग्य इति, गर्गादिमाधव य इति यो वक्ष्यते । यलोप इति विष्णुजनात्तद्धितस्य हर इत्यनेन गार्गीति । एवं वात्सीति च ॥ २०७ ॥

गायनी वैनतेयी शाक्तिकी। पठिता गीतेत्यत्र तु कृतेटः क्तस्य केशवत्वा-भावः, तस्यैव तत्संज्ञत्वात्। गर्गस्य स्त्र्यपत्यं गार्ग्य ईप् इति स्थिते यलोपः, गार्गी वात्सी।

## २०६. गार्गी प्रभृते र्गार्ग्यायण्यादयो वा।

---

वैनतेयीति—विनताया अपत्यं स्त्रीति शुभ्रदित्वाद् माधव ढ, ढएयः, ततईप्। टणित् माधव इति टित्त्वधर्मेण माधवस्यापि केशवत्वम्। शाक्तिकीति—शक्तिः प्रहरणमस्या इत्यर्थे माधव ठः, ठ इकः, तत ईप्।

पठिता गीतेत्यादि—कृत इट् यस्य स कृतेट्, तथाभूतस्त क्तस्य तु केशवत्वाभावः। तत्र हेतुः—तस्यैवेत्यादिः। तस्यैव इट एव केशवसंज्ञत्वादित्यर्थः। टिदागमस्य प्रत्यय-सम्बन्धितया क्तप्रत्ययस्य सम्बन्धी ह्ययमिडिति क्तस्य च केशवत्वप्राप्त्याशङ्कायां जातायां तत् परिहाराय सिद्धान्त एषः। स च केशवसंज्ञक इट् क्तप्रत्यात् पूर्वमेव निरूप्यते नपुनः क्त प्रत्ययोत्पत्तेः पश्चादिति तत्संज्ञत्वाभावादिह न ईविति भावः। गार्ग्य ईविति—गर्गादे र्माधव य इत्यनेन गार्ग्यः। यद्यपि गोत्रापत्ये हि यरामोऽयं विधास्यते तथापि केवलापत्ये च गोत्रोपचारेण गोत्रप्रत्ययः स्यादिति व्यक्तं भावि तत्रैव। यलोप इति—विष्णुजनात्तद्धित यस्य हर इत्यादिनेति शेषः। एवं हि वात्सीति।

**अमृता०**—२०६. गार्गीति। गार्गी प्रभृतेः स्थाने गार्ग्यायण प्रभृतयः प्रयोगाः फ-ईप् प्रत्ययाभ्यां विकल्पेन निपात्यन्ते। पक्षे गार्गी प्रभृतयश्च तिष्ठन्तीत्यर्थः। फ आयनः।

---

**बाल०**—गार्गी। गार्गीप्रभृतेः स्थाने गार्ग्यायण्यादयः प्रयोगा ईवन्ता यन्प्रत्ययान्ताः वा निपात्यन्ते। निपातसामर्थ्यात् अ-इद्वयस्येत्यनेन गार्ग्या ईरामहरो न स्यात्। गार्ग्यायिनी वात्स्यायनीत्यादि। पक्षे गार्गी वात्सीत्यादयोऽपि तिष्ठन्ति। नन्विदं न सूत्रं किन्तु वक्ष्यमाणस्यैव सूचनं साधुनिपातादिप्रयोगाभावात्। वक्ष्यमाणप्रकारस्त्वेवं। इ याभ्यां नृसिंहाभ्यां गोत्रप्रत्ययाभ्यां क्षराम इति फस्तस्यायनः। गोत्रं प्रशंसायां युवा वेत्यनेन गोत्रस्यैव विकल्पयुवातिदेशेन पुरुषोत्तमे यद्रूपं दर्शयिष्यते तस्यैव लक्ष्मीत्वाय इदमत्रोक्तं। तेन या गार्गी सैव गार्ग्यायनी, एवं वात्स्यायन्यपि, किन्तु विष्णुजनात्तद्धितेत्यत्र भगवत्या-रामं विनेत्यनेनारामवर्जनात् यस्य हरो न स्यात्। मैवं। तथा सति गार्गीप्रभृते-रित्यनुक्त्वा गार्ग्यप्रभृतेरित्युक्तं स्यात्। साधुनिपातादिप्रयोगाभावस्तु न दोषः, आचार्याणां वक्रोक्तिः शिष्याणां हितायेति शिष्टाचारात्। अतएव साधुनिपातादयोऽत्र परिकल्पनीयाः॥ २०८॥

**बाल०**—माध। माधवीप्रभृतेर्माधव्यायन्यादयस्तु प्रयोगा ईवन्तायनप्रत्ययान्ता नित्यं यथा स्यात्तथा निपात्यन्ते। पूर्वत्र सूत्रे गार्ग्यादेर्यरामसद्भावेन कष्टकल्पना सम्भवति। अत्रतु मध्वादेर्यरामाभावात् कष्टकल्पनाया नावकाश इति सूत्रद्वयं निपातमेवेति निश्चीयते। मधोस्त्र्यपत्यमित्यादौ वाक्ये माधव्यायन्यादयः। माधव्या ईरामहराभावः पूर्ववत्। एते

गार्ग्यायिणी वात्स्यायनी।

## २१०. माधव्यायन्यादयो नित्यम्।

अयं विमर्श:—इयाभ्यां नृसिंहाभ्यां गोत्र प्रत्ययाभ्यामित्यादिना युवापत्याथ फप्रत्ययो विधास्यते, तत्र च गर्गस्य गार्ग्यस्य वा युवापत्यं स्त्रीत्यर्थे गार्ग्यायिणीत्यादि सिध्यत्येव, किन्तु तदर्थं इह न विवक्षितः, स्वार्थप्रत्ययानुरोधात्। तस्मात् यथा गर्गस्य स्त्र्यपत्यं गार्गीति, तथैव गर्गस्य स्त्र्यपत्यं गार्ग्यायिणीति प्रयोगार्थ एष निपात इति निष्कर्षः। विष्णुजनात्तद्धितयस्यहरो भगवत्यारामं विनेति आरामवर्जनादिह न यरामहरः। प्रभृतिपदं गर्गादि गंण मपेक्षते, तेन व्याघ्रपादी व्याघ्रपाद्यायनी, आगस्ती आगस्त्यायनी प्रभृतय उन्नेयाः।

**अमृता०**—२१०. माधव्यायनीति। माधवी प्रभृति स्थाने माधव्यायनी प्रभृतयः प्रयोगाः फ ईप् प्रत्ययाभ्यां नित्यं निपात्यन्ते। मधोः स्त्र्यपत्यमित्याद्यर्थे माधव्यायनी-

युवप्रत्ययान्तसदृशाः। तस्मिन् विषये माधवीप्रभृतयस्तु तद्धितबाहुल्यात्। अनेन निपातेन विरोधप्राप्तेर्मयैतदुक्तमन्ययतु बहुलं विनैव ज्ञेयाः। गौरेति यथायोग्यं गौरादेरूपाणि दर्श्यन्ते। स्वार्थप्रत्ययानां वाक्यासङ्गतेर्वाक्यं विनैव गौर्यादयश्चिरण्ट्यन्ता अष्ट प्रयोगा दर्शिताः। अष्टवर्षा भवेद्गौरीत्युक्तदिशा गौरादेरसाधारणलक्षणमाह अचरमेति। सर्वेऽचरमवयस्का नव्यवयस्का गौरादयः स्युरित्यर्थः। तथेति तथा पूर्वोक्तप्रकारेण गौरादेराकृतिगणत्वात् सखिशब्दादीप् सखीत्यादि। सह खेन वर्त्तते या सापि सखीति न्यासकारसम्मतं। एकेषां मतेनैव कानिचिदुदाहरणानि दर्शयति अशिश्वीति। अशिश्वयाद्या अनड्वाह्यन्ताः सप्तदशगौरादित्वेन ईबन्ता भवन्तीत्यन्ये पण्डिता वदन्तीत्यर्थः। शिशुना विना शिशुराहित्ये न विद्यते शिशुर्यस्या इति व्युत्पत्त्या नवीनावस्थाप्रतीतेरशिशु-शब्दादीप्। उद्वयम्य गोविन्द इत्यत्र स्त्रीप्रत्ययवर्जनान्नात्र गोविन्दः अशिश्वीति। वर्याँभ्वाति संज्ञा। वर्षाभ्वा कमठी दुलीत्यमरशासनात्। एतन्मते पुत्रशब्दोऽत्र दुहितृवचन इतीप् पुत्रीति, येतु दुहितृवचनं नेच्छन्ति तन्मते पुत्रान्न लक्ष्मीप्रत्यय इति। शवल्या-दयश्चत्वारः प्रत्येकं गुणविशेषयुक्ताः। मातामह्यादयस्तु प्रसिद्धाः। इदानीमर्थविशेषेषु तु वर्त्तमानाः कतिचित् गौरादित्वेन ईप्सिद्धा इत्याह तथेति। नागी। स्थूलायां वाच्यायां तथा गौरादित्वेन नागशब्दादीप् नागीति। एतदादीनि गौरादेः प्रपञ्चलक्षणानि। तथा-शब्दस्यतु सर्वत्रैवान्वयः। नागशब्दोऽयं यदा स्थौल्यगुणमभिधाय तद्वति द्रव्ये वर्त्तते तदा नागीति। नागस्यैव गुणयोगात् स्थौल्यवत्यभिधीयत इत्यन्ये। यदातु दैर्घ्ये गुणे वर्त्तमानो नागशब्दो द्रव्ये वर्त्तते तदा नागा इत्येव। यदा त्वयं नागशब्दो जातिवाची तदास्मात् अरामान्तजातेरित्यनेन ईप् स्यात्। काली। कृष्णायां वाच्यायां तथा गौरादित्वेन कालशब्दादीप् कालीति। अत्रापि वर्णः प्रवृत्तिनिमित्तमित्ययं कृष्णवर्णमुक्त्वा तद्विशिष्टायां वर्त्तते। यदृच्छाशब्देतु काला इति। नीली। वडवौषध्योर्व्याच्ययोस्तथा गौरादित्वेन नीलशब्दादीप् नीलीति। वडवा घोटकी औषधिः प्रसिद्धा आभ्यामन्यत्र नीला शाटी।

**गौरादेः—गौरी कुमारी किशोरी तरुणी वर्करी कलभी वधूटी चिरण्टी। अचरमवयस्काः सर्वे गौरादयः। तथा सखी इत्यादि। अशिश्वी शिशुना विना, वर्षाभ्वी पुत्री कल्माषी शवली पिशङ्गी सारङ्गी पाण्डरी**

---

त्यादयएव नतु माधवीत्यादयः। अत्रापि पूर्ववदर्थ विशेषे हि निपातः। मधु वभ्रो र्ब्राह्मण कौशिकयो रित्यनेन मधु शब्दाद् यण्—माधव्यः, ततः फ ईप् च। आदिपदेन वाभ्रवायणी लौहित्यायनी कात्यायनी सांशितायनी शाकल्यायनीत्यादयः। अत्र स्त्र्यपत्ये हि नित्यं निपातिताः, अन्यत्र माधवस्य भार्या माधवीत्यादयोऽपि वक्ष्यन्ते।

---

संज्ञायां वाच्यायां तथा गौरादित्वेन नीलशब्दादीप् नीलीति पक्षे नीलाच। ग्रन्थकृतां स्वारस्यादत्र नीलशब्दः पाक्षिकगौरादिको लक्ष्यते, नीली नोलाच काचिद्विशेषौषधिः। कुण्डी। पत्रे वाच्ये तथा गौरादित्वेन कुण्डशब्दादीप् कुण्डीति। अन्यत्र कुण्डा जारजा। अभृते जारजः कुण्डो मृते भर्त्तरि गोलक इत्यमरात्। यदा त्वयं कुण्डशब्दो देवनिर्माण-जलह्रदवाची तदा कुण्डं ब्रह्मेति। स्थली। पुरुषव्यापारेण अनभिनिवृत्ता या सा भूमिर-कृत्रिमा तस्यां वाच्यायां तथा गौरादित्वेन स्थलशब्दोदीप् स्थलीति कृत्रिमायान्तु स्थला इति। देवस्थली चाल्पत्वविवक्षायामित्येके। भाजी। श्राणायां पक्वायां वाच्यायां तथा गौरादित्वेन भाजशब्दादीप् भाजीति। भज विश्राणे चुरादिण्यन्तः पचाद्यत् णेर्हरः भाज इत्यस्मादत्रेप् नतु सेवनार्थघणन्तभाजशब्दात्। यदि सेवनार्थभजधातुर्ण्यन्तादस्तस्तदा भाजा इति कुशी। लौहविकारे वाच्ये तथा गौरादित्वेन कुशशब्दादीप् कुशीति। यद्यपि सामान्येन लौहविकार इत्युक्तं। तथापि लाङ्गलाग्रवर्त्तिलौहविकारोऽत्र ग्रहणीयो नान्यः। कुशी फले इति लौकिकव्यवहारात्। काष्ठादिनिर्मिततदाकृतौतु कुशा इति। कामु। मैथुनविषयेच्छौ वाच्यायां तथा गौरादित्वेन कामुकशब्दादीप् कामुकीति। अन्य-विषयेच्छौतु कामुका इति। गोणी। यत्र धान्यादिकं निक्षिप्य नीयते तत् पात्रविशेष आवपनं तस्मिन् वाच्ये तथा गौरादित्वेन गोणशब्दादीप् गोणीति। अन्यत्रतु गोणा इदं याद्दच्छिकं नाम। कव। केशवेशे वाच्ये तथा गौरादित्वेन कवरशब्दादीप् कवरीति। अन्या कवरा कर्वुरेत्यर्थः। तथाच। व्याकीर्णमाल्यकवरां कवरीं तरुण्या इति माघः ५-१९ तत्र नागकालस्थलभाजकुशगुणकवराणां स्थूलादिभ्योऽन्यत्र स्त्रियां वृत्तिरेवाप्रसिद्धा तदेषामुपाधिवचनमनर्थमात्रफलमेवातिद्दश्यत इति विनीतः। नागकालस्थलभाजकुशगुण-कवराणां व्यावृत्तौ यद्दच्छाशब्दत्वं द्रष्टव्यमिदितु केशवः। इत्यादीत्यादिपदेन कटी श्रोण्यां, रेवती रोहिणीनक्षत्रे इत्यादयोऽपि शिष्टप्रयोगानुसारेण ज्ञेयाः। एताभ्यामन्यत्रतु कटा रेवता रोहिणा इति। इत्येवं कियदुक्त्वा गौरादेरपरिमितत्वाद्ग्रन्थबाहुल्यभिया सर्व-संग्राहकोपायमाह गौरादिरिति। आकृत्या साद्दश्या गण्यतेऽसावित्याकृतिगणः। अतएव यत्र यत्रेवन्तलक्ष्मीर्द्दश्यते प्रकारान्तरेण साधयितुं न शक्यतेच, तत्र तत्रेममुपजीव्य साधनीयेति। यद्यप्याकृतिगणग्राह्यत्वाद्गोस्वामिचरणैरन्तर्गणो नोदितस्तथापि शास्त्रान्त-रात् कांश्चिदुद्धृत्य योजयामि। (मुग्धबोध-कारक-श्रीरामतर्कवागीशटीकातः संगृहीतः)।

मातामही पितामही तन्वी हयी गवयी शुनी चौरी अनुडुही । अन-
ड्वाहीत्येके । तथा नागी स्थूलायां, काली कृष्णायां, नीली वडवौषध्योः
नीली नीला च संज्ञायां, कुण्डी पात्रे, स्थली अकृत्रिम भूमौ, भाजी
श्राणायां, कुशी लौहविकारे, कामुकी मैथुनेच्छौ, गोणी आवपने, कवरी

---

अष्टवर्षा भवेद् गौरीत्युक्तदिशा गौरादे र्विशेषलक्षणमाह—अचरमवयस्का इति । यौवनात् पूर्वावस्थाभाज इति भावः । गौरादेराकृतिगणत्वात्, अचरम वयस्कत्वलक्षणा-भावेऽपि सखि प्रभृतिभ्यश्च ईप् स्यादित्युदाहृतम् । अशिश्वी प्रभृतयश्च अनडुह्यन्ता गौरादित्वेन खल्वीवन्ता इति दर्शयति—शिशुना विनेत्याषु । अशिश्वी अपुत्रवतीभार्या इत्यर्थः । केचित् पुनरर्थविशेषे हि गौरादय इत्युदाहरति—नागोत्यादीन्यासमाप्ति । स्थूलायां नागी गौरादिरित्यन्वयः । अन्यत्रतु नागा । सर्पवाचित्वे—अरामान्तजातेरित्या-दिना ईप् भवत्येव । कृष्णवर्णार्थे काली, अन्यत्र तु काला, एवं सर्वत्र बोध्यम् । करणेन निर्वृता कृत्रिमा, न कृत्रिमा अकृत्रिमा अर्थात् स्वाभाविकी या भूमिः सा स्थलीत्युच्यते, यथा वृन्दावने रासलीलास्थलीति । श्राणायां पक्वायां भाजीत्येव । गोणी आवयनै रज्वादिनिर्मितशस्याधार इत्यर्थः । इत्यादिना पृथ्वी भूमौ, अन्यत्रतु पृथु पृथ्वीति—

---

"नदयददेहं तरदरचौरं देवगरौ पुरतटनटकेलं ।
अनडुत्कोलमहद्बृहद्दष्यं गवयः सूकयमत्स्यमनुष्यं ।
देहलगडुजं मण्डपमण्डं निष्कलवकुलं पुष्कलपिण्डं ।
गाह पृथु प्लव शठ भष सूचं केकयपृथिवं भोटपिशङ्गं ।
पाण्डरगौरं पुत्रानन्दं शस्कुलकुवलद्रोणतर्कारं ।
कन्दरकदरामलकाम्बूयं वदरो धातकबल्लकपूपं ।
नाटमठाढकमालतसूपं पिप्पलवेतसकल्ललविल्वं ।
अरटमारटपटसुष्कन्दं द्रोणपुणौ कलकाकिणपात्रं ।
बृषशशकाकलकदलकवाटं कोषातक पुटमतसवराटं ।
शल्लकः मण्डलकूटमृनाटं सूद्ध्वंहरीतकगूर्द्धसृपाटं ।
शृङ्गविभीतकमाकलसन्दं वयसि किशोरस्तरुणचिरिन्टं ।
वर्कर तनुन कुमार वधूटं शल्लककेसलभेषजपापं ।
सातङ्गावरभोगसमानं रेचकदेवकभिक्षुकवर्गं ।
कुवलसृपाटं पुनरासन्धं गौरादिकगणे कविभिर्गीतं ॥"

अस्वार्थे त्विति रूपं दर्श्यते । प्राप्तो वृन्दावनचरो ययेति, प्राप्तवृन्दावनचरा । इत्यादीत्यादिपदेन प्राप्तयामुनेत्यादयोऽपि ॥ २०८ ॥

बाल०—नृसि । नृसिंहनस्नाभ्यां क्वरवन्ताच्च लक्ष्म्यामीप् स्यात् । स्त्रिया जिता स्त्रैणीति पुंसा जिता पौंस्नीति स्त्रीपुम्भ्यां नृसिंहनस्नाविति वक्ष्यते । इत्वरीति इन-

केशवेशे इत्यादि। गौरादि राकृतिगणः। अस्वार्थेतु—प्राप्त वृन्दावन-चरेत्यादि।

**२११. नृसिंह न-स्नाभ्यां क्वरपश्च।**

ईप् स्यात्। स्त्रैणी पौंस्नी इत्वरी।

**२१२. सदृशादिभ्यश्च।**

सदृशी यादृशी।

**२१३. शोण चण्ड-उपाध्याय-विशालाराल-विकट-विशङ्कट-कृपण-पुराण-उदार कल्याणादि र्वा गौरादिः।**

---

उरामान्तगुण वचनादिति विभाषा। समानी छन्दसि, मामको देवतायां: कटी श्रोण्यां, रेवती रोहिणी नक्षत्रे। प्राचीन निर्दिष्टो गौरादेर्गणस्तु परिशिष्ठे द्रष्टव्यः।

**अमृता०**—२११. नृसिहेति। स्वार्थ नृसिंह न प्रत्ययान्तात्, नृसिंह स्नप्रत्ययान्तात् तथा क्वरप् प्रत्ययान्ताच्च नाम्नो लक्ष्म्यामीप् स्यात्। स्त्रिया जितः स्त्रैणः, पुंसा जितः पौंस्नः। स्त्रीपुंसाभ्यां नृसिंह न-स्नौ वक्ष्येते, तत ईप्। इत्वरीति—इन् नश जि सर्त्तिभ्य इति क्वरप् कृत् तत ईप्। एवंनश्वरी जित्वरी सृत्वरीति च।

**अमृता०**—२१२. सदृशेति। सदृशादिभ्यश्चोत्तरे स्वार्थे लक्ष्म्यामीप् स्यात्। सदृशीति—समानेकर्मणीत्यादिना कक्विप् सक इति त्रयाणामेव ग्रहणं, तेन सदृक्षीत्यादयश्च। एते च गौराद्यन्तर्भुक्ताः।

**अमृता०**—२१३. शोणेति। शोणप्रभृतयस्तु विभाषया गौरादौ पठचन्ते, ततश्चेप् वा स्यात्, पक्षे अजादेरित्याप्। एवं चण्डी उपाध्यायी विशाली अराली विकटी विशङ्कटी

---

नश-जि-जि-सर्त्तिभ्य इत्यनेन इन गतावित्यस्मात् क्वरप् वामनात्तुगिति तुक् ईप्। एवं नश्वरीत्यादि ॥ २१० ॥

**बाल०**—सदृशादिभ्यो लक्ष्म्यामीव्भवति। समाने कर्मण्यन्यतदादिषुच कर्मोपमानेषु दृश इत्यनेन दृशधातोः कत्क्विवादि। समानः दृश्यतेऽसौ सदृशी य इव दृश्यतेऽसौ यादृशीत्यादि। एतेऽपि गौराद्यन्तर्गणाः ॥ २११ ॥

**बाल०**—शोण। शोणादिर्गौरादिवा भवतीति पक्षेऽस्मादीप् स्यात्। शोणेत्यजादित्वादाप्। इत्यादीत्यादिपदेन चण्डी चण्डा, उपाध्यायी उपाध्याया, विशाली विशाला, अराली अराला, विकटी विकटा, विशङ्कटी विशङ्कटा, कृपणी कृपणा, पुराणी पुराणा, उदारी उदारा, कल्याणी कल्याणेति। सूत्रस्थादिपदादन्येऽप्यूह्याः ॥ २१२ ॥

**बाल०**—कर। करणपूर्वात् क्रीतात् नाम्नो लक्ष्म्यामीप् स्यात्। विशेषेप्प्रत्ययस्यायं विषयस्तेन। वस्त्रेण क्रीत इति विग्रहे कर्त्तृकरणे कृतेत्यनेन प्रथमतः समासस्ततः

शोणी शोणेत्यादि ।

२१४. करणपूर्वात् क्रीतात् ।

वस्त्रक्रीती । कृत्समासएवेष्यतइति वामनः । आवन्तेन तु समासे धन-क्रीतेत्यादि ।

---

कृपणी पुराणी उदारी कल्याणी । पक्षे चण्डा उपाध्ययेत्यादयश्च । आदिपदेन भरुज ध्वज प्रभृतयश्च ।

अमृता०—२१४. करणेति । करणेति । करणं पूर्वं यस्य तादृशात् क्रीतशब्दात् लक्ष्म्यामीप् स्यात् । वस्त्रक्रीतीति—वस्त्रेण क्रीयते स्म इति कर्त्तृकरणे कृतेत्यनेन क्त-प्रत्ययोत्पत्तिकाले हि समासः । एतच्च वामनमतेन पुष्णाति—कृत्समास एवेष्यत इति । गतिकारकोपपदानां कृद्भिः सह समास ववनं प्राक् सुबुत्पत्ते रिति प्राचीन परिभाषया करण कारकस्य च कृता समासः कृदुत्पत्तिसमकालेहि कर्त्तव्य इत्यभिप्रायः । ननु तर्हि आवन्तेन सह पश्चात् समासो न कार्य इति शङ्का चेत्तदाह—आवन्तेन त्विति । प्राचीनैस्तु तत्र कर्त्तृकरणे कृता बहुलमिति बहुल ग्रहणेन, परिभाषायाश्च तस्या अनित्यताप्रतिपादनेन च जातस्वादिभिरपि कृद्भि स्तेषां समास इष्ट इत्थंसमाहितम् । अतएवास्मद्ग्रन्थकृद्भिश्च तत्र चक्रच्छिन्न इत्याद्युदाहृतमिति कृता सुबुत्पत्तेः प्राक् पश्चाद् वा समासोऽभिप्रेत इति दिक् ।

---

समासनिष्पन्नात् करणपूर्वात् क्रीताद्बुद्धिस्थलक्ष्मीवाच्यतायामीप् वस्त्रक्रीतीति । एतत्-स्वाभिमतपरिपोषाय वामनमतमुत्थापयति कृतेति । कृतसमासे प्राङ्निष्पन्नसमासे सत्येवेष्यते करणपूर्वक्रीतादीविति वामन आह । अश्वक्रीतीति अलुग्विषये मनसाक्रीतीतिच जुमरः । ननु धनेन क्रीतेति विग्रहे वनक्रीतीति कथं न स्यात्, नाम्नो ग्रहणे लिङ्गविशिष्टस्य ग्रहणमिति न्यायेन करणपूर्वक्रीतस्य सम्भवादिति प्रश्ने समादधाति आवन्त इति, आवन्तेन सह करणस्य समासे सति धनक्रीतेत्यादि नतु धनक्रीतीत्यादि । अवन्तत्वेनैव लक्ष्मीत्व-प्रतीतेः । किञ्चायमभिप्रायः । करणादिति पञ्चम्यन्तनिर्देशेनापि करणपूर्वादिति लब्धे यत् करणपूर्वादिति कृतं तत् पूर्वशब्दस्यात्रावयववाचित्वसूचकार्थं । तेनायमर्थो भवति । करणमेव पूर्वावयवो यस्येति करणपूर्व एतादृशात् क्रीतादिति पुरुषोत्तमनिर्देशो धनक्रीते-त्यादौ करणपूर्वावयवत्वेऽप्यावन्तादीपं वारयति । करणपूर्वावयवेति विशेषव्याख्यानेन कृतसमासक्रीतादीविंतिच विज्ञापितं । करणपूर्वादिति किं सुक्रीतेति । एवं धनसुक्रीतेतिच सुब्व्यवधानेन केवलकरणपूर्वावयवत्वाभावात् ॥ २१३ ॥

बाल०—कर । करणस्याल्पत्वविवक्षायां सत्यां करणपूर्वात् क्तान्ताल्लक्ष्म्यामीप् स्यात् । अत्रापि करणपूर्वादिति पूर्ववत् । किञ्च, करणपूर्वादिति पूर्वसूत्रादनुवर्त्तितुं शक्येऽपि यत् करणपूर्वादिति कृतं तज्ज्ञापयति शास्त्रेऽस्मिन् यत्र यत्राधिकारो नास्ति, तत्र तत्र पूर्वसूत्रात् प्रायो नानुवर्त्तते इति पुनः पुनर्ग्रहणं, यत्र यत्राधिकाराभावेऽपि कदा-चिदनुवर्त्तते तत्र तत्रतु स्वयं ग्रन्थकृतोक्तं वक्ष्यते चेति ज्ञेयं । चन्दनेन लिप्त इति विग्रहे

## २१५. करणपूर्वात् क्तादल्पाख्यायाम् ।

चन्दनलिप्ती हरितनुः; अल्पचन्दनलिप्तेत्यर्थः ।

## २१६. प्रायेणाल्पत्वविवक्षायाम् ।

अल्पं छत्रं छत्री । एवं पात्री मृणाली घटी दण्डीत्यादि ।

## २१७. त्रिराम्याः ।

---

**अमृता०**—२१५. करणेति । अल्पत्वविवक्षाया करणपूर्वात् क्तान्तशब्दात् लक्ष्म्यामीप् स्यात् । करणपूर्वादिति पूर्वतोऽनुवर्त्तमानेऽपि पुनरुक्तिः स्पष्टार्था । चन्दनेन लिप्यते स्म, चन्दनेन लिप्ता इति वा विग्रहे पूर्ववत् समासः । एवं मधुलिप्ती द्यौः, क्षीरलिप्ती पात्रीत्यादि च ।

**अमृता०**—२१६. प्रायेणेति । प्रायेण बाहुल्येन अल्पत्वविवक्षायां नाम्नो लक्ष्म्यामीप् भवति । स्पष्टान्येवोदाहरणानि ।

**अमृता०**—२१७. त्रिराम्या इति । अधिकारसूत्रं विधिसूत्रञ्चेदमित्याह—प्रभुश्चायमिति चकारेण । त्रिरामीति—त्रयाणां रामाणां समाहार इत्यादि विग्रहे—दिक्

---

पूर्ववत् कृतसमासान्तात् क्तान्तादीप् चन्दनलिप्तीति । लिप उपदेहे क्तः लिप्तः । स्वयमर्थमाह अल्पेति । अल्पेन चन्दनेन लिप्तेत्यर्थः । आवन्तेन त्विति पूर्वोक्तदिशा भङ्ग्या अल्पेति प्रत्युदाहरणञ्च दर्शितं । अल्पाख्यायामिति किं चन्दनानुलिप्ता हरितनुरिति । करणेन सहाल्पाख्याया योगाभावेतु हरितनोरल्पता स्यात्, साच न घटते सम्भवाभावात् ॥ २१४ ॥

**बाल०**—प्राये । प्रायेण बहुल्येन लक्ष्म्यामल्पत्वविवक्षायां नाम्न ईव्भवति । अल्पमिति अल्पं पात्रं पात्री, अल्पं मृणालं मृणाली, अल्पो घटो घटी अल्पं दण्डं दण्डी । इत्यादीत्यादिपदेन अल्पं पत्रं पत्रीत्यादिच । ( सुवनी सम्प्रवदत्पिकापि का इति नैधधे ) ॥ २१५ ॥

**बाल०**—त्रिरा । त्रिराम्या लक्ष्म्यामीव्भवति । प्रभुश्चायमित्यत्र चशब्दस्य समुच्चयार्थत्वात् । अयमधिकारो विधिश्चेत्यर्थः । एकस्योभयलिङ्गत्वे संयोगपृथक्त्वमित्युक्तमत्र स्मर्त्तव्यं । त्रिरामीति । त्रयाणां रामाणां समाहार इति त्रयो रामाः समाहृता इति वा विग्रहे दिक्सङ्ख्ये तद्धितेत्यनेन समाहारः अरामान्ता त्रिरामीरित्यनेन लक्ष्मीत्वेऽस्य विधिसूत्रत्वांशेन ईप् । एवं पञ्चानामध्यानां समाहारः पञ्चाध्यायीति । त्रयाणां फलानां समाहारः त्रिफलीति । यदा रामाशब्दादीनां समाहारस्तदा आवन्ता वेत्यनेन पाक्षिकलक्ष्मीत्वात् त्रिरामीत्रिराममित्यादि । धात्र्येति । संज्ञाशब्दानां यथाकथञ्चिदित्युक्तानुसारेण त्रिरामीसमासे कृतेऽपि संज्ञाशब्दात् त्रिफलेत्यत्र धात्र्यादिके वाच्येऽजादेराप् इत्यनेनावेव त्रिफलेति ओषधिविशेस्य संज्ञा प्रसिद्धा ॥ २१६ ॥

प्रभुश्चायम् । त्रिरामी पञ्चाध्यायी त्रिफली । धात्र्यादिके तु त्रिफलैव ।

## २१८. परिमाणादसंख्या काल विस्ताचित कम्बल्यात्तद्धितमहाहरे, काण्डादक्षेत्रे, पुरुषाद् वा ।

क्रीतार्थे तद्धितलुक् द्व्याढकी । परिमाणात् किम्—पञ्चाश्वा । असंख्यातादेः किम्—द्विशता द्विवर्षा द्विविस्तेत्यादि । विस्ताचितौ हेमपरिमाण

---

संख्येत्यादिना त्रिरामी समासः । अरामान्ता त्रिरामी लक्ष्मी रित्यनेन लक्ष्म्यां सत्यां त्रिराम्या ईविति यदुक्तं तत्तु एतद् विधानमपेक्ष्यैवेति बोध्यम् । त्रिरामीत्वेऽपि संज्ञा विवक्षायान्तु ईवेव भवतीति न तन्त्रमित्याह—धात्र्यादिकेत्विति । त्रिफला औषधभेदस्य हि संज्ञेति प्रसिद्धम् ।

**अमृता०**—२१८. परिमाणादिति । त्रिराम्यां तद्धित महाहरे सति संख्या काल बिस्ताचितकम्बल्यवर्जितात् परिमाणवाचकात् लक्ष्म्यामीप् स्यात् । अक्षेत्रे वाच्ये काण्ड-परिमाणादीप् स्यात्, तथा पुरुष परिमाणात्तु लक्ष्म्यामीप् वा भवति । क्रीतार्थे तद्धित लुगिति—अध्वर्द्धपूर्वात् त्रिराम्याश्चार्हीयस्य महाहरः संज्ञायामित्यनेनेति शेषः । द्व्याढकीति—द्वाभ्यामाढकाभ्यां क्रीतेत्यर्थे ठः तस्य च महाहरः, तत ईप् । तद्धितार्थे

---

**बाल०**—परि त्रिराम्यां तद्धितमहाहरे सति सङ्ख्याकालविस्ताचितकम्बल्यवर्जितात् परिमाणवाचकाल्लक्ष्म्यामीप् । अक्षेत्रे वाच्ये काण्डपरिमाणाच्च ईप् स्यात् । पुरुष-परिमाणात्तु ईव् वा स्यात् । परिशब्दः सर्वतोभावे वर्त्तते । परिमीयते येन तत् परिमाण-माढकादि । क्रीतार्थे इति अध्यर्द्धपूर्वात् त्रिराम्याश्चार्ही यस्य महाहरो संज्ञायामित्यनेनात्र तद्धितलुक् । द्वाभ्यामाढकाभ्यां क्रीतेति तद्धितार्थे त्रिरामी कृतार्थठस्य महाहर ईप् । द्व्याढकीति । सङ्ख्यायाः परिमाणग्रहणे न गृह्यते तेन द्वे पले परिमाणमस्या द्विपलीत्याद्यपि । परिमाणेति परिमाणं यर्हि न स्यात् तर्हि किं स्यात् । पञ्चाश्वेति पञ्चभिरश्वैः क्रीतेति पूर्ववत् तद्धितार्थे त्रिरामी ठप्रत्ययस्य हरश्च किन्त्वश्वशब्दस्य परिमाणवाचकत्वाभावादीप् न स्यात् । अजादित्वात्तु आप् भवेदेवेति । असङ्ख्येति सङ्ख्यादिर्यर्हि स्यात्तर्हि किं स्यात् । द्वाभ्यां शताभ्यां क्रीतेति पूर्ववद्द्विशतेति । द्वयो-र्वर्षयोर्जातादि द्विवर्षेति द्वौ विस्तौ परिमाणमस्या द्विविस्ता । इत्यादीत्यादिपदात् द्व्याचितेति । विस्तादित्रयाणां परिमाणत्वं प्रतिपादयति विस्तेति । हेमेति सुवर्णं । ऊर्णेति मेषादिलोम । द्वाभ्यां कम्बलाभ्यां क्रीतेति द्विकम्बल्या पूर्ववत् । विस्तं तोलक-द्वयमिति कश्चित् । काण्डादिति रूपं दर्श्यते । द्वे काण्डे इत्यनेन विग्रहः षोडशेत्यनेन षोडशेत्यनेन प्रमाणवाचित्वञ्च दर्शितं । द्वे काण्डे प्रमाणमस्या इति मात्रट्प्रत्ययस्य महाहरः द्विकाण्डीति । क्षेत्रे त्विति क्षेत्रे वाच्येतु पूर्ववद्विग्रहे द्विकाण्डेति । पुरुषादिति रूपं दर्श्यते । पुरुषशब्दोऽत्र पुरुषप्रमाणवाची नतु पुंजातिवाचीति । द्वौ पुरुषौ प्रमाण-मस्या इति पूर्ववन्मात्रट्महाहरः द्विपुरुषीति द्वयं । अधिकारं निवर्त्तयति त्रिरामीति ॥२१७

भेदौ। कम्बल्यं ऊर्णापलशतं दिकम्बल्या। काण्डात्— द्विकाण्डे परिमाणे यस्याः, षोडशहस्त वाचि काण्डम्—द्विकाण्डी तुलसी। क्षेत्रेतु द्विकाण्डा भूमिः। पुरुषात्—द्विपुरुषी द्विपुरुषा धात्री। त्रिरामी निवृत्ता।

## २१९. प्रधानस्य सपूर्वस्य पत्यु र्नश्च वा, पीताम्बरे च।

सम्पदां पतिः सम्पत्पत्नी सम्पत्पति र्वा लक्ष्मीः। अप्रधाने तु पति-मतिक्रान्ता अतिपतिः। अथ पीताम्बरे—कृष्णः पतिरस्याः कृष्णपत्नी कृष्णपतिः।

---

त्रिरामीयम्। प्रत्युदाहरति—पञ्चाश्वेति। पञ्चभिरश्वैः क्रीतेति पूर्ववत् तद्धितार्थे त्रिरामी, तद्धित ठस्य महाहरः, किन्तु अश्वशब्दस्य परिमाणाभावान्नेह ईप्। संख्यादिवर्जनफलं दर्शयति—द्विशतेत्यादिभिः। द्वाभ्यां शताभ्यां क्रीतेति पूर्ववत् ठः, तस्य महाहरश्च, किन्तु शतस्य संख्यावाचित्वान्न ईप्। द्वयो र्वर्षयो र्जातादि द्विवर्षा। द्वौविस्तौ परिमाणमस्या इति द्विबिस्ता। इत्यादिपदेन द्व्याचिता द्विकम्बल्या। विस्तादीनां परिमाणत्वं विशेषार्थान्वितमिति स्फुटयति—विस्ताचिताविर्त्यादिना। ऊर्णा मेषादि लोम, तस्यपलशतं कम्बल्यं नाम परिमाणः। द्विकाण्डीति—द्वेकाण्डे प्रमाणमस्या इत्यर्थे मात्रट् प्रत्यय स्तस्य च महाहरः। अत्र द्वि काण्डपरिमित भूमौ जाता तुलसी वाच्याः भूमि वाच्ये तु नेप्। द्वौ पुरुषौ ( उच्चतायां ) प्रमाणमस्या इति द्विपुरुषीति द्वयम्।

**अमृता०**—२१९. प्रधानस्येति। प्रधानस्य अगौणस्य पूर्वपदान्वितस्य पति शब्दस्य सम्बन्धे लक्ष्म्यामीप् वा स्यात्, ईपि च सति पत्युरिरामस्य नराम आदिश्यते, पीताम्बरे त्वर्थादप्रधानेऽपि पत्युरीप् वा भवति, ईपि सति नरामादेशश्च भवति। सम्पदां पति रिति विग्रहे कृष्णपुरुषत्वात् पतिशब्दस्य प्राधान्यं दर्शितम्। पातीति पति रिति व्युत्पत्तौ क्रिया वचनोऽयमिति लिङ्गत्रये हि प्रयोगोपयोगात् लक्ष्म्यामपि सम्पदां पतिरिति सङ्गच्छते। दृश्यते च—ग्रामस्य पति र्ब्राह्मणीति। पतिमतिक्रान्तेति कृष्णपुरुषत्वेऽपि तत्र "अन्यपदप्रधानः कृष्णपुरुष" इत्युक्ते रप्रधानत्वान्न ईवादि। अथपीताम्बर इति स्पष्ट-मुदाहरणम्।

---

**बाल०**—प्रधा। प्रधानस्य मुख्यस्य सपूर्वस्य पूर्वपदेन सह वर्त्तमानस्य पत्युः पतिशब्दस्य सम्बन्धे लक्ष्म्यामीव्या भवति। तस्मिन्नीपि पत्युरिरामस्य नश्च वा एकवर्णत्वा-दन्ते प्राप्तेः षष्ठीप्रत्ययस्य सम्बन्धसामान्यबोधकत्वात् पञ्चम्यर्थोऽपि सम्भवति, तथा सति प्रधानादिरूपात् पतिशब्दाल्लक्ष्म्यामीव्वा स्यात्, तथाभूतस्य पत्युर्नश्च वेत्यर्थः॥ २१८॥

**बाल०**—अथ पीता। पीताम्बरे च समासे सपूर्वपदात् पत्युर्लक्ष्म्यामीप् वा स्यात् तस्मिन् मश्च वा। सम्पदां पतिरित्यादिवाक्योदाहरणं सुष्पष्टं॥ २१९॥

२२०. सपत्न्यादयः पीताम्बरे ।

समानः परिरस्याः सपत्नी । एकपत्नी वीरपत्नी भ्रातृपत्नी पुत्रपत्नी दासपत्नी शिशुपत्नी ।

२२१. पत्नीभार्यायां यज्ञयोगे, व्यूढायामित्येके, पतिवत्नी साधवायां, अन्तर्वत्नी गर्भिण्याम् ।

ईवन्ताः साधवः ।

---

**अमृता०**—२२०. सपत्नीति । पीताम्बरे सपत्नादयः प्रयोगा लक्ष्म्यामीवन्ताः साधव इत्यग्रिमेणान्वयः । तमानः पतिरस्या इत्यत्र अनया सहेत्यर्थाद् गम्यते । ज्योतिर्गणेत्यादिसूत्रेण समानस्य सभाव उक्तः । अत्र पीताम्बरत्वेन पत्युरीप् नरामादेशश्च पूर्वेण हि सिध्यति किन्तु विभाषां बाधित्वा नित्यतार्थोऽयं निपातः । समानस्य सादेशे—ज्योतिर्गणेत्यादिसूत्रे एतदपेक्ष्य हि पत्नी शब्दो निवेशित इति स्मर्त्तव्यम् । एवमेकः पतिरस्या एकपत्नीत्यादि योज्यम् । एक वीरभ्रातृ पुत्र शिशुदासा एत एवादिपदग्राह्या नान्ये ।

**अमृता०**—२२१. पत्नीति । यज्ञयोगे सति भार्यायां वाच्यायां इपा नरामेण च पत्नीति साधुः स्यात् । यज्ञशब्देनात्र वैदिक क्रिया बोध्यते, सा च लौकिके विवाहव्यापारे; अंशेन दृश्यत इत्यतो लौकिके तु—"पत्युरेश्च न ऊढायामिति" पद्मनाभादिभि सूत्रितमिति तन्मतञ्चेष्टतयोप न्यस्यति—व्यूढायामित्येक इति : विशेषेण ( धर्माग्न्यादि साक्षित्याङ्गीकारेण ) ऊढा परिणीतेत्यर्थः । पतिवत्नीति—धवेन पत्या सह वर्त्तमाना या सा सधवा, तस्यां वाच्यायां पतिवत्नीति साधुः स्यात् । पतिरस्या अस्तीति मतुः, ततो निपातात् मतो र्मस्य वः, ईप् नरामादेशश्च । अन्तर्वत्नीति—गर्भिण्यां वाच्यायां अन्तर्वत्नीति साधुर्भवति । अत्रापि पूर्ववत् मतुर्नरामादेशश्च निपातबलात् । मतो र्वादेशश्च प्राप्तएव ।

---

**बाल०**—सप । एतदादिचतुर्णां सुत्राणां ईवन्ताः साधव इत्यनेनान्वयः । पीताम्बरे लक्ष्म्यां सपत्न्यादयः प्रयोगा ईवन्ताः साधवो भवन्ति । समानः पतिरस्या इत्यत्र अनया सार्द्धमस्या इत्यर्थाद्गम्यते । सपत्नीति ईप् पत्युरिरामस्य नरामश्च निपातफलं । एवमुत्तरत्रापि समानस्य स-भावश्चोक्तः । एकः पतिरस्याः वीरः पतिरस्याः भ्राता पतिरस्याः दासः पतिरस्याः शिशुः परिरस्या इत्यादि विग्रहेषु यथाक्रममेकपत्न्यादयो ज्ञेयाः । अत्र सपिण्डपत्नीत्यपि कश्चिदुदाहरति । एतावतैव सपत्न्यादिना स्तेन वहवो वीरपतयोऽस्या इति बहुवीरपतयोऽस्या इति बहुवीरपतिर्द्वारकेत्यत्र न स्यात् । एकेन पत्या ऊढायामेकपत्नीति । अनूढायान्तु एकपतिर्नगरीत्यादि ॥ २२० ॥

**बाल०**—पत्नी । यज्ञयोगे सति भार्यायां वाच्यायां ईपा सह पत्युः पत्नीति साधु । व्यूढायामित्येके इत्यनेन पत्या व्यूढा इति वाक्ये पत्नीति सूचितं । ऊढाच सम्बन्धिशब्दा तेन येनोढा तस्य पत्नीत्यभिधीयत इति तदुक्तं । पति । सधवायां वाच्यायां पतिवत्नीति

## २२२. तस्य भार्येत्यर्थे ।

ईप् स्यात् । प्रभुश्चायम् । माधवस्य भार्या माधवी, क्षत्रियी वैद्यी गणकी शूद्री ।

## २२३. सूर्यादेराप् ।

सूर्या गोपालिका । सूर्या देवतायामेव, अन्या सूरी । ज्येष्ठा कनिष्ठा मध्यमा ।

---

अमृता०—२२२. तस्येत्यधिकारः । प्रभुश्चायमिति चकारेण विधिसूत्रत्वञ्चास्य ज्ञापितम् । स्पष्टान्युदाहरणानि ।

अमृता०—२२३. सूर्यादेरिति । तस्य भार्येत्यर्थे सूर्यादेरुत्तरे लक्ष्म्यामाप् भवति । सूर्यस्यभार्या सूर्या छाया नाम्नीत्यर्थः । गोपालकस्य भार्या गोपालिका, प्रत्ययस्थात् कादित्यादिना पूर्वारामस्येरामः । सूर्यशब्दात्तु देवताभार्यायामेव आप् भवतीति प्रत्युदाहरति—अन्या सूरीति । तथा हि वार्त्तिके—सूर्याद्देवतायां चाव् वक्तव्य इति । सूरीति—सूर्यागस्त्ययोरीपि छे चेति यरामहरः । एवं ज्येष्ठस्य भार्येत्यादि वाक्यमुन्नेयम् ।

---

साधु । परिस्त्यस्या इति विग्रहे निपातसामर्थ्यात् पतिशब्दान्मतोर्मो वः तरामान्नरामागम ईप्च स्यात् । सधवायां किं पतिमती पुरीति । अन्त । गर्भिण्यां वाच्यायां पूर्वान्मतोर्नरामेप्प्रत्ययाभ्यामन्तर्वत्नीति साधु । अन्तरस्त्यस्या इति वाक्यं । किन्त्वत्रान्तःशब्देनान्तस्थगर्भमुच्यते, तस्मादन्तर्वत्नी गर्भिणीति सुसङ्गतं । गर्भिण्यामिति किं अन्तर्वती शालेति । तदस्त्यस्मिन्निति मतुः अद्वयमाभ्यां तदुद्धवाभ्यामिति मतोर्मो वश्च भवति ॥ २२१ ॥

बाल०—तस्य । तस्य भार्येत्यर्थे नाम्न ईप् स्यात् । प्रभुनामायमधिकारः चशब्दाद्विधिनामापि । मधोरपत्यं माधवस्तस्य भार्येति माधवीति । क्षत्रियस्य भार्या क्षत्रियीति, वैद्यस्य भार्या वैद्यीति, गणकस्य भार्या गणकीति, शूद्रस्य भार्या शूद्रीति ॥ २२२ ॥

बाल०—सूर्या । तस्य भार्येत्यर्थे सूर्यादेरुत्तरस्मादाप् स्यात् । सूर्यस्य भार्या सूर्येति छायानाम्नी । सूर्यादेरादिपदादुदाहरणान्तरमाह गोपालिकेति । गां पालयतीति गोकर्मपूर्वात् पा रक्षणे इत्यस्मात् णौ पातेः पाल णावित्यनेन पालिण्यन्तात् णको गोपालकः तस्य भार्येत्यर्थे प्रत्ययस्थात् कादित्यनेन पूर्वारामस्येरामः गोपालिका गोपस्त्री । किम्वा स्वर्गेषु पशुवाग्वज्रे त्यनेन गोशब्दस्य नानार्थत्वात् गोशब्दोऽत्र सूर्यकिरणमभिधत्ते तथा सति, गोपालिका छायादेवीत्यनुमीयते यतोऽत्रैव सूर्या देवतायामेवोक्तं तस्मात् सूर्यादेरादिपदस्य ज्येष्ठेत्यादिना विवरणाच्च । यद्यपि सूत्रे नियमस्य प्रतीतिर्नास्ति तथापि सूर्याद्देवतायामीव् वक्ष्यते इति पूर्वोक्तं झटित्यवगमार्थं वृत्तित्वेन नियममाह सूर्या देवतेति । अन्येति सूर्यस्यान्या भार्या सूरी मानुषीत्यर्थः । ज्येष्ठस्य भार्या, कनिष्ठस्य भार्या, मध्यमस्य भार्येत्यात्यर्थे यथाक्रमं ज्येष्ठादित्रयं ॥ २२३ ॥

२२४. क्वचिद् वा।

ईश्वरी ईश्वरा।

२२५. अग्नायी वृषाकपाय्यादयः, मनायी मनावी हैन्द्राण्यादयश्च।

एते ईवन्ताभार्यार्थे साधवः। मनो र्भार्या मनाय्यादयः। इन्द्राण्यादिषु—वरुण भव सर्व रुद्र मृडाचार्याणां वरुणान्यादयो ज्ञेयाः। आचार्यानी क्षुभ्नादित्वान्न णत्वम्।

---

अमृता०—२२४. क्वचिदिति। तस्य भार्यार्थे नाम्न उत्तरे क्वचिदीप् विकल्पेन भवति। ईश्वरीति वर प्रत्ययान्तादीश्वर शब्दादीप् पक्षे आप् च।

अमृता०—२२५. अग्नायीति। तस्य भार्येत्यर्थे अग्नायी प्रभृतय ईपा साधव स्युः। स्वयं वृत्तिमाह—एत इति। अग्ने भर्येत्यर्थे ईप्, निपातात् संसारस्य आयादेशः। एवं वृषाकपे र्भार्या वृषाकपायीति। "हरविष्ण्वो वृषाकपि रित्यमरात् वृषाकपायी लक्ष्मी दुर्गा वा ज्ञेया। अत्रादि पदेन पूतक्रतायी कुशितायी कुशीदायीति। मनायीत्यत्र संसारस्य आय् मनावीत्यत्र आव् निपातफले। इन्द्रादिगणमाह—वरुणेत्यादि षट्। वरुणस्य भार्या वरुणानी। एवं भवानी सर्वाणी रुद्राणी मृडानी आचार्यानीति। एषु संसारस्य आनादेशो निपात कार्यम्। आचार्यानीत्यत्र णत्वाभावे हेतुः—क्षुभ्नादित्वादिति।

---

बाल०—क्वचि। तस्य भार्येत्यर्थे नाम्न उत्तरः क्वचिदीप् वा स्यात्। स्था ईश भासेत्यनेन ईशधातोर्वर ईश्वरस्तत ईश्वरस्य भार्येत्यर्थे ईश्वरी पक्षे अजादित्वादाप ईश्वरेति॥ २२४॥

बाल०—अग्ना। तस्य भार्येत्यर्थे अग्नायी वृषाकपाय्यादयः प्रयोगाः साधवो भवन्ति। तथा मनाय्यादय इन्द्राण्यादयः साधवो भवन्ति। सूत्रत्रयस्य वृत्तिमाह एव इति। अग्नेर्भार्येति ईप् निपातादीपि परेऽग्निशब्दादायच् संसारस्य हरश्चितीति संसारहरः अग्नायीति। वर्षति कामान् आकल्पयति क्लेशानित्यर्थे धातोस्तदर्थातिशयेन योग इति निरुक्तेन पृषोदरादित्वात् इक् वृषाकपिः। हरविष्ण्वोर्वृषाकपिरित्यमरः। ततो वृषाकपेर्भार्येत्यर्थे पूर्ववदीवायचौ। वृषाकपायी लक्ष्मीः पार्वती वा, आदिपदात् कुसितायी कुसीदायी पूतक्रतायीति। मध्यमसूत्रस्य विग्रहोदाहरणे दर्शयति मनोरिति। मनोर्भार्येतार्थे निपातबलात् सनुशब्दादीप् तत्पूर्वमायचावचौ। पक्षे ईवादीनामभावश्चेति मनाय्यादयस्त्रयः। इन्द्राण्यादीनां गणदर्शनपूर्वकोदाहरणान्याह इन्द्राण्यादिष्विति। इन्द्रस्य भार्येत्यर्थे इन्द्रशब्दादीप् तत्पूर्वं निपातादान् इन्द्राणीति। एवं वरुणान्यादय इत्यत्रादिपदात् भवानी सर्वाणी रुद्राणी मृडाणीति। आचार्यानीत्यत्र प्राप्तणत्वं वारयति क्षुभ्नादित्वादिति॥ २२५॥

**२२६. उपाध्यायानी मातुलान्यौ वा।**

ईवन्ते साधू। भार्यार्थो निवृत्तः।

**२२७. अर्याणी-क्षत्रियाण्यौ वा जातौ।**

इवन्ते साधू। पक्षे अजादित्वात् अर्या क्षत्रिया। भार्यायान्तु अर्यी।

**२२८. हिमान्यरण्यान्यौ महत्त्वे, यवनानी यवनलिपौ, यवानी दुष्टयवे।**

ईवन्ताः साधवः।

---

अमृता०—२२६. उपाध्यायानीति। तस्य भार्येत्यर्थे उपाध्याय मातुलयो र्यथाक्रमीपा उपाध्यायानी मातुलानीत्येतौ विभाषया साधू भवतः। अत्र च संसारस्य आनादेशो निपातात्। पक्षे उपाध्यायी मातुलीति च स्वतः प्राप्त ईप्।

अमृता०—२२७. अर्याणीति। जात्यर्थे अर्याणी क्षत्रियाणीत्येतौ ईपा साधू वा भवतः। पक्षे इति ईपोऽभावपक्ष इत्यर्थः। अर्या वैश्यजातिः। ईप् पक्षे संसारस्य आनादेशो निपातफलम्। जातेरन्यत्रतु न निपात इत्याह—भार्यायान्तु अर्यीति।

अमृता०—२२८. हिमानीति। महत्त्वे बृहत्त्वे वाच्ये लक्ष्म्यां हिमानी अरण्यानीत्येतौ ईपा साधूभवतः। महत् ( अतिशयं ) हिमं हिमानी। एवं महत् बृहत् अरण्यं अरण्यानी। अन्यत्र तु ब्रह्मत्वमेव, माघहिमं, वृन्दारण्यमिति। सर्वत्र संसारस्थानादेशो निपात सामर्थ्यात्। यवनस्य लिपौ वाच्यायां यवनानीति ईवन्तः साधुः स्यात्। अन्यत्र तु यवनस्य भार्या यवनीति। दुष्टयवे कुत्सितयवे वाच्ये यवनीति ईवन्तः साधुर्भवति। अन्यत्र उपकारीयव इति पुंस्येव।

---

बाल०—उपा। तस्य भार्येत्यर्थे उपाध्यायानीमातुलान्यौ ईवन्ते साधू वा भवतः। पक्षे उपाध्याया मातुलेति अजादित्वादाप्, यदातु उपेत्याधीयते अस्यामित्यधिकरणविहितघणन्तादीप् तदा उपाध्यायीति। मातुलेत्यत्र मातुलीति कश्चित्। तथा उपाध्याया मातुलेत्यसाधू उपाध्यायी मातुलीत्येवेति केचित्। अधिकारं निवर्त्तयति भार्येति॥ २२६॥

बाल०—अर्या। जातावर्थेऽर्याणीक्षत्रियाण्यावीवन्ते साधू वा भवतः। अर्यस्य जातिरित्यर्थे अर्याणी एवं क्षत्रियाणीति। ईत्रभावपक्षमाह पक्ष इति। अर्या वैश्यजातिः। जात्यर्थे निपातात् भार्यार्थेतु न स्यादित्याह भार्यायास्त्विति॥ २२७॥

बाल०—हिमा। लक्ष्म्यां विषये महत्त्वे वर्त्तमानयोर्हिमारण्ययोरानीवभ्यां सह हिमानी अरण्यानीति द्वे साधू भवतः। महत्त्वमत्र बहुत्त्वमित्यवगतं, हिमानी अरण्यानीति द्वे साधू भवतः। महत्त्वमत्र बहुत्वमित्यवगतं, हिमानी हिमसंहतिरित्यस्मात् महारण्यमरण्यानीत्यस्माच्च। महत्त्वे वर्त्तमानयोरेवानयोर्लक्ष्मीत्वं नान्यत्रेत्यपि बोद्धव्यं। यव।

## २२९. अवृद्धायामसिक्नी असिता, वृद्धायां मलिक्नी पलिता, श्येन्यादयो वा ।

साधवः । श्येनी श्येता, एणी एता, लोहिनी लोहिता, हरिणी हरिता । तत्तद् वर्णा ।

---

अमृता०—२२९. अवृद्धायामिति । अवृद्धायां वाच्यायां लक्ष्म्यां असित शब्दस्य ईपा सह ससिक्नीति विभाषया साधुः स्यात् । तरामस्य क्नादेशो निपातात्, पक्षे अजादित्वादाप् सिद्धः । वृद्धायां वाच्यायां पलितस्य ईपा पलिक्नीति साधु र्वा भवति । पूर्ववन्निपातकार्यम् । पक्षे आप् पलिता । लक्ष्म्यां श्येत प्रभृतीनां श्येनी प्रभृतयो वा निपात्यन्ते । इह तरामस्य नरामादेशो निपातफलम् । पक्षे आप् श्येता प्रभृतयः । अत्र तु स्वार्थे हि निपाता इत्याह—तत्तद्वर्णा इति । तेन श्येत वर्णेत्यर्थे श्येनी श्येतेति द्वयमित्यादि सर्वत्र बोध्यम् । एतः कर्वुर वर्णः ।

---

यवनलिपौ वाच्ये यवनस्यानीव्भ्यां सह यवनानी साधुः । यवनदेशोद्भवा यवनास्तेषां लिपिरित्यर्थे निपातसामर्थ्यात् तस्येदमित्यनेन केशवणविषये आनोपौ तेन यावनानीति न स्यात् । यवनलिपाविति किं यावनी भाषा । यवनशब्दो यदा लिप्यामभेदोपचाराद्वर्त्तते, तदा यवनानी भेदेतु टणा यावनी लिपिरित्यन्ये वदन्ति । यवा । लक्ष्म्यां विषये दुष्टयवे वाच्ये यवस्यानीव्भ्यां सर्द्धं यवानी साधुः । अस्याप्यस्मिन्नर्थे लक्ष्मीत्वं नान्यत्र । यवानी जात्यन्तमुच्यते दुष्टत्वन्तु यवजातेरभावोऽतम्तदाकारानुकृतिमात्रमिति केचित् । हिमानीप्रभृतीनां वृत्तिमाह ईवन्ता इति ॥ २२८ ॥

**बाल०**—अवृ । अवृद्धायां वाच्यायां लक्ष्म्यामीवाव्भ्यां सहासितस्य असिक्नी असिता द्वे साधू भवतः । असितशब्दादीप् तस्मिन् तरामस्य क्नभावः पक्षे असितादाप्च निपातफलं । वृद्धा । वृद्धायां लक्ष्म्यां पलितशब्दस्य पूर्ववत् पलिक्नी पलिता द्वे साधू भवतः । अत्रापि पलितशब्दादीप् तस्य क्नः पक्षे आप्च निपातफलं । असिक्नी पलिक्नीति छान्तसमेतत् नतु भायायामिति केषाञ्चिन्मतमिति गोयीचन्द्रः । (सक्षिप्तसारटोकाकृत्) श्येन्या । लक्ष्म्यां श्येतादीनामीवाव्भ्यां सह श्येन्यादयः साधवो वा भवन्ति, पक्षे श्येतादयश्च । साधव इत्यनेनन अवृद्धायामित्यादीनामन्वयः । तत्तद्वर्णेति । श्येनादीनामन्ते ग्रन्थकृता स्वयमेवोक्तं तस्मादेवमत्र वाक्यानि यथा । श्येतवर्णेति श्येतशब्दादीप् तस्मिन् श्येततरामस्य नरामश्च निपातात् । तेन श्येनीति द्वयं, एवं एतद्वर्णेति एणीति द्वयं, लोहितवर्णेति लोहिनीति द्वयं, हरितवर्णेति हरिणीति द्वयञ्च । एतः कर्वुरवर्ण इत्यख्यातपदे उक्तं । श्येतादीनां चतुर्णामेवात्र ग्रहणं नान्येषां शवलप्रभृतिगुणवाचिनां गौरादिगणपठितत्वात् । एतदेव सर्वेषां मतं नान्यत् यथोक्तमन्यैः । वर्णवाचिनस्तकारोपान्ता स्त्रियामी तकारश्च नः । वानुवृत्तिर्जयादित्यचन्द्रप्रभृतिभिरुक्ता वाचस्पत्यादिकृतकोषेच एण्यत्यादौ विकल्पो दृश्यते, किन्तु भाष्येऽनुदाहृतत्वात् भागवृत्तिकृता नित्यमुक्तश्चेति अभेदः ॥ २२९ ॥

## २३०. इरामादक्त्यर्थाद् वा ईप्।

राती रात्रिः, धूली धूलिः, भूमी भूमिः, युवती युवतिः, पद्धती पद्धतिः, अङ्गुली अङ्गुलिः, यष्टी यष्टिः, शक्ती शक्तिः शस्त्रे।

---

अमृता०—२३०. इरामादिति। क्ते रर्थ इवार्थो यस्य सक्त्यर्थः, नविद्यते क्त्यर्थो यत्र तादृशात् इरामान्तादुत्तरे ईप् वा भवति। क्ति र्भावे लक्ष्म्यामित्यादिभि र्ये प्रत्यया भावे लक्ष्म्यां विहिता स्ते हि क्त्यर्थाः, तान् वर्जयित्वान्येभ्य इरामान्तेभ्य ईप् वा भवतीति फलितार्थः। इह स्वार्थे हि विधिर्मन्तव्यः, अर्थान्तराधिकारविरहात्। रात्रीति—राते स्त्रि रित्यौणादिक स्त्रि प्रत्ययसिद्धो रात्रिः. अतः क्त्यर्थाभावाद् विकल्पेन ईप्। धूयते रौणादिक लिः धूलिः, ईपि धूली। एवमन्ये च ज्ञेयाः। युवतीति—यूनो युवति रित्यनेन लक्ष्म्यां निपातितस्य युवति शब्दस्य क्त्यर्थत्वाभावात् पक्षे ईप्। शिक्षितं युवतिनैपुणमिति कुमार सम्भवे। युवतिकरनिर्मथितं दधीति भोजप्रबन्धे। उभौ च पुरुषोत्तम माधवादि सम्मतौ। दीक्षितस्तु यौतेः शत्रन्तादीपि युवतीत्याह। कथं यूनी काममयी दुनोति च मन इति, तथा यूनी वेश विधायिनी पतिभयात् बालावधूर्व्वासिनी च? निरङ्कुशा हि कवय इति न्यायेन सङ्गतित्वेऽपि अपाणिनीयं मतमेतन्नहि ग्रन्थकृतामभीष्टम्। अतएव-श्वन् युवन् मधवन्नित्यत्र वस्य उत्वविधानसूत्रे युवतीत्येतद् वर्जमीपि वस्य उत्वं विहितम्। तेन शुनी-त्यादावेव उर्भवति न किन्तु युवतीत्याविति विवेकः।

पद्धतीति—यद्यपि हन्तेः क्ति प्रत्ययेन हति रिति सिद्ध स्तथापि पादस्य गादिष्वि-त्यनेन निपातसिद्धत्वेन भावार्थविरहादयमक्त्यर्थ एवेति वा ईप्। अङ्गुल्यादय उणादि निष्पन्ना एव। शास्त्रेऽर्थ एव शक्ति शब्दादीप् वा, नान्यत्र शक्तिः सामर्थ्यम्। श्रीयमिति —श्रिञ् सेवायामित्यस्मात् क्विपि श्रिः, पश्चादीप्। ईप् प्रत्ययान्तात् सो र्हर ज्ञापनार्थ मियमिति विशेषणम्। लक्ष्मीयमिति च दुर्घटवृत्तावुदाहृतम्। ननु इरामान्तादेवात्र ईप

---

**बाल०**—इरा। क्ते रर्थ इव अर्थो यस्य स क्त्यर्थः न विद्यते क्त्यार्थो यत्र सोऽक्त्यर्थस्तस्मात्। लक्ष्म्यामेवाक्त्यर्थात् इरामात् इरामान्तादीप् वा स्यात्। अर्थान्तरा-भावात् स्वार्थे एव प्रत्ययस्तेन रात्रिरेव रात्री रात्रिरिति। रात्रेस्त्रिरिति रा धातोरौणा-दिकस्त्रिप्रत्ययो रात्रिरित्यस्यैव रात्रीति द्वयमित्यन्ये। धूलीरेव धुलीति द्वयं। एवं भूमीति द्वयञ्च। यूनो युवतिरित्यस्य युवतीति द्वयञ्च तथा यद्यपि हतिशब्दः क्त्यन्तस्तथापि पादस्य गादिष्वित्यनेन पद्धतेः निपातसिद्धत्वात् समस्तनामत्वे क्त्यर्थताभावत्वादेव पद्धतीति द्वयञ्च पूर्ववत्। अङ्गुलीतिद्वयन्तु पूर्ववदयत्नसाध्यं। यज देवपूजासङ्गति-करणदानेषु इत्यस्मात् शक्लृ शक्तावित्यस्माच्च इक् स्तिपौ धातुनिर्देश इति स्तिप् क्वचिन्न दृश्यते चेत्यनेन शवभावश्च छशो राज यज भ्राजेत्यनेन यस्ततो यष्टादयश्चत्वारश्चेति। शस्त्र इत्यनेन शास्त्रवाचकस्य शक्तिशब्दस्यैवात्र ग्रहणं न बलावाचकस्येति सूचितं। इरामादित्युपलक्षणं तेनाक्त्यर्थस्त्रिविक्रमेरामोऽप्यत्र गृह्यत इति स्वाभिप्रेतं परमतेन स्पष्टयति श्रीयमित्यादिना। श्रिञ् सेवायां श्रयतीति क्विप्, प्रच्छादीनां त्रिविक्रम इत्यनेन

श्रीयम् लक्ष्मीयमित्यपि दुर्घट वृत्तौ। पाणिनीया दीर्घमपि गृह्णन्ति।

---

वा विहित:, कथं तर्हि—लक्षेर्मुट् चेत्यनेन सिद्धान्त दीर्घेरामान्त लक्ष्मीशब्दादीप् युज्यत इति चेत्? तत्र सङ्गतिं नयति—पाणिनीया दीर्घमपि गृह्णन्तीति। तच्च—सर्वतोऽक्तिन्नर्थादित्येके इति वार्तिक वचनादेव सर्वत: पदेन दीर्घादपीच्छन्ति, दुर्घट वृत्तिश्च पाणिन्यनुगामिनीति तन्मतेऽपि तत् सिद्धौ नैव विरोधः। तस्माल्लब्धे तु तादृशि प्रयोगे नखल्वपप्रयोग बुद्ध्यावज्ञेयोऽसाविति हृदयम्।

प्रत्युदाहरति—पङ्क्तिरित्यादि। हानिरिति क्तेर्निः। एवं ग्लानिः म्लानिरित्यादौ च न। अकरणि रिति—नञ्यनिराक्रोशे भावे हि लक्ष्म्यामनिरिति क्त्यर्थ एवायम्। एवं

---

त्रिविक्रमः श्रीरिति पश्चादाप् श्रीति ईप्प्रत्ययान्तत्वाद्विष्णुसर्गाभावज्ञापनार्थमियमित्युपन्यस्तं। अन्यथा श्रीरियमित्येव स्यात्। लक्ष दर्शनाङ्कयोरित्यस्मात् लक्षेर्मुट् चेत्यनेन ईप्रत्ययो मुट्च लक्ष्मीरिति तत ईप् लक्ष्मीति पूर्ववदत्रापीयमिति इत्यपि दुर्घटवृत्ताविति दृश्यते इति शेषः। दुर्घटवृत्तिमतमुक्त्वा पाणिनीयमतमप्याह पाणीति। अपीत्यस्मादुत्तरस्मिन्नत्रेति प्रयोक्तव्यं। एवं अवीयं तन्त्रीयमित्यादयश्च। अक्त्यार्थादित्यनेन तद्गुणसम्विज्ञानपीताम्बरसामर्थ्यात् क्तिप्रत्ययान्तेन क्त्यर्थप्रत्ययान्तेनच वर्जितेरामस्य ग्रहणफलं व्यावृत्तिमुखेन दर्शयति अक्त्यर्थादिति। किमिति किमर्थं क्त्यार्थो यर्हि स्यात्तर्हि किं स्यात्। पङ्क्तिरिति पचि विस्तारे इत्यस्मात् क्तिर्लक्ष्म्यां भाव इति क्तिः। एवं पक्तिभक्ति शक्तिप्रभृतयः। हानिरिति ग्ला हा ज्या म्ला त्वरिभ्यश्चेति क्तेर्निरिति निः। एवं ग्लानि म्लानि लूनिप्रभृतयश्च। श्रीहरेकृष्णाचार्येणतु ल्वादित्वात् क्तेर्नि पक्षे सङ्कर्षणं विधाय जीनिरित्युक्तं ग्ला हेति सूत्रं ज्ञापकं कृत्वा सङ्कर्षणाभावपक्षे ज्यानिरितिच यदुक्तं यद्द्वयन्तु वर्णानां तद्वयक्तिवद्भावो यत्र मंस्यते तत्रैवेति न्यायेन सिद्धिमिति तत्तदप्यत्रोदाहार्यं। अकरणिरिति नञ्यनिराक्रोशे भावे लक्ष्म्यामित्यनिः। तथा इण्च भावे लक्ष्म्यामित्यनेन इण्प्रत्ययान्त कां कार्यादीनां ग्रहणं तेन कां कारिः कृष्णस्य कारिरित्यादयश्च। यद्यप्यक्त्यर्थादिति सामान्येनोक्तं तथापि भावविहितक्तेस्तद्रूपक्त्यर्थस्य चोपलक्षकं, तेन बध्यात् हन्तिः तन्यात् तन्तिरित्यादावाशिषि विषये हरिवेण्वन्तसहजानिटादीनामित्यनेन कर्त्तरि विहिताक्तत्वात्। हन्ती हन्तिः तन्ती तन्तिरित्यादिः स्यात्। जुमरटीकाकृतातु प्रत्युदाहृतौ म्लानिरित्यपपाठ इत्युक्त्वा परमतं दर्शितं तद्यथा। यदि म्लानिरिति पदं साधु स्यात्, तदा मा गान् म्लानिं मृणाली मृदुरिति ह्रस्वपाठे प्रसिद्धेऽक्लिष्टेऽपि मा गान् म्लानीमिति दीर्घपाठं व्यवस्थाय तत्साधनार्थं कथं यत्न आस्थीयते म्लानस्य भावो म्लानीति। क्तान्तात् म्लानशब्दात् तद्भावे तात्वमित्यनुवृत्तौ मित्रादेर्वा स्त्रियामिति टण् टित्त्वादीप्रत्यय इत्येवं। किन्त्वेतन्मतान्तरप्रदर्शनमात्रं न बहुलसम्मतं। यदि म्लानिरित्यसाधु स्यात्, तदा सर्वज्ञचूडामणिगोस्वामिपादेनतु ग्ला हा ज्येति सूत्रे म्लाधातुर्न गृहीतः स्यात्। यद्यपीरामादित्यत्र विशेषग्रहाभावस्तथाप्यक्त्यर्थेति विशेषणे पर्युदासनञासदृशप्रतिपत्तिर्विशेषग्रह इत्याह लक्ष्मीति। लक्ष्म्यां विहितो य इरामस्तस्मादेवेप् स्यात् नान्यस्मात्। तेन अतिथिरित्यत्र पाक्षिक ईप् न स्यात्। अतिथिना

अक्त्यर्थादिति किम् ? पङ्क्तिः हानिः अकरणी । लक्ष्मी विहितादेव, अतिथिर्वैष्णवी ।

## २३१. मुने र्वा ।

मुनी मुनिः ।

## २३२. उरामान्तगुणवचनात् खरु सत्सङ्गोद्धववर्जाद् वा ।

---

"इन् च भावे लक्ष्यामि"ति इनि च निषेधः—का कारिरियं ? कृष्णस्य कारि रेषेति । अत्र भावविहितस्य हि क्तेरर्थे निषेधः, तेनाशिषि तु क्तें र्भवत्येव बध्यादित्यर्थे हन्ती हन्तिरित्यादि । इरामात्तु लक्ष्म्यां विहितादेव स्यात्, न किन्तु पुंसिविहितादिति प्रत्युदाहरति—अतिथिरिति । अतिथि र्ना गृहागत इत्यमरे पुंस्त्वनिर्दशादिति भावः ।

**अमृता०**—२३१. मुनेरिति स्पष्टम् । लक्ष्म्यामबिहितत्वाद प्राप्ते विधानमेतत् । मुनी मननशीला ललनेत्यर्थः ।

**अमृता०**—२३२. उपामेति । सत्सङ्ग उद्धवो यस्य स सत्सङ्गोद्धवः, खरुश्च सत्सङ्गोद्धवश्च खरु सद्सङ्गोद्धवौ, तयो र्वर्ज वर्जनं यत्र स तथा, तस्माद् गुण वचनोरामान्तादीप् वा भवति । गुणमुक्त्वा गुणिनि द्रव्ये यो वर्त्तते सगुणवचन ईति प्रोक्तमेव समास प्रकरणे । गुणश्चात्र द्रव्याश्रयी ग्राह्यो नत्वप्रधानरूपः । मृदुरेव मृद्वीति स्वार्थे विभाषा ।

---

गृहागते इत्यमरशासनेन पुंस्त्वात्, किन्तु वैष्णव्या विशेषणत्वाल्लक्ष्मीत्वप्रतीतिरिति प्राप्तिसम्भावना ॥ २३० ॥

**बाल०**—मुने । लक्ष्म्यां विषये मुनिशब्दादीप् वा स्यात् । लक्ष्मविहिताभावादप्राप्ते विधानं । मुनिरेव मुनीति द्वयं । अत्रारोपितलक्ष्मीत्वात् मुनिशब्देन मुनित्वजातिरुच्यते मननशीला स्त्री वा ॥ २३१ ॥

**बाल०**—उरा । उरामः अन्ते यस्य स उरामान्तः गुणं वक्तीति नन्दादेरनः गुणवचनः स चासौ स चेति उरामान्तगुणवचनस्तस्मात् । खरुश्च सत्सङ्ग उद्धवो यस्य सच खरुसत्सङ्गोद्धवौ तयोर्वर्जः वर्जनं यत्र स खरुसत्सङ्गोद्धववर्जस्तस्मात् । वर्जोत्राऽनुप्रत्ययान्तः । खरुसत्सङ्गोद्धववर्जादुरामान्तगुणवचनाल्लक्ष्म्यामीव् वा स्यात् । ग्रन्थकृताहि द्रव्यलक्षणमुक्त्वा गुणस्तदाश्रययीति सुवन्तपादे गुणलक्षणमुक्तं । गुणमुक्त्वा यो गुणिनि वर्त्तते स गुणिनि वर्त्तते स गुणवचन इति समासपादे गुणवचनलक्षणञ्चोक्तं । प्रसङ्गात् तत्तदेवात्र विचार्यते । यः पूर्वं गुणभिधाय पश्चात् तद्योगादभेदोपचाराद्वा तद्वति द्रव्ये वर्त्तते सगुणवचन इह गृह्यते नान्यस्तेन गोविन्दलक्षणे प्राचीनमते गुणश्चेति यो गुणः उक्तः सोऽप्यत्र न सम्भवति । उद्धयस्य गोविन्दो नच धातोर्नच स्त्रीप्रत्यय इत्यनेनोरामस्य गुणसंज्ञाया निषेधात् । लोकेच यदप्रधाने गुणपदाभिधानं दृश्यते । यथावयवमात्रगुणभूता

मृद्वी मृदुः, गुर्वी गुरुः, बह्वी बहुः, लघ्वी लघुः, तन्वी तनुः। अगुण-वचनादेस्तु—आखुः खरुः कद्रुः।

---

मृदु प्रभृतयश्चात्र मृदुत्वादि गुणमुक्त्वा तद्वत्सु द्रव्येषु वर्त्तन्त इति गुण वचनत्वमेषाम्। एवं पटु प्रभृतयश्च। तन्विति कृषत्वगुणयुक्तेत्यर्थः। आखु र्मुषिक इति द्रव्य वचनत्वान्न ईप्। खरुस्तीक्ष्णः, कद्रुः पिङ्गलः। अनयो र्गुणवचनतया प्राप्तौ हि वर्जनम्। एवं सत्व सङ्गोद्भवानां पाण्डु बभ्रु प्रभृतीनामपि निषेधो बोध्यः।

---

अप्रधानभूता इति तदप्यत्र न गृह्यते, तस्य व्यभिचारित्वात्। तेन वचनपदोपादानात् चारुजानुरित्यादौ न स्यात्। अतएव द्रव्याश्रयी यो गुणस्तद्वचनस्यैवात्र ग्रहणमिति निश्चीयते। यथा वृद्धोक्तं क्रमदीश्वरेण चोत्थापितं। सत्वे निविशतेऽपैति पृथक्जातिषु दृश्यते। उत्पादनीयो नित्यश्च सोऽसत्वप्रकृतिर्गुण इतीहाभिप्रेतमिति। अस्यार्थः। सर्वेषां वाक्यानां व्यवच्छेदफलकत्वात् सत्वे एवेत्यवधारणं द्रष्टव्यं। सत्वं हि द्रव्यं तत्रैव निविशते तदाश्रयति। अपैति ततः सत्वादेवावगच्छति। तथाहि, आम्रे फले श्यामता पूर्वं स्थिता पक्वे रक्ततायां यातायामपैति। पृथग्जातिषु दृश्यते, नानाजातिष्ववलोक्यते। पृथग्ब जातिशब्दादुत्तरो जात्यन्ताज्जातिव्यञ्जकद्रव्यवचनादीय इतीयप्रत्ययो न भवति। श्लोकभ वार्त्तिककारप्रयोगादीयविधेरनित्यत्वात्। तथाहि, श्यामता आम्रे तृणे गविच दृश्यते। एते न जातेर्गुणत्वं निरस्तं, यतोऽलङ्कारे जातौ शक्तिवादिमते सत्ता गुणे द्रव्ये कर्मणिच वर्त्तते, नासौ जतिर्द्रव्यादपैतिच जन्मनः प्रभृत्याविनाशमाधारद्रव्यापरित्यागात्। नच जातिः पृथग्जातिषु दृश्यते, नहि गोत्वमश्वजातौ विद्यते नाप्यश्वत्वं गोजातौ। एवं जातौ निरस्तायां कर्मणस्तु स्यादेव यतः सक्रियं द्रव्यं यदा भवति, तदा कर्म सत्व एव निविशति, यदाक्रियं द्रव्यं भवति, तदा ततोऽपैतिच नानाजादिषु तद्दृश्यते चेत्यतः प्राप्तं कर्मणो गुणत्वमपाकर्त्तुमाह उत्पादनीयो नित्यश्चेति। तथाहि, घटादावग्निसंयोगेन रक्ततोत्पद्यते नित्येच द्रव्ये आकाशादौ महत्त्वादिर्नित्य एवास्ति। एवम्प्रकारद्वयं गुणे वर्त्तते नतु कर्मणि यतस्तदुत्पद्यते एव नतु नित्यरूपं भवति। एवं द्रव्यमपि गुणः स्यात् तत्राप्येते धर्मा विद्यन्ते। तथाहि, द्रव्यमप्यारम्भकेऽवयवभूते द्रव्ये निविशते अपैतिच। ततस्तत् यथा शरीरं हस्तपादादिष्ववयवेषु समवैति तद्विनाशेन विनाशात्ततोऽपैति। पृथग्जातिषु दृश्यते हस्तादिद्रव्याणां नानाजातिषु दर्शनात् द्रव्येच प्रकारद्वयमस्ति, घटादिरुत्पादनीयः आकाशादिर्नित्यः। अत आह असत्वप्रकृतिर्गुण इति। प्रकृतिः स्वभावः। सत्वं प्रकृतिर्यस्य स सत्वप्रकृतिः न सत्वप्रकृतिरसत्वप्रकृतिः यथोक्तैर्धर्मैर्युक्तो यो द्रव्यस्वभावो न भवति। सगुण इति स्थितः। अतएव मृद्वादीनां गुणवचनपूर्वकद्रव्ययुक्ततेति तेनात्रापि स्वार्थे पाक्षिक ईप्। मृदुरेवेति मृद्वी मृदुरित्यादयः तनुरित्यन्ता दश। मृद्वादयोऽत्र गुणमुक्त्वा तद्वतीषु स्त्रीषु वर्त्तन्ते इति न विस्मर्त्तव्यं। एवं पट्वी पटुरित्यादयोऽपि यथायोग्यमूह्याः। अगुणवचनादेस्त्विति रूपं दर्शयते इति शेषः। आखुः द्रव्यवचनोऽयं शब्दो न गुणमभिधाय प्रवृत्त इति नेप्। एवमुन्दुरुप्रभृतयः। खरु-सत्सङ्गोद्भववर्जादिति किं। खरुस्तीक्ष्नः कद्रुः

## २३३. अरामान्तजाते र्नित्यलक्ष्मीवैश्यादिवर्जम् ।

आकृतिग्रहणा जाति र्लिङ्गानाञ्च न सर्वभाक् ।
सकृदाख्यात निर्ग्राह्या गोत्रञ्च चरणैः सह ॥

**अमृता०**—२३३. अरामान्तेति । अरामान्ता चासौ जातिश्च अरामान्त जातिः । नित्य लक्ष्मी र्येशब्दा स्तान् तथा वैश्यादींश्च वर्जयित्वा जाति वाचकादरामान्तशब्दान्नित्य-मोप् स्यात् । ननु का च जातिरित्याकांक्षा चेत्तत्राह प्राचीनपद्येन—आकृतिग्रहणेति । यद्यपि—नित्यत्वे सति अनेकसमवेतत्वं जातित्वमिति लक्षणं प्रसिद्धं तथापि—संक्षिप्तं दुरूहञ्चैतन्मत्वा व्युद्पत्तिवैचित्र्यर्थं प्राचीनलक्षणमुपन्यस्तम् । आकृत्या आकारमात्रेण गलकम्बलादिसंस्थानेन गृह्यते व्यज्यते या सा जाति र्गोत्वादिः । भगवत्सृष्टं तत्तत् संस्था वैशिष्ट्यमेव तत्तज्जाते र्व्यञ्जक मित्यर्थः । जातिः खलु वस्तुधर्मः, अत्रतु तथाविधजाति

---

पिङ्गलः एतौ शब्दौ गुणविशेषमुक्त्वा तद्वत्योर्नायिकयोर्वर्त्तते इति प्राप्तौ वर्जनं । एवं पाण्डुवभ्रु प्रभृतयोऽपि ज्ञेयाः । उरामान्तेति किं शीता सिता कृष्णा इत्यादयः ॥ २३२ ॥

**बाल०**—अरा । अरामान्ता चासौ जातिश्चेति अरामान्तजातिस्तस्याः । नित्या चासौ लक्ष्मीश्चेति नित्यलक्ष्मीः वैश्य आदिर्येषां ते वैश्यादयः । नित्यलक्ष्मीश्च वैश्यादयश्च नित्यलक्ष्मीवैश्यादयस्तान् वर्जयित्वा नित्यलक्ष्मीवैश्यादिवर्ज । नित्यलक्ष्मीवैश्यादीन् वर्जयित्वा अरामान्तजातिवचनादुत्तरो लक्ष्म्यामीप् भवति । ननु जातिः केति प्रश्नावसरे नित्यमेकमनेकव्यक्तिसमवेतमिति यत्तत् सामान्यं जातिं प्रत्यायितुमशक्नुवन् वृद्धोक्त-जातिसंग्राहकपारिभाषिकलक्षणचतुष्टयमाह आकृतीति । पद्यस्थसूत्रचतुष्टयार्थोदाहरणानि दर्शयितुमुपक्रमते अयमर्थ इति । अस्य पद्यस्यायमर्थ इमान्युदाहरणानि चेत्यर्थः । अत्र प्रथमं प्रथमसूत्रं विवृणोति आकृत्येति । आकृत्या आकारमात्रेण विषाणपुच्छादिसंस्थानेनैव गृह्यते उपादीयते या सा जातिः स्यात् । गृह्यते येति वाक्ये टनः कर्मादौ चेत्यनेन कर्मणि टनः । अथ केशवेप इति वक्ष्यमाणकेशवेपोऽपवादस्य किङ्करा तत्करेत्युदाहरणं दत्त्वा यदित्यादिपदं तत्रस्थादिपदेनाकृतिग्रहणेत्यस्यच ग्रहणाज्जातिविशेषणत्वेऽप्यस्मादीप् न स्यात् । अथवा फलितार्थमेतदक्षरार्थन्त्वेवं । आक्रियते व्यज्यतेऽनयेत्याकृतिः संस्थानं गृह्यते प्रत्ययविषयीक्रियतेऽनेनेति ग्रहणं ज्ञानोपकरणं अनेनेति करणसामान्यव्युत्पन्नत्वादस्य ग्रहणशब्दस्यस्त्रीलिङ्गता नास्तीत्याकृतिसमर्थत्वेऽपि टित्त्वादीप्प्रत्ययो न भवति । आकृतिः ग्रहणं बोधसाधनं यस्याः सा आकृतिग्रहणा जातिः संस्थानव्यङ्ग्येति यावत् । अतएवाह यथेति हरिणत्वजातिः महिषीत्यादयः । एतेन मृगमहिषयोस्तथा गोसिंहमयूरशूकर-कुमारादिषुच शृङ्गपुच्छगलकम्बलादिसंस्थानव्यङ्ग्यत्वादाकृतिग्रहणोपदेशव्यङ्ग्या हरि-णत्वादिलक्षणा जातिरुक्त्वा गुणक्रियालक्षणाच प्रत्युक्ता संस्थानव्यङ्ग्यत्वाभावात् । नहि गुणक्रिययोरन्वितयोरप्याकारविशेषव्यङ्ग्यतास्ति तयोराश्रयमात्रोपलब्धावुपलब्धित्वा-दिति । नन्वेवं सति ब्राह्मणत्वादिरूपातु न संस्थानव्यङ्ग्या तदधिष्ठानस्य वृषलत्वाद्य-धिष्ठानेनापि समानरूपत्वेन संस्थानसाम्यात् । अतो द्वितीयलक्षणमुक्तं लिङ्गानाञ्च न

अयमर्थं उदाहरणानि च। आकृत्या आकारमात्रेण गृह्यते या सा

---

विशिष्टं वस्तु हि जाति शब्देनोच्यते। अतएवोदाहरति—हरिणीत्यदि। ननु ब्राह्मणत्वादि जाति नं खल्वाकृति ग्रहणा, तादृशाकृतेः शूद्रादौ च दर्शनादिति चेत्तत्र लक्षणान्तरमाचष्टे—लिङ्गानाञ्चेति, व्याख्यातमेव मूले। ब्राह्मणादि शब्दाः स्त्रीपुंसयोरेव वर्त्तन्ते नतु नपुंसके इति असर्वलिङ्गभाक्त्वमेषाम्। ननु च विष्णुमित्रादिसंज्ञा शब्दाश्चासर्वलिङ्गभाक्त्वाज्जातिशब्दाः स्यु रितिचेत्तन्निराकरोति—सकृदाख्यात निर्ग्राह्येति। सकृदेकवारमाख्याता

---

सर्वभागिति। तदेव व्याचष्टे तथेति। लिङ्गानां पुंस्त्रीनपुंसकानां मध्ये या सर्वं लिङ्गं न भजते, किन्तु पुंस्त्वं स्त्रीत्वञ्च भजते साच जातिर्भवतीत्यन्वयः। ब्राह्मणत्वादिजातिर्हि पुंस्त्रियोरेव वर्त्तते न नपुंसके इत्यसर्वभाग्वति। तथाच सर्वं भवतीति क्विपि समासेच कृते समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरित्युक्तदिशालिङ्गानामिति पदेनापेक्षणीयेन सह पश्चात् सङ्गतिरिति न समासविरोधः। नेति नञ्निषेधार्थाव्ययं वाद्वयसम्भवात्, यर्हि नञ् तदा समासाभावः। तदा त्वव्ययं तदा समासासमासयोस्तुल्यं उदाहरणमाह यथेति। ब्राह्मणत्वजातिः ब्राह्मणी देवत्वजातिर्देवीति। एवं वृषलीचण्डालीप्रभृतयः। अत्रैव कुमारीप्रभृतिरित्यन्ये। तेतु सकृदाख्यातनिर्ग्राह्येति पृथक् सूत्रं विधाय, एवं व्याख्यां कुर्वन्ति तद्यथा। ननु कुमारवृषलादीनां कथं जातिवाचित्वं तथाविधसंस्थानव्यङ्ग्यत्वाभावात्। तदेव कथं युवसंस्थानेन ब्राह्मणसंस्थानेनच कुमारसंस्थानस्य वृषलसंस्थानस्य चाभिन्नत्वात् सत्यं, अतएवाह सकृदाख्येति। कुमारत्वादिजातिरत्रोपदेशव्यङ्ग्येति। यथा संस्थानेनाक्रियते व्यज्यते इति संस्थानमाकृतिस्तथोपदेशेनाप्याक्रियते व्यज्यते इत्युपदेश एवाकृतिरेतद्व्यङ्ग्या जातिरत्रेति भवत्यत्राप्याकृतिग्रहणा जातिरित्युक्त्वा एतदुपसंग्राहकं लिङ्गानाञ्च न सर्वभागिति। चशब्दस्योक्तसमुच्चयादित्युक्तञ्च तथाहि, यत उपदेशव्यङ्ग्यत्वे सति संस्थानव्यङ्ग्यत्वाभावादाकृतिग्रहणा जातिरिति लक्षणेनासंगृहीतं कुमारादीनां जातित्वं लिङ्गानाञ्च न सर्वभागित्यनेनतु संगृहीतं तस्मादुपसंग्राहकमिति स्थितं। ननु यद्येवं मतान्तरेणापि कुमारादीनामादिपदात् ब्राह्मणादीनां जातित्वमसर्वलिङ्गभाक्त्वात् सिद्धं तदा देवदत्तादिशब्दोऽपि असर्वलिङ्गभाक्त्वात् जातिशब्दः स्यात्, सत्यमेतन्नेदं स्वतन्त्रलक्षणं अपितूपदेशापेक्षमित्यसर्वलिङ्गभाक्षु हरिणादिषु ब्रह्मादिषुच जातेरुपदेशव्यङ्ग्यतापीत्याह सकृदाख्यातनिर्ग्राह्येति। ननु देवदत्तादिशब्दोऽप्युपदेशमपेक्षत एव नह्यनुपदिष्टो देवदत्तादिशब्दं प्रयुङ्क्ते तदयुक्तमुपदेशार्थापरिज्ञानात्। मैवं। उपदेशो हि एकस्यां व्यक्तावेकदा कृतोऽनेकव्यक्तिषु तत्तत्प्रत्ययनिमित्तं भवन् सकलव्यक्तिव्यापक इहात्युपगम्यते नोपदेशमात्रं। न चैकद्रव्यसमवायिनो देवदत्तादिशब्दस्यैकस्यां व्यक्ताव्युपदिष्टस्य व्यक्तान्तरान्वयित्वमस्तीति न देवदत्तादेर्जातित्वं। ननु भवतु एतत्, यदि द्वे लक्षणे एकमेव लक्षणं तदा पद्यस्य लक्षणत्रयात्मकत्वे सति लक्षणचतुष्टयमिति कथमुक्तं, सत्यं, यद्यप्यनेन व्याख्यानेनैकं सूत्रं तथापि गौणमुख्यव्यवस्थया लक्षणचतुष्टयमिति नासङ्गतं तच्चैवं। यदा आकृतिग्रहणेत्यस्य मुख्यत्वं तदा लिङ्गानाञ्च न सर्वभाक् सकृदाख्यातनिर्ग्राह्येत्यनयोर्गौणत्वेन विशेषणत्वं, यदातु लिङ्गानाञ्चेत्यस्य

जातिः, यथा हरिणी महिषी। तथा लिङ्गानां मध्ये सर्वं लिङ्गं न भजते, किन्तु पुंस्त्वं स्त्रीत्वमेव या भजते सा च जातिः, यथा ब्राह्मणी

---

कथिता उपदिष्टा सती निःशेषेण ग्राह्या ज्ञानविषयीभूता भवति चेत्तदा सा जातिरित्यर्थः। एतत्तु न पृथग् लक्षणं, किन्तु पूर्वोक्तयोरेव विशेषणम्, अतश्च वृत्तौ—सा च सा चेति द्विश उक्तम्।

ननु तथापि विष्णुमित्रादिसंज्ञा शब्देष्वतिव्याप्ति स्तथैवतिष्ठति, तेषामपि सकृदाख्यात ग्राह्यत्वादिति चेत्? मैवं श्रूयताम्—आख्यातशब्द इह विशेषकथनपरः। आ सम्यक् ख्यातमाख्यातमुपदिष्टमित्यर्थः। सकृदेकदा ह्येकस्यां व्यक्तावुपदिष्टं सत् अनेक वस्तुषु तत्तद् प्रत्ययनञ्चेत् तदैव जाति र्भवति। यथा एकस्यां गोव्यक्तौ गोत्वजातेरुपदेशे,

---

मुख्यत्वं तदाकृतिग्रहणेति सकृदिति द्वयोर्गौणत्वेन विशेषणत्वमिति। तथाहि, उपदेशव्यङ्ग्यत्वे सत्यसर्वलिङ्गभाक्त्वेच आकृतिग्रहणा जातिः। एवं तादृशावयवसंस्थानव्यङ्ग्यत्वाभावेऽप्यूद्ध्वर्पुण्ड्रोपवीतादिसंस्थानव्यङ्ग्यत्वे सत्युपदेशव्यङ्ग्यत्वे त्वसर्वलिङ्गभाग्जातिरित्यर्थः। यद्यपि नाडायनत्वादिजातिर्हरिणादिषु हरिणत्वादिति वदन्ति, तथापि संस्थानव्यङ्ग्यत्वं नास्ति, तदाश्रयस्य जात्यन्तराश्रयेणापि सदृशत्वात्। नाप्यसर्वलिङ्गभाक्त्वं नाडायनी स्त्री नाडायनः पुमान् नाडायनं कुलमिति सर्वलिङ्गदर्शनात्। अतः पूर्वसूत्राभ्यामसंग्रहात् पृथक् तृतीयलक्षणमाह गोत्रञ्चेति। तदेवावतारयति तथेति। योगोऽत्र प्रत्ययान्तः स चापि जातिः स्यादित्यर्थः। पौत्रप्रभृत्यपत्यं गोत्रमिति वक्ष्यते। नडस्य गोत्रापत्यं चरस्य गोत्रापत्यमित्यर्थे नडादेर्माधव फ इति फस्तस्यायनः। नडायनी चारायणीति, एवं गार्गी वात्सीत्यादयः। एवं पूर्वसूत्रैरसंग्रहात् कठादीनामपि जातित्वं न स्यादिति चतुर्थलक्षणमाह चरणैः सहेति। चरणमपि जातिरित्यर्थः। एतदेव भङ्ग्या व्याकरोति तथेति। चरणं वेदशाखा वेदैकदेश इति यावत्। अतएव कठादिप्रोक्ततत्तद्रूपवेदशाखाध्यायीच जातिः स्यादित्यर्थः। कठादिशब्दोऽध्ययनक्रियाविशेषमाचक्षाणो यदा तदध्ययनसम्बन्धात् तदध्येतृपुरुषेषु वर्त्तते। तदायं चरणशब्द इति क्रियैवास्य प्रवृत्तिनिमित्तमिति चरणशब्दः क्रियाशब्दो जातिरतोऽस्य जातित्वप्रसिद्धये चरणैरित्यप्युक्तं। कठेन प्रोक्तं बह्वृचेन प्रोक्तमधीते इत्यर्थे कठचरकाभ्यां महाहर इति प्रोक्तप्रत्ययकेशव णस्य महाहरः। प्रोक्तप्रत्ययान्ताच्चेत्यध्ययनार्थकेशव णस्यापि महाहरः। कठी बह्वृची एवं कालापीत्यादयः। सर्वत्र जातावुपदेशापेक्षत्वेन सकृदाख्यातनिर्ग्राह्येत्यस्य लक्षणचतुष्टये विशेषणत्वं सूचयन्निदानीं सर्वलक्षणार्थमुपसंहरति सा चेति। साच साच सर्वजातिः सकृदेकवारमप्याख्यातेन कथनेनोपदिष्टेन निर्ग्राह्या निश्चयेन ग्राह्या सर्वत्र ज्ञेया भवतीत्यर्थः। एतेन जातेरेकत्वं नित्यत्वं प्रत्येकपरिसमाप्तित्वञ्च स्वरूपं दर्शितवान्। तथाहि, हरिणादावेकस्मिन् सकृदाख्याता जातिर्देशान्तरवर्त्तिन्यल्पे महत्यपि काले धवलेऽपि हरिणाद्यन्तरे निश्चयेन ग्राह्या भवति। तस्मादेका नित्या प्रत्येकपरिसमाप्ताच सा यदि ह्येका न स्यात्तदा सकृदाख्याता पिण्डान्तरे न गृह्यते, यदिच नित्या न स्यात्तदा

देवी । तथा गोत्रप्रत्ययान्तश्च जातिः, यथा नाडायनी चारायणी । तथा वेदशाखाध्यायी च जातिः, यथा कठी बह्वृची । सा च सा च

---

यथा वैकस्यां ब्राह्मण व्यक्ती ब्राह्मणत्वजातेरुपदेशे निखिल गोत्व-ब्राह्मणत्वादेः प्रतीतिः स्यात्, संज्ञाशब्देषु तु न तथा, विष्णुमित्रादि नामकेषु सर्वव्यक्तिषु विभिन्नस्वभावादित्वेन तुल्यलक्षणाभावादिति । तस्मादेतदुभयोः पर्यवसितलक्षणम्—नित्यानेक समवेता चैका काचिदसाधारणी व्यक्ति धर्मरूपा जातिरिति । यथा हि नित्यत्वाद् व्यक्ते विनाशेऽपि गोत्वादि धर्मरूपजातेः स्थिति रवगम्यते, अनेक समवेतत्वादेकस्यां व्यक्तौ परिचितायाम-खिलस्य ज्ञानमुपलभ्यते । स चासाधारण धर्मो गोत्वादे र्गलकम्बल शृङ्गपुच्छलोमादि-मत्त्वम् प्रसिद्धम् । केचित्तु—प्रागुत्पत्तिविनाशाभ्यां सत्त्वस्य युगपद् गुणैः । असर्वलिङ्गां बह्वार्थां तां जातिं कवयो विदुः । इत्येवं लक्षयन्ति ।

अथ तृतीयं रूढितयोच्यते—गोत्रञ्चेति । तथा चरणं वेदशाखाध्यायी च जाति रिति वृत्तौ व्याख्यातम् । प्रत्युदाहरति—नेहेति । नित्यलक्ष्मी वैश्यादे र्वर्जनात् बलाका

---

पिण्डविनाशेनच जातेर्विनाशात् पिण्डान्तरे जातिर्नोपलभ्यते, यदि प्रत्येकपरिसमाप्ता न स्यात्तदा यत्राख्याता तस्मिन्नपि पिण्डे सर्वात्मना न गृह्यते, किं पुनः पिण्डान्तरे अंशेन हि परिसमाप्तौ सत्यामंश एव ह्येत न जातिर्न हि जात्यंशो जातिर्भवति, अनेकत्व-प्रसङ्गतः सर्ववर्णाचार्यधृतवृद्धोक्तमतान्तरमपि दर्श्यते । प्रागुत्पत्तिविनाशाभ्यां सत्वस्य युगपद्गुणैः । असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः । सत्वं द्रव्यं गुणानाम-जात्यात्मकत्वं प्रतिपादयितुं गुणैरिति विशेषणे तृतीया दर्शिता अनेकद्रव्याश्रयोऽर्थो भवतीति बहुवचनं । अयमर्थः । गुणाः खलूपजननापायधर्माणः सत्येवार्थे उत्पद्यन्ते विपद्यन्तेच । तेनोत्पत्तिविपत्तिधर्मकैरनेकैर्गुणैर्युगपद्विशिष्टो गवादिरर्थो भवति । तस्य चैवं विधस्यार्थस्य यद्रूपान्तरमुत्पत्तिविनाशाभ्यां प्राक् नोत्पद्यते नच विनश्यति । केवल-मुत्पद्यत्तेः प्रभृत्याविनाशमनुगच्छति तत्सामान्यात्मकं रूपं हरिणत्वादिलक्षणं जाति-रित्यर्थः । प्रादुर्भावविनाशाभ्यामिति पाठे त्वयमर्थः । प्रादुर्भाव उत्पत्तिर्विनाशोऽनभि-व्यक्तिः । द्रव्यस्य प्रादुर्भावेण विनाशेच गुणैः सह यः सम्बन्धः सा जातिः । एतेन द्रव्यस्योत्पत्तौ उत्पद्यते नाशेच नश्यतीति सूचितं । तेन द्रव्यस्य क्रियायाश्च जातित्वं निरस्तं, नहि द्रव्यं क्रिया वा द्रव्यस्योत्पत्तौ उत्पद्यते नाशेच नश्यतीति नियमोऽस्ति । नन्वेवं गुणानामपि जातित्वं स्यात्, गुणा अपि द्रव्यस्योत्पत्तौ उत्पद्यन्ते नाशे नश्यन्तीति । अतो व्याख्यातं गुणैः सह युगपत् सम्बध्यते इति, यदा द्रव्ये गुणाः सम्बध्यन्ते तदैव जातिरपि । एतेनैव गुणेभ्यो जातेः पृथकत्वं सूचितं, एतदेव पाठान्तरीयव्याख्याणं । किञ्च, यद्वत् हरिणत्वादिजातिर्द्रव्यस्योत्पत्तेः प्रभृत्याविनाशमनुवर्त्तते । तद्वत् ब्राह्मणत्वादि-जातिर्न यतो द्रव्यस्योत्पत्तौ केवलं प्रवर्त्तते, कदाचिद्द्रव्यनाशात् प्रागप्यपैतिच । ब्राह्मणो हि तपः श्रुतिश्च योनिश्च एतद्ब्राह्मणकारणमिति । नच तदहर्जातस्यैतत्त्रयमुत्पत्तेः प्रभृत्युप-पद्यते, तथा सत्यपि तस्मिन् पिण्डे विमार्गगामिनि क्रियाभ्रंशात् ब्राह्मणत्वस्य भ्रंश इति

सकृदव्याख्यातेन कथनेन निर्ग्राह्या सर्वत्र ज्ञेया भवतीति। नेह—बलाका वैश्या क्षत्रिया। प्रायो यरामोद्भवो वैश्यादिः।

**२३४. इरामान्तान्नृजातेः।**

अवन्ती कुन्ती दाक्षी।

**२३५. नृ-नरयो र्नारी।**

---

प्रभृते स्तु न ईप् इत्यर्थः। वैश्यादीत्यत्र आदिशब्दवाच्यं प्रकटयति—प्राय इति। केचित्तु यरामोद्भवा वैश्यान्तर्गणे नावतिष्ठन्त इत्यभिप्रायेण प्रायः शब्दः प्रयुक्तः। यथा—हय गवय मूकय ऋष्य मत्स्यादन्यो योपधो वैश्यादिरिति पद्मनाभः। तेन क्षत्रिय अय्य प्रभृतय एव वैश्यादय इत्यायातम्। एवं नित्यलक्ष्मीः—मक्षिका पिपीलिका लता माया प्रभृतेश्च निषेधो ज्ञेयः।

**अमृता०**—२३४. इरामान्तादिति। इरामान्तात् मनुष्यजातेरुत्तरे लक्ष्म्यामीप् भवति। अवन्ती कुन्तीति—कुर्वादेर्ण्यराम इति गोत्रापत्यार्थे यण्, तस्य च अवन्तिकुन्तीत्यादिना हरो वक्ष्यते। दाक्षीति—अराम वाह्वादिभ्यामित्यनेन दक्षशब्दादपत्यार्थे नृसिंह इः, ततः पुन र्गोत्रार्थे इः। सर्वत्र गोत्रञ्च चरणैः सहेति लक्षणेन जातित्वं मन्तव्यम्।

**अमृता०**—२३५. नृइति। लक्ष्म्यां नृनरशब्दयो र्जात्यर्थे ईपा सह नारीति साधुः

---

हरिणत्वादिवन्नाशमनुवर्त्तते अतो लक्षणान्तरमाह असर्वलिङ्गमिति। यस्यामपि सर्वलिङ्गं न वर्त्तते, किन्तु एकं द्वे वा लिङ्गे भवतः सापि जातिः। यथा ब्राह्मणत्वादिः। अत्रतु मते गोत्रचरणलक्षणाप्यसर्वलिङ्गभाक्त्वाज्जातिः। यदाह शाकटायनः। गोत्रचरणमतिलिङ्गत्वाज्जातिरिति। एवं सति देवदत्तादेरपि जातित्वं स्यात्, अतस्तन्निरसितुमाह वह्वार्थामिति। अनेकव्यक्त्याधारामित्यर्थः। न चैवं देवदत्तादेरिति। तथा कुमारादीनामपि न जातित्वं। नहि कुमारत्वमुत्पत्तेः प्रभृत्याविनाशमनुवर्त्तते। तिष्ठत्येव हि देवदत्तादिकेऽर्थे तद्विनश्येति तन्नाशे वयोऽन्तरञ्चोत्पद्यते इति द्रव्यस्योत्पत्तिविनाशाभ्यां प्राक् न कुमारत्वाद्यस्तीत्यजातित्वं पूर्वलक्षणेतु कुमारत्ववृद्धत्वादेराकृत्या ग्रहणमस्तीति अतएव कुमारादीनां जातित्वाभावपक्षमाश्रित्याचरमवयस्के गौरादित्वात् कुमारीताद्युदाहृतं। जातित्वपक्षेतु कुमारवादीत्यसाधु इति कश्चित्, अजातावनुपेन्द्र इति णिनिविधानसूत्रात्। नेहेति, ईप्प्रत्यय इह न स्यात्। नित्यलक्ष्मीवैश्यादिवर्जनादिति भावः। बलाकात्वजातिर्बलाकेति बलाका बकपङ्क्तिः। नित्यलक्ष्मीत्वादत्रेप् न स्यात्। वैश्यत्वजातिर्वैश्येति क्षत्रियत्वजातिः क्षत्रियेति। वैशादिवर्जनादत्रेप् न स्यात्। वैश्यादिगणग्राहकप्रकारमाह प्राय इति। प्रायः शब्दोपादानात् कश्चित् कश्चिद्यरामोद्भवो वैश्यादिर्न स्यात्। तेन गार्ग्यप्रभृतीनां वर्जनं स्यात्॥ २३३॥

**बाल०**—इरा। इरामान्तात् नृजादेरुत्तरो लक्ष्म्यामीप्। अवन्तेर्जातिरवन्ती एवं कुन्तिदाक्षी एते एयो मनुष्यजातिभेदा॥ २३४॥

ईवन्ता साधुः। ईप् निवृत्तः।

**२३६. ऊङ्।**

प्रभुरयम्।

**२३७. उपमानपुर्वादूरोरूङ्, सहित संहित वामादिपूर्वाच्च।**

करभोरूः सहितोरूः।

**२३८. अ-यरामोद्धवादुरामान्नृजातौ।**

---

स्यात्। ऋरामगोपीत्यादिना नृशब्दस्य, तथा अरामान्तजातेरित्यनेन नरस्य चेप् सिध्यत्येव, किन्तूभयत्र वृष्णीन्द्रो हि निपातफलम्। समाप्त ईपोऽधिकारः।

**अमृता०**—२३७. उपेति। उपमानपूर्वादूरुशब्दाल्लक्ष्म्यामूङ् प्रत्ययः स्यात्, तथा सहित संहित वामादि पूर्वाच्च ऊरुशब्दात् लक्ष्म्यामूङ् भवति। सहितादीनामुपमानत्वाभावात् पृथक् ग्रहणम्। करभोरूरिति—मणिबन्धादाकनिष्ठं करस्य करभो बहि रिति यद्यप्यमरशासनमस्ति तथाप्यर्थसङ्गतये करभ इह कलभ उच्यते, रलयोरेकत्वश्रवणात् तत्रापि करिशावक रूपं मुख्यार्थमपहाय लक्षणया कलभशुण्ड इह ग्राह्यः उपमानानुरोधात्। करभौ करिशुण्डाविव ऊरू यस्याः सा करभोरूः राधा। एवं रम्भोरू प्रभृतयश्च। सहिताबूरू यस्याः सा सहितोरू। एवं वामारूः ह्रस्वरू रित्यादयश्च।

**अमृता०**—२३८. अयरामेति। नविद्यते यरामोद्धवो यस्य तादृशादुरामान्तात् लक्ष्म्यामूङ् स्यात् नृजातौ वाच्यायाम्। ब्रह्मबन्धु निन्दित ब्राह्मण इत्यसौ नृजातिरेव। कुरूरिति गोत्रलक्षण जातित्वादूङ्। भीरुरिति केचिदिति—बहुलाधिकारात् भीरुरित्य-

---

**बाल०**—नृन। लक्ष्म्यां जातावर्थे नृनरयोरीप्प्रत्ययान्ता नारी साधुः। ऋरामगोपीत्यनेन अरामान्तजातेरित्यनेनच ईप्प्रत्ययः सिध्यत्येव, किन्तु नृशब्दस्य यदा नारी तदा ऋरामस्य वृष्णीन्द्रो निपातफलं। नरशब्दस्य यदा नारी तदा नरामसम्बन्धिनोऽरामस्य वृष्णीन्द्रो निपातफलमिति। ईप्प्रकरणं निवर्त्तयति ईविति॥ २३५॥

**बाल०**—ऊङ्। लक्ष्म्यां नाम्नः यथायोग्यमूङ् भवति। प्रभुनामायमधिकारः॥२३६

**बाल०**—उप। उपमानपूर्वादूरोरुत्तरो लक्ष्म्यामूङ् स्यात्। सहि। सहितसंहितवामादिपूर्वाच्चोरुशब्दाल्लक्ष्म्यामूङ भवति। चरामोऽत्र उक्तसमुच्चयार्थः। करभाविव उरू यस्या सा करभोरूरिति। मणिबन्धादाकनिष्ठ करस्य करभो वहिः। इत्यमरः। कलभः करिशावक इत्यनुशासनात्तु यदि डलयोः प्राय एकत्वश्रवणादित्युक्तदिशा करभशब्देन कलभ उच्यते तदा न सम्भवति। नहि हस्तिशावकसदृशः कस्याः अप्युरुरस्ति अतएव करभशब्दः कलभशुण्डे लाक्षणिकस्तथा सत्यनेनापि करभोरूर्भवितुमर्हति। सहितावुरू यस्याः सा सहितोरूरिति। एवं सहितोरूः वामोरूः। आदिपदात् खञ्जोरूः ह्रस्वोरूरित्यादयः॥ २३७॥

ब्रह्मबन्धूः कुरूः भीरूः। भीरुरिति केचित्। नेह—अध्वर्यु ब्र्रह्मजातिः।

**२३६. अप्राणिजाते रुरामाद्रज्ज्वादि वर्जम्।**

अलाबूः कर्कन्धूः। नेह—रज्जुः हनुः।

**२४०. कद्रू पङ्गूश्वश्वश्रादयः।**

उङन्ताः साधवः। ऊङ् निवृत्तः।

**२४१. अजादेराप्।**

पूर्वस्यापवादोऽयम्। तत्र जातीयः—अजा अश्वा एड़का कोकिला क्रुञ्चा चटकेत्यादि। अथ केशवेपः—किङ्करा तत्करा इत्यादि। भार्या-

---

पीति पद्मनाभः। अध्वर्युरिति—अध्वर्यु शाखाध्यत्रीति चरणलक्षण जातित्वे प्राप्तेनिषेधः। नृजातेरिति किम्—धेनुः। जाते रिति किम्—किमभीरुरराय़से इति भट्टिः। अत्र भीरु शब्दः क्रियावचनः।

**अमृता०**—२३८. अप्राणीति। रज्वादीन् वर्जयित्वा अप्राणि जातिवाचकात् उरामामान्तात्लक्ष्म्यामूङ् स्यात्। अलाबुः तुम्बी, कर्कन्धु वंदरीति प्राणि जातित्व-विरहादेताभ्यादूङ्।

**अमृता०**—२४०. कद्रू इति। कद्रूप्रभृतयो लक्ष्म्यामूङन्ताः साधवोभवन्ति। पूर्वोक्तविधान सूत्रै रूङ इहाप्राप्ते निपातविधानं, तथा श्वशुरस्य द्वितीय तृतीय सर्वेश्वर ह्रार्थश्च। कद्रूः कश्यपपत्नी, नागमाता। पङ्गू जंङ्घा वैकल्येन चलनाक्षमा। श्वशुरस्य भार्या श्वश्रूरित्यर्थः।

**अमृता०**—२४१. अजादेरिति। लक्ष्म्यामजादि शब्देभ्य आप् प्रत्ययोभवति। पूर्वस्येति—येन केनापि लक्षणेन विहितस्येपोऽपवाद एष विधि रित्यर्थः। तदेवप्रकटयति

---

**बाल०**—अ-य। नास्ति यराम उद्भवो यस्य सोऽयरामोद्भवस्तस्मात् नृजातौ वाच्यायां लक्ष्म्यामयरामोद्भवादुरामान्तादूङ् भवति। ब्रह्मबन्धुर्निन्दितब्राह्मणः सतु मनुष्यजातिरेव तथा कुरूः भीरूः। भीरुरिति केचिदिति तन्मतेऽत्रोङ् न स्यादिति सूचितं। नेहेति यरामोद्भवादिति शेषः। ब्रह्मजातिरपि नृजातिरित्यध्वर्युरित्यत्र निषेधः अध्वर्यु-र्याज्ञिकविशेषः॥ २३८॥

**बाल०**—अप्रा। लक्ष्म्यां रज्ज्वादीन् वर्जयित्वा अप्राणिजातेरुरामान्तान्नाम्न ऊङ् भवति। अलाबुः तुम्बी कर्कन्धूर्वदरी। नेहेति वर्जनादिति शेषः। रज्जुर्गवादिबन्धनी हनुर्मनुष्याद्यङ्गविशेषः॥ २३६॥

**बाल०**—कद्रू। कद्रूश्च पङ्गूश्च श्वश्रूश्च ता आदयो येषां ते तद्रूपङ्गूश्वश्र्वादयः। लक्ष्म्यां अद्रूपङ्गूश्वश्र्वादयः प्रयोगा ऊङन्ताः साधवो भवन्ति। एते तत्तद्गुणयुक्ताः। आदिपदात् पाण्डूप्रभृतिश्च। ऊङन्तं निवर्त्तयति ऊङिति॥ २४०॥

वय ईपः—मुग्धा ज्येष्ठा कनिष्ठा मध्या मध्यमा गोपालिका शिशु-पालिका इत्यादि । वयसि—कन्या बाला होडा पाका वत्सका मन्दा विलाता इत्यादि अजादि राकृतिगणः ।

## २४२. शूद्रादमहत्पूर्वात् ।

**शूद्रा । नेह महाशूद्री । अतोऽत्र प्रदरणे तदन्तविधिरिष्यते । महाजा । कथं पञ्चाजी ? विशेषविधेः ।**

---

नामोल्लेखन—तत्र जातीय इत्यादिना । अजादि षण्णां—अरामान्तजातेरित्यादिना प्राप्तस्येपो बाधक आप् । केशवेप इति—'किं यत्तत् बहुष्वत् इत्यनेन किङ्करादि शब्दाः टप्रत्ययापवादरूपा अत्प्रत्ययान्ता इति—अण् केशवगौरादिभ्य इत्यनेन प्राप्तेपोऽपवादः । भार्येति—भार्या च वयश्च भार्यावयसी, तयोरीपोऽपवाद उदाह्रियत इति शेषः । तस्य भार्येत्यर्थे विहितेप् मुग्धादिषु वारितः । वयसीति—अचरमवयस्काः सर्वे गौरादय इत्यनेनोपदिष्ट गौरादित्वादीपि प्राप्ते तदपवाद इत्यर्थः । आकृतिगण इति—अपरिमित-संख्यक इत्यर्थः ।

**अमृता०**—२४२. शूद्रादिति । न विद्यते महच्छब्दः पूर्वेयस्य तादृशात् शूद्रशब्दा-ल्लक्ष्म्यामाप् भवति । अरामान्तजाते रित्यादिना ईपि प्राप्ते तदपवादार्थ आप । शूद्रा ब्रह्मण श्चरणोद्भवा जातिः । अत इति—अत्र लक्ष्मीप्रकरणे तदन्तविधिरिष्यते । यतः शब्दान्तरपूर्वात्तु शूद्रादाप्प्राप्नोति तत एव महच्छब्दपूर्वत्वे तन्निषिध्यते, अन्यथा निषेधा-प्रसक्तेः । तस्मादिदमेव सूत्रं तदन्तविधे र्ज्ञापकमिति ज्ञातव्यम् । तदेव दर्शितमुदाहरणेन—महाजेति । पञ्चाजीति—अत्रपञ्चानामजानां समाहार इति विग्रहे त्रिरामी, तस्याश्च—'त्रिराम्या ईप्' इति विशेषविधित्वादीप् हि प्रवर्त्तत इत्यर्थः ।

---

**बाल०**—अजा । लक्ष्म्यामजादेरुत्तर आप् स्यात् । पूर्वेति । येन केनापि ईप्प्राप्तस्य पूर्वस्यायं विधिरपवाद इति ज्ञेयं । तत्र पूर्वं मध्ये जातोपोऽपवाद उच्यते । अजत्वजातिः अजेति । अरामान्तजातेरित्यनेन प्राप्तेरत्र निषेधः । एवमश्वादयः पञ्च । आदिशब्दात् यथासम्भवमन्येऽपि । अथानन्तरं केशवेपोऽपवाद उच्यते किङ्करेति । किंयत्तत्बहुष्व-दित्यनेनात्र टप्रत्ययापवादोऽत् प्रत्ययस्तेन केशवेपोऽपवादोऽपि सिद्धः । एवं तत्करा । इत्यादीत्यादिपदेन यत्करा बहुकरेत्यादयः । भार्याच वयश्च भार्यावयसी तयोरीपोऽपवादो दर्श्यते । मुग्धस्य भार्या मुग्धा । एवं ज्येष्ठादयः षट् । आदिपदात् यथायोग्यमन्येऽपि । वयसीति वयसीपोऽपवादो यथा । कन्या बाल्येत्यादौ गौरादित्वात् प्राप्तेऽपवादः । होडा पाकेत्यादौतु वयसि गम्ये स्वार्थे प्राप्तेऽपवादः । अजादेरपरिमितत्वादाह अजादिरिति ॥ २४१ ॥

**बाल०**—शूद्रा । महच्छब्दः पूर्वो यस्मात् स महत्पूर्वः न महत्पूर्वः अमहत्पूर्व-स्तस्मात् । अत्र महच्छब्दस्यानुकरणत्वात् महतः संसारस्याराम इत्यनेन संसारस्यारामो न स्यात् । जातौ वाच्यायां लक्ष्म्याममहत्पूर्वात् शूद्रादाप् भवति । शूद्रत्वजातिः शूद्रा ।

## २४३. त्रिप्रभृतीनामन्त्यमुत्तमं, तत्समीपमुपोत्तमम् ।

**अमृता०**—२४३. त्रीति । संज्ञासूत्रम् । त्रिशब्द एकद्वयो निरासकः त्रयाणामक्षराणामन्ते विद्यते यत्तदुत्तमसंज्ञं भवति । प्रभृतिशब्देन चतुः पञ्चादीनाञ्च अन्तस्थितमुत्तममिति च लभ्यते । तस्य उत्तमस्य समीपमुपोत्तममिति सामीप्ये अव्ययीभावः ।

---

नेहेति महत्पूर्वत्वात् । महाशूद्रीति महाशूद्रशब्दोऽत्राभीरजातिवाची । किन्तु वैश्यो यदा गोभिरुपजीवति तदा स एवाभीरजातिः । अरामान्तजातेरित्यनेनात्रेप् । महतः संसारेत्यनेन महत आरामः । जातेरन्यत्रतु शूद्री । अत इति । अत उक्तात् महत्पूर्वशूद्रवर्जनादत्र प्रकरणे, तदिति तदन्तात् महदन्तादन्यस्मात् विधिरिति विशेषविधिरिष्यते इत्यर्थः । तेन महाजेति । ननु कथं पञ्चाजीति । अजादेरावत्र कथं न स्यात् ? सिद्धान्तमाह विशेषेति । त्रिराम्या विशेषविधित्वादित्यर्थः ॥ २४२ ॥

**बाल०**—त्रिप्र । त्रीणि प्रभृतीति आदीनि येषां तानि त्रिप्रभृतीनि तेषां । त्रिप्रभृतीनां वर्णानामन्त्यमन्तभववर्णमुत्तमसंज्ञं तत्समीपमुत्तमनिकटस्थमुपोत्तमसंज्ञं स्यात् । यावादिप्रत्ययविधिसूत्रापेक्षितं संज्ञासूत्रमेतत् । गुरू । गुरूपोत्तमाभ्यामनार्षाभ्यां ऋषिवश्यरहिताभ्यां गोत्रार्थविहिताणिण्प्रत्ययान्ताभ्यां नामभ्यां लक्ष्म्यां याप् स्यात् । गोत्रप्रत्ययान्तस्य जातित्वात् प्राप्तेपोऽपवादनार्थमिदं । क्रौडि । क्रौडिप्रभृतेश्च गोत्रविहिताणिण्प्रत्ययान्ताल्लक्ष्म्यां याप् स्यात् । उत्तमादिसंज्ञत्वाभावादिदं । अणिति केशव णः । करीषः शुष्कगोमयस्तद्गन्ध इव गन्धो यस्य स करीषगन्धस्तस्य गोत्रापत्यं स्त्रीति विदादेः केशव णः । कारीषगन्ध इत्यस्मात् याप् अ-इद्वयस्येत्यरामहरः, कारीषगन्ध्येति उत्तमसंज्ञायां त्रिप्रभृतीनामन्त्यमिति यत् तत्तु द्विप्रभृतीनामन्त्यनिरासार्थं न चतुःपञ्चादीनां तेनात्र चतुर्णामन्त्यो दरामस्याराम उत्तमस्तत्समीपो गरामस्याराम उपोत्तमः सतु सत्सङ्गात् पूर्वो वामनोऽपीत्यनेन गुरुश्च । तेनैतत् ज्ञापितं, यो द्विप्रभृतीनामन्त्यः स नोत्तमस्तत्समीप उपोत्तमोऽपि न स्यादिति । वाराह्येति वराहस्य गोत्रापत्यं स्त्रीति अरामवाह्वादिभ्यामिति नृसिंह इः । यत्रतु विशेषविधानं नास्ति तत्र सामान्यमेवेति वक्ष्यमाणत्वात् । अत्र त्रयाणामन्त्य इराम उत्तमस्तत्समीपो ररामस्याराम उपोत्तमो गुरुश्चेति याप् । एवं दैवदत्त्या याज्ञदत्त्या प्रभृतयः । गोत्रविहितादन्यत्र कारीषगन्धी वाराहीति । क्रोडस्य गोत्रापत्यं स्त्रीति पूर्ववदरामवाह्वादिभ्यामिनृंसिंहस्ततस्त्रिप्रभृतित्वाभावादुत्तमादेरभावेऽपि विधानबलात् याप् क्रौड्येति । नडस्य गोत्रापत्यं स्त्रीति नडादेर्माधव-फ इत्यनेन फे प्राप्तेऽपि द्रोणादेर्माधव-फो वेत्यत्र द्रोणादेरन्तर्गणत्वात् पक्षे इनृंसिंहः नाडिस्तस्माद्याप् नाड्येति । क्रौडि प्रभृतेश्चेत्यत्र प्रभृतिपदात् नाडि व्याडि आपिशलि आपक्षिति सौधातकि चौपयत चैकयत शैकयत वैङ्कयत भौकिरि भौकिलि शालास्थलि कापिष्ठलीत्येते त्रयोदश । क्रौड्यादयः षडिणन्तास्तत्राद्येषु त्रिषु द्व्यक्षरत्वात् शेषेषु गुरूपोत्तमत्वाभावादप्राप्ते विधानं । चौपयताद्याश्चत्वारोऽणन्ताः शेषा इणन्तास्तेष्वपि

## २४४. गुरूपोत्तमाभ्यामनार्षाभ्यां गोत्रविहिताणिण्प्रत्ययान्ताभ्यां याप्, क्रौडि प्रभृतेश्च ।

अण्—कारीषगन्ध्या । इण्—वाराह्या । क्रौड्या नाड्या । अनार्षाभ्यां किम् ? वाशिष्ठी ।

## २४५. भोज्या क्षत्रियजातौ, दैवयज्ञ्या प्रभृतयो वा ।

यावन्ताः साधवः । पूर्णो लक्ष्म्याधिकारः ।

---

**अमृता०**—२४४. गुर्वीति । गुरु उपोत्तमं ययो स्तादृशाभ्यां, अनार्षाभ्यां, गोत्रार्थे विहिताणिण् प्रत्ययाभ्यामुत्तरे लक्ष्म्यांयाप् स्यात् अनार्षाभ्यामिति ऋषिवंशयरहिताभ्यामित्यर्थः । गोत्र प्रत्ययान्तत्वेन जातित्वात्—अरामान्तजातेरित्यादिना, इरामान्नृजातेरित्यादिना च प्राप्तस्येपो बाधको याप् । तथा क्रौडि प्रभृतेश्च गोत्र विहिताणिण् प्रत्ययान्ताद् याप् स्याल्लक्ष्म्याम् । कारीषगन्ध्येति—कारीषः शुष्क गोमयः, तस्येव गन्धोऽस्येति—सूतपूतिसुरभिपूर्वादित्यादौ—उपमानपूर्वाच्चेति गन्धादिरामःकारीषगन्धिः, तस्य गोत्रापत्यमित्यण्—कारीषगन्धः, ततो लक्ष्म्यां याप् । अत्र त्रयाणामन्त्यो धरामस्याराम एव उत्तमः, तत् समीपो गरामस्थोऽराम उपोत्तमः, सच सत् सङ्गात् पूर्व इत्यनेन गुरु रिति । वाराह्येति—वराहस्य गोत्रापत्यं स्त्रीति—अरामवाह्वादिभ्यामित्यनेन नृसिंह इः—वाराहिः । अत्र त्रयाणामन्त्य इराम उत्तमः, तत्समीपो ररामस्थ अरामः, स्वभावतो गुरुः । क्रौडिप्रभृतेरुपोत्तमलक्षणाप्राप्ते पृथगुपादानं ज्ञेयम् । क्रोडस्य गोत्रापत्यं स्त्रीति नृसिंह इरामः क्रौडिः, ततो याप् । एवं नडस्य गोत्रापत्यं स्त्री नाड्या । अत्र प्रभृति शब्देन—व्याडि आपिशलि आपक्षिति सौधातकि चौपवत चैकयत शैकयत वैङ्कयत भौकिरि भौकिलि शालास्थलि कापिष्ठलीत्येते ग्रहणीयाः पूर्वाचार्यदर्शितदिशेति ।

**अमृता०**—२४५. भोज्येति । क्षत्रियजातौ वाच्यायां भोज्येति यावन्तः साधुः स्यात् । दैवयज्ञ्या प्रभृतयो गोत्रजातौ यावन्ता साधवो वा भवन्ति । पक्षे दैवयज्ञ प्रभृतयः । अत्र प्रभृति पदात् शौचवृक्षि शात्यमुग्रि कोष्ठेत्रृद्धीत्येते ग्राह्याः ।

व्याख्यातो लक्ष्म्याधिकारः ।

---

गुरूपोत्तमत्वाभावादप्राप्ते विधानं । अनार्षाभ्यां किं किमर्थं यद्यार्षौ स्यातां तर्हि किं स्यात् । वशिष्ठस्य गोत्रापत्यं स्त्री वाशिष्ठी तथा वैश्वामित्री ॥ २४३ ॥

**बाल०**—भोज्या । क्षत्रियजातौ वाच्यायां भोज्येति यावन्ता साधुः । दैव । दैवयज्ञ्याप्रभृतयो गोत्रजातौ यावन्ताः साधवो वा भवन्ति । देवयज्ञस्य गोत्रापत्यं स्त्री दैवयज्ञ्या इत्यादि नित्यप्राप्तेऽत्र विभाषा । सूत्रस्थप्रभृतिपदात् शौचवृक्षि शात्यमुग्रि काष्ठेवृद्धिश्च ज्ञेयः । लक्ष्म्यधिकारं समापयति पूर्ण इति ॥ २४४ ॥

**बाल०**—इतः । इतःपरं प्रत्ययानां परिभाषा दर्श्यते । परीति समाप्तिपर्यन्तेयं परिभाषा इत्यर्थः । इदानीं परिभाषालक्षणमाह किञ्चेत्यादिना । प्रत्य । प्रत्यये कर्त्तव्ये

**२४६. इतः प्रत्ययविभाषा ।**

परिभाषेयमापरिसमाप्तेः । किञ्च,

**२४७. प्रत्यये ख ईनः, घ इयः, छईयः, ठ इकः ठीस्त्वीकः, ढएयः ढक एयकः, फआयनः, फिस्त्वायनिः, वुरकः ।**

**प्रत्यये कर्त्तव्ये ईनादीनां पाणिनीयवत् खादिस्थानीयता ज्ञेयाः । तत्र वर्णस्वरूपे रामः, यथा खराम ईन इत्यादि । किञ्च,**

---

**अमृता०**—२४६. इतइति परिभाषासूत्रम् । इतः परं प्रत्ययानां विभाषा दर्श्यते । इतः प्रभृति ये प्रत्यया उच्यन्ते ते तु विभाषया प्रवर्त्तन्त इत्यर्थः । पक्षे प्रत्ययार्थ प्रत्यायक वाक्यानि समासाश्च तिष्ठन्तीति भावः ।

**अमृता०**—२४७. प्रत्यय इति खण्डसूत्राणि । प्रत्यये कर्त्तव्ये खादीनां दशानां स्थाने यथासंख्यमीनादयो दश आदिश्यन्ते । संज्ञातिदेशोऽयम् । वृत्तिमाह—प्रत्यय इति । पाणिनीयवदिति पाणिनीया यथा वोरकः योरन इत्येवमादिश्य अकादीनां वुप्रभृति-स्थानीयतां मन्यन्ते तथा ईनादीनां खादिस्थानीयता मन्तव्येत्यर्थः ।

---

खादीनां दशानां यथासंख्यमीनादयो दशादेशो भवन्ति । प्रकारान्तरेण वृत्तिं प्रदर्शयति इत्यय इति । प्रत्यये इति । प्रत्यये कर्त्तव्ये सति पाणिनीयानां यथा वोरकं योरनमित्यत्रा-कादीनां व्वादिस्थानीयता तद्वदीनादीनां खादिस्थानीयता इत्यन्वयः । अत्रेति खरामा-दिष्वित्यर्थः । राम इति द्रष्टव्य इति शेषः । तत्प्रकारं दर्शयति यथेति । इत्यादीत्यादिपदेन घराम इयः छराम ईय इत्यादयः । अपरविशेषमाह किञ्चेति ।। २४५ ।।

**बाल०**—टित् । ट इत् यस्य स टित्, टित्प्रत्ययः केशवसंज्ञो भवति । **टणि ।** टणावितौ यस्य स टणित् । टणित्प्रत्ययो माधवसंज्ञो भवतीति द्वयं संज्ञासूत्रं ।। २४६ ।।

**बाल०**—तेन । तेन दीव्यतीत्यतोऽर्थात् प्रागर्थेषु पूर्वष्वर्थेषु नाम्नः केशवणो भवति । पारिभाषिकविधिसूत्रमेतत् । समासकार्यादावणिति यदुक्तं तदेव स्मारयति अयमेवेति । तत्रेति । तेन दीव्यतीत्यतः प्रागर्थेषु मध्ये वाक्यस्थकतिचित्पदानामुक्तार्थ-त्वेनायोग इति प्रकारं कथयति ततश्चेति । च पुनस्ततो हेतोरिति योज्यं । तत इति ततोऽनन्तरं । तथापीति स्वादेर्महाहरेऽपीत्यर्थः । इतीत्यस्मात् परस्मिन् स्वादितद्धितयो-रित्युक्तत्वादिति योज्यं । य-सर्वेश्वरयोरित्यस्मात् परयोरिति योज्यं । विष्णुपदत्वाभाव इत्यत्र पूर्वस्य विष्णुपदेत्वत्र अय-सर्वेश्वरयोरित्युक्तादिति हेतुर्द्रष्टव्यः । किन्त्विति अपरं वक्ष्यते इत्यर्थः । तद्धिते यश्च इति हेतोर्यं सर्वेश्वरयोर्भगवत्संज्ञे वेत्यर्थः । पूर्वोक्तवृष्णीन्द्र-लक्षणं सूचयति आदीति । उद्वयस्य गोविन्द इति गोविन्दः । माधव इति । पक्षे इति तद्धितबाहुल्यात्, पक्षे सर्वत्र वाक्यं समासश्च वर्त्तते, तदेव दर्शयति मधोरिति क्रमेण । उदाहरणान्तरमाह वृत्रेति । अपत्यादिरित्यादिपदेन गोत्रयुवाप्रत्यययोर्ग्रहणं । ननु वार्त्रघ्न इत्यत्र हन्तेस्तो नृसिंह इति तः कथं न स्यादित्यत आह वार्त्रेति । वार्त्रघ्न इत्युदाहरणन्तु

**२४८. टित् केशवः, टणिन्माधव इति ।**

**२४९. तेन दीव्यतीत्यतः प्रागर्थेषु केशवणः ।**

अयमेवाणित्युक्तः । तत्र तस्यापत्यमित्यादि सूत्रैरर्था दर्शयिष्यन्ते । ततश्च, माधोरपत्यमित्यमित्याद्यर्थे मधुशब्दात् षष्ठ्यन्तात् केशवणे कृते, उक्तार्थस्यापत्यादिपदस्याप्रयोगः । ततोऽन्तरङ्ग स्वादेर्महाहरः । तथापि पूर्वस्य विष्णुपदवत्त्वमिति—यसर्वेश्वरयो विष्णुपदत्वाभावः । किन्तु तद्धिते यश्चेति भगवत् संज्ञैव । णइत् । आदिसर्वेश्वरस्य वृष्णीन्द्रः उद्वयस्य गोविन्दः—माधवः । पक्षे वाक्यं समासश्च सर्वत्र, मधोरपत्यं मध्वपत्यमित्यादि । वृत्रघ्नोरपत्यादि वार्त्रघ्न इत्यत्र हन्ते स्तो नृसिंह इति न स्यात्: केवलहनधातोः स्वीकारात् ।

---

**अमृता०**—२४८. टिदिति संज्ञासूत्रम् । टित्त्वञ्च णित्त्वञ्चेत्युभयधर्मवान् माधव संज्ञो भवतीत्यर्थः ।

**अमृता०**—२४९. तेनेति प्रत्ययाधिकारसूत्रम्, विधिसूत्रञ्च । तेन दीव्यतीत्यर्थात् प्राक् ये अर्था निर्देश्यन्ते तेष्वर्थेषु केशवणः स्यात् । पदासिद्धि प्रकारं दर्शयति—मधोरपत्यमित्यादिना । भगवत्सज्ञैवेति—अक्रुष्णस्थानसर्वेश्वरत्वादत्र केशवणस्यारामस्य भगवत्-संज्ञत्वम् । नास्य । काप्युपयोगितात्र, तथाप्यग्रे कार्यप्रयोजनं वक्ष्यते । प्रत्ययविभाषां दर्शयति—पक्षे वाक्यमित्यादिना । वार्त्रघ्नइति—वृत्रघ्नस्यापत्यमित्यर्थे अण् (केशव णः) । भगवत् संज्ञत्वात् वमसत्सङ्गहीनस्येत्यरामहरः, हनो हस्य घः ।

---

धान्यपलालन्यायेन सिद्धं, किन्तु वम-सत्सङ्गेत्यनेनारामहरः, हनो हस्य घ इत्यनेन घश्चेति ।। २४७ ।।

**बाल०**—दित्य । तस्यापत्यादिरित्यर्थे दित्यदित्यादित्ययमेभ्यो ण्यरामः स्यात् । पत्यु । अगणपत्यादेर्गणपत्यादिव्यतिरिक्तात् पत्युत्तरपदाच्च ण्यरामः स्यात् । दितिर्दानवमाता तस्या अपत्यादिरित्यर्थे दितिशब्दात् ण्यः, णराम इत् । आदिसर्वेश्वरेति । वृष्णीन्द्रः अ इद्वयस्येतीरामहरः दैत्य इति । एवमदितिर्देवमाता तस्या अपत्यादिः । आदित्य इति । आदित्यः सूर्यस्तस्यापत्यादिरित्यादित्यशब्दात् ण्यः, विष्णुजनात् तद्धितस्येति यरामहरः आदित्य इति । अरामान्तत्वादस्मात् नृसिंहइ प्राप्तेऽत्र ग्रहणं । एवं यमो धर्मराजस्तस्यापत्यादिर्याम्य इति । उत्तरसूत्रस्योदाहरण दर्शयति एवमिति । यदुपतेरपत्यादिर्यादुपत्यः, वृहस्पतेरपत्यादिर्वार्हस्पत्यः । एवं गार्हपत्यप्रभृतयः । वर्जनोदाहरणद्वारा अपत्यादेरन्यार्थमपि दर्शयति गणपत्यादेस्त्विति । गणपतिगणेशस्तस्यापत्यादेरभावात्, तस्येदमिति वाक्ये तेन दीव्यतीत्यतः प्रागर्थे केशव णः । गाणपतमिति एवमाश्वपतमिति द्वयं । इत्यादीत्यादिपदेन यथासम्भवमन्येऽपूह्याः ।। २४८ ।।

## २५०. दित्यदित्यादित्ययमेभ्यो ण्यरामः, पत्युत्तरपदाच्चागणपत्यादेः ।

दितेरपत्यादि दैत्यः, अदितेरादित्यः एवं यादुपत्यः वार्हस्पत्यः । गणपत्यादेस्तु गाणपतं आश्वपतं पाशुपतमित्यादि ।

## २५१. थाम्नस्त्वरामः ।

अश्वत्थामः ।

## २५२. पृथिव्या णरामो वा ।

पार्थिवः पार्थिवा पार्थिवी ।

---

**अमृता०**—२५०. दितीति । तस्यापत्यमित्याद्यर्थे दिति अदिति आदित्य यम इत्येतेभ्य उत्तरे ण्यरामः स्यात् । तथा गणपति प्रभृतीन वर्जयित्वा पतिशब्दोत्तरशब्दादुत्तरे च ण्यरामो भवति । दिति दैत्य माता, तस्या अपत्यंपुमानित्यर्थे ण्यः, ण इत्, आदिसर्वेश्वरस्येति इरामहरः—दैत्यः । एवमदिति देवमाता, तस्या अपत्यं आदित्यः सूर्यः । आदित्यस्यापत्याद्यर्थे ण्यः, विष्णुजनात्तद्धित यस्य हर इत्यनेन यरामहरः—आदित्यः । एवं यमस्यापत्यादि र्याम्यम् । यादुपत्य इति—यदुपतेरपत्यादिरिति ण्यरामः । वृहस्पतेरपत्यादि वार्हिस्पतिः । एवं प्रजापतेः प्राजापत्यः । सर्वत्र आदिसर्वेश्वरस्येति वृष्णीन्द्रः । गणपतेरिदमिदमित्यर्थे त्वधिकारप्राप्तः केशवणः । एवमश्वपतेरिदं आश्वपतं, पशुपतेरिदं पाशुपतमिति ।

**अमृता०**—२५१. थाम्न इति । तस्यापत्याद्यर्थे थामन् शब्दात्तु अरामः स्यात् केशवारामस्यापवादः । अश्वत्थाम्नोऽपत्यादिरश्वत्थामः, नान्तस्येति संसारहरः ।

**अमृता०**—२५२. पृथिव्या इति । तस्यापत्याद्यर्थे पृथिव्या णरामो वा भवति, पक्षे चाधिकार प्राप्तः केशवणः । द्वयोरपि नृसिंहत्वादादिसर्वेश्वरस्य वृष्णीन्द्रः । णपक्षे कृष्णादाप् लक्ष्म्याम्, केशवण पक्षेअण केशवगौरादिभ्य इतीप् ।

---

**बाल०**—त्थाम्नः । अस्यापत्यादिरित्यर्थे त्थाम्नः इत्यस्मात्तु अरामो भवति । त्थाम्नशब्दवाची । केशव·णबाधनार्थमिदं । अश्वत्थाम इति अश्वत्थाम्नोऽपत्यादिः नान्तस्येति संसारहरः ॥ २४९ ॥

**बाल०**—पृथि । तस्यापत्यादावर्थे पृथिव्या णरामो वा स्यात् पक्षेऽधिकारात् केशव·णश्च । पृथिव्या अपत्यादिरिति णः इत् अस्यापि नृसिंहत्वात् वृष्णीन्द्रः । उद्वयस्येति गोविन्दः पार्थिवः । लक्ष्मीत्वे णपक्षे कृष्णादाप् पार्थिवा । केशवणपक्षेतु अणकेशवेत्यनेन ईप् पार्थिवीति ॥ २५० ॥

**बाल०**—देवा । तस्यापत्यादावर्थे देवात् नृसिंहयो वा स्यात् पक्षे केशवण । देवस्यापत्यादिः दैव इति द्वयं ॥ २५१ ॥

२५३. देवान्नृंसिहयो वा ।

दैवः दैव्यः ।

२५४. बहिषो बाह्य-बाहीकौ साधू ।

जातेरीप् वाहीकी ।

२५५. त्रिरामीतः सर्वेश्वरादि प्राग्दीव्यतीयस्य महाहरोऽनपत्ये ।

पञ्चसुकपालेषु संस्कृत इत्यर्थे केशवणः पञ्चकपालः पुरोडासः ।

---

**अमृता०**—२५३. देवादिति । तस्यापत्याद्यर्थे देवशब्दान्नृंसिह यः स्याद् विभाषया, पक्षे केशवणश्च । देवस्यापत्यादि दैंव इति द्वयम् । अइ-द्वयस्यहरो भगवतीत्यरामहरः ।

**अमृता०**—२५४. बहिष इति । बहि शब्दोऽत्र नीचजातिवाचको गृह्यते, तस्यापत्यादावर्थे बहिः शब्दात् नृंसिहय-ठीम्यां सह बाह्य-बाहीकौ साधूभवतः । जातेरिति—बाहोकस्य जातिविशेषत्वादीवित्यर्थः ।

**अमृता०**—२५५. त्रिरामीत इति । सर्वेश्वर आदि र्यस्य य सर्वेश्वरादिः, दीव्यतेः प्राग् भवः प्राग्दीव्यतीयः, तत उभयोः श्यामरामः । त्रिरामीत उत्तरस्मादनपत्यार्थे विहितस्य सर्वेश्वरादि प्राग्दीव्यतीयस्य महाहरः स्यात् । पञ्चकपाल इति—तत्र सस्कृत इत्यर्थे केशवणः, तद्धितार्थे त्रिरामीयम्, अनेन तु केशवणस्य महाहरः ।

---

**बाल०**—बहिः । बहिशब्दः नीचजातिवाचकस्तस्यापत्यादिरित्यर्थे नृंसिहय-ठीभ्यां सह बहिषः स्थाने वाह्यवाहीकौ साधू भवतः । उभयत्रापि संसारहर उभौ प्रत्ययौच निपातात् । जातेरिति वाहकजातित्वादीप् वाहीकीति ॥ २५२ ॥

**बाल०**—त्रिरा । सर्वेश्वर आदिर्यस्य स सर्वेश्वरादिः दीव्यतेः प्राक् प्राग्दीव्यतिस्तस्मिन् भवः प्राग्दीव्यतीयः सर्वेश्वरादिश्चासौ प्राग्दीव्यतीयश्चेति सर्वेश्वरादिप्राग्दीव्यतीयस्तस्य । त्रिरामीतः परस्मादनपत्यार्थे विहितस्य सर्वेश्वरादिप्राग्दीव्यतीयस्य महाहरो भवति । तद्धितार्थत्रिराम्या वाक्यं दर्शयति पञ्चेति । तत्र संस्कृत इत्यर्थे तेन दीव्यतीत्यतः प्रागित्यनेन केशवणः । अनेनतु तस्य महाहरश्च । पञ्चकपाल इति पुरोडाशो यज्ञापूपः ॥ २५३ ॥

**बाल०**—धान्या । धान्यानां भवने क्षेत्रे इत्यतः इत्यस्मात् प्रागिति प्रागर्थेषु अग्निकलिभ्यामुत्तरो माधवढो भवति । पारिभाषिकोऽयं । अग्नेरपत्यं पुमानित्याद्यर्थेषु आग्नेय इति अग्नेरपत्यं स्त्रीत्याद्यर्थे आग्नेयीति । एवं कालेयः कालेयीति ॥ २५४ ॥

**बाल०**—स्त्री पुं । धान्यानामित्यतः प्रागर्थेषु स्त्रीपुंसाभ्यामुत्तरस्मिन् यथासंख्यं नृंसिहन स्नौ भवतः । भावे । भावे वाच्ये स्त्रीपुंसाभ्यां नृंसिहन-स्नौ पुनर्वा भवतः । स्त्रिया इदं स्त्रैणमिति, पुंस इदं पौंस्नमिति सर्वेश्वरविष्णुजनयोरन्तरालपाठात् विष्णु-

**२५६. धान्यानां भवने क्षेत्र इत्यतः प्रागग्नि-कलिभ्यां माधव ढः।**

अग्नेरपत्यमित्याद्यर्थेषु आग्नेयं कालेयं आग्नेयी।

**२५७. स्त्री पुंसाभ्यां नृसिंह नस्नौ भावे च वा।**

स्त्रैणं पौस्नं। भावे स्त्रैणं स्त्रीत्वं पौस्नं पुंस्त्वम्। त्वो वक्ष्यते। भवनात् प्रागेव, स्त्रीवत् पुंवत्।

**२५८. गोः सर्वेश्वरादिप्रत्ययप्रसङ्गे यरामः।**

ओद्वयस्यावावौ प्रत्यय ये—गव्यम्। इतःपरं प्राग्दीव्यतीया अर्था दृश्यन्ते।

---

**अमृता०**—२५६. धान्यानामित्यधिकार सूत्रम्। प्रागिति—प्रागर्थेषु अग्नि कलि शब्दाभ्यां माधवढः स्यात्। ढएयः। अग्नेरपत्यमित्याद्यर्थेषु आग्नेयः। माधवस्य क्रोडीकृत केशवत्त्वादीप् आग्नेयीति। एवंकालेयः कालेयी।

**अमृता०**—२५७. स्त्रीति। धान्यानां भवने क्षेत्रे इत्यर्थोऽग्रे वक्ष्यते, ततः प्राक् ये ये अर्था निर्दिश्यते तत्तदर्थेषु सर्वेषु स्त्री पुंसाभ्यां यथाक्रमं नृसिंह नस्नौ प्रत्ययौ भवतः, भावे च वाच्ये तौ प्रत्ययौ वा भवतः। स्त्रिया इदं स्त्रैणं, पुंस इदं पौंस्नम्। अत्र विष्णुचक्रस्य विष्णुजनत्व मननेन—सत्सङ्क्रान्तस्य हरो विष्णुपदान्त इति सरामहरः। स्त्रिया भावः स्त्रैणमिति द्वयम्। एवं पौंस्नमिति द्वयम्। पुंस्त्वमित्यत्र सत्सङ्क्रान्तहरे कृते—पुंसः सरामो हरिकमलहरिखड्गयोरित्यादिना विष्णुचक्रपूर्वः सरामः। भवनादिति—धान्यानां भवने क्षेत्रे इत्यतः प्रागर्थेष्वेवायं विधिः, तस्मात्ततः परोक्तार्थेषु नेति दर्शयति-स्त्रीवदिति। इवार्थे वतिः। स्त्री इवेत्यर्थः।

**अमृता०**—२५८. गोरिति। सर्वेश्वरादि प्रत्ययानां प्रसङ्गे गो शब्दात् यरामो भवति। गोरिदं गव्यम्। तस्येदमित्यर्थे येः केशवणो विधास्यते, तत् स्थाने यरामः।

---

चक्रस्य सर्वेश्वरत्वं विष्णुजनत्वञ्च तेन विष्णुजनत्वादत्र सत्सङ्क्रान्तस्य इत्यनेन सरामहरः। भाव इति रूपं दर्श्यत इति शेषः। स्त्रियाभावः स्त्रैणमिति द्वयं। तथा पुंसो भावः पौस्नमिति। पुंस्त्वमित्यत्रतु सत्सङ्क्रान्तहरे कृते पुमः सरामो हरिकमलहरिखड्गयोरित्यादिना विष्णुचक्रपूर्वः सरामः। त्वो वक्ष्यते इति त्वतापौ ब्रह्मलक्ष्म्योरित्यनेन भावे त्वो वक्ष्यते इत्यर्थः। अयमपि योगो धान्यानां भवने क्षेत्र इत्यतः प्रागर्थेष्वेवेत्यवधारयति भवनादिति। तेन स्त्री इव स्त्रीवत् पुमानिव पुम्वदित्यत्र तौ न भवतः। धान्यानां भवन इत्यतः परार्थत्वात्॥ २५५॥

**बाल०**—गोः। सर्वेश्वरादिप्रत्ययानां प्रसङ्ग प्रस्तावे गोशब्दात् यरामः स्यात्। ओद्वयस्येत्यनेनात्र ओरामस्याव इति सूचयति ओद्वयस्येति। गोरिदं गव्यं दुग्धादि। इत इति इतः परमिति योज्यं। शेषः सुगमः॥ २५६॥

**बाल०**—अधि। अधिकारसूत्रे प्रथमं निर्दिष्टो यो विष्णुभक्त्यन्तस्तस्मान्नाम्नः प्रत्ययः स्यादित्यर्थः। अनियमे नियमकारित्वादियं परिभाषा॥ २५७॥

## २५८. अधिकार सूत्रे प्रथमनिर्दिष्टविष्णुभक्त्यन्तात् प्रत्ययः ।

परिभाषेयम् ।

---

**अमृता०**—२५८. अधीति । प्रकरणपरिभाषासूत्रमेतत् । अधिकारसूत्रे प्रथमं निर्दिष्टो यो विष्णुभक्त्यन्तः शब्द स्तस्मात् प्रत्ययः प्रयोक्तव्यः । यथा—तस्यापत्यमिति अपत्याधिकरसूत्रं, तत्र तत्पदनिर्दिष्टा या षष्ठी तदन्तनाम्न एव प्रत्ययः कर्त्तव्यः, अतएव मधोरपत्यमिति वाक्यं दर्शितमिति ।

---

**बाल०**—तस्य । तस्यापत्यमित्यर्थे नाम्नो यथास्वं प्रत्ययाः स्युः । अयमधिकारो विभुनामा । सूत्रार्थं स्वयं विवृणोति अत्रार्थ इति । यथाविहितमित्यस्मात् प्रत्यय इति द्रष्टव्यं । यथाविहितं विहितमनतिक्रम्येत्यर्थः । यद्यपि अत्रार्थ इत्युक्तं तथापि अत्र वाच्ये इति निर्गलितार्थः । मधोरपत्यमित्यस्मात् पुमानिति योज्यं वाच्यस्य पुरुषोत्तमत्वात् । तेन दीव्यतीत्यतः प्रागित्यनेन केशव-णो विशेषविधेरभावात् । माधव इति । एवं मधोरपत्यं क्लीवं माधवं मधोरपत्यं स्त्री माधवीति । एवमिति एवम्प्रकारेण दितेरपत्यं पुमान् दैत्यः अदितेरपत्यं पुमान् आदित्यः दित्यदित्यादित्येत्यनेनात्र ण्यरामः स्त्रिया अपत्यं पुमान् स्त्रैणः स्त्रीपुंसाभ्यामित्यनेनात्र नृसिंहणः । इत्यादीत्यादिपदेन यादुपत्या अश्वत्थामः पार्थिवः दैवः । इत्यादयो यथासम्भवमूह्याः ॥ २५८ ॥

**बाल०**—अरा । तस्यापत्यमित्यर्थेऽरामवाह्वाभ्यां नृसिंह इर्भवति । दश । अस्मिन्नर्थे दरथादेर्नृसिंह-इर्वा भवति । गर्गस्यापत्यं पुमान् गार्गिरिति । एवं दाक्षिप्रभृतयः । बाहुः कश्चित् तस्यापत्यं पुमान् बाहविरिति, उद्वयस्येति गोविन्दः । बाह्वादिर्यथा । बाहु चटाकु उपचाकु निचाकु धेनु उपविन्दु कृष्णराम वेद युधिष्ठिर अर्जुन प्रद्युम्न गद शाम्ब अजीगर्त्त इन्द्र धूर्त्तक चूडा जङ्घा बलाका वृकला मूषिका धुरका ध्रुवका नगला भगला शकला सुमित्रा दुर्मित्रा पुष्करसद अन्तर हत उदञ्च अनड्वाह शर्मन् देवशर्मन् कुनामन् पञ्चन् सप्तन् अष्टन् शङ्खभेदिन् खरनर्दिन् नगरनर्दिन् प्राकारनर्दिन् मासशराविन्नित्यादिः । वाह्वादी बाहुप्रभृतिषण्णामरामान्तत्वाभावादप्राप्ते विधानं । कृष्णादिशाम्बान्ता नाम-रामान्तत्वेऽपि ऋष्यन्धकवृष्णीत्यनेन केशवणप्राप्ते विधानं । अजीगर्त्तादिपञ्चानाम-रामान्तत्वेऽप्यनादिवृष्णीन्द्रेभ्य इत्यनेन केशवणप्राप्ते विधानं । चूडादीनामप्यनेन केशवण-प्राप्ते विधानं । पुष्करसदादीनां विष्णुजनान्तत्वादप्राप्ते विधानमिति । चटाकवि कार्ष्णि आजीगर्त्ति चौडि पौष्करसदि शार्मिशाङ्खभेदिरित्यादीन्युदाहरणानि दिङ्मात्राणि । दशरथादिस्त्वाकृतिगणः । दशरथस्यापत्यं दाशरथिरिति । पक्षे, तेन दीव्यतीत्यतः प्रागित्यनेन केशव-ण इत्यस्योदाहरणन्तु भट्टस्यु दाहरणेन दर्शयति । प्रदीयतामिति । श्लोकस्यायं चतुर्थः पादः पूर्वपादत्रयन्त्वेवं । भजस्व धर्मं कुलकीर्त्तिबर्द्धनं, त्यजस्व कोपं कुलकीर्त्तिनाशनं । प्रसीद जीवेन सबान्धवा वयं—। रावणं प्रति कुम्भकर्णस्य प्रार्थन-मिदं । एवं सुमित्राया अपत्यं पुमान् सौमित्रिरिति । वाह्वादित्वादस्मात् नित्यमिरामे प्राप्ते विकल्पार्थो दशरथादौ पाठः । पक्षेऽनादिवृष्णीन्द्रेभ्य इत्यनेन केशवणः सौमित्रश्चेति ।

## २६०. तस्यापत्यम् ।

विभुश्चायम् ।

अत्रार्थे षष्ठ्यन्तान्नाम्नो यथाविहितं स्युः । मधोरपत्यं माधवः । एवं दैत्यः आदित्यः स्त्रैण इत्यादि ।

## २६१. अराम-बाह्वादिभ्यामिनृसिंहः ।

अयमेव इणित्युक्तः ।

---

**अमृता०**—२६०. तस्येति । तस्यापत्यमित्यर्थे नाम्न उत्तरे यथास्वं प्रत्यया भवन्ति । उक्त परिभाषार्थं स्फुटयति—अत्रार्थे इति । अपत्यार्थे षष्ठ्यन्तान्नाम्न उत्तरे विधास्यमानाः प्रत्यया भवन्तीत्यर्थः । एवमिति दितेरपत्यं दैत्य इत्यादयो दर्शिता एव ।

**अमृता०**—२६१. अरामेति । तस्यापत्यमित्यर्थे अरामान्तशब्दात् बाह्वादेश्चोत्तरे नृसिंह इरामः स्यात् ।

---

केचित्तु दशरथादेर्णेति पृथक् सूत्रं न कुर्वन्ति, तन्मतेऽरामान्तत्वादेव दाशरथिप्रभृतिः । दाशरथादिस्तु तस्येदमित्यनेन भवतीति । नन्वरामान्तान्नृसिंह इस्ततोऽनन्तरं अ इद्वयस्येत्यनेनारामहरे कृते निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायादिरामस्यापायः कस्मान्न स्यादित्यत्र सिद्धान्तमाह वर्णेति । यं दृष्ट्वा यस्योत्पत्तिः स तस्य सन्निपात इति यत् सन्निपातलक्षणमुक्तं । मतभेदात्तस्य द्विविधव्याख्यानं सम्भवति, तद्यथा, यं जनकं दृष्ट्वा यस्य जन्यस्योत्पत्तिर्भवति स तस्य जन्यस्य सम्बन्धे सन्निपातः स्वयं सन्निपातोऽपि तद्विघाताय निमित्तं न स्यात् । मतान्तरेतु यं जनकं दृष्ट्वा यस्य जन्यस्योत्पत्तिः स जन्यस्तस्य सन्निपातः स्वयं सन्निपातलक्षणविधिः सन् जनकविघाताय निमित्तं न स्यात् । तथाच, पूर्वव्याख्याने स्वीकृते आप्रवृत्तिरित्यारामप्रश्लेषः कार्यः । परव्याख्यानेऽङ्गीकृते त्वप्रवृत्तिरित्यरामप्रश्लेषः, तथा सति, वर्णग्रहणे विषये सन्निपातन्यायस्य आ सम्यक्-प्रवृत्तिस्तस्माद्धेतोररामहरः सन् इरामविघाताय न स्यादिति गार्गिः सिद्धः । एतदुपलक्षणमन्यदपि ज्ञेयं । मतान्तरव्याख्यानात्तु वर्णग्रहणे विषये सन्निपातन्यायस्य प्रावृत्तिर्न स्यात् । तत इरामेऽरामहरः स्यात् ॥ २५९ ॥

**बाल०**—व्यासा । तस्यापत्यमित्यर्थे व्यासादेरुत्तरोऽकिण् स्यात्, स चाकिण् चिच्च स्यात् । ऐयादेशलक्षणं सूचयति वृष्णीन्द्रेति । व्यासस्यापत्यं पुमान् चित्करणात् संसारस्य हरश्चितीति संसारहरः, वैयासकिरिति । सुधातुरित्यपत्यं पुमानिति शेषः सौधातकिरिति । एवं वारटकिः चाण्डालकिः नैषादकिः वैम्बिकिः । वरट इत्यत्र वरुड इति कश्चित् । विम्बादय इत्यादिपदेनाकृतिगणः सूचितः ॥ २६० ॥

**बाल०**—विश्र । तस्यापत्यमित्यर्थे विश्रवसः केशवेण वैश्रवणः साधू स्यात् । निपातनादत्र विश्रसः सरामो नरामः पश्चात् र-ष-ऋद्वयेभ्य इत्यनेन णत्वं । वैश्रवणः

## २६२. दशरथादे र्वा ।

गर्गस्यापत्यं गार्गिः, बाहविः, दाशरथिः । प्रदीयतां दाशरथाय मैथिली । सौमित्रिः सौमित्रश्च । अत्र वर्णग्रहणे सन्निपातन्यायाप्रवृत्तिः । तस्मादरामहरः—गार्गिः ।

## २६३. व्यासादेरकिण् सच चित् ।

---

**अमृता०**—२६२. दशेति । तस्यापत्यार्थे दशरथादेरुत्तरे तु नृसिंह इरामो वा भवति । गार्गिरिति—अइ द्वयस्येत्यरामहरः । बाहविरिति—बाहु नामा कश्चित्, तस्यापत्यं पुमान्, उद्वयस्येति गोविन्दः । बाह्वादि गणस्तु परिशिष्टे गणपाठे द्रष्टव्यः । दशरथस्यापत्यं पुमान् दाशरथिः । पक्षे—तेनदीव्यतीत्यतः प्रागर्थाधिकारात् केशव णो भवतीति भट्टि प्रयोगमुद्धृत्य दर्शयति—प्रदीयतामित्यादि । ननु नृसिंहेरामे कृते, अइद्वयस्येत्यरामहरे च जाते निमित्तापाये नैमित्तिकस्याप्यपाय इत्यनेन इरामस्यापायापत्तिः स्यादित्यत इरामहर स्तु न कर्त्तव्य इति चेत्तत्र सिद्धान्तमाह—वर्णग्रहण इति । वर्णग्रहणे विषये सन्निपात न्यायस्य आ सम्यक् प्रवृत्तिरित्यर्थः । अत्र इरामं दृष्ट्वा अरामहरस्योत्पत्ति रित्यसौ सन्निपातलक्षणः, स पुनः स्वजनकस्य इरामस्य विघातायनैव प्रवर्त्तत इत्यतोऽराम हरः स्यादेवेति भावः ।

**अमृता०**—२६३. व्यासादेरिति । तस्यापत्यमित्यर्थे व्यासादेरुत्तरे अकिण् प्रत्ययः स्यात्, सचाकिण् चित् स्यात् । वृष्णीन्द्रस्थानेत्यादिना यरामस्य ऐय्, चित् करणात्

---

रावणः । वृत्तिमाह अपत्य इति । विश्रवसो वैश्रवण-वरणौ चेति जुमरः । तन्मते केशवणे विश्रवस स्थाने विश्रवणवरणावादेशौ भवतः ॥ २६१ ॥

**बाल०**—लोमा । बहुत्वे विषये तस्यापत्यमित्यर्थे लोमान्तान्नाम्नोऽरामो भवति । शिष्याणां व्युत्पत्तिवैचित्र्यार्थं प्रकारान्तरेण वाक्यं दर्शयति उडुलोम्नः पुत्रा इति । अत्र पुत्रशब्देनैव तस्यापत्यानि पुमांश्च इति प्रतीयते । उडु लोम्न इत्यत्र नान्तस्येति संसारहरः । बहुत्वे किमिति । किमर्थं बहुत्वं यर्हि न स्यात्तर्हि किं स्यात् । ऊडुलोमिरिति नृसिंहेरामान्तं तदिरामप्राप्तौ हेतुमाह बाह्वादित्वादिति ॥ २६२ ॥

**बाल०**—शिवा । तस्यापत्यमित्यर्थे शिवादेरुत्तरेः केशवणो भवति । ऋस्य । ऋषयश्च अन्धकाश्च वृष्णयश्च कुरवश्च ते ऋष्यन्धकवृष्णिकुरवस्तेभ्यः । ऋषयः स्वसिद्धा वशिष्ठादयः । अन्धकादयो यदुवंशविशेषाः । कुरवस्तु कुरुवंश्याः । तस्यापत्यमित्यर्थे ऋष्यन्धकवृष्णिकुरुभ्यश्च केशवणो भवति । अना । नास्त्यादिवृष्णीन्द्रो येषां तेऽनादिवृष्णीन्द्रास्तेभ्यः । नदी मानुषी चेति नाम संज्ञा येषां ते नदीमानुषीनामानस्तेभ्यः । तस्यापत्यमित्यर्थे नदीमानुषीनामभ्यश्च केशवणो भवति । यस्य शब्दस्यादिसर्वेश्वरा आ ऐ औ इति त्रयो रामा वर्णा भवन्ति स आदिवृष्णीन्द्रसंज्ञः स्यात् । तद्यदावादी येषां ते यद्यदादयश्चादिवृष्णीन्द्रसंज्ञाः स्युः । एते वृद्धसंज्ञा भवन्तीत्यन्ये पण्डिता वदन्ति । प्रथमतः

वृष्णीन्द्रस्थान चतुः सनादेशस्येत्यादि, व्यासस्यापत्यं वैयासकिः, सुधातुः सौधातकिः । वरट-चण्डाल-निषाद-बिम्बादयश्च व्यासादयः ।

## २६४. विश्रवसो वैश्रवणः ।

अपत्ये साधुः ।

---

ससारहरः, अन्यथा अङ्-द्वयस्येति अरामहरः स्यात् । एवं वारटकिः चाण्डालकिः नैषादकि. वैम्बकि रिति । इत्यादिपदेनास्य आकृतिगणत्वं सूचितम् ।

**अमृता०**—२६४. विश्रवस इति । तस्यापत्यमित्यर्थे विश्रवसः स्थाने वैश्रवण इति केशव णान्तः साधुः स्यात् । निपातात् सरामस्य नरामः, पश्चात् रष ऋद्वयेभ्य इति णत्वम् ।

---

शिवादेरुदाहरणमाह शैव इति । शिवस्यापत्यं पुमान् शैवः, यास्कः । एवं पुत्रस्यापत्यं पुमान् दुहितुरपत्यं पुमान् ननान्दुरपयं पुमानित्येतेषु पौत्रादयः । शिवादिरप्याकृति-गणस्तेन यस्कादयस्तेभ्योऽन्येच संगृह्यन्ते । यथा शिव यस्क पुत्र दुहितृ ननन्द तक्षन् गङ्गा क्रुञ्चा कोकिला प्रोष्ठ वतण्ड पिष्ट मयूर खदूरक वर्ण खर्जुरक भूरि सन्धि मुनि कुठार अनभिम्लान ककुत्स्थ सुपिष्ट ऋष्टिषेण यक्षभूमि इला इडा सपत्नी जरत्कारु प्रौष्ठिक षण्ड कुम्भ कहोड ककुभ बोध पीवर तृण कर्ण क्षीरह्रद जलह्रद परिषिक गोभिल जटिलक वधिरक मञ्जीरक वृश्चिक खञ्जाल रेख आलेख वर्त्तन पेटक तृक्षाक नभाक ऊर्णनाभ उकिथा लोहितिका आर्य श्येता नक्ष त्वक्ष अयस्थूण कलन्धेन विरूपाक्ष इति पञ्चषष्टिसंख्यकः । अस्मिन् गणे कतिचिदरामान्तेभ्यः कतिचिदन्येभ्योऽपि इराम-वाह्लादिभ्यामिति नृसिंहइप्राप्ते तन्निरासार्थः । कतिचिद्भ्यः प्रत्ययान्तरे प्राप्ते तद्बाध-नार्थश्चायं गणः । अत्र पाठात् ताक्षण्यः । अत्र पाठात् गाङ्गः शुभ्रादित्वात्तुगङ्गेयः तिकादित्वात् गाङ्गयनिश्च । अत्र पाठात् वैपाशः लाडादित्वाद्वैपाशायनः । ऋषिभ्य इति प्रत्ययं दर्शयत इति शेषः । वशिष्ठस्यापत्यं पुमान् वाशिष्ठः, एवं वैश्वामित्रश्च्यावन-प्रभृतयः । अन्धकेभ्य इति प्रत्यय उदाह्रियते । श्वफल्कस्यापत्यं पुमान् श्वाफल्क एवमौग्रसेन इत्यादिः । वृष्णिभ्य इति पूर्ववत् । वसुदेवस्यापत्यं पुमान् वासुदेवः, एवं वैष्वक्सेन इत्यादि । कुरुभ्य इत्यपि पूर्ववत् । नकुलस्यापत्यं पुमान् नाकुलः, एवं भैमसेन इत्यादि । अयमपि योगोऽरामान्तत्वत् प्राप्तनृसिंहेरामबाधनार्थः । ननु यद्येवं तर्हि कृष्णस्यापत्यं पुमानित्यादिवाक्ये कार्ष्णिरित्यादित्रयं कथं सिध्यतीत्र सिद्धान्तमाह वाह्लादिपाठादिति वाह्लादिगणपठितत्वादित्यर्थः । अनादीति तत्रानादिवृष्णीन्द्रनदीतः प्रथमं दर्शयति । यामुन इति यमुनाया अपत्यं पुमानिति । एवमैरावत इरावत्या अपत्यं पुमानिति । मानुषीत इति मानुषीतः प्रत्यये रूपं यथा । गोतमस्यापत्यं पुमान् गौतमः, रोहिण्या अपत्यं पुमान् रौहिण इति । व्यावर्त्तयति अनादीति । कौशिकाया अपत्यं पुमानिति कौशिकेयः । कौशल्याया अपत्यं पुमान् कौशल्येयः । एवं चान्द्रभागेयः वासव-दत्तेयः । अत्र लक्ष्मीशुभ्रादिभ्यामित्यनेन माधव ढः ॥ २६३ ॥

**२६५. लोमान्तादरामो बहुत्वे ।**

उडुलोम्नः पुत्राः उडुलोमाः । बहुत्वे किम् ? उडुलोम्नः पुत्रः औडुलोमिः, बाह्वादित्वात् ।

**२६६. शिवादेः केशव णः । ऋष्यन्धक वृष्णिकुरुभ्यश्च, अनादि वृष्णीन्द्रेभ्यो नदीमानुषीनामभ्यश्च ।**

**२६७. आ ऐ औरामा यस्यादिसर्वेश्वराः स आदिवृष्णीन्द्रसंज्ञः । तद् यदादयश्च ।**

---

अमृता०—२६५. लोमान्तादिति। तस्यापत्यमित्यर्थे बहुत्वे विषये लोमान्तशब्दात् अरामः स्यात् । पुत्रशब्दोपन्यासेनापत्यार्थएव स्फुटीकृतः । नान्तस्वेति संसारहरः । प्रत्युदाहरति—बहुत्वे किमित्यादिना । अत्रैकत्वे अरामबाह्वादिभ्यामिति नृसिंह इरामः ।

अमृता०—२६६. शिवादेरिति । तस्यापत्यमित्यर्थे शिवादे रुत्तरे केशवणः स्यात् । ऋषिभ्यः अन्धकेभ्यः वृष्णिभ्यः कुरुभ्यश्चोत्तरे केशवणः स्यात्, तथा अनादि वृष्णीन्द्राणि यानि नदीनामानि मानुषी नामानि च तेभ्यश्चोत्तरे केशवणो भवति । ननु क स्तावदादिवृष्णीन्द्र इत्यापेक्षायामाह—

अमृता०—२६७. आऐ इति। स्पष्टं, तथा तदादयः यदादयश्चादिवृष्णीन्द्रसंज्ञा भवन्ति। शैव इति—शिवस्यापत्यं पुमानित्यर्थः, अइ द्वयस्येत्यरामहरः। एवञ्चान्येऽपि ज्ञेयाः। शिवादिर्गणः परिशिष्टे द्रष्टव्यः। ऋषिभ्य इति—प्रत्ययं दर्शयेत इति शेषः। एवं वैश्वमित्रः। अन्धकादयो ह्यत्र वंशाख्या बोध्याः। श्वफल्कस्यापत्यं श्वाफल्कः अक्रूरः।

---

बाल०—कन्या । तस्यापत्यमित्यर्थे कन्याया उत्तरः केशवणस्तस्मिन् सति कनीनादेशश्च भवति । कन्याया अपत्यं पुमान् कानीनः व्यासादिः प्रसिद्धः ॥ २६४ ॥

बाल०—सङ्ख्या । सङ्ख्यादिः पूर्वो यस्यास्तस्याः तस्यापत्यमित्यर्थे सङ्ख्यादिपूर्वाया मातुरुत्तरः केशव णस्तस्मिन्मातुर्ऋ रामस्योरादेशश्च भवति । उरादेशश्चेति क्वचित् पुस्के दृश्यते । द्वयोर्मात्रोरपत्यं पुमानिति तद्धितार्थे त्रिरामी द्वैतमातुर इति । एवं षण्णां मातॄणामपत्यं पुमानिति षान्मातुरः कार्त्तिकेयः । संमातुरपत्यं पुमानिति पूर्वं प्रादिसमासस्ततः केशवणः सांमातुर इति । भद्रमातुरपत्यं पुमानिति पूर्वश्यामरामसिद्धात् केशवणः भाद्रमातुरः ॥ २६५ ॥

बाल०—लक्ष्मी । तस्यापत्यमित्यर्थे लक्ष्म्याः शुभ्रादेश्च बहुलं यथा स्यात्तथा माधवढो भवति । रोहिण्या अपत्यं पुमान् रौहिणेयः बुधः । सुपर्णाया अपत्यं पुमान् सौपर्णेयः गरुडः । एवं शलाका शाला कुमारिका कुवेरिका गन्धपिङ्गला खरोन्मत्ता विधवा विकसा रुक्मिणी गङ्गा गोधा किशोरिका अनवोत्यादय यथासम्भवं ॥ २६६ ॥

वृद्ध संज्ञा इत्यन्ये । शैवः यास्कः पौत्रः दौहित्रः नानान्द्रः । ऋषिभ्यः—वाशिष्ठः । अन्धकेभ्यः—श्वाफल्कः । वृष्णिभ्यः—वासुदेवः । कुरुभ्यः—नाकुलः । कथं कार्ष्णिः प्राद्युम्निः आर्जुनिः ? बाह्वादि पाठात् । अनादीति— यामुनः ऐरावतः । मानुषीतः—गौतमः रौहिणः । अनादि वृष्णीन्द्रेति किम् ? कौशिकेयः कौशल्येयः ।

## २६८. कन्यायाः केशवणः, कनीनादेशश्च ।

**कानीनो व्यासादिः ।**

---

एवमौग्रसेन इत्यादि । वसुदेव आनक दुन्दुभि स्तस्यापत्यं पुमान् वासुदेवो हरिः । एवमानिरुद्धः वैश्वकसेन इत्यादि । नकुलस्यापत्यं पुमान् नाकुलः । एवं साहदेवः भैमसेन इत्यादि ।

ननु यद्येवं तर्हि कार्ष्णि प्रभृति प्रयोगा लभ्यन्त इति चेत्तत्र समाधत्ते—बाह्वादि-पाठादिति । बाह्वादि गणे पठितत्वादेभ्यो नृसिंह इरामो भवतीत्यर्थः । यमुनाया अपत्यं पुमान् यामुनः । इरावती नदी, तस्यापत्यं ऐरावतः । गोतम्या अपत्यं गौतमः । रोहिण्या अपत्यं रौहिणः । कौशिकाया अपत्यं कौशिकेयः; प्रत्ययोत्पत्तेः प्रागेवादि वृष्णीन्द्रत्वेन निर्दिष्टत्वान्न केशवणः किन्तु लक्ष्मी शुभ्रादिभ्यामित्यनेन माधवढो वक्ष्यते । एवं चान्द्र-भागेयः बासवदत्तेय इत्यादयोऽपि बोध्याः ।

**अमृता०**—२६८. कन्याया इति । तस्यापत्यमित्यर्थे कन्याशब्दादुत्तरे केशव णः स्यात्, तस्मिन् सति कन्यायाः कानीन इत्यादेशश्च भवति ।

---

**बाल०**—वड । तस्यापत्यमित्यर्थे वृषेवाच्ये बडवाशब्दादुत्तरो माधवढः स्यात् । वडवाया लक्ष्मीत्वात् माधवढो भवत्येव वृषवाच्यार्थमिदं । वडवाया अपत्यं पुमान् बाडवेयः वृषः । वृषादन्यत्रापत्येतु वाडव इति भवति । अपत्ये विहितस्तद्धितोऽपकृष्ण-शुक्ले विधीयते, तेनापत्ये वाडव इत्यन्ये । यद्यपि सूत्रे बहुलमिति सामान्येन कृतं, तथापि लक्ष्म्या एव तत्प्राप्तिरिति सूचयति ॥ २६७ ॥

**बाल०**—बाहुल्यात् । यद्यप्यनादिवृष्णीन्द्रेभ्य इत्यनेन केशवणो विहितस्तथापि बाहुल्याद्धेतोर्मानुषीनाम्नीतश्च क्वचिन्माधवढो भवति । तेन रौहिणेयो राम इत्यपि भवति । क्रुञ्चा वकी तस्या अपत्यं पुमान् क्रौञ्चः । कोकिलाया अपत्यं पुमान् कौकिल इत्यत्रतु लक्ष्मीत्वेऽपि माधवढो न भवति । किञ्च, शिवाद्यन्तर्गणात् केशवण एव बहुलक्षणे क्वचिदन्यदेवेत्युक्तत्वात् । शुभ्रादौ बहुलं न प्रवर्त्तत इति स्वाभिप्रेतं स्पष्टयति शुभ्रादेरिति । खल्वपीत्यवधारणद्वयमतिशयनिश्चयार्थं । शुभ्रः कश्चित् तस्यापत्यं पुमान् शौभ्रेयः । एवमत्रेरपत्यं पुमान् कुम्भेरपत्यं पुमानिति क्रमादात्रेयादित्रयं । मृकण्डोरपत्यं पुमानिति

**२६९. संख्यादिपुर्वाया मातुः केशवणः, उरादेशश्च ।**

द्वैमातुरो बलदेवः । षाण्मातुरः सांमातुरः भाद्रमातुरः ।

**२७०. लक्ष्मी-शुभ्रादिभ्यां भाधव ढो बहुलम् ।**

रौहिणेयः सौपर्णेयः ।

---

**अमृता०**—२६९. संख्यांदीति । तस्यापत्यमित्यर्थे संख्यादि पूर्वात् मातृशब्दात् केशवणः स्यात्, तत्र मातृशब्दस्य ऋरामस्य उरादेशश्च भवति । द्वयो र्मात्रोः देवकी-रोहिण्यो रपत्यं द्वैमातुरः । षण्णां मातृणामपत्यं षाण्मातुरः कार्त्तिकः । संख्यादीत्यत्र आदिपदेन सम् भद्रयो र्हि ग्रहणमित्युदाहरति—सांमातुर इति द्वयम् । सम्यग् माता संमाता, प्रादिसमासः, तस्या अपत्यमिति सांमातुरः । भद्रा चासौ माता चेति श्यामरामे भद्रमाता, ततः केशवणोऽपत्यार्थे ।

**अमृता०**—२७०. लक्ष्मीति । तस्यापत्यमित्यर्थे लक्ष्मी संज्ञकात् शुभ्रादिशब्दाच्चोत्तरे बहुलं यथा स्यात्तथा माधव ढः स्यात् । रोहिण्या अपत्यं रौहिणेयो बुधः, बाहुल्यात् रौहिण इति च दर्शितम् । सुपर्णाया अपत्यं सौपर्णेयो गरुडः । एवञ्च वैनतेय इत्यादि ।

---

उद्वयस्य हरो ढरामे नतु कद्रुपाण्ड्वोरित्युरामहरः । कामण्डलेयः । शुभ्रादेराकृतिगणत्वा-दन्येऽपि सन्तीति यथासम्भवमेतेऽन्येच दर्श्यन्ते । शुभ्र अत्रि कुन्ति वृष्णि मृकण्डु कमण्डलु विष्णुपुर ब्रह्मकृत् शतद्वार शताहार खलु अजवस्ति विश्वकन्धि विमातृ दिश शालूक शाकम्बि कृकलास प्रवाहणभरत भारत मयूर कर्पूर अन्यतर आनीच सुदन्त सुदक्ष सुनामन् कद्रु पाण्डु तुद आकाशायन जिह्मासिन् परिधि वादुदत्त शकल शरल खडूर अशोक अन्तदृष्टिन् हरितिन् बलिबर्द्धिन् विश्वचित् वीज अश्व अश्विन् श्वन् अजिरित्यादिः । येऽरामान्तास्तेभ्योऽरामवाह्वादिभ्यामित्यनेनारामान्तत्वान्नृसिंहेरामे प्राप्ते शेषेभ्यो विधानान्तराभातात् केशवणे प्राप्तेऽत्रायं गणो गृहीतः ॥ २६८ ॥

**बाल०**—उङ । तस्यापत्यमित्यर्थे ऊङन्तान्नाम्नः उत्तरो माधवढो भवति । ऊङन्तस्य लक्ष्मीत्वात् पूर्वेण माधवढे प्राप्तेऽपि स्पष्टार्थमिदं वचनं । गणस्था ये वामनो-रामास्ते यद्यूङन्तास्तदा तेषां ग्रहणार्थंश्च । अतएव गणे ये मृकण्ड्वादयस्तेषामन्येषाञ्चाग्र ग्रहणं । कमण्डल्वा अपत्यं पुमान् कामण्डलेयः । एवं शैतिवाहेय जाम्बेय शालाकाभ्रेय लैखाभ्रेयादिः ॥ २६९ ॥

**बाल०**—दित्य । तस्यापत्यमित्यर्थे दित्यदिती शुभ्रादी वा भवतः । भ्रुवो । तस्यापत्यमित्यर्थे भ्रुवो माधवो ढो भवति तस्य भ्रुवादेशश्च । भ्रमु सञ्चलने औणादिक ऊङ् अन्त्यलोपश्चेत्यन्ये । अतएव ऊङन्तत्वान्माधवढे प्राप्तेऽपि भ्रुवादेशार्थं वचनं । अन्यथा उद्वयस्येति उरामहरः स्यात् । दित्या अपत्यं पुमान् दैतेयः, पक्षे दित्यदित्यादित्ययमेभ्य इत्यनेन ण्यरामः दैत्यः । एवं आदितेयादिद्वयं । भ्रुवोऽपत्यं पुमान् भ्रौवेय इति । अत्रो-वादेशे कृते पश्चाद्वृष्णीन्द्रः । गङ्गाया इति अपत्यं पुमानिति शेषः । गाङ्गेय इति

## २७१. बडवाया वृषे ।

**बाडवेयोवृषः । बाहुल्यात् क्वचित् नाम्नीतश्च । रौहिणेयो रामः । क्रौञ्चः कौकिलः । शुभ्रादेः खल्वपि—शुभ्रस्यापत्यं शौभ्रेयः आत्रेयः कौन्तेयः वार्ष्णेयः, उद्वयस्य हरो मार्कण्डेयः ।**

## २७२. ऊङन्तात् ।

**कामण्डलेयः ।**

---

**अमृता०**—२७१. बडवाया इति । तस्यापत्यमित्यर्थे वृषे वाच्ये बडवाशब्दादुत्तरे माधवढः स्यात् । वृषादन्यत्रापत्ये तु वाडव इत्येव ज्ञेयम् । बहुल ग्रहणसाफल्यं दर्शयति—क्वचिदिति । यद्यपि अनादि वृष्णीन्द्रेभ्यो नदीमानुषीनामभ्यश्चेत्यनेन मानुषीनामभ्यः केशव णो विहितः, तथापि बाहुल्यात् क्वचित् मानुषी नाम्नीतश्च माधव ढोऽपि भवति । तथा बाहुल्यादेव क्वचित् लक्ष्मीतोऽपि माधव ढो न भवति किन्तु सामान्यतः केशव णः । तदेव स्फुटयति—क्रौञ्च इत्याद्युदाहरण द्वयेन । कुञ्चा वकी, तस्या अपत्य क्रौञ्चः । एवं कोकिलायाः कौकिल इति । शुभ्रादेस्तु न बहुलप्रवृत्तिरित्याह—शुभ्रादेः खल्वपीति । शुभ्र अत्रि कुन्ति वृष्णि प्रभृतिः शुभ्रादिः । गणस्तु परिशिष्टे द्रष्टव्यः, स चाकृतिगणः ।

**अमृता०**—२७२. ऊङन्तादिति । तस्यापत्यमित्यर्थे ऊङन्तान्नाम्नउत्तरे माधव ढः स्यात् । लक्ष्मी-शुभ्रादिभ्यामित्यनेन प्राप्तेऽपि स्पष्टार्थमेतद्वचनम् । कमण्डल्वा अपत्य कामण्डलेयः । उद्वयस्येति ऊरामहरः । एवं जाम्बेयः शालाकाभ्रेयः शैतिवाहेय इत्यादि च ।

---

लक्ष्मीत्वात्, गाङ्ग इति शिवादित्वात्, गाङ्गायनिरिति तिकादित्वात् । केशवत्वाल्लक्ष्म्या-मीप्स्यादित्याह शुभ्रादीति । माधवत्वादित्यनेनैव केशवत्वादिति सूचितं, टणिन्माधव इत्युक्तत्वात् ॥ २७० ॥

**बाल०**—इरा । तस्यापत्यमित्यर्थे द्विसर्वेश्वरादिरामान्तान्माधव-ढो भवति । एन्नृं । तस्यापत्यमित्यर्थे नृसिंहात् एः इरामात्तु माधव ढो न भवति । विधिर्ब्रह्मा तस्यापत्यं पुमान् वैधेय इति । एवं नैधेयः कापेय इत्यादि । एन्नृंसिंहात्तु रूपं दर्श्यते । कार्ष्णायन इति कृष्णस्यापत्यं पुमान् कार्णिस्तस्यापत्यं पुमानिति इयाभ्यामित्यनेन फरामो वक्ष्यत इत्यतो वक्ष्यते इत्युक्तं । नतु कार्ष्णायनपदं वक्ष्यते इति ज्ञेयं ॥ २७१ ॥

**बाल०**—कल्या । तस्यापत्यमित्यर्थे कल्याण्यादेरुत्तरो माधवरूप इनेयः स्यात् । लक्ष्मीत्वात् माधव-ढरामे प्राप्ते तद्बाधनार्थमिदं । कल्याणिनेय इति कल्याण्या अपत्यं पुमानिति अ-इद्वयस्येति ईरामहरः, आदिसर्वेश्वरस्येति वृष्णीन्द्रः । उभयपदवृष्णीन्द्रसूत्रं सूचयति हृद्भगेति । सौभागिनेय इति सुभगाया अपत्यं पुमानिति, दौर्भागिनेयः । आदि-पदग्रहणफलमुक्त्वा पुनरप्यतिदिशति एवमिति । एवमुक्तेन बन्धक्यादिभ्यश्च माधवेनेयो

**२७३. दित्यदिती वा, भ्रुवो भ्रुव् च ।**

दैतेयो दैत्यः, आदितेयः आदित्यः । भ्रौवेयः । गङ्गाया गाङ्गेयो गाङ्गो गाङ्गायनिः । शुभ्रादिपाठेन माधवत्वाद् गाङ्गेयी ।

**२७४. इरामान्ताद् द्विसर्वेश्वरान्माधव ढः, एन्नृसिंहात्तु न ।**

विधेरपत्यं वैधेयः । एन्नृसिंहात्तु कार्ष्णायनो वक्ष्यते ।

---

**अमृता०**—२७३. दितीति । तस्यापत्यमित्यर्थे दित्यदिति शब्दौ शुभ्रादी वा भवतः, ततश्च माधव ढो वा स्यात् । भ्रू शब्दाद् माधव ढः स्यात्, तत्र तस्य भ्रुवादेशश्च भवति । दित्या अपत्यं दैतेयः, अइ-द्वयस्येति इरामहरः । पक्षे दित्यदित्येत्यादिना ण्यरामः—दैत्यः । एवमादितेयः आदित्य इति च । भ्रुवोऽपत्यं भ्रौवेयः । गङ्गाशब्द त्रिष्वेव गणेषु वर्त्तत इति दर्शयति—गाङ्गेय इत्यादि त्रिभिः । शुभ्रादित्वान्माधव ढः—गाङ्गेयः शिवादित्वात् केशव णः—गाङ्गः, तिकादित्वात् फिः—गाङ्गायनिरिति । माधवत्वादिति—माधवत्वेन केशवत्वात्—अण् केशव गौरादिभ्य इत्यनेन ईवित्यर्थः ।

**अमृता०**—२७४. इरामान्तादिति । तस्यापत्यमित्यर्थे द्विसर्वेश्वरविशिष्टात्इरामान्त शब्दान्माधव ढः स्यात्, नृसिंहादिरामात्तु माधव ढो न भवति । विधिर्ब्रह्मा तस्यापत्यं पुमान् वैधेयः । एवं आत्रेयः कापेयः नैधेय इत्यादि । कार्ष्णायन इति—कृष्णस्यापत्यं कार्ष्णिः प्रद्युम्नः, अरामवाह्वादिभ्यामिति नृसिंह इः । पुनश्च तस्यापत्यमिति इयाभ्यां नृसिंहाभ्यां गोत्र प्रत्ययाभ्यामिति फरामो वक्ष्यते । एवं दाक्षायण इति ।

---

भवति । बन्धक्या अपत्यं पुमानित्यादौ वाक्ये बान्धकिनेयः राजकिनेयः ज्यैष्ठिनेयः माध्यमिनेयः कानिष्ठिनेयः ॥ २७२ ॥

**बाल०**—पर । अस्यापत्यमित्यर्थे परस्त्रियाः स्थाने पारस्त्रैणेय पारशवौ साधू भवतः । स्वयं वृत्तिमाह माधवैनेय इति । परस्त्रिया अपत्यं पुमानिति विग्रहे निपातः सामर्थ्यात् परस्त्रीशब्दान्माधवैनेयो भवति । एवं केशवणश्च केशवण परे परस्त्रियाः परशुरादेशः पश्चादादिसर्वेश्वरस्येति वृष्णीन्द्रः । अ-इद्वयस्येतीरामहरः । परशवादेशपक्षे उद्वयस्येति गोविन्दः । किञ्चात्र परस्त्रीशब्दो यौगिको रूढश्च । तत्र यौगिकपक्षे परेणोढा स्त्री परस्त्री अस्या अपत्ये पारस्त्रैणेयः । रूढिपक्षेतु परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या । अतो ब्राह्मणोढायाः शूद्राया अपत्ये पारशव इति ॥ २७३ ॥

**बाल०**—चट । तस्यापत्यमित्यर्थे चटकात् एरण् स्यात्, लक्ष्म्यान्तु वाच्यायामेव महाहरश्च । ननु चटकस्यापत्यं पुमानिति चाटकेरो भवतु, कथं चटकायाश्चाटकेर इत्यत्र निर्वक्तिनामविशिष्टग्रहणादिति । विशिष्टपदेनात्र लिङ्गविशिष्ट आक्षिप्यते । तथाच विशिष्टस्य ग्रहणं विशिष्टग्रहणं नाम्ना विशिष्टग्रहणं नामविशिष्टग्रहणं तस्मात् । तथाहि, नाम्ना लिङ्गविशिष्टस्य ग्रहणात् चटकाया अपि चाटकेरः स्यात् । नाम्नो ग्रहणे लिङ्गविशिष्टग्रहणादिति पाठश्चेत्तदा सुगमः । लक्ष्म्यान्त्विति यदुक्तं तदुदाहरणः चटकेति ।

**२७५. कल्याण्यादे र्माधवेनेयः ।**

**काल्याणिनेयः । हृद्भगसिन्ध्वन्तानामित्युभयपदवृद्धिः,—सौभागिनेयः दौर्भागिनेयः । एवं बन्धकी रजकी ज्येष्ठा मध्यमा कनिष्ठाभ्यश्च ।**

**२७६. परस्त्रियाः पारस्त्रैणेय-पारशवौ ।**

**माधवैनेय-केशवणाभ्यां साधू ।**

**२७७. चटकादेरण् लक्ष्म्यान्तु महाहरः ।**

**नाम्नो ग्रहणे लिङ्गविशिष्टग्रहणाच्चटकाया अपि चाटकेरः चटका ।**

---

**अमृता०**—२७५. कल्याण्यादेरिति । तस्यापत्यमित्यर्थे कल्याणीप्रभृतेरुत्तरे माधव इनेयः स्यात् । लक्ष्मीत्वेन माधव ढरामे प्राप्ते तदपवादार्थमिदम् । कल्याण्या अपत्यं काल्याणिनेयः, अइ द्वयस्येतीरामहरः, आदिसर्वेश्वरस्येति वृष्णीन्द्रः । सुभगाया अपत्यं सौभागिनेय इत्यादि । आदिशब्दात् बन्धक्यादिभ्यश्च माधव इनेयः स्यादित्याह—एवमित्यादि ।

**अमृता०**—२७६. परेति । तस्यापत्यमित्यर्थे परस्त्रीशब्दस्य पारस्त्रैणेय पारशवौ साधूभवतः । काभ्यां प्रत्ययाभ्यामेतौ साधू इत्यपेक्षायां वृत्तिमाह–माधवैनेय केशवणाभ्या-मिति । परस्त्रिया अपत्यं निपातान्माधव एनेया—पारस्त्रैणेयः, तथा च केशवणः—परस्त्री शब्दस्य निपातात् परशु आदेशः, उद्वयस्येति गोविन्दः, पारशव इति ।

**अमृता०**—२७७. चटकादिति । तस्यापत्यमित्यर्थे चटकशब्दादेरण् स्यात्, लक्ष्म्यां वाच्यायान्तु तस्य एरण् प्रत्ययस्य महाहरो भवति । नाम्नो ग्रहणे इत्यादि न्यायेन स्त्री-लिङ्गान्तस्यापि तत्प्रत्ययोत्पत्तिः । तेन चटकस्य चठकाया वा अपत्यं पुमान् चाटकेरः, तस्य तस्या वापत्यं स्त्रीति एरणो महाहरे चटका ।

---

अत्रापि चटकस्य चटकाया वापत्यः स्त्रीति योज्यं, किन्तु चटकप्रकृतिपक्षे कृष्णदा-वित्याप् ॥ २७४ ॥

**बाल०**—गोधा । गोधाया अपत्यं पुमानित्याद्यत्यर्थे आरणेरणमाधवढैर्यथा-सङ्ख्यं गौधारगौधेरगौधेयाः साधवो भवन्ति । स्त्रियां वाच्यायां सत्यां माधवत्वात् गौधेयीत्यपि ॥ २७५ ॥

**बाल०**—क्षुद्रा । तस्यापत्यमित्यर्थे क्षुद्राभ्य एरण् वा स्यात् । पक्षे लक्ष्मीशुभ्रा-दिभ्यामित्यनेन लक्ष्मीत्वान्माधवढः । ननु क्षुद्राः का इत्यपेक्षायां क्षुद्रापरिचायकलक्षणमाह अङ्गेति । अङ्गहीनाः क्षुद्राः स्युरनियतपुंस्काश्च क्षुद्राः स्यु । अत्राङ्गहीनाया यथा काणाया अपत्यं पुमान् काणेयः काणेरश्च । अनियतपुंस्काया यथा दास्या अपत्यं पुमान् दासेयादि-द्वयं । तत्र सूत्रे यौगिकक्षुद्राया अपि ग्रहणमिति निगमयति कुलटेति । कुलटा पुंश्चली

**२७८. गोधाया गौधार-गौधेर-गौधेयाः ।**

साधवः । स्त्रियां माधवत्वात् गौधेयी ।

**२७९. क्षुद्राभ्य एरण् वा ।**

अङ्गहीना अनियतपुंस्काश्च क्षुद्राः । काणेयः काणेरः, दासेयः दासेरः । कुलटा पुंश्चली भिक्षुकी च । कौलटेयः कौलटेरः । भिक्षुक्याः सतीत्वे तु कुलटाया माधवेनेयो वा,—कौलटिनेयः कौलटेयः ।

**२८०. स्वसुश्छरामः ।**

---

**अमृता०**—२७८. गोधाया इति । गोधाया अपत्यमित्यर्थे आरण्-एरण् माधवढ प्रत्ययैः यथाक्रमं गौधार-गौधेर-गौधेयाः साधवो भवन्ति । माधवत्वादण् केशव गौरादिभ्य इति ईप गौधेयी ।

**अमृता०**—२७९. क्षुद्राभ्यइति । क्षुद्राभ्य उत्तरे एरण् वा स्यात् । क्षुद्रेति रूढि शब्द इत्याह—अङ्गहीना इत्यादि । नविद्यते नियत पुमान् यस्याः सापि क्षुद्रा संज्ञका । अर्थ धर्मेण तदभिधायिन्यः स्त्रीलिङ्ग शब्दा इह गृह्यन्ते । काणा चक्षुषा हीना, तस्या अपत्यं काणेरः, पक्षे लक्ष्मी शुभ्रादिभ्यामिति माधव ढः—काणेयः । दासी शीलहीना, तस्या अपत्यं दासेरः दासेयः । पुंश्चली वाच्ये कुलटाया एरण् वा, पक्षे माधव ढः । यदा

---

भिक्षुकीच भवति । भिक्षुकीत्वे असती सतीच भवति । यदा भिक्षुक्यसती तदा पुंश्चली-समानार्था । अतएवानयोः समानार्था कुलटा दुराचारत्वात् क्षुद्रा । अन्यैरुक्तञ्च । दुःशील-वाचिका क्षुद्रा । इत्यतः कुलटायाः अपत्यं पुमान् कौलटेयः कौलटेयश्च । भिक्षुक्याः सतीत्वेतु सतीभिक्षुक्यर्थकुलटाया दुराचारत्वाभावेन क्षुद्रत्वाभावाल्लक्षणमपेक्ष्यते इति सूत्रं करोति कुलटेति । तस्यापत्यमित्यर्थे कुलटाया माधवेनेयो वा भवति । पक्षेऽत्रापि लक्ष्मीत्वान्माधवढः । कौलटिनेय इतिद्वये वाक्यं पूर्ववत् ॥ २७९ ॥

**बाल०**—स्वसुः । तस्यापत्यमित्यर्थे स्वसृशब्दात् छरामः स्यात्, छ इयः । स्वस्रीय इति स्वसुरपत्यं पुमानित्यर्थः ॥ २७७ ॥

**बाल०**—भ्रात्रौ । तस्यापत्यमित्यर्थे भ्रातृजे वाच्ये छप्रत्ययेन सह भ्रातुर्भ्रात्रीयः साधुः । पुनः शत्रौ भ्रातृजेच वाच्ये यप्रत्ययेन सह भ्रातुर्भ्रातृव्यः साधुः । यप्रत्ययो वरामागमश्चात्र निपातफलं ॥ २७८ ॥

**बाल०**—पितृ । तस्यापत्यमित्यर्थे पितृमातृपूर्वायाः स्वसुर्नृसिंह छमाधवढाभ्यां सह पैतृष्वस्रीयपैतृष्वसेयादयः साधवो भवन्ति । निपातबलात् ढपक्षेऽत्र स्वसुः ऋरामहरश्च । लक्ष्मीत्वे वाच्ये ईप् भवतीत्याह माधवादिति । पितृष्वसुरपत्यं स्त्री पैतृष्वसेयीति । एवं मातृष्वस्रीयः मातृष्वसेयीतिच ॥ २७९ ॥

स्वस्रीयः।

**२८१. भ्रात्रीयो भ्रातृजे, भ्रातृव्यन्तु शत्रौ च।**

साधू।

**२८२. पितृमातृपूर्वायाः स्वसुः पैतृस्वस्रीय-पैतृष्वसेयादयः।**

साधवः। माधवत्वात् पैतृष्वसेयी।

---

तस्या भिक्षुकी वाच्यता तदापि दुःशीलार्थे पूर्ववत् प्रत्ययद्वयं, भिक्षुकी चेत् सती भवति तर्हि माधवेनेयो वा, पक्षे च माधव ढ इत्यर्थः।

अमृता०—२८१. भ्रात्रीय इति। भ्रातृजे वाच्ये भ्रातृशब्दात् छप्रत्ययेन भ्रात्रीय इति साधुः स्यात्। पुनः शत्रौ भ्रातृजे च वाच्ये भ्रातु र्यप्रत्ययेन भ्रातृव्य इति साधुर्भवति। पूर्वत्र छप्रत्ययो निपातात्, उत्तरत्र तु वरामागमो निपातात्, अन्यथा ऋरामस्य रो ये इति प्रसज्जेत।

अमृता०—२८२. पित्रिति। तस्यापत्यमित्यर्थे पितृमातृपूर्वायाः स्वसु र्नृसिंह छ माधवढाभ्यां पैतृस्वस्रीय—पैतृष्वसेयादयः साधवो भवन्ति। पितृस्वसुरपत्यमिति लक्ष्मीत्वान्नित्यं माधव ढे प्राप्ते पक्षे नृसिंह छरामार्थो निपातः। माधव ढ पक्षेऽपि स्वसुः ऋराम हरश्च निपातनादेव ज्ञेयः।

---

बाल०—श्वशु। तस्यापत्यमित्यर्थे शब्दादुत्तरो यो भवति। श्वशुरस्यापत्यं पुमानिति अ-इद्वयस्येत्यरामहरः श्वशुर्य इति॥ २८०॥

बाल०—रेव। तस्यापत्यमित्यर्थे रेवत्यादेरुत्तरो माधवठो भवति। पूर्वोक्तं स्मारयति अयमिति। रैवतिक इति रेवत्या अपत्यं पुमानिति वाक्ये। सूत्रस्थादिशब्दात् अश्वपाल द्वारपाल मणिपाल वृकवञ्चिन् ब्रह्मग्राह कण्ठग्राह चण्डग्राह कक्कुटाक्ष इत्यष्टानां ग्रहणं। अश्वपाली द्वारपाली मणिपालीति त्रयं स्त्रीलिङ्गमितितु जयादित्यः। "रेवत्यादौ द्वारपालशब्दः पठ्यते" इति भाष्यवचनं दृष्ट्वा "द्वारपालादीनाञ्च" इति न्यासः। रेवतीशब्दात् यद्यश्वपालादित्रयाणाञ्च लक्ष्मीत्वं तदा तेभ्योऽपि लक्ष्मीशुभ्रादिभ्यामित्यनेन लक्ष्मीत्वाद् माधवढे प्राप्ते एतत्त्रयाणां लक्ष्मीत्वं न चेत्तदा एभ्यः शेषेभ्यश्च आरामबाह्वादिभ्यामित्यनेनारामान्तत्वादिराम नृसिंहे प्राप्ते वृकवञ्चिन्शब्दात्तु विधानान्तराभावात् केशवणे प्राप्ते इदं विधानं॥ २८१॥

बाल०—कुर्वा। तस्यापत्यमित्यर्थे कुर्वादिभ्य उत्तरो ण्यरामो भवति। ननु ऋष्यन्धकेत्यनेन कुरुशब्दादस्मिन्नर्थे केशवणो विहितः पुनरत्र कुरुशब्दः कथमुपादीयते इत्यत्र समादधाति कुरुरिति। अयं कुरुशब्दो मुनिवचन इत्यर्थः अनेन सतु क्षत्रियवचन इति सूचितं। कुरोरपत्यं पुमानिति उद्वयस्य गोविन्दो न चेत्यनेन गोविन्दः। उद्वयस्यारावावित्यनेनाव कौरव्या। पितुरिति वाक्यं दर्शितं। किन्त्वत्रापि पुमानिति योज्यं।

**२८३. श्वशुराद्यः ।**

श्वशुर्यः ।

**२८४. रेवत्यादे र्माधवठः ।**

अयमेव ठिकण्णित्युक्तः । रैवतिकः ।

**२८५. कुर्वादिभ्यो ण्यरामः ।**

---

अमृता०—२८३. श्वशुरादिति स्पष्टम् । श्वशुर्य इति अइ-द्वयस्येत्यरामहरः ।

अमृता०—२८४. रेवत्यादे रिति । तस्यापत्यमित्यर्थे रेवत्यादे रुत्तरे माधवठः स्यात् माधव ढरामस्यापवादः । प्रागुक्तं स्मारयति—अयमित्यादिना । रेवत्या अपत्यं ठ इक—रैवतिकः । आदिपदेन अश्वपाली मणिपाली द्वारपाली वृक वञ्चिन् वृकबन्धु वृकग्राह कर्णग्राह दण्डग्राह कुक्कुटाक्ष इत्येतेषां ग्रहणम् ।

अमृता०—२८५. कुर्वादिभ्य इति । तस्यापत्यमित्यर्थे कुर्वादिभ्य उत्तरे ण्यरामः

---

ञ्यरामस्य रो ये इति रः पैत्र्य इति । कुर्वादिर्यथा । कुरुपितृ गर्द्धभ शकल तक्षन् मङ्गूष अविरामक रथकार चपाट्टक कवि मति वाच् पितृमत् इन्द्रजालि धान्वजि दास उष्णीष गणिका कैशोरि कपिञ्जलादि कुट शलाका सुर एरका शुभ्र दर्भ भर्बु पूर्णाय श्याबलाय श्यावरथ श्यावपुत्र सत्यङ्कार वडभीकार पथिकारिन् इन पिण्डीमूल शकम्भू भर्त्तृ इत्येकोनचत्वारिंशत्सङ्ख्यकः । अत्र नापितमपि कश्चित् पठति । उत्तरसूत्रे कारुत्वेन रथकारवडभीकारयोर्वैकल्पिकण्यरामे प्राप्ते नित्यतार्थमत्र ग्रहणं । जातिविशेषवाचको रथकारशब्दोऽत्र गृह्यते । शिल्पवचनात्तु कारुत्वेनैव प्राप्तेरिति कश्चित् । शकम्भूशब्दोऽत्र शके भवतीति क्विबन्तः गणपाठसामर्थ्यान्मध्ये मुमागमः ।। २८२ ।।

बाल०—सेना । तस्यापत्यमित्यर्थे सेनान्तकारुलक्षणेभ्यो नृसिंहभूताविर्यौ भवतः । हरिषेणस्यापत्यं पुमानिति हारिषेणिरिति द्वयं । एवं विष्वक्सेनादिः । कारुः शिल्पी तन्त्रवायादिस्तत्र तन्त्रवायस्यापत्यं पुमानिति तान्त्रवायिरिति द्वयं । लक्षणस्यापत्यं पुमान् लाक्षणिरिति द्वयं ।। २८३ ।।

बाल०—तिका । तिकादेरुत्तरस्तस्यापत्यमित्यर्थे नृसिंह फिर्भवति । फिस्त्वायनिरित्युक्तं तिकस्यापत्यं चान्द्रमसस्यापत्यं पुमानिति यथाक्रमकौरव्यायणिरिति द्वयं । तिक कौरव्य चान्द्रमस कितव संज्ञा वाण शिखा शाट्य सैन्धव यमुन्द कुन्द रूप्य ग्राम्य कुरु देव रथ तैतितन ओरस लाङ्कट गोकक्ष्य भौरिकि भौलिकि चौपयत शैकयत वैङ्कयत क्षैतयत ध्वाजयत उरस् अमित्र गङ्गा बरेण्या बन्धा अबन्धा वज्यका खलाका लोमका सुयामन उदन्य यज्ञेति चत्वारिंशत् तिकादिः । जनपदसनामप्रकरणे कुर्वादेर्ण्यराम इति योऽन्यो वक्ष्यते, तदन्तः कौरव्यशब्दोऽत्र गृह्यते । कुरुशब्दस्तु केवलराजवाचकस्तस्मात् कुरोः कौरवायणिरिति ।। २८४ ।।

कुरुरयं मुनिवचनः। कौरव्यः कौरव्या। पितुरपत्यं पैत्र्यः।

**२८६. सेनान्त-कारु-लंक्षणेभ्यो नृसिंहावियौ।**

हारिषेणिः हरिषेण्यः, तान्त्रवायिः तान्त्रवाय्यः, लाक्षणि लाक्षण्यः।

**२८७. तिकादे र्नृसिंहफिः।**

तैंकायनिः, कौरव्यायनिः, चान्द्रमासायनिः।

---

स्यात्। ननु ऋष्यन्धक वृष्णि कुरुभ्य इत्यनेन कुरुशब्दात् केशवणो विहितएव, कथं पुनरिह ण्यरामो विधीयत इति चेत्तत्राह—कुरुरयं मुनिवचन इति। तत्र तु क्षत्रिय वचन इति भेदः कुरो र्मुनिविशेषस्यापत्यं कौरव्यः, उद्वयस्येति गोविन्दः ओद्वयस्यावावौ इत्यव्। स्त्र्यपत्ये आप्। पैत्र्य इत्यत्र ऋरामस्य रो ये इति रः। कुर्वादिगणः परिशिष्टे द्रष्टव्यः।

**अमृता०**—२८६. सेनान्तेति। तस्यापत्यमित्यर्थे सेनान्त शब्दात्, कारु वाचकात् तथा लक्षणाच्च नृसिंहौ इ-यौ प्रत्ययौ भवतः। हरिषेणस्यापत्यं पुमानिति नृसिंह इः, अइ-द्वयस्येत्यरामहरः, वृष्णीन्द्रश्च, हारिषेणिः। नृसिंह यपक्षे पूर्ववदरामहरः, हारिषेण्यः। एवं शौरसेनिः शौरसेन्य इत्यादि च। कारुः शिल्पी। तन्त्रवायो वस्त्रवयनकारी। लक्षणस्यापत्यं लाक्षणि रिति द्वयम्।

**अमृता०**—२८७. तिकादेरिति। तस्यापत्यमित्यर्थे तिकारेरुत्तरे नृसिंह फिः स्यात्। तिकस्यापत्यमिति फिः, रायनिः, तैकायनिः। कौरव्यस्यापत्यं पुमान् कौरव्यायनिः। चान्द्रमासस्यापत्यं चान्द्रमासायनिः। गणश्च परिशिष्ट द्रष्टव्यः।

---

**बाल०**—कोशल। तस्यापत्यमित्यर्थे कोशलकर्मारच्छागवृषेभ्यो नृसिंहः किस्त-स्मिन्नेभ्यो युडागमश्च भवति। अत्र दण्डमपि कश्चित् पठति। जनपदसनामप्रसङ्गे कुर्वादेर्ण्यराम इत्यत्र कुर्वादिगणे यः कौशलः पठ्यते। शिष्टाचारेण सह समावेशार्थः स एवात्रापि गृहीतस्तेन कोशलस्यापत्यं पुमान् कौशल्यायनिरिति, अन्यथा कौशल्ये इत्येव स्यात्। भट्टिकाव्ये हि कौशल्यायनिवल्लभामिति कौशल्यायनिशब्दो रामवचनो दृश्यतेच। कर्मारस्यापत्यं पुमान् कार्मार्य्यायनिः। एवं छग्यायनिः वार्ष्यायणिः। क्वचिन्मते दागव्यायनिरिति॥ २८५॥

**बाल०**—पुत्रा। आदिवृष्णीन्द्रात् पुत्रान्ताच्छब्दात् नृसिंह फिर्वा भवति, तस्मिन् कुक्च वा तस्यापत्यमित्यर्थे। गार्ग्याः पुत्रः गार्गीपुत्रस्तस्यापत्यं पुमानिति गार्गीपुत्र-कायणिः कुगभावपक्षे गार्गीपुत्रायणिः। ऊभयाभावपक्षे अरामवाह्वादिभ्यामिति नृसिंह-इः गार्गीपुत्रिरिति॥ २८६॥

**बाल०**—राज। जात्यां वाच्यायां राजक्षत्रशब्दाभ्यां यथासङ्ख्यं यघरामौ भवतः। मनुशब्दात्तु ष्यषणौ भवतः। यद्यपि जात्यामित्युक्तं तथाप्यपत्यरूपजातिर्बोद्धव्या। अन्यथा राज्ञोऽपत्यं राजन्य इति तद्धितकार्षे यदुक्तं तदनर्थंदकं स्यात्। तेन राज्ञो जात्यपत्यं

## २८८. कोशल-कर्मार-छाग-वृषेभ्यो युडागमश्च ।

कौशल्यायनिः ।

## २८९. पुत्रान्तादादि वृष्णीन्द्रान्नृसिंह फि र्वा, कुक् च वा ।

गार्गीपुत्रकायणिः गार्गीपुत्रायणिः गार्गीपुत्रिः ।

---

**अमृता०**—२८८. कोशलेति । तस्यापत्यमित्यर्थे कोशलादि चतुर्भ्यो नृसिंह फिरामः स्यात्, तत्र चैभ्यो युडागमश्च भवति । कोशलस्यापत्यं पुमान् कौशल्यायनिः । एवं कामार्य्यायणिः, छाग्यायनिः, वार्ष्यायणिः ।:

**अमृता०**—२८९. पुत्रेति । आदि वृष्णीन्द्रात् पुत्रान्तशब्दात् नृसिंह फि र्वा स्यात् तस्यापत्यार्थे, तत्र कुक् चागमो वा भवति । गार्ग्याः पुत्रः गार्गीपुत्रः, तस्यापत्यं पुमान् गार्गीपुत्रकायणिः । नृसिंहफेरभाव पक्षे अराम बाह्वादिभ्यामिति नृसिंह इः—गार्गीपुत्रिः, कुकोऽभावपक्षे तु गार्गीपुत्रायणिरिति ।

---

पुमान् राजन्य इति । अणो येतु भावकर्मणोरेवेति नियमान्नात्र संसारहरः । क्षत्रस्य जात्यपत्यं पुमान् क्षत्रिय इति । मनोर्जात्यपत्यं पुमान् मनुष्यः मानुषश्च । जाताविति किं किमर्थं । अन्यापत्येतु राज्ञोऽपत्यं वैश्यः शूद्रो वेति विधानान्तराभावात् केशवणः, नान्तस्थ नत्वनीपोरिति संसारहरनिषेधः । राजन इति । क्षत्रस्यान्यापत्यं पुमान् क्षात्रिरिति । अरामान्तत्वादत्र नृसिंह इः । मान । सूत्रे जातौच वाच्ये केशवणप्रत्ययेन सह मनोः स्थाने मानवस्तु साधुर्भवति ।। २८७ ।।

**बाल०**—कुल । विष्वाधिकारसामर्थ्यात् तस्यापत्यमित्यनुवर्त्तत एव तेन तस्यापत्य-मित्यर्थे कुलस्य स्थाने य-माधवढ खप्रत्ययैः सह क्रमेण कुल्य कौलेयकुलीनाः साधवो भवन्ति । मनोऽभिप्रेतं ग्रन्थकृत् स्वयमाह सेति । पूर्वपदेन सह वर्त्तमानत्वे सति यदुकुलीन इत्यत्र खप्रत्यय एव । अत्रास्यापत्ये बहुप्रत्ययपूर्वात् कुलात् यनृसिंह ढकौ वक्तव्यौ । ईषदसमाप्तं कुलं बहुकुलं तस्यापत्यं पुमान् बहुकुल्यः बहुकुलेयकः । माहा । तस्यापत्य-मित्यर्थे केशव ण नृसिंहख-केवल खैः सह महाकुलस्य यथाक्रमं माहाकुलमाहाकुलीनमहा-कुलीनाः साधवो भवन्ति । दुष्कु । तस्यापत्यमित्यर्थे माधव ढ खरामाभ्यां सह दुष्कुलस्य दौष्कुलेयदुष्कुलीनौ साधू भवतः । कुलस्येत्यादिसूत्रत्रयस्य एकत्रैव वृत्तिमाह एते इति । माहेति केशवत्वाल्लक्ष्म्यां विषये महाकुलदौष्कुलेययोः स्थाने माहाकुली दौष्कुलेयी भवतः ।। २८८ ।।

**बाल०**—द्विसर्वे । तस्यापत्यमित्यर्थे केशवणान्तात् द्विसर्वेश्वरातुत्तरः फिर्भवति । होतुरपत्यं पुमानिति केशव-णः हौत्रस्तस्यापत्यं पुमानिति फिः आयनिः हौत्रायणिः एवं कार्त्रायणिः । तद्धितबाहुल्यात् क्वचिदुत्सर्गोऽभिनिविशते, तेन यद्यप्यपत्यार्थे बाह्वादित्वात् कार्ष्णिरित्येव भवितुमर्हति, तथापि ऋष्यन्धकेत्यनेन वृष्णिवंश्यत्वादपत्यार्थे कार्ष्ण इतिच । ततः कार्ष्णस्यापत्यं पुमान् कार्ष्णायनिरिति । तस्यापत्यमिति शिवादित्वात्

**२८०. राज क्षत्राभ्यां य-घरामौ जात्यां, मनोः ष्य-षणौ ।**

राजन्यः क्षत्रियः मनुष्यः मानुषः । जातौ किम् ? राजनः क्षात्रिः । मानवस्तु पुत्रे जातौ च साधुः ।

**२८१. कुलस्य कुल्य-कौलेय-कुलीनाः ।**

सपूर्वत्वे यदु कुलीन इति ख एव । महाकुलस्य माहाकुल-माहाकुलीन-महाकुलीनाः, दुष्कुलस्य दौष्कुलेय-दुष्कुलीनौ । एते साधवः । माहाकुल-दौष्कुलेययो र्लक्ष्म्यां माहाकुली दौष्कुलेयी ।

---

**अमृता०**—२८०. राजेति । जात्यां वाच्यायां राजक्षत्रशब्दाभ्यां यथाक्रमं यराम-घरामौ स्याताम् । मनु शब्दात्तु ष्य-षणौ प्रत्ययौ भवतः । प्रकृति प्रत्ययसमुदायेन जाति-रुच्यते, केवल प्रत्ययस्तु अपत्ये एव विधीयते । ततश्च पङ्कजादि वत् योगरूढी भवत्यय-मिति भावः । तेन राज्ञो जात्यपत्यं, अर्थात् क्षत्रियापत्यमित्यर्थे राजन्य इति । एवं क्षत्रस्य जात्यपत्यं—घइयः—क्षत्रियः । अनो ये तु भावकर्मणोरेवेति न संसारहरः । एवञ्च मनो र्जात्यपत्यं पुमान् मनुष्यः मानुष इति । प्रत्युदाहरति—राजन इति । राज्ञोऽपत्यं वैश्वादि रिति तज्जातित्वाभावात् सामान्यतः केशवणः । नान्तस्य नत्वणीपोरिति निषेधान्न संसार हरः । क्षात्रिरिति—अराम वाह्वादिभ्यामिति नृसिंह इः । अपत्यार्थे जात्यर्थे च मनु शब्दात् केशवणे न मानव इति साधु र्भवति ।

**अमृता०**—२८१. कुलस्येति । अपत्यार्थे कुलशब्दात् य·माधवढ ख प्रत्ययैः क्रमेण कुल्य·कौलेय·कुलीनाः साधवो भवन्ति । पूर्व पदेन सह विद्यमानत्वे सति ख प्रत्यय एव नत्वपरौ । महाकुलस्यापत्यार्थे केशवण–नृसिंह ख·केवल ख प्रत्ययैः सह क्रमात् माहाकुल-माहाकुलीन·महाकुलीना एते साधवो भवन्ति । तथा दुष्कुलस्यापत्यार्थे माधव ढ·ख प्रत्याभ्यां सह दौष्कुलेय·दुष्कुलीनौ साधूभवतः । माहाकुल दौष्कुलययोः केशवमाधवत्वात् लक्ष्म्यामीप् स्यादिति भावः ।

---

केशव·णः यास्कस्तस्यापत्यं पुमान् यास्कायनिरिति । केशवणान्तस्यारामान्तत्वादपत्यार्थे इरामन्नृसिंहे प्राप्ते विधानं । अत्रापत्यस्यापत्यकथनेन गोत्रमुल्लिखितं तेनाव्यवहितं गोत्रमधिकरोति ॥ २८९ ॥

**बाल०**—गोत्रे । गोत्रापत्ये वाच्ये नाम्नो यथास्वं प्रत्ययोः स्युः । प्रभुनामाय-मधिकार एकाधिकारव्यापित्वात् । गोत्रलक्षणं दर्शयति पौत्रेति । पौत्राद्यपत्यं गोत्रं स्यात् ॥ २९० ॥

**बाल०**—विदा । गोत्रापत्ये वाच्ये विदादेरुत्तरः केशवणो भवति । वैद इति विदस्य गोत्रापत्यं पुमानित्यर्थे विदस्य पौत्रप्रभृत्यपत्यं पुमानित्यर्थे वा । एवमुत्तरत्रापि । और्वं इति उर्वस्य गोत्रापत्यं पुमानिति वाक्ये । विदादेरित्यत्रादिग्रहणफलं वक्ति एवमिति ।

## २६२. द्वि सर्वेश्वरात् केशवणान्तात् फिरामः ।

हौत्रायणिः कार्ष्णायणिः यास्कायनिः ।

## २६३. गोत्रे ।

प्रभुरयम् । पौत्रप्रभृत्यपत्यं गोत्रम् ।

---

अमृता०—२६२. द्वि सर्वेति । केशवणान्तो योद्विसर्वेश्वरान्तः शब्द स्तस्मादुत्तरे तस्या पत्यार्थे फि प्रत्ययः स्यात् । होतुरपत्यं पुमान् केशवणः—हौत्रः, तस्यापत्यं पुमान् फिः—हौत्रायणिः । यद्यपि वाह्वादित्वात् कार्ष्णिरित्युक्तं तथापि वृष्णिवंश्यत्वात्—ऋष्यन्धक वृष्णिकुरुभ्यश्चेत्यनेन केशवणस्याप्यवकाशात् कृष्णस्यापत्यं कार्ष्णः, तस्यापत्यमिति कार्ष्णायणिः । एवञ्चान्यत् ।

---

कश्यप कुशिक भरद्वाजादिभ्य इत्यत्रादिपदगृहीतगणो यथा । किलात किन्दर्भ विश्वानर ऋष्टिषेण ऋतभाग हर्यश्व प्रियक अयस्तम्भ अपस्तम्भ कुठ वार शरद्वत् शुलक धेनु गोपवन शिन्ध विन्दु भामज अश्व अवभार अवस्तार श्यामाक हरित श्यापर्ण किन्दास वयक्ष अकन्धु वध्योग विष्व वृद्ध प्रतिरोध रथीतर रथन्तर गविष्ठिर मठर निषाद सृदाकु पृदाकु पूर्णभू पुत्र दुहितृ ननन्दृ इति द्वाचत्वारिंशच्च । अत्र ऋषिभ्यः पौत्रादौ अनृषिभ्यस्त्वनन्तरापत्य एवेत्यन्ये । स्वमतेऽत्र प्रकारान्तरमाह अनन्तरेति । अनन्तरापत्येतु केवलापत्येतु वैदिरित्यादि स्यात् । अत्रारामवाह्वादिभ्यामित्यनेन नृसिंह-इरिति भावः ॥ २६१ ॥

**बाल०**—गर्गा । गोत्रापत्ये वाच्ये गर्गादेः परो माधव यरामो भवति । गर्गस्य गोत्रापत्यं पुमान् गार्ग्य इति । वत्सस्य गोत्रापत्यं पुमान् वात्स्य इति । व्याघ्रपादिपञ्चच गर्गादिर्भवतीत्याह एवमिति । जमदग्न्यादिभ्य इत्यादिपदसंगृहीतगणो यथा । आकृति संस्कृति ओज वेदभू वीरो योग पुलस्ति विलस्ति रेभ अग्निवेश शङ्ख शट लवट धूम वर्मिन् धनञ्जय तृक्ष वृश्वावसु जरमाण लोहित संशित वभ्रु मण्डु मक्षु मन्तु बोध शम्भु नतु गुहनु जिगीषु इन्द्र तन्तु मनायी मनु कथक तक्ष तण्ड वतण्ड कपि कत कुरुकत शकल देवहु इन्द्रहु कण्व गोकक्ष कुण्डिली अनड्वाह यज्ञवल्क पर्णवल्क जाति विषोहित वृषगण रहोगण शण्डिल मुषल जतृकर्ण मन्त्रित अश्वरथ शर्कराक्ष पूतिमास स्थूरा अवरक पिङ्गल कृष्ण गोनन्द उलूक तितिक्ष भिषज तिष्णुज तण्डिल कुम्भ चिकत एकतू पिप्पनु वृहदग्नि सुलोभिल कोटि इत्येकोनाशीतिसंख्यकः । ननु यद्येवं तर्हि केवलापत्ये रामो जामदग्न्यः व्यासः पाराशर्य इति द्वयं कथं स्यादित्याक्षेपे सिद्धान्तमाह गोत्रेति । गोत्ररक्षकत्वरूपेणोपचाराद्धेतोरत्र द्वये गोत्रापत्यसिद्धत्वात् । गर्गादेर्यरामान्तत्वेन जमदग्न्यादिद्वयं सिद्धमेवेति नासमञ्जसं । अन्यथेति गोत्ररक्षकत्वरूपेणोपचारत्वाभावेऽत्यविरितकेशवणान्तत्वेन जामदग्नः पाराशर इत्येव स्यात् ॥ २६२ ॥

**बाल०**—नडा । गोत्रापत्ये वाच्ये नडादेरुत्तरो माधव फः स्यात् । फ आयनः । नडस्य गोत्रापत्यं पुमान् नाडायन इति । द्विपस्येत्यादि द्वैपायनो व्यास इति । ब्राह्मण-

**२६४. विदादेः केशव णः।**

वैदः और्वः। एवं कश्यप-कुशिक-भरद्वाजादिभ्यः। अनन्तरापत्ये तु वैदिः।

**२६५. गर्गादे र्माधव-यरामः।**

गार्ग्यः वात्स्यः। एवं व्याघ्रपादगस्त्य-मुद्गल-पराशर-जमदग्न्या-

---

**अमृता०**—२६४. विदादेरिति। गोत्रापत्येऽर्थे विदादेरुत्तरे केशवणः स्यात्। वैद इति—विदस्य गोत्रापत्यं पुमानित्यर्थे विद शब्दात् केशवणः, अइ-द्वयस्येत्यरामहरः, आदिसर्वेश्वरस्येति वृष्णीन्द्रः। एवं और्व प्रभृतयश्च ज्ञेयाः। अनन्तरापत्य इति केवलापत्य इत्यर्थः। तत्र अरामवाह्वादिभ्यामित्यादिना नृसिंह इः। परिशिष्टे गणः।

**अमृता०**—२६५. गर्गादेरिति। गोत्रापत्येऽर्थे गर्गादेरुत्तरे माधव यः, स्यात्। गर्गस्य गोत्रापत्यं पुमानित्यर्थे गर्ग शब्दात् माधवयः, अइ-द्वयस्येत्यरामहरः, पूर्ववद् वृष्णीन्द्रः—गार्ग्य इति। एवमन्ये च बोध्याः। यमदग्नि-पराशर प्रभृतयश्च गर्गादिगणे पठ्यन्ते। तेन च जमदग्ने र्गोत्रापत्यं पुमानित्यर्थे जामदग्न्यः। तथा पराशरस्य गोत्रापत्यं पाराशर्य इति सिध्यति। अथ च केवलापत्येऽपि जमदग्नेः पुत्रो जामदग्न्यः परशुराम

---

स्येत्यादि ब्राह्मणायन इत्यादि। नडादिर्यथा। नड द्वीप ब्राह्मण अश्व अश्मन् शङ्ख विद पुट रोहिण खरूप खर्जुर भडिल भडल भण्डिल भडित प्रहृत वामोद क्षत्र अनुग्रीव काश काण कोशल गोलोक्ष अर्क श्वन बल पद चक्र कुल श्रविष्ठा धारित्रीन् गोमिन् शगम धूम धूम्र वाग्मिन् विश्वानर कटजल खड ग्रीष्म वीक्ष अर्ह विशम्ब विशाल गिरि चपल चुप दासक वंण्य व्याप्य आनडुह्य अर्जुन शूद्रक सुमनस् ओजस् हंस आतप किर शिव खदिर चर मुञ्ज इडिक इतिश उपक नमक सप्तन् वाजव्यतिक प्राण नर सायक दास मित्र पिङ्गल पिञ्जर किङ्कर कातर काखान काश्य काव्य अज अमित्र निगु चित्र कुमार लोह दुर्ग स्तम्भ शिंशपा अग्र तृण शकट शलभ मिमत ऋच् जन इन्ध जलन्धर युगन्धर हसक दण्डिन् हस्तिन् पञ्चन् चमस सुहृत् स्थिरक चरक बदर अश्वल खरप कामुक ब्रह्मदत्त उडुम्बर शोण अलोह मण्डप इति सप्तदशाधिकशतसंख्यकः॥ २६३॥

**बाल०**—अमु। गोत्रापत्ये वाच्येऽदसोऽमुष्येत्यस्य सम्बन्धे माधवफो भवति, तादृशि फे षष्ठ्या अलुक्च भवति। अमुष्य गोत्रापत्यं पुमान् आमुष्यायण इति संज्ञां विनापि सहसा प्रतीतेः प्रशस्तेत्युक्तं॥ २६४॥

**बाल०**—कुञ्जा। पौत्रप्रभृत्यपत्ये वाच्ये कुञ्जादेरुत्तरो माधवायन्यो भवति। बहुत्वे विषयेतु माधवायनः। बहुत्व इति पश्चान्निर्देशात् पूर्वत्रैकत्वद्वित्वयोरिति लभ्यते। कुञ्जस्य गोत्रापत्यं पुमान् पुमांसौ पुमांस इति क्रमेण कौञ्जायन्ये इत्यादित्रयं। माधवायन्यायनौ क्वचित् पुस्तके मूर्द्धन्यौ क्वचित्त दन्त्याविति न निश्चिन्मः। लक्ष्म्यां कौञ्जायनीतीप्

दिभ्यः। कथं रामो जामदग्न्यः, व्यासः पाराशर्यः? गोत्ररक्षकत्वे-नोपचारात्। अन्यथा जामदग्नः पाराशर इत्येव।

## २६६. नडादे र्माधव-फः।

नाडायनः द्वैपायनः ब्राह्मणायनः।

## २६७. अमुष्ये त्यस्य षष्ठ्यलुक् च।

आमुष्यायणः प्रशस्तकुलजन्मा।

---

इत्थं च प्रयोगा बहुत्र लभ्यन्ते, तत्तु कथमुपपद्यत इति शङ्कायां सिद्धान्तमाह—गोत्र-रक्षकत्वेनोपचारादिति : तत्र तत्र गोत्रत्वमारोप्यत इत्यर्थः। अन्यथा केवलापत्ये विवक्षिते तु केशव णान्तेन जामदग्न्य इत्यादिकमेव प्रयुज्यत इति भावः। गणस्तु परिशिष्टे द्रष्टव्यः।

अत्र—"मधु-वभ्रुवो र्ब्राह्मण-कौशिकयो"रिति पाणिनि सूत्रम्। मधो र्गोत्रापत्यं ब्राह्मणश्चेत् तदा भाधव यः—माधव्यः, क्षत्रियश्चेत्तदा केशव णः—माधवः सिद्धः। एवं वभ्रो र्गोत्रापत्यं कौशिक श्चेत् वाभ्रव स्त्वन्यः।

**अमृता०**—२६६. नडादेरिति। गोत्रापत्येऽर्थ नडादे रुत्तरे माधव फः स्यात्। फ आयनः। नडस्य गोत्रापत्यं पुमान् नाडायनः। द्विपस्य गोत्रापत्यं द्वैपायनो व्यासः। गणस्तु परिशिष्टे।

**अमृता०**—२६७. अमुष्येति। गोत्रापत्ये वाच्ये अदस्शब्दस्य अमुष्येति षष्ठ्यन्त पदस्य सम्बन्धे माधवः फः स्यात, तस्मिन् सति षष्ठ्या अलुक् च भवति। अमुष्य गोत्रा-पत्यं पुमान् आमुष्यायणः, उत्तमकुलोत्पन्न इत्यर्थः।

---

माधवत्वेनैव केशवत्वसिद्धेः विष्णुजनात्तद्धितेति यहरः। कुञ्जादयश्चतुर्दश यथा। कुञ्ज व्रध्न शङ्ख भस्मन् रोमन् गण शठ शोक शुण्डा शुभ्र विपाश स्कन्द हनुस्तम्भ स्कम्भेति॥ १९५॥

**बाल०**—शार। गोत्रापत्यर्थे विषये माधव-फेन सार्द्धं शरद्वतादीनां शारद्वता-यनादयः साधवो भवन्ति भार्गवादिषु वाच्येषु। शरद्वतो गोत्रापत्यं पुमान् शारद्वतायनः भार्गवः। एवं शौनकायन. वात्स्यः। दाभ्र यणः आग्रायण इति। अत्र कौष्टायनः शालङ्का-यनश्चेति जुमरः॥ २६६॥

**बाल०**—द्रोण। गोत्रापत्ये वाच्ये द्रोणादेः परो माधवफो वा भवति। वाशब्दो-पादानात् पक्षेऽरामवाह्वादिभ्यामित्यनेन नृसिंह इः। द्रोणस्य गोत्रापत्यं पुमान् द्रौणायनः द्रौणिः। आदिपदात् पार्वतायनः पार्वतिः जैवन्तायन जैवन्तिरिति। पौत्रापचारात् द्रौणायनोऽश्वत्थामेत्यपि॥ २६७॥

**२९८. कुञ्जादे र्माधवायन्यो, बहुत्वे तु माधवायनः ।**

कौञ्जायन्यः कौञ्जायन्यौ कौञ्जायनाः । लक्ष्म्यां कौञ्जायनी ।

**२९९. शारद्वतायनादयो भार्गवादिषु ।**

साधवः ।

**३००. द्रोणादे र्माधव-फो वा ।**

द्रौणायणः द्रौणिः ।

---

**अमृता०**—२९८. कुञ्जादेरिति । गोत्रापत्ये वाच्ये कुञ्जादेरुत्तरे माधव आयन्यः प्रत्ययः स्यात्, बहुत्वे विषये तु माधव आयनो भवति । कुञ्जस्य गोत्रापत्यं पुमान् कौञ्जायन्यः । बहुत्वे तु कौञ्जायना इति । माधवत्वादीप् ।

**अमृता०**—२९९. शरद्वतेति । गोत्रापत्ये भार्गवादिषु वाच्येषु शरद्वतादीनां माधव फेन साकं शारद्वतायनादयो निपात्यन्ते । शरद्वतो गोत्रापत्यं पुमान् शारद्वतायनो भार्गवः । शारद्वतोऽपरः । आदिपदेन शौनकायनो वात्स्यः, दार्भायणः अग्रायण इति ।

**अमृता०**—३००. द्रोणादेरिति । गोत्रापत्ये द्रोणादेरुत्तरे माधव फो वा भवति । पक्षे अराम बाह्वादिभ्यामिति नृसिंह इः । आदि पदेन पार्वतायनः जैवन्तायन इति । पक्षे पार्वतिरित्यादि च ।

---

**बाल०**—मूल । मूलप्रकृतेरुत्तर एव गोत्रप्रत्ययो भवति गोत्रापत्येवाच्ये । अनियमे नियमकारित्वादियं परिभाषा । विशेषसामान्याभ्यां विधिवाक्यमवतारयति यत्रेति । तत उक्ताद्धेतोर्मधुशब्दादेव प्रत्ययात् रूपं दर्श्यत इति शेषः । मधोरित्यादिवाक्ये सर्व एव माधव इति । एवं दक्षस्येत्यत्रच दाक्षिरिति अरामबाह्वादीत्यनेन नृसिंहेरामान्तं । विशेषेत्विति विशेषविधानप्राप्तेतु विशेषप्रत्यय एव स्यात् । विदस्येत्यादिवाक्ये विदादेः केशवणः वैद इति । एवं गार्ग्य इति गर्गादेर्माधव-यरामः । तथा स्त्रैणः पौंस्न इत्यादि । गोत्राधिकारं समापयति गोत्रमिति ।। २९८ ।।

**बाल०**—पित्रा । पित्रादौ जीवति सति पौत्रादेरपत्यं यत्तद्युवसंज्ञं स्यात् । पित्रादावित्यादिपदेन पितामहादेर्ग्रहणं सूचितं । ज्येष्ठ । ज्येष्ठे भ्रातरि जीवति सति कनिष्ठश्च युवसंज्ञो भवति । अन्य । समानं पिण्डं यस्य स सपिण्डः स चासौ ज्येष्ठश्चेति सपिण्डज्येष्ठस्तस्मिन् । सप्तपुरुषावधिः सपिण्ड इत्यन्ये । पित्रादौ मृतेऽपि भ्रातुरन्यस्मिन् सपिण्डज्येष्ठेतु जीवति सति यदि पौत्रादिर्जीवन् स्यात्तदा स युवसञ्ज्ञो वा स्यात् । अनेन पितृव्ये पितामहभ्रातरि वा प्रपितामहभ्रातरि वा अत्यन्तवृद्धे जीवति सति प्रपौत्रादिर्जीवन् सन् युवसञ्ज्ञो वेति सूचितं । सूत्रेणैवार्थसिद्धिस्तु यथा स्यात् क्रियते तथा । इत्यनेन भङ्ग्या यत्र सूत्रेणार्थसिद्धिर्न स्यात्तत्र वृत्तिरपि क्रियत इत्युक्तत्वादन्तिमसूत्रस्य काठिन्ये वृत्तिमाह यदीति ।। २९९ ।।

## ३०१. मूलप्रकृतेरेव गोत्रप्रत्ययः।

परिभाषेयम्। यत्र तु विशेषविधानं नास्ति तत्र सामान्यमेव। ततो मधुशब्दादेव प्रत्ययात्, मधो र्माधवस्य वा पौत्रादिः सर्व एव माधवः। दक्षस्य दाक्षे र्वा दाक्षिः। विशेषे तु विशेष एव, बैदः गार्ग्यः। उक्तं गोत्रम्।

## ३०२. पित्रादौ जीवति पौत्रादे रपत्यं युवसंज्ञम्, ज्येष्ठभ्रातरि

---

**अमृता०**—३०१. मूलेति। मूलप्रकृते रुत्तरे हि गोत्रप्रत्ययो भवतीति साधारण नियमः, न किन्तु अपत्यार्थनिष्पन्नादित्यर्थः। सामान्यमेवेति यथा प्राप्तमित्यर्थः। यथा मधोः पौत्रादि गोत्रं माधवः, तथा हि माधवस्य पौत्रादि र्माधव एव। एवं दक्षशब्दा नृसिंह इरेव। यत्र तु विशेषविधि रुक्तः, तत्र सएव स्यात्, यथा बिदादेः केशव णो बैदः, गर्गादे र्माधव यः गार्ग्य इत्यादि। गोत्राधिकारः समाप्तः।

**अमृता०**—३०२. पित्रादाविति। पित्रादौ जीवति सति पौत्रादे र्यदपत्यं चतुर्थादि तद् युवसंज्ञं स्यात्। पित्रादौ मृते तु ज्येष्ठे भ्रातरि जीवति सति कनिष्ठो भ्राता पौत्रादे

---

**बाल०**—गोत्रं। प्रशंसायां गम्यमानायां गोत्रं युवसज्ञं वा स्यात्। निन्दायामपीति कश्चित्। युवा। कुत्सायां गम्यमानायां युवाच गोत्रसज्ञो वा स्यात्। प्रथमतो गोत्रमिति-द्वयस्योदाहरणानि दर्शयति स इति। स गर्गस्य पौत्रो भगवानिति प्रशंसात्वे। गार्ग्यशब्दात् इयाभ्यां नृसिंहेत्यनेन फरामः गार्ग्यायण इति पक्षे गोत्रस्यैव स्थितत्वाद्गार्ग्य इतिच। एवमिति एवम्प्रकारेण। स प्रपौत्रः। जाल्म इति कुत्सात्वे। यो गार्ग्यायणः स एव पक्षे गार्ग्यो वेति ॥ ३०० ॥

**बाल०**—यः। पितरि जीवति यः स्वतन्त्रः सोऽपि युवसज्ञो भवति। लक्ष्म्या। लक्ष्म्यां वाच्यायान्तु प्राप्ता युवसज्ञा न स्यात्। सर्वत्रैव प्रतिषेधोऽयं। पारिभाषिक-विधिवाक्यमाह यून्यपत्य इति। पित्रादावित्यनेन विहितयुवापत्यस्य वाक्योदाहरणे वक्ति मधोरिति। युवापत्यमित्यस्मात् पुमानिति पूरणीयं। मधौ माधवे वा जीवति माधव-शब्दात् अरामवाह्वादिभ्यामितीनृसिंहः माधविरिति। गार्ग्यायणप्रभृतिः। यद्यपि ज्येष्ठेत्यादिकानामुदाहरणानि ग्रन्थकृता न दत्तानि तथापि व्यक्तार्थं मयोदाह्रियन्ते। माधवस्य द्वौ पुत्रौ तयोर्ज्येष्ठे भ्रातरि जीवति पित्रादौ मृतेऽपि कनीयान् युवत्वात् माधविः। अन्यस्मिन् सपिण्डज्येष्ठे पितृव्ये पितामहभ्रातरि प्रपितामहभ्रातरि वातिशय-वृद्धे जीवति माधविः पूर्ववत्। पितरि जीवति पितामहादौ मृतेऽपि स्वतन्त्रः पुत्रो माधविः। एवमपि गार्ग्यायणादयः स्मर्त्तव्याः। लक्ष्म्यामित्यस्य वाक्योदाहरणे दर्शयति मधोरिति। युवापत्यं समापयति उक्तमिति। युवापत्यं समाप्यापि अन्यत्र सुबोधाय विधिवाक्यमाह यश्चेति। इदानीं युवापत्यविषये सर्वेषामुपलक्षणं विधिसूत्रमेकमवतारयति यथेति ॥ ३०१ ॥

**जीवति कनिष्ठश्च, अन्यस्मिन् सपिण्डज्येष्ठे तु वा ।**

यदि जीवन् स्यात् ।

**३०३. गोत्रं प्रशंसायां युवा वा, युवा च कुत्सायां गोत्रं वा ।**

स भगवान् गार्ग्यायणो गार्ग्यो वा । एवं गार्ग्यायणो जाल्मः गार्ग्यो वा ।

**३०४. यः पितरि जीवति स्वतन्त्रः, लक्ष्म्यान्तु न युवसंज्ञा ।**

---

रपत्यं चतुर्थादि युवसंज्ञं भवति । तथा समानं पिण्डं यस्य स सपिण्डः, सचासौ ज्येष्ठश्चेति सपिण्डज्येष्ठः, सप्तमपुरुषावधिः सपिण्डः स्मर्यते । पित्रादौ मृतेऽपि भ्रातृभिन्ने सपिण्ड ज्येष्ठे तु जीवति सति पौत्रादेः पुत्रे । यदि जीवन् स्यात्, तदा सोऽपि युवसञ्ज्ञो वा भवति । एतेन पितृव्ये, पितामह भ्रातरि, प्रपितामह-भ्रातरि वातिवृद्धे जीवति प्रपौत्रादि जीवन् सन् युवसञ्ज्ञो वा भवतीति निष्कर्षः । यदि जीवन् सन्निति तु—अन्तिमलक्षणे योजनीयम् ।

**अमृता०**—३०३. गोत्रमिति । प्रशंसायां गम्यमानायां गोत्रं युवसंज्ञं वा स्यात् । तथा कुत्सायां गम्यमानायां युवा च गोत्रसंज्ञो वा भवति । प्रथमस्योदाहरणं दर्शयति—स इति । तत्र भगवानिति शब्दः प्रशंसा ख्यापकः । गार्ग्यायण इति—गोत्रप्रत्ययान्तात् गार्ग्य शब्दात्—इयाभ्या नृसिंहाभ्यामित्यादि वक्ष्यमाणेन फरामः । पक्षे गोत्रस्यैवस्थितिः —गार्ग्य इति । परत्रोदाहरणे जाल्म शब्दः कुत्साबोधकः । यो गर्गस्य प्रपौत्रो गार्ग्यायणः, स एव पक्षे गार्ग्य इति भावः ।

**अमृता०**—३०४. य इति । पितरि जीवति यः स्वतन्त्रः स्वाधीनः सोऽपि युवसंज्ञो भवति । लक्ष्म्यां वाच्यायां प्राप्तापि युवसंज्ञा न भवति । तत्रपरिभाषामाह—यून्यपत्य

---

**बाल०**—इया । युन्यपत्ये विवक्षिते गोत्रप्रत्ययाभ्यां नृसिहाभ्यामियाभ्यामुत्तरः फरामो भवति । प्रसङ्गादन्यदप्याह हरीति । तादृशान्नृसिंहगोत्रप्रत्ययान्ताद्धरितादेश्च फरामः स्यात् । वाक्योदाहरणे स्पष्टे । हरितादिरयमित्यनेन विदाद्यन्तर्गणप्रतिपादनात् विदादेः केशवणान्तत्वात् फराम इति सूचितं । अत्रापि वाक्यप्रयोगौ स्पष्टाविति ॥ ३०२ ॥

**बाल०**—मिम । सौवीररूपे गोत्रापत्ये विहितप्रत्ययान्ताभ्यां मिमत फण्टाकृतिभ्यामुत्तरो णरामो भवति, चशब्दात् पूर्वोक्तः फरामोऽपि युन्यपत्ये विवक्षिते । गोत्र-प्रत्ययान्ताद्युवप्रत्यय इत्युक्तमत एवात्रापि मिमतकाण्टाकृतिभ्यां हरिताद्यान्त गणत्वात् केशवणस्ततः परं मैमतात् गोत्रप्रत्ययान्तात् फाण्टाकृताच्च तादृशादुत्तरो युवप्रत्य इति बोद्धव्यं । तेन मिमतस्य युवापत्यं पुमानिति मैमतः मैमतायन इति । तथा फाण्टाकृतस्य युवापत्यं पुमानिति फाण्टाकृतः फाण्टाकृतायन इति । पुनरपि सूत्रस्थ-चशब्दस्य फलान्तर-माह एवमिति । विधय इति प्रत्ययाः । अतएव चन्द्रजयादित्यादयोऽपि मैमतायनिः फाण्टाकृतायनिरित्युदाहरन्ति । असौविर-गोत्रात् युवापत्येतु नडादिपठनीयत्वात् केवलं मैमतायनः फाण्टाकृतायन इति ॥ ३०३ ॥

युन्यपत्ये विबक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः। मधो र्माधवस्य वा युवापत्यं माधविः। नेह—मधो र्माधवस्य वा स्त्र्यपत्यं माधवी। उक्तं युवापत्यम्।

यश्च गोत्रादेव विधीयते स यूनि बोद्धव्यः। यथा,—

## ३०५. इयाभ्यां नृसिंहाभ्यां गोत्रप्रत्ययाभ्यां फरामः, हरितादेश्च तादृशात्।

दक्षस्य दाक्षे र्वा युवापत्यं दाक्षायणः गार्ग्यायणः। हरितादि रयं विदाद्यन्तर्गणः। हरितस्य हारितस्य वा हारितायनः।

## ३०६. मिमत-फाण्टाकृतिभ्यां णरामश्च सौवीरे।

---

इति। मधौ माधवे वा जीवति माधव शब्दादेव नृसिंह इ र्न तु मधुशब्दात्। लक्ष्म्यान्तु प्रतिषेधं दर्शयति—मधोरिति। युवापत्यविषये सर्वेषामुपलक्षणमेक मेव विधिसूत्रं प्रपञ्चयति—यथेति।

**अमृता०**—३०५. इयाभ्यामिति। यून्यपत्ये विवक्षिते गोत्रप्रत्ययाभ्यां नृसिंह—इयाभ्यां प्रत्ययाभ्यामुत्तरे फरामः स्यात्, तथा तादृशातनृसिंह गोत्रप्रत्ययान्तात् हरितादेश्चोत्तरे फरामो भवति। दक्षस्य दाक्षे र्वा युवापत्यमित्यर्थे नृसिंहेराम प्रत्ययान्तात् दाक्षि शब्दादेव फरामः, फआयनः दाक्षायण इति। हरितादेस्तु तत्प्रत्ययद्वयान्तविरहात् फरामेऽप्राप्ते पृथग् ग्रहणमिति स्फुटयति—हरितादिरयमित्यादिना। विदाद्यन्तर्भूतत्वादेतेभ्यः केशवणान्तभ्य एव फरामो विधीयत इतिभावः।

**अमृता०**—३०६. मिमतेति। सौवीर रूपगोत्रापत्ये वाच्ये गोत्रप्रत्ययान्ताभ्यां मिमत-फाण्टाकृतिभ्यां णरामश्च स्यात्, चकारात् फरामश्च। गोत्रप्रत्ययान्तादेव युवप्रत्ययविधान नियमात्, एतयोश्च विदाद्यन्तर्गतत्वात् मिमतस्य गोत्रापत्ये केशव णः—मैमतः,

---

**बाल०**—गोत्र। कुत्सायां गम्यमानायां युवापत्ये वाच्ये गोत्रलक्ष्म्याउत्तरस्मिन् ण-माधवठौ भवतः। वाक्योदाहरणे दर्शयति गार्ग्या इति ॥ ३०४ ॥

**बाल०**—आदि। युवापत्ये वाच्ये गोत्रादिवृष्णीन्द्रान्नृसिंह-फिर्वा स्यात्, पक्षे यथासम्भवं प्रत्ययाः स्युः। माथुरस्य युवापत्य पुमान् माथुरायणिरिति। माथुरिरित्यत्रतु अरामवाह्वादिभ्यामिति नृसिंह इः विधानन्तराभावात्। आ ऐ औरामा यस्येत्यनेन तद्यदादीनामादिवृष्णीन्द्रसञ्ज्ञत्वेऽपि सूत्रे गोत्रादित्युक्तेर्हरितादिगणपाठाद् गोत्रप्रत्ययकेशवणः कर्त्तव्यस्ततः परं तादस्य युवापत्यं पुमान् तादायनिः पक्षे तद्धितबाहुल्यान्नृसिंहेरामं बाधित्वा केशवणः ताद इति। एवं यामुन्दायनिरित्यादि यथायथमूह्यं। शुद्धापत्यत्रयं समापयति इतीति ॥ ३०५ ॥

मैमतः मैमतायनः। एवं सौवीरगोत्रादन्येऽपि विधयः सन्ति ।

## ३०७. गोत्रलक्ष्म्या ण-माधव ठौ कुत्सायाम् ।

गार्ग्याः कुत्सितमपत्यं युवा गार्गः गार्गिकः ।

## ३०८. आदि वृष्णीन्द्राद्गौत्रान्नृसिंह फि र्वा ।

---

ततो युवप्रत्ययणरामः—मैमतः। पक्षे गोत्र प्रत्ययान्त मैमत शब्दात् फरामः—मैमतायन इति। एवं फाण्ठाकृतस्य युवापत्यं पुमान्—फाण्टाकृतः फाण्टाकृतायन इति। सूत्रस्थ चकारस्य फलान्तरमप्याह—एवमिति। अन्येऽपि विधय इति—णराम-फरामाभ्यामन्य-प्रत्ययविधानानि च सन्तीत्यर्थः। अतएव जयादित्यादयः—मैमतायनिः फाण्टाकृतायनि रिति चोदाहरन्ति ।

**अमृता०**—३०७. गोत्रेति । कुत्सायायां गम्यमानायां युवापत्ये वाच्ये गोत्र-प्रत्ययान्तलक्ष्मीलिङ्गक शब्दात् ण-माधव ठौ स्याताम्। स्पष्टमुदाहरणम् ।

**अमृता०**—३०८. आदीति । युवापत्ये वाच्ये आदिवृष्णीन्द्रसंज्ञो यो गोत्र प्रत्ययान्तः शब्द स्तस्मात् नृसिंह फि र्वा भवति। पक्षे यथाप्राप्तंप्रत्ययः स्यात्। माथुरस्य युवापत्यं पुमान् माथुरायणिरित्यादयः। आऐ औ रामा यस्यादि सर्वेश्वरा इत्याद्यादि

---

**बाल०**—जन। जनपदवृत्तिशब्दो जनपद उच्यते, क्षत्रियवृत्तिशब्दस्तु क्षत्रिय इति, जनपदस्य समानं नाम येषां क्षत्रीयवृत्तीनां ते जनपदसनामानस्तेभ्यः। तत् क्षत्रियसमानं जनपदनाम येषां जनपदवृत्तीनां तेभ्यः। जनपदसमाननामभ्यः क्षत्रियेभ्यस्तदपत्ये वाच्ये क्षत्रियसमानजनपदनामभ्यस्तु तद्राजनि वाच्ये यथास्वं प्रत्ययाः स्युः। एकाधिकार-व्यापित्वात् प्रभुनामायमधिकारः॥ ३०६ ॥

**बाल०**—कुर्वा। तदपत्ये तद्राजनिच वाच्ये तत्तन्नाम्नः कुर्वादेः परो ण्यरामः स्यात्। नरा। तदपत्ये तद्राजनिच वाच्ये तत्तन्नाम्नो नरामादेश्चोत्तरो ण्यरामः स्यात्। वाक्योदाहरणे दर्शयति कुरोरिति। एवमिति निधस्यापत्यं पुमान् निषधस्य राजाच नैषध्यः। एवं नैकार्यो नैरक्य इत्यादि। यद्येवं कुरोः कौरव्यस्तदा माघादौ कौरवो दृश्यते कथमिति पूर्वपक्षयति । अत्र सिद्धान्तमाह तस्येदमिति । एतदुपजीव्यमाघादिस्थपद्ये एवं सङ्गतिः कार्या। कुकुरश्च कुरश्च तयोरिमा इत्यर्थे केशवणः, गुरुलघ्वादेरित्यनेनोत्तर-पदस्यादिसर्वेश्वरस्य वृष्णीन्द्रस्ततः टित्वाल्लक्ष्म्यामीप् कुकुरकौरव्यः पश्चात् श्यामरामः, कुकुरकौरवस्त्रियः, परिरेभिरे परम्परमालिङ्गितवत्य इत्यर्थः। किम्वात्र ककुरेति सम्बोधनं पदं। तथैव कौरवाः कुरुसम्बन्धिनो जना रक्ष्यन्तामिति पुंलिङ्गसूचनं। अयं कूर्वादिः पूर्वोक्तकुर्वादिरन्य इति प्रतिपादयति इरामेति। इरामान्ताः कुरुकोशलौ आदिवृष्णीन्द्राश्च कुर्वादयो भवन्ति । कुरुकोशलावित्यत्र अजादं जुमरः पठतीति ज्ञेयं॥ ३०७ ॥

माथुरायणिः, माथुरिः। तादायनिः तादः। इति केवलापत्यानि।

**३०९. जनपदसनामभ्यः क्षत्रियेभ्योऽपत्ये तज्जनपदनामभ्यस्तु राजनि।**

प्रभुरयम्।

**३१०. कुर्वादे र्ण्यरामः, नरामादेश्च।**

कुरोरपत्यं कौरव्यः, कुरुदेशस्य राजा च। एवं नैषध्यः। कथं माघे (१३।१६) परिरेभिरे कुकुर—कौरवस्त्रियः? तथा संरक्षन्तां कौरवा

---

वृष्णीन्द्रसंज्ञायां तद्‌यदादेरपि ग्रहणात् सूत्रे गोत्रादित्युक्तितो हरितादिपाठेन गोत्रप्रत्ययः केशवणः प्रथमं कर्त्तव्यः, ततश्च फिरामः। शुद्धापत्यत्रयं समापितम्।

**अमृता०**—३०९. जनेति। अधिकारसूत्रमेतत्। जनपदा देशाः, तैः सह समानानि नामानि येषां तादृशेभ्यः क्षत्रियेभ्य उत्तरे अपत्येऽर्थे प्रत्यया भवन्ति तथा तादृश जनपद नामभ्यस्तु राजनि वाच्ये प्रत्यया भवन्तीति समं प्रत्यययुग्माधिकारः।

**अमृता०**—३१०. कुर्वादेरिति। तदपत्ये तद्‌राजनि च वाच्ये कुरुप्रभृतिभ्य स्तथा नरामादिभ्यश्च शब्देभ्य उत्तरे ण्यरामः स्यात्। कुरु नाम देशः, तद्देशीय क्षत्रियश्च कुरुनामास्ति, अतः कुरुनाम्नः क्षत्रियस्यापत्यमिति ण्यः—कौरव्यः, तथा कुरुदेशस्य राजा कौरव्यइति। नरामादि शब्दादुदाहरति—नैषध्य इति। निषधस्यापत्यं पुमान् निषध देशस्य राजा चेत्यर्थः। एवं निपथात् नैपथ्यः। तत्रशङ्कामुत्थाप्य समादधाति—तस्येद-मिति। कुकुरः कुरुश्च देश विशेषः, तयो रिमाः केशवणः, स्त्रीत्राच्यत्वाल्लक्ष्म्यामीप्, बहुत्वे कुकुर कौरव्यः, पश्चात् श्यामरामः—कुकुरकौरवस्त्रिय इति। एवं कौरवा इत्यत्र कुरुसम्बन्धीया जना इत्यर्थः। अयं कुर्वादिस्तु—ऋष्यन्धक वृष्णि कुरुभ्यश्चेत्यत्र निर्दिष्ट कुर्वादिरन्य इति ज्ञापयति—इरामान्तेत्यादिभिः। तत्र इरामान्तात्—अवन्तेरपत्यादि—

---

**बाल०**—पाण्डोः। तदपत्ये तद्राजनिच वाच्ये तत्तन्नाम्नः पाण्डोर्नृसिंहयरामो भवति। पाण्डोरपत्यं पुमान् राजाच पाण्ड्य इति जनपदपाण्डोश्चेत्यनेनात्र उरामहरः। अस्मादन्यपाण्डोस्त्वपत्ये तेन दीव्यतीत्यतः प्रागर्थे इत्यनेन केशवण इत्याह भारतेति। एवं ब्राह्मणपाण्डोरपि पुत्रः पाण्डव इति॥ ३०८॥

**बाल०**—पञ्चा। तदपत्ये तद्राजनि वाच्ये तत्तन्नामपञ्चालादेः केशवणो भवति। पञ्चाल इत्यस्य वाक्यं प्रकारान्तरेणाह पुत्र इति। पञ्चालादिगणं निर्दिशति पञ्चालेति। पञ्चालादिशूरमसान्तो नवसङ्ख्यको द्विसर्वेश्वरश्च पञ्चालादिः स्यात्। शूरमसेत्यत्रादि-पदाद्यथासम्भवमन्येऽप्यत्रोह्याः। आदिवृष्णीन्द्रत्वेन कुर्वादेर्ण्यरामे प्राप्ते तद्बाधनार्थं शाल्वेय-गान्धार्योरत्र ग्रहणं॥ ३०९॥

इति ? तस्येदमिति विवक्षायाम्। इरामान्त-कुरु-कौशलादिवृष्णीन्द्राः कुर्वादयः।

**३११. पाण्डो र्नृसिंहयः।**

पाण्ड्यः। भारतपाण्डुस्तु न जनपदसनामा, तस्यापत्यन्तु पाण्डवः।

**३१२. पञ्चालादेः केशवणः।**

पाञ्चालः पुत्रो राजा च। पञ्चाल-इक्ष्वाकु-विदेह-शूरसेन-शाल्वेय-गान्धारि-कलिङ्ग-मगध-शूरमसादि-द्विसर्वेश्वरश्च पञ्चालादिः।

**३१३. युगन्धरादे र्नृसिंह-इः।**

---

आवन्त्यः, कुन्तेः कौन्त्यः। लक्ष्म्यान्तु महाहरो वक्ष्यते। कोशलस्य कौशल्यः। आदि-वृष्णीन्द्राः—आम्बष्ठस्य आम्बष्ठ्य, सौवीरस्य सौवीर्य इत्यादि।

**अमृता०**—३११. पाण्डौरिति। तदपत्ये तद्राजनि च वाच्ये पाण्डु शब्दात् नृसिंह यरामो भवति। अस्य तु कुर्वादि गणान्तर्भावविरहात् पृथक् विधानम्। ण्यराम एव। नृसिंह यरामः, बुद्धि वैचित्र्यर्थमित्थं निर्देशः। पाण्डोरपत्यं पुमान् पाण्डु देशस्य राजा च पाण्ड्यः। भारतपाण्डुरिति कुरुवंशीय इत्यर्थः। तस्मात्तु वृष्णिकुरुभ्य इत्यनेन केवला-पत्यार्थे हि पाण्डव इति भवति नतु तद्राजार्थे, तत्र हेतुः—नासौ जनपद सनामेति।

**अमृता०**—३१२. पञ्चालेति। पदपत्ये तद्राजनि च वाच्ये पञ्चालादे रुत्तरे केशव णः स्यात्। पञ्चालस्यापत्यं राजा च पाञ्चालः। पञ्चालादे र्गणं निर्दिशति—पञ्चालेत्या-दिना द्विसर्वेश्वरइत्यन्तेन। तत्र द्विसर्वेश्वर इत्यनेन—अङ्ग वङ्ग मद्रादे र्ग्रहणम्।

**अमृता०**—३१३. युगेति। तदपत्ये तद्राजनि च वाच्ये युगन्धरादे र्न्नृसिंह इरामः

---

**बाल०**—यूग। तदपत्यराज्ञोर्वाच्ययोस्तत्तन्नामयुगन्धरादेर्नृसिंह इर्भवति। यौगन्ध-रिरित्यत्रापि पूर्ववद्वाक्यं पुत्रो राजा चेत्युक्तं। युगेति। युगन्धरउडुम्बरप्रत्यग्रथादिरयं युगन्धरादिः स्यात्। प्रत्यग्रथादिग्रहणात् तिल खल मद्रकार भूलिङ्ग शरदण्ड कालकूट अश्वकेतिच ज्ञेयं॥ ३१०॥

**बाल०**—महा। तत्तद्राजापत्ययोर्वाच्ययोस्तत्तन्नामजनपदक्षत्रियेभ्यो यथायोग्यं प्रत्ययानां महाहरः स्यात्। अयमपि प्रभुनामाधिकारः॥ ३११॥

**बाल०**—कम्बो। तद्राजापत्ययोर्वाच्ययोस्तत्तन्नामकम्बोजादेरुत्तरस्मिन् शूरमसा-दित्वेन पञ्चालादेः प्राप्तेकेशवणस्य महाहरो भवति। कम्बोज इत्यादि स्पष्टं। त्रयमेव कम्बोजादीत्यादिना गृहीतमित्याह चोल इति॥ ३१२॥

**बाल०**—बहु। लक्ष्मीं विना बहुषु तद्राजापत्येषु वाच्येषु तत्तन्नामजनपदक्षत्रियेभ्यो विहितप्रत्ययस्य महाहरः स्यात्। कुरोः राजानोऽपत्यानि पुमांसश्चेति कुर्वादेर्ण्यरामस्य

यौगन्धरिः पुत्रो राजा च। युगन्धर उडुम्बर प्रत्यग्रथादिरयम्।

**३१४. महाहरः।**

प्रभुरयम्।

**३१५. कम्बोजादेराजापत्ययोः।**

कम्बोजः पुत्रो राजा च। चोलः शकः केरलः।

**३१६. बहुषु लक्ष्मींविना।**

---

स्यात्। एवं औडुम्बरिः प्रात्यग्रथिः। आदिशब्देन—कालकूट अम अश्यक तिल यव भूलिंग शर दण्डाः ग्राह्याः।

**अमृता०**—३१४. महेति। तदपत्ये तद्राजनि च वाच्ये यथायोग्यं विहित प्रत्ययानां महाहरः स्यादित्यधिकारः।

**अमृता०**—३१५. कम्बोजेति। तदपत्ये तद्राजनि च वाच्ये कम्बोजादेरुत्तरस्य केशवणस्य महाहरः स्यात्। पञ्चालादौ शूरमसादीत्यादिपदेन कम्बोजादिः पठ्यते, तेन प्राप्तकेशवणस्यात्र महाहरो विधीयते। कम्बोजादि श्चत्वार एवेति दर्शितं मूले।

**अमृता०**—३१६. बहुष्विति। तद्राजापत्ययोरर्थयो र्बहुषु वाच्येषु तज्जनपदक्षत्रियं नामभ्यो विहित प्रत्ययस्य महाहरो भवति लक्ष्मी विषयं विना। कुरव इति–कुरोरपत्यानि

---

महाहरस्ततो जस् कुरव इति। एवं पञ्चालाश्च। किन्त्वत्र पञ्चालादेः केशवणस्य महाहरः। यद्यपि बहुष्विति सामान्येनोक्तं तथाप्यस्य स्वार्थविषय इति स्वाभिप्रेतमाह स्वार्थे इति। स्वार्थे एव बहुत्वमित्यते नास्वार्थ इत्यर्थस्तेन, नेह, प्रियः कौरव्यो येषां ते प्रियकौरव्याः। बहुत्वमत्रान्यपदार्थस्य न कौरव्यस्येति। लक्ष्म्यान्त्विति रूपं दर्श्यते इति शेषः। पाञ्चाल्य इति पञ्चालस्यापत्यानि स्त्रियः राज्ञ्यो वा इत्यर्थः॥ ३१३॥

**बाल०**—अव। लक्ष्म्यां विषये तदपत्ये तद्राजनिच वाच्ये तत्तन्नायावन्तिकुन्ति-कुरुशूरसेनादेरुत्तरस्य विहितप्रत्ययस्य महाहरो भवति। तत्रावन्त्यादित्रिभ्यः। कुर्वादेर्ण्यस्य शूरसेनादेस्तु पञ्चालादेः केशवणस्य महाहरः। अवन्तेरपत्यं स्त्री राज्ञी वा अवन्तीति इरामादक्त्यर्थादित्यनेनात्र ईप्। एवं कुन्तीति। कुरूरित्यत्रतु अयरामोद्धवादुरामान्नृजाता-वित्यनेन ऊङ्। शूरसेनीत्यत्र चाणकेशवगौरादिभ्य इत्यनेन ईप्। शूरसेनादेरादिगृहीतस्योदाहरणं मद्रीति। एवमन्यानि तूह्यानि॥ ३१४॥

**बाल०**—केक। तदपत्ये तद्राजनिच वाच्ये लक्ष्म्यां विषये तत्तन्नामकेकयात् शूरमसादित्वेन पञ्चालादेः केशवणस्य महाहरो वा स्यात् केकयस्यापत्यं स्त्री राज्ञी वेति कैकेयीति द्वयं तत्तद्राजापत्ये समापयति उक्त इति। स्वमतमुक्त्वा शिष्यहितार्थं प्राचीनानां सङ्केतमाह अत्रेति। पाणिनीयानां मतेऽत्र तद्राजापत्ययोस्तद्राजसंज्ञा स्यादित्यर्थः। महाहरनिवृत्तिशङ्कां निराकरोति महाहरेति॥ ३१५॥

कुरवः पञ्चालाः। स्वार्थे बहुत्वमेवेष्यते। नेह—पिय कौरव्याः। लक्ष्म्यान्तु पाञ्चाल्यः।

**३१७. अवन्ति-कुन्ति-कुरु-शूरसेनादे र्लक्ष्म्याम्।**

अवन्ती कुन्ती कुरूः शूरसेनी मद्री।

**३१८. केकयाद्वा।**

कैकेयी केकयी। उक्ते राजापत्ये। अत्र तद्राज संज्ञा पाणिनीयानाम्। महाहरस्त्वनुवर्त्तते।

---

राजानश्चेत्यर्थे प्राप्तस्य कुर्वादेर्ण्यरामस्य महाहरः। पञ्चाला इत्यत्र 'पञ्चालादेः केशवणः' इति विहित केशवणस्य महाहरः। बहुत्वे तद्विधानस्याभिप्राय माह—स्वार्थ इति। प्रियः कौरव्यो येषां ते प्रियकौरव्याः। अत्र यद् बहुत्वं तत्तु अन्यपदार्थस्यैव, नतु कौरव्यस्येति महाहरबाधः। लक्ष्म्यां विषयेऽपि न महाहर इतिदर्शयन् प्रत्युदाहरति—पाञ्चाल्य इति। पञ्चालस्यापत्यानि स्त्रियो राज्ञ्यो वेत्यर्थः।

**अमृता०**—३१७. अवन्तीति। लक्ष्म्यां विषये तद्राजापत्ययो र्वाच्ययो रवन्ति प्रभृतेरुत्तरस्य विहित प्रत्ययस्य महाहरो भवति। तत्रावन्त्यादि त्रिभ्यः कुर्वादे रिति ण्य-रामस्य, शूरसेनादेस्तु पञ्चालादेरिति केशवणस्य महाहरो ज्ञेयः। अवन्तेरपत्यं स्त्री, अवन्ते राज्ञी वेत्यर्थे अवन्ती। इरामादक्तचर्थादित्यनेन ईप्। एवं कुन्ती। कुरूरित्यत्र तु—अयरामोद्धवादिना ऊङ्। शूरसेनीत्यादौ—अण्केशवगौरादिभ्य इतीप्।

**अमृता०**—३१८. केकयादिति। लक्ष्म्यां विषये प्रागुक्तार्थयोः केकयशब्दात् शूर-मसादित्वेन पञ्चालादेः केशवणस्य महाहरो वा भवति। केकयस्यापत्यं स्त्री, तद्देशस्य राज्ञी वेति केकयी, पक्षे केशवणः कैकेयी। अत्र प्रलयादीनां यादेरीयश्चेति ईयादेशः। राजापत्यरूपमधिकार युगलमिह समापितम्।

---

**बाल०**—यस्का। स्वार्थबहुत्वे विषयेऽपत्ये वाच्ये यस्कादिभ्य उत्तरे बहुलं यथा स्यात्तथा शिवादेः केशवणस्य महाहरो भवति। लक्ष्म्यां विषयेतु महाहरो न भवति। बहुत्व इति प्रभुनामाधिकारः चशब्दाद् विधिश्च। महाहरेऽत्रापत्यमात्रं गृह्यते न विशेष इति यथासम्भवमपत्ये गोत्रे चास्य प्रवृत्तिः। यस्का इति यस्कस्यापत्यानि पुमांस इति वाक्ये। एवमयस्थूलाः इत्यादि। लक्ष्म्यान्तु यास्क्य इत्यादि॥ ३१६॥

**बाल०**—गर्गा। गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषये गर्गादेर्माधवस्य महाहरो भवति। गर्गस्य गोत्रापत्यानि पुमांस इत्यर्थे गर्गा इति। एवं वत्सा इत्यादि। लक्ष्म्यान्तु गार्ग्य इत्यादि॥ ३१७॥

**बाल०**—आग। गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषये आगस्त्यस्य सम्बन्धिनो माधव यरामस्य महाहरः स्यात् तस्मिन् सति तस्यागस्तिश्च स्यात्। अगस्त्यस्य गोत्रापत्यानि पुमांसः अगस्तय इति। लक्ष्म्यान्तु आगस्त्य इति॥ ३१८॥

## ३१९. यस्कादिभ्यः स्वार्थबहुत्वे बहुलं, लक्ष्म्यान्तु न ।

बहुत्वइति प्रभुश्च । यस्काः अयःस्थूलाः ।

## ३२०. गर्गादेः ।

गर्गाः वत्साः ।

## ३२१. आगस्त्यस्यागस्तिश्च ।

अगस्तयः ।

---

**अमृता०**—३१९. यस्केति । स्वार्थ बहुत्वे विषये अपत्ये वाच्ये यस्कादिभ्य उत्तरे विहितप्रत्ययस्य महाहरः स्यात् । यस्कादिषु केचित् शिवादौ पठ्यन्ते, यथा यस्क लभ्य द्रुह्य इत्यादि । एभ्यः केशव णस्य, सदामत्त-कम्बलभार-अहिभोग प्रभृते र्बाह्वादिषु पाठात् नृसिंहे रामस्य तथा गृष्टि प्रभृतेः ढरामस्य महाहरो बोध्यः । एषु यथासम्भवं केवलापत्ये गोत्रापत्ये च प्रत्यया व्यवस्थापनीयाः । यस्कस्यापत्यानि पुमांसो यस्का इत्यादि योज्यम् ।

**अमृता०**—३२०. गर्गादे रिति । गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषये विहित माधव यस्य महाहरः स्यात् । गर्गस्य गोत्रापत्यानि पुमांसो गर्गाः । एवं वत्सा इत्यादि । लक्ष्म्यान्तु गार्ग्याः ।

**अमृता०**—३२१. आगस्त्यस्येति । गोत्रापत्ये वाच्ये बहुत्वे विषये लक्ष्मीं विना आगस्त्यस्य माधव यरामस्य महाहरः स्यात्, तस्मिन् सति तस्य आगस्ति इत्येवमादेशश्च भवति । अगस्त्यस्य गोत्रापत्यानि पुमांसः अगस्तय इति ।

---

**बाल०**—कौण्डि । गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषये कौण्डिन्यस्य सम्बन्धिनो माधव-यरामस्य महाहरः स्यात्, तस्मिन् सति तस्य कुण्डिनश्च भवति । कुण्डिन्याः गोत्रापत्यानि पुमांसः कुण्डिना इति, लक्ष्म्यान्तु कौण्डिन्य इति । अत्रादेशो तवर्णान्तहरिवेणुरूपमादेशादन्यत्रतु हरिमित्रे न रूपमिति ज्ञेयं । किञ्च, अगस्त्यस्य कुण्डिन्या इति चाकृत्वा यत् आगस्त्यस्य कौण्डिन्यस्येतिच कृतं तदेतज्ज्ञापकं तस्मात् महाहरविषये एवागस्त्यस्यागस्तिरित्यादेशः कौण्डिस्य कुण्डिन इत्यादेशश्च स्यात् । एतेनैतद्द्वयं गर्गादेरन्तर्गण इत्यपि सूचितं । किञ्च, सूत्रद्वयमेतत् गर्गादेरित्यस्मात् सकाशाद्विशेषग्राहकमन्यथा गर्गादेरित्यनेन माधव-यरामे हरे मति अगस्त्याः कुण्डिना इति इनिष्टरूपं स्यात् ॥ ३१९ ॥

**बाल०**—विदा । गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषयेऽगोपवनादेरन्यस्मात् विदादेरुत्तरस्मिन् विहितकेशवणस्य महाहरो भवति । विदस्य गोत्रापत्यानि पुमांसः विदा इति । एवं उर्वा इत्यादि । लक्ष्म्यान्तु वैद्य इत्यादि । विदादेरन्तर्गणत्वाद्गोपवनादेर्महाहर-प्राप्ते वर्जनादिह न भवतीत्याह नेहेति, गौपवना इति । वाक्यमत्र पूर्ववत् । एवं शैग्रवाः दन्दवा इत्यादि ॥ ३२० ॥

## ३२२. कौण्डिन्यस्य कुण्डिनश्च ।

कुण्डिनाः ।

## ३२३. विदादेरगोपवनादेः ।

**विदाः उर्वाः । नेह, गौपवनाः ।**

---

**अमृता०**—३२२. कौण्डिन्यस्येति । गोत्रापत्ये वाच्ये बहुत्वे लक्ष्मीं विना कौण्डिन्य शब्दस्य माधव यरामस्य महाहरः, तस्य कुण्डिनादेशश्च भवति । कुण्डिनस्य गोत्रापत्यानि पुमांसः कुण्डिनाः । लक्ष्म्यान्तु कौण्डिन्यः ।

**अमृता०**—३२३. विदादे रिति । गोत्रापत्ये वाच्ये बहुत्वे लक्ष्मीं विना विदादेरुत्तरे विहित केशवणस्य महाहरः स्यात्, किन्तु तद्गणे पठितस्य गोपवनादेरुत्तरस्य केशवणस्य महाहरो नभवति । विदस्य गोत्रापत्यानि पुमांसो विदाः । लक्ष्म्यान्तु वैदा इत्यादि । प्रत्युदाहरति—नेहेत्यादिना । गोपवन शिग्र विन्द्र भाजन अश्वावतान श्यामाक श्यापर्ण एते अष्टौ गोपवनादयः ।

---

**बाल०**—अत्रि । प्रकरणेऽत्रापत्यमात्रस्वीकारेण लक्ष्मीं विना बहुत्वे विषये तस्यापत्यमित्यपत्ये वाच्येऽत्र्यादिषड्भ्यः पर ऋष्यन्धकेत्यनेन ऋषित्वात् केशवणस्य महाहरो भवति । अत्रेरपत्यानि पुमांसः अत्रय इति । ऋषित्वात् शुभ्रादित्वाच्चात्र केशवण-माधव द्वयोर्महाहरो ज्ञेयः । एतस्मादन्यत्रतु केशवणस्यैव । भृगोरपत्यानि पुमांसः भृगव इति । एवं कुत्साः वशिष्ठाः गोतमाः अङ्गिरस इति । लक्ष्म्यान्तु आत्र्यः आत्रेय्य इत्यादि ॥ ३२१ ॥

**बाल०**—नृसि । प्राचि भवाः प्राच्याः, भरता इति भरतवंश्याः, प्राच्याश्च भरताश्च प्राच्यभरतास्तेषु । लक्ष्मीं विना बहुत्वे विषयेऽपत्यरूपेषु प्राच्येभरतेषु वाच्येषु बहुसर्वेश्वरा-दुत्तरस्य नृसिंहेरामस्य महाहरो भवति । अरामवाह्वादिभ्यामित्यनेनात्र सर्वस्माद्विहितस्य वाह्वादेर्नृसिंहेरामस्य महाहरो ज्ञेयः । तत्र प्राच्य इति प्राच्यवंश्ये रूपं दर्श्यते । एक-वचनमत्र जात्यपेक्षया । पुष्करसदस्यापत्यानि पुमांसः पुष्करसदा इति । भरत इति पूर्ववत् । युधिष्ठिरस्यापत्यानि पुमांसः युधिष्ठिरा इति । एवमर्जुना इति । लक्ष्म्यान्तु पौष्करसद्य इत्यादयः । एवमिति एवम्प्रकारेण शिष्टप्रयोगानेनतिक्रम्य अन्येऽपि उपका इत्यादयोऽपि ज्ञेयाः । बहुत्वेति अत्रापि बहुत्वस्य स्वार्थे एव ग्रहणं न परार्थे तेन प्रियो यास्को येषां ते प्रिययास्का इति, एवं प्रिय गार्ग्या इत्यादयः ॥ ३२२ ॥

**बाल०**—नृसिंह । षष्ठीकृष्णपुरुषे सति एकत्वे द्वित्वेच विषये नृसिंहयकेशवण-योर्महाहरो वा वाच्यः । गार्ग्येत्यनेन वाक्योदाहरणं स्पष्टं दर्शितं । एवमिति वैदस्य वैदयोर्वा कुलमिति द्वयं । इदानीं व्यवस्थापकानि विधिसूत्राण्याह प्राग्दीव्येत्यादिना ।।३२३

## ३२४. अत्रि-भृगु-कुत्स-वशिष्ठ-गोतमाङ्गिरोभ्यः ।

अत्रयः भृगवः ।

---

**अमृता०**—३२४. अत्रीति । गोत्रापत्ये केवलापत्ये वा वाच्ये बहुत्वे विषये लक्ष्मीं विना अत्रिप्रभृतिभ्यो विहितकेशवणस्य महाहरः स्यात् । एषामृषित्वेन ऋष्यन्धकेत्यादिना केशवणः, अत्रेरपत्यनि गोत्रापत्यानि वा पुमांसः अत्रय इत्यादयः ।

---

**बाल०**—प्राग्दौ । दीव्यतेः प्राक् प्राग्दीव्यतिस्तस्मिन् भवः प्राग्दीव्यतीयः सर्वेश्वर आदिर्यस्य स सर्वेश्वरादिः स चासौ स चेति प्राग्दीव्यतीयसर्वेश्वरस्तस्मिन् । बहुत्वादौ विषये यस्मिन् कस्मिन् प्रसिद्धे वक्ष्यमाणे चार्थे सर्वेश्वरादौ प्राग्दीव्यतीये कर्त्तव्ये सति, बहुत्वेऽपत्यमात्रार्थे कृतप्रत्ययानां विहितो यो महाहरः स न स्यात् । बहु । बहुत्वादौ पूर्ववद्यस्मिन्नित्यादावर्थे प्राग्दीव्यतीयसर्वेश्वरादौ कर्त्तव्ये सति बहुत्वे अपिकारादेकत्वे द्वित्वेच युवप्रत्ययं बिना अपत्य.र्थे विहितप्रत्ययानां महाहरो न स्यात् । माध । पूर्ववद्बहुत्वादौ यस्मिन्नित्यादावर्थे प्राग्दीव्यतीयसर्वेश्वरादौ कर्त्तव्ये सति बहुत्वेऽपि यून्यपत्ये वाच्ये माधव-फे नृसिंह फिरामेच कृते तयोः फफ्योर्महाहरो वा भवति । एतदग्रे व्यक्तीभविष्यति । प्रथमसूत्रस्योदाहरणमवतारयति गर्गेति । गगाणां छात्रा इत्यर्थे आदिवृष्णीन्द्रात् छराम इत्यनेन प्रसिद्धत्वाज्जातादौ वक्षमाणेन लक्षणेन छः छ ईय इत्येवं प्राग्दीव्यतीयछरामस्य सर्वेश्वरादित्वे सिद्धे गर्गशब्दात् गोत्रापत्ये विहितस्य माधव यरामस्य बहुत्वविषये प्राप्त-महाहरो न स्यात् । विष्णुजनात्तद्धितयस्येत्यनेन यरामहरस्तु स्यात् । अतएव वृष्णीन्द्रा-पायाभावात् गर्गीया इति । एवमत्रीणां छात्रा इत्यर्थे छरामे सति, अपत्यार्थेऽत्रिशब्दात् शुभ्रादित्वेन विहितमाधवढरामस्य बहुत्वे महाहरो न स्यात्, तेन आत्रेयीया इति । सर्वेश्वरादाविति किमर्थमित्याह असेति । सर्वेश्वरादित्वाभावे त्वेषां विषयो न स्यादिति रूपं दर्श्यत इत्यभिप्रायः । गर्गेभ्य आगतमित्यर्थे तत आगतमित्यनेन वक्ष्यमाणरूप्यप्रत्यये प्राग्दीव्यतीये सति पूर्ववदस्य सर्वेश्वरादित्वाभावात् महाहरनिषेधो न स्यात्, अतो गर्गरूप्यमिति । आगतमित्येकवचनेन कर्त्तव्यप्राग्दीव्यतीयस्य बहुत्वे नियमराहित्यं सूचितं । अतएव सूत्रव्याख्याने बहुत्वादाविति मयोक्तं । मध्यमसूत्रस्य वाक्योदाहरणे स्वयं विवृत्य दर्शयति बहुत्वेऽपीत्यादिना । फल्टाकृतस्यापत्यमिति गोत्रापत्यं ज्ञेयं । सारस्यात् सारस्यन्तु यश्च गोत्रादव विधीयते स यूनि बोद्धव्य इत्युक्तरीत्या पश्चादत्र युवप्रत्ययविधानेन लब्धं । मूलप्रकृतेरेव गोत्रप्रत्यय इत्युक्तदिशा फण्टाकृतशब्दात् विधानान्तराभावेन अरामवाह्वादिभ्यामित्यनेन वाह्वादित्वात् नृसिंह·इः फाण्टाकृतेरपत्यं युवेत्यर्थे फाण्टाकृत इति मिमतफाण्टाकृतिभ्यामित्यनेन णरामान्तः । ततस्तदनन्तरं तस्य फाण्टाकृतस्य छात्रा इत्यर्थे प्राग्दीव्यतीये सर्वेश्वरादौ कर्त्तव्ये युवप्रत्ययं विनेत्यनेन निषेध-खण्डनात् युवप्रत्यय णरामस्य महाहरस्ततः परं पूर्वोक्तगोत्रप्रत्ययनृसिंहेरामात् केशवण इति छरामापवादककेशवणो वक्ष्यत इति नृसिंहेरामाद्गोत्रादित्यनेनेति शेषः । इदमपि सूत्रं प्रसिद्धार्थाङ्गीकारेण जातावेव ज्ञेयमित्येवं फाण्टाकृता इति । इदानीमन्तिमसूत्रस्य दुष्पष्टत्वाद्वृत्तिं करोति माधव फेति । गार्ग्यायणस्य छात्रा इत्यर्थे आदिवृष्णीन्द्रादित्यनेन

## ३२५. नृसिंहेरामस्य बहुसर्वेश्वरात् प्राच्यभरतेषु ।

प्राच्ये—पुष्करसदाः । भरते—युधिष्ठिराः अर्जुनाः । एवमन्येऽपि ज्ञेयाः । बहुत्वस्य परार्थत्वे प्रिययास्काः प्रियगार्ग्याः ।

## ३२६. नृसिंहय-केशवणयो रेकत्वे द्वित्वे च महाहरो वा वाच्यो षष्ठीकृष्णपुरुषे ।

---

**अमृता॰**—३२५. नृसिंहेति । प्राचि भवाः प्राच्याः, भरतवंश्या भरताः, प्राच्येषु भरतेषु च गोत्रेषु अपत्येषु वा वाच्येषु बहु सर्वेश्वरात् शब्दाद्विहितस्य नृसिंहेरामस्य महाहरः स्यात् । अरामवाह्वादिभ्यामित्यनेन विहितस्य नृसिंहेरामस्येह महाहरो विधीयते । पुष्कर सदोऽपत्यानि गोत्रापत्यानि वा पुमांसः पुष्करसदाः । एवमन्येऽपि बोध्याः । अत्रापि स्वार्थ बहुत्व एवेष्यते नतु परार्थ इत्युपपादितं—प्रिययास्का इत्यादि ।

---

प्राग्दीव्यतीयछरामे सति इयाभ्यां नृसिंहाभ्यामित्यनेन विहितयुवप्रत्यय फरामस्य महाहरो वा स्यात् । तेन गार्गीया इति द्वयं । किन्त्वत्र फरामहरपक्षे विष्णुजनातद्धितयस्य हरो भगवत्यारामं विनेत्यनेन यरामहरः । यास्कायनेरित्यत्र छात्रा इति पूर्ववत् योज्यं, प्राग्दीव्यतीय छरामे सति आदिवृष्णीन्द्राद्गोत्रान्नृसिंह-फि-र्वेत्यनेन केशवणरामान्तात् विहितफेर्महाहरो वा स्यात् । तेन यास्कीया इति द्वयं यदातु विकल्पत्वात् नृसिंहफेर-भावस्तदा अरामवाह्वादिभ्यामित्यनेन नृसिंहेरामः । एतद्युवप्रत्ययस्य पुनः प्राग्दीव्यतीये छे महाहरो नित्यं स्यात् विकल्पत्वाभावात् । अतोऽस्मिन् पक्षे नित्यं यास्कीया इति । एतदेव स्पष्टयन् भङ्ग्योदाहरणान्तरमाह नित्यन्तु आत्रेयीया इति । अन्यथेदमत्रानर्थकं स्यात् पूर्वोदाहृतत्वात् ।। ३२४ ।।

**बाल॰**—पैल । बहुत्वेऽपीत्यनेन युवप्रत्ययहरविषये बहुत्वं व्यभिचारितं तस्मादत्रापि बहुत्वैकत्वेषु युवापत्ये वाच्ये पैलादिभ्यो युवप्रत्यस्य महाहरो भवति । पिलादिशब्दस्य गणग्रहणेनैव प्रत्ययप्राप्ति सूचयन्नाह पिलेति । अतः शिवादित्वादपत्ये गोत्रेच केशवणः स्यात् । ततश्च तस्याः पिलाया उत्तरस्मिन् यो गोत्रार्थकेशवणस्तस्मादादिवृष्णीन्द्राद्गोत्रा-दित्यनेन युवविहितफेर्महाहर इत्याक्षेपाल्लभ्यते, अतएवैकपैलरूपशब्देन पिता पुत्रश्चोत्यते । एवमुत्तरत्रापि । पैलादीत्यत्रादिशब्देन अन्यदपि संगृह्यत इत्याह आदिनेति । विदस्य युवापत्यं पुमानिति गोत्रार्थात् विदादेः केशवणरामादुत्तरस्य युवविहितफेर्महाहरः । वैद इत्यादि पूर्ववत् । एवमिति । सत्यकस्य युवापत्यं पुमानिति गोत्रापत्यार्थेऽरामान्तत्वाद्यो नृसिंह इस्तस्मादियाभ्यामित्यनेन विहितयुवप्रत्ययफरामस्यात्र महाहरः । सात्यकिः पिता पुत्रश्चेति । इत्यादीत्यादिपदेन शिष्टप्रयोगानुसारादन्यान्यप्यूह्यानीति ज्ञापितं । अन्यत्रेति एतेभ्योऽन्यत्र न स्यादित्यर्थः । दाक्षिरित्यत्र गोत्रापत्ये नृसिंह-इरतोऽयं पितरं व्यक्ति । दाक्षायण इत्यत्र युवापत्ये फरामोऽतोऽयं पुत्रं वक्तीति भेदः । एवमार्जुनिप्रभृतयः । किञ्च आर्जनिरित्यादिषु वाह्वादित्वान्नृसिंह इर्गोत्रे विधानान्तराभावात् ।। ३२५ ।।

गार्ग्यस्य गार्ग्ययो र्वा कुलं गर्गकुलं गार्ग्यकुलम् । एवं विदकुलं वैद-कुलम् ।

**३२७. प्राग्दीव्यतीयसर्वेश्वरादौ कर्त्तव्ये न महाहरः; बहुत्वेऽपि युवप्रत्ययं विना न महाहरः, माधवफे नृसिंह फिरामे च यूनि वा ।**

गार्ग्याणां छात्रा गार्गीयाः, आत्रेयीयाः । असवश्वरादित्वे तु—गर्गेभ्य आगतं गर्गरूप्यम् । बहुत्वेऽपीति— फण्टाकृतस्यापत्यं फाण्टाकृतिः,

---

**अमृता०**—३२६. नृसिंहेति । षष्ठीकृष्णपुरुषे सति एकत्वे द्वित्वे च विषये नृसिंह यस्य केशवणस्य च महाहरो वा वाच्यो प्रागुक्ते वाच्ये । स्पष्टे वाक्योदाहरणे ।

**अमृता०**—३२७. प्रागिति । दीव्यतेः प्राक् प्राग्दीव्यति स्तत्रभवः प्राग्दीव्यतीयः, सचासौ सर्वेश्वरादिश्चेति तथा तादृशि प्रत्यये कर्त्तव्ये गोत्राद्यर्थे विहितप्रत्ययस्य प्राप्त महाहरो न भवति । प्राग्दीव्यतीय सर्वेश्वरादौ कर्त्तव्ये बहुत्वेऽपि, अपि शब्दादेकत्वेद्वित्वे च विषये युव प्रत्ययं विना अपत्याद्यर्थे विहित प्रत्ययस्य महाहरो न भवति । तथा प्राग्-दीव्यतीयमाधव फरामे नृसिह फिरामे च कर्त्तव्ये यूनिविहितस्य प्रत्ययस्य बहुत्वेऽपि महाहरो वा भवति ।

प्रथमसूत्रस्योदाहरणमाह—गार्ग्याणामिति । अत्र छात्रार्थे प्राग्दीव्यतीयसर्वेश्वरादौ प्रत्यये ( छरामे ) कर्त्तव्ये, गर्ग शब्दाद् गोत्रार्थे विहितस्य माधव यरामस्य बहुत्वे यो महाहरो व्यवस्थापितः स इह नभवति किन्तु विष्णुजनात्तद्धितयस्येत्यादिना यरामहर एव भवति, ततश्च वृष्णीन्द्रापायाभावः, गार्गीया इति । अत्रेरपत्यानि पुमांसः, शुभ्रादित्वा-न्माधवढः, आत्रेयाः, तत स्तेषां छात्रा इत्यर्थे प्राग्दीव्यतीय छरामे कर्त्तव्ये अत्रि भृगु इत्यादिना युवापत्ये विहित ढप्रत्ययस्य महाहरो न स्यात्, छईयः—आत्रेत्रीया इति ।

प्रत्युदाहरति—असर्वेश्वरादित्वे इति । तर्हि यथाविधानं महाहरो भवत्येवेत्यर्थः । तद् दर्शयति—गार्ग्येभ्य आगतमित्यादिना । गार्ग्येभ्य आगतमित्यर्थे रूप्यप्रत्ययः, ततो गोत्रप्रत्ययस्य यरामस्य प्राप्तमहाहरः सञ्जातः । अथ द्वितीयसूत्रस्योदाहरण प्रदर्शनार्थं प्रतीग् गृह्णाति—बहुत्वेऽपीति । इदन्तु प्रत्युदाहरणं ज्ञेयं, युवप्रत्ययस्य महाहरदर्शनात् ।

---

**बाल०**—तैका । गोत्रप्रत्ययान्तात् तैकायन्यादेः परस्य युवप्रत्ययकेशवारामस्य महाहरो भवति । तैकायनिरिति तिकस्य गोत्रापत्यं पुमानिति गोत्रापत्येऽपि तिकादे-र्नृसिंहर्फिविध्यन्तराभावात् । अतोऽस्मात् युवापत्ये अनेन केशवारामं विधाय तस्य महाहरश्च कृतस्तेनायं पितरं पुत्रश्च वक्ति ॥ ३२६ ॥

**बाल०**—ण्यार्ष । ण्यश्च आर्षश्च क्षत्रियश्च ते ण्यार्षक्षत्रियास्तेभ्यः । गोत्रार्थेभ्यो ण्यार्षक्षत्रियेभ्यो युवप्रत्यभ्यो नसिंहेरामस्य महाहरः स्यात् । तत्र ण्यादिति ण्यप्रत्ययान्तं

तस्यापत्यं युवा फाण्टाकृतो णप्रत्ययान्तः, ततस्तस्य छात्रा इत्यर्थे प्राग्दीव्यतोये कर्त्तव्ये णरामस्य महाहर स्ततो नृसिंहेरामात् केशवणो वक्ष्यते फाण्टाकृताः। माधवफ·नृसिंह फिरासयोस्तु वा महाहरः। गार्ग्यायणस्य छात्रा गार्गीयाः गार्ग्यायणीयाः। यास्कायनेः यास्कीयाः यास्कायनीयाः। नित्यन्तु आत्रेयीयाः।

## ३२८. पैलादिभ्यो युवप्रत्ययस्य महाहरः।

पिला वा शिवादिः। तस्या युवविहितके महाहरः—पैलः पिता पुत्रश्च।

---

फण्टाकृतस्यापत्यमिति गोत्रापत्यमित्यर्थः, गोत्रापत्यादेव युवप्रत्ययविधाननियमात्। मूलप्रकृतेरेव गोत्रप्रत्यय इत्युक्तेः फण्टाकृतशब्दात् विधानान्तराभावात्—अरामवाह्वादिभ्यां नृसिंह इः—फाण्टाकृतिः। ततो युवापत्ये—मिमत फाण्टाकृतिभ्यामिति केशवणः—फाण्टाकृतः। अथ छात्रार्थे प्राग् दीव्यतीये छरामे कर्त्तव्ये युवाप्रत्ययाद्विहित केशव णस्य महाहरः। ततश्च नृसिंहेरामान्तफाण्टाकृति शब्दात् छात्रार्थे केशवणः—फाण्टाकृता इति। अत्र छात्रार्थे छरामापवादः केशवणः स्यादिति ज्ञेयम्। वक्ष्यत इति—नृसिंहेरामाद् गोत्रादित्यनेनेति शेषः।

अन्तिमस्य वृत्तिमाह—माधवफेति। गर्गस्य गार्ग्यस्य वा युवापत्यं पुमान्—इयाभ्यां नृसिंहाभ्यामित्यादिना फरामः—गार्ग्यायणः, तस्य छात्रा इत्यर्थे प्राग्दीव्यतीय छरामे कर्त्तव्ये युवापत्ये विहित फरामस्य बा महाहरः। तने महाहर पक्षे पूर्ववद् यरामहरः, तद्भावपक्षे गार्ग्यायणीया इति। एवं यास्कीया इति द्वयं बोध्यम्। आत्रेयस्य गोत्रापत्ये माधव फः—आत्रेयायणः, तस्य छात्रा इति छरामे कर्त्तव्ये तु फरामस्य महाहरो नित्यमेव। व्यवस्थित विभाषया नित्यमिति सौपद्मा आहुः।

**अमृता०**—३२८. पैलेति। युवप्रत्ययस्य महाहर इत्यनुवर्त्तमानेऽपि पुनरिह तदुक्तिः प्राग् दीव्यतीय सर्वेश्वरादाविति निवृत्तये। बहुत्वेऽपीत्यनेन अपिशब्दादेकत्वे द्वित्वे तु पूर्वत एव महाहरः सिद्ध इति निर्णीयते। पैलादिभ्य उत्तरे युव प्रत्ययस्य महाहरः स्यात्। पिला वा शिवादि रित्युक्तया एभ्यः केशवणस्य प्राप्तिः सूचिता। अतः पिलाया गोत्रापत्यं

---

लक्षीकृतत्योदाह्रियत इत्यर्थः। कुरोर्युवापत्यमित्यर्थे गोत्ररूपात् कौरव्यादरामह्लादिभ्यामित्यनेन विहितनृसिंहेरामस्य महाहरः। अतः कौरव्य इत्यनेन पिता पुत्रश्चोच्यते। तिकादीति। कौरव्यस्य तिकादिपाठाद्धेतोस्तिकादेर्नृसिंहफिरिति फिप्रत्ययेन कौरव्यायणिरित्यपि। आर्षादिति लक्षीकृत्येति पूर्ववत्। वाशिष्ठ इति वशिष्ठस्य युवापत्यमिति ऋष्यन्धकेत्यनेन कृतकेशवणान्ताद्वाशिष्ठात्। अरामान्तत्वेन विहितनृसिंहेरामयुवप्रत्ययस्य महाहरस्तेनानेन पिता पुत्रश्चोच्यत इति। क्षत्रियादित्यत्रापि पूर्ववदिति। श्वाफल्क इति बाशिष्ठवत्। सर्वमपत्यं समापयति अपत्यमिति ॥ ३२७ ॥

आदिना वैदः पिता पुत्रश्च। एवं सात्यकिरित्यादि। अन्यत्र न। दाक्षिः पिता, दाक्षायणः पुत्रः। एवमार्जुनिः आर्जुनायनः, आसुरिः आसुरायणः।

**३२९. तैकायन्यादेः केशवारामस्य महाहरः।**

तैकायनिः पिता पुत्रश्च।

**३३०. ण्यार्षक्षत्रियेभ्यो नृसिंहेरामस्य महाहरः।**

---

पैलः, तस्य युवापत्यमित्यर्थे—आदिवृष्णीन्द्राद् गोत्रादित्यनेन विहित फि प्रत्ययस्य महाहरः। पिलायाः पैलस्य वा युवापत्यमित्यर्थे पैलः पिता पुत्रश्च। आदिशब्दग्राह्य मुपदिशति—बैदइत्यादि। अन्यत्र नेति—उक्तेभ्योऽन्यत्र युव प्रत्ययस्य न महाहर इत्यर्थः। तद् दर्शयति—दाक्षिरित्यादि। दक्षशब्दाद् गोत्रापत्ये नृसिंह इः दाक्षिः, तस्य युवापत्यं पुमानिति फरामः—दाक्षायण इति। आर्जुनिरिति—अरामवाह्वादिभ्यामिति नृसिंह इरामः सामान्यापत्यं विहितोऽपि अत्र युवप्रत्ययोत्पत्तिकारणत्वाद् गोत्रापत्ये हि मन्तव्यः, अन्यथा युवप्रत्ययस्य प्रसङ्गहानेरिति भावः।

अमृता०—३२९. तैकेति। गोत्रप्रत्ययान्तात् तैकायन्यादेरुत्तरस्य युवप्रत्ययरूप केशवारामस्य महाहरो भवति। तैकायनिरिति पूर्ववत् गोत्रापत्ये हि तिकादे नृसिंह फि मन्तव्यः, ततोऽनेन केशवारामं विधाय तन्महाहरश्च विहितः।

अमृता०—३३०. ण्यार्षेति। ण्यप्रत्ययान्तात् आर्षात् क्षत्रियाच्च युवप्रत्ययरूप नृसिंहेरामस्य महाहरो भवति। तत्र कुर्वादिभ्य इति ण्यरामस्य,ऋष्यन्धकवृष्णिकुरुभ्यश्चेति केशव णस्य च सामान्यापत्याद्यर्थे विधानादिह युवप्रत्ययाप्राप्ते सर्वत्र गोत्रापत्ये ताषां

---

बाल०—तेन। तेन रक्तमित्यर्थे रागान्नाम्नो यथाविहितं प्रत्ययाः स्युः। एकाधिकारव्यापित्वात् प्रभुनामायमधिकारः चशब्दाद्विधिरपि। अधिकारसूत्रं स्वयं व्याचष्टे तेनेति। रञ्जनेति। येन द्रव्येण वस्त्रादिकं वर्णान्तरं क्रियते तद्रञ्जनद्रव्यं तद्वाचिनः शब्दाद्विति। तत्रेति स्पष्टं, वाक्योदाहरणे ददाति कुङ्कुमेनेति। विशेषस्त्विति विशेषविधानात्तु विशेषरूपाणि स्युः। तानि यथेति। आग्नेय इति अग्निकलिभ्यामित्यनेन माधवढ इति। आदित्येनेति रक्तमिति शेषः। आदित्यमिति दित्यादित्यादित्ययमेभ्य इत्यनेन ण्यरामः। विष्णुजनात्तद्धितेति यहरः आख्यातादयो यत्र क्रियन्ते तेन तदुक्तं स्यादित्युक्तदिशा यथा आख्यातकृत्समासैः कर्तृभिः कर्मादीनामुक्तत्वं तद्वत्तद्धितेनापीत्याह रक्तमित्याद्यवमन्तेन॥ ३२८॥

बाल०—लाक्षा। तेन रक्तमित्यर्थे लाक्षारोचनाभ्यां रञ्जनद्रव्याभ्यामुत्तरो माधवठो भवति। लाक्षाया रक्तं लाक्षिकमिति रोचना गोरचना तया रक्तं रौचनिकमिति द्वयं वस्त्रं॥ ३२९॥

ण्यात् कौरव्यः पिता तुत्रश्च । तिकादिपाठात् कौरव्यायणिः । आर्षात् वाशिष्ठः पिता पुत्रश्च । क्षत्रियात् श्वाफल्कः पिता पुत्रश्च । अपत्यं पूर्णम् ।

## ३३१. तेन रक्तं रागात् ।

प्रभुश्चायम् । तेन रक्तमित्यर्थे तृतीयान्ताद्रञ्जनद्रव्यवाचिनो यथाविहित-प्रागदीव्यतीय प्रत्ययः स्यात् । तत्र सामान्यतः केशवण एव । कुङ्कुमेन रक्तं कौङ्कुमं कृष्णस्य वस्त्रम् । विशेषतस्तु—अग्निना रक्तो घट आग्नेयः । आदित्येनादित्यं पत्रम् । रक्तमिति कर्म विहित कृदन्तस्य प्रतिनिधि स्तद्धितोऽयमपि कर्मण्येन । ततोऽत्र वस्त्रादेः कर्मण उक्तत्वम् । एवमन्यत्रापि ।

## ३३२. लाक्षा-रोचनाभ्यां माधव ठः ।

लाक्षिकं रौचनिकम् ।

---

ज्ञापनेन युवप्रत्ययाप्राप्ते सर्वत्र गोत्रापत्ये ताषां ज्ञापनेन युवप्रत्ययस्य महाहरविधानार्थं वचनम् । अत्र कुरोर्गोत्रापत्यं कौरव्यः, ततो युवापत्ये—अरामवाह्वादिभ्यामिति विहित नृसिंहे—रामस्य महाहरः । कौरव्य शब्दस्य तिकादौ पाठात् फि प्रत्ययान्तत्वात् पूर्वसूत्रत स्तस्मात् केशवणस्य महाहर इतिभावः । ऋषिवाचकात् क्षत्रियवाचकाच्चोदाहरति—वाशिष्ठ इत्यादि । अपत्यमात्रमिह सम्पूर्णम् ।

अमृता०—३३१. तेनेति । स्पष्टीकृतं वृत्तौ । प्रभुनामाधिकारोऽयम्, चकारात् विधिरपि । तेन दीव्यतीत्यतः प्रागर्थेषु केशवण इति यद् व्यवस्थापितं तदेवात्र स्मारयति—सामान्यत इति । विशेषतस्त्विति—अग्नि-कलिभ्यां माधव ढ इति विशेषविधानेन अग्नि शब्दात् ढः—आग्नेय इति । आदित्यमिति—दित्यादित्यादित्य-यमेभ्य इति ण्यरामः, विष्णुजनात्तद्धितेति यरामहरः । यत्राख्यातादिरुक्तं तदित्युक्तदिशा यथा आख्यात कृत् समासैःकर्मादीनामुक्तत्वं दर्शितं तथा तद्धितेनापि तद्दर्शयति—रक्तमितीत्यादि ।

अमृता०—३३२. लाक्षेति । तेन रक्तमित्यर्थे लाक्षा-रोचनाभ्यां रञ्जनद्रव्याभ्या-मुत्तरे माधव ठः स्यात् । लाक्षया रक्तं लाक्षिकम् । एवं रौचनिकं वासः ।

---

बाल०—शक । तेन रक्तमित्यर्थे शकलकर्दमाभ्यां रञ्जनद्रव्याभ्यामुत्तरो माधवठो वा स्यात् पक्षे सामान्यात् केशवणः । शकलेन रक्तः पटादिः शाकलिकः शाकलश्च । एवं कार्दमिकः कार्दम इति ॥ ३३० ॥

बाल०—पीता । तेन रक्तमित्यर्थे पीताद्रञ्जनद्रव्यादुत्तरः करामः स्यात् । पीतेन रक्तं पीतकं वस्त्रं ॥ ३३१ ॥

**३३३. शकल-कर्दमाभ्यां वा ।**

**शाकलिकः शाकलः ।**

**३३४. पीतात् करामः ।**

**पीतकम् ।**

**३३५. नील्या अरामः ।**

**नीलम् । रक्तं निवृतम् ।**

---

**अमृता०**—३३३. शकलेति । तेनरक्तमित्यर्थे शकल कर्दमरूपरञ्जनद्रव्याभ्यामुत्तरे माधवठो वा भवति । शकलेन रक्तः शाकलिकः पटः । पक्षे केशवणः—शाकल इति । एवं कार्दमिकं कार्दमं वासः ।

**अमृता०**—३२४. पीतादिति । तेनरक्तमित्यर्थे पीतात् रञ्जनद्रव्यात् करामः स्यात् । पीतेन रक्तं पीतकं परिधेयम् ।

**अमृता०**—३३५. नील्या इति । तेन रक्तमित्यर्थे नीलीरूपाद्रञ्जनद्रव्यात अरामः प्रत्ययः स्यात् । नील्या रक्तं नीलं रामवस्त्रम् । एते विशेषविधयः । सामान्येभ्य स्तु सामान्यः केशव ण एव, यथा कौसुम्भ इत्यादि । समाप्तोऽयं रक्ताधिकारः ।

---

**बाल०**—नील्या । तेन रक्तमित्यर्थे नील्या रञ्जनद्रव्यादरामो भवति । नील्या रक्तं नीलमिति । एते विशेषा एभ्योऽन्यत्रतु कौसुम्भप्रभृतयः । इति रक्तं समासं ॥ ३३२ ॥

**बाल०**—सास्य । अस्य सा देवतेत्यर्थे यथायोग्यं नाम्नः प्रत्ययाः स्युः । अयमपि प्रभुनामा विधिश्च । इदानीमितः परं नानाविधार्थे प्रत्ययानां वक्ष्यमाणत्वान्मुहुर्मुहुरधिकाराणां प्रवृत्तेरलसबुद्धया एकत्रैवात्र सङ्केतयति एवमित्यादिना । सूत्रं विवृणोति तस्मिन्निति । वाक्योदाहरणे दर्शयति विष्णुरिति । वैष्णव इत्यादित्रिषु सामान्यात् केशवणः । वैष्णवीत्यत्रतु ऋचो विशेषणत्वात् टित्वनिबन्धन ईप् एवमित्यादिद्वयेतु विशेषात् ण्यमाधवढाविति । असाधारणलक्षणेन देवताद्वैविध्यं प्रतिपादयति याग इति । यागे विषये पुरोडाशोदीनां मन्त्रादिभिराराध्यश्च देवतामाहुः पण्डिता इति शेषः ॥ ३३३ ॥

**बाल०**—शुक्रा । सास्य देवतेत्यर्थे शुक्रादेरुत्तरस्मिन् यथास्वं घरामादयो भवन्ति । शुक्रो देवतास्येति घ इयः । अ-इद्वयस्येत्यरामहरः । शुक्रियं हविः । एवमुत्तरत्रापि । सोमो देवतास्य सौम्यमित्यत्र माधवयो बाद्धव्यस्तेन सौमीत्यत्र ऋग्वाचित्वेन टित्वादीप्, तस्मिन् विष्णुजनात्तद्धितयस्येत्यनेन यहरः । ररामविधानं सूचयति ऋरामस्येति । पिता देवतास्य पित्र्यं कव्यं । क इति वाक्ये कशब्दात् आयः कायं ब्रह्मोद्देश्यं हविः । कायमित्यत्र कादेच्चेति जुमरसूत्रमिति, तन्मते कशब्दात् केशवणस्तत्पूर्वमेजागमश्च । शतरुद्रो देवतास्य शतरुद्रीयमित्यत्रतु घरामः । महेन्द्रा देवतास्येति माहेन्द्रमित्यादिषु त्रिषु यथाक्रमं केशवणछघरामाः । वायुर्देतास्य ऋतव्यमित्यत्रच यरामः, उद्वयस्येति गोविन्दः ।

३३६. सास्य देवता ।

प्रभुश्चायम् । एवमुत्तरत्रापि । सर्वत्रार्थमात्रनिर्देशे प्रभुत्वादिकं ज्ञेयम् । अस्मिन्नर्थे पूर्ववद् यथाविहितं स्यात् । विष्णु र्देवतास्य वैष्णवः पुरुषः, वैष्णवं हविः, वैष्णवी ऋक् । एवमादित्यः, आग्नेयः । यागे पुरोडाशादि सम्प्रदानं मन्त्राद्याराध्यञ्च देवतामाहुः ।

---

अमृता०—३३६. सास्येति । अधिकारो विधिश्चायम् । उत्तरग्रन्थार्थं सङ्केतमाह —सर्वत्रेति । सूत्रार्थमाचष्टे—अस्मिन्नर्थे इति । वैष्णव इत्यादि त्रिषु सामान्याधिकारेण केशवणः । आदित्यो देवताऽस्य आदित्यः । अग्नि र्देवताऽस्य आग्नेयः । आभ्यां विशेषौ ण्य-माधव ढौ । यज्ञे मन्त्राद्यै राराध्यस्य हि देवतात्वेन प्रसिद्धिरस्ति तत्र प्राचीनसम्मतं विशेषमप्याह—पुरोडाशादि सम्प्रदानमिति ।

---

ओद्धस्यावावौ प्रत्यय य इत्यनेनाव् । उषः प्रातर्देवतास्य उषस्यमित्यत्रापि यरामः । द्यावा-पृथिव्यौ देवते अस्य द्यावापृथिवीयमित्यत्र छरामः । द्यावापृथिवीति समासकार्ये पृथिव्यां परे दिव्शब्दस्य द्यावादेशेन साधितं । एवं द्यावापृथ्वीयं । सुनासीर इन्द्रः स देवतास्य छः सुनासीरीयमिति । शुनो वायुः सीर आदित्य इन्द्रादेररामस्याराम उत्तरपदे इत्यनेन समासकार्ये यः शुनासीरः सिद्धस्तस्य शुनासीरीयमित्यन्ये । इतः कारणात् तालव्यादि-रप्ययं । इन्द्रादेरित्यनेन दन्त्यादिसुनासीरोऽपि साधनीयः सङ्गतत्वात् । मरुत्वान् देवतास्य मरुत्वतीयमिति । अग्नीयोमौ देवते अस्य अग्नीयोमीयमिति । गृहमेधो देवतास्य गृहमेधीयमिति । अतएवास्तोस्पतीयमित्यपि कश्चित् । द्यावापृथिव्यादिषु पक्षे यरामश्च भवतीत्याह पक्ष इति । पैङ्गाक्षीपुत्रतार्णबिन्दवाभ्यामीय इति जयादित्यादयः । तेन पैङ्गाक्षीपुत्रो देवतास्य पैङ्गाक्षीपुत्रीयः । एवं तार्णवीय इति । अपांनपादपोनपाद्भ्यां घछरामौ तयोः पातः प्तृश्चेति वक्तव्यं । अपांनपाद्देवतास्य अपांनप्तृयः अपांनप्तृीय इति । एवं अपोनप्तृयः अपोनप्तृीय इतिच ॥ ३३४ ॥

बाल०—काल । सास्य देवतास्येत्यर्थे कालवाचिशब्देभ्यो भवार्थे ये प्रत्यया वक्ष्यन्ते तेऽत्रापि स्युः । किञ्च, भवार्थस्य जातादेरन्तःपातित्वाज्जातादौ ये वक्ष्यन्ते त एवेत्यर्थः । मासो देवतास्य मासिकमिति कालान्माधवठः । वसन्तो देवतास्य वासन्तमिति ऋतुनक्षत्राभ्याञ्चेति केशवणः । प्रावृट् देवतास्य प्रावृषेण्य इत्येन्यप्रत्ययान्तः साधुरिति । भवार्थानां वक्ष्यमाणत्वमाह भवार्थेति । प्रोष्ठपदमहाराजाभ्यां माधवठ इति वक्तव्यं । तेन प्रोष्ठपदो देवतास्य प्रौष्ठपदिक इति । एवं माहाराजिकश्चेति । तर्हि कथं महाराजिक इति महती राजिर्यस्येति पीताम्बरे कप्रत्ययात् । इति देवतार्थाः समाप्ताः ॥ ३३५ ॥

बाल०—तस्य । अत्रार्थ इति विवरणं । तथाच, तस्य समूह इत्यर्थे नाम्नो यथा-विहितं प्रत्ययो भवन् ब्रह्मणि वर्त्तत इत्यर्थः । अत्रापि प्रभुश्चेति ज्ञेयं, सर्वत्रार्थमात्रनिर्देशे प्रभुत्वादिकमित्युक्तत्वात् । यत्तु प्रागुक्तं सामान्यतः केशवणो विशेषतस्तु विशेष इति

## ३३७. शुक्रादे र्घरामादयः ।

शुक्रियं सौम्यं हविः । सौमी ऋगित्यादि । ऋरामस्य रो ये, पित्र्यम् । कः प्रजापति र्देवतास्य कायं, शतरुद्रियं शतरुद्रीयं, माहेन्द्रं महेन्द्रियं माहेन्द्रीयं, वायव्यं ऋतव्यं उषस्यं द्यावापृथिवीयं सुनासीरीयं मरुत्वतीयं अग्नीषोमीयं गृहमेधीयम् । पक्षे द्यावापृथिव्यं सुनासीर्यमित्यादयः ।

## ३३८. कालवाचिभ्यो भवार्थवत् ।

---

**अमृता०**—३३७. शुक्रेति । साऽस्य देवतेत्यर्थे शुक्रादे रुत्तरे यथास्वं घरामादयः स्युः । तत्र शुक्राद् घः, घ इयः, अइ द्वयस्येत्यरामहरः—शुक्रियम् । सोमाद् माधव यः—सौम्यं, माधवत्वादीप् सौमी । कायमिति—आयट्, लक्ष्म्यां कायी । शतरुद्राद् घ-छौ । महेन्द्रात् केशवणो, घ-नृसिंहछौ च । वायु-ऋतूषोभ्यो यरामः । वायु र्देवतास्येति वाक्ये उद्वयस्येति गोविन्दः । एवं ऋतुर्देवताऽस्य, उषा देवतास्य, ऋतव्यं उषस्यम् । द्यावापृथिव्यादे र्यं छरामौ । आदिपदेन सुनासीर-मरुत्वत् अग्नीषोम-गृहमेध वास्तोष्पतयो ग्राह्याः ।

**अमृता०**—३३८. कालेति । सास्यदेवतार्थे कालवाचिशब्देभ्यो वक्ष्यमाण भवार्थे

---

तदपि न विस्मर्त्तव्यं । तेन दीव्यतीतः प्रागर्थे केशवणस्याधिकारात् । किञ्च, सन्निहितत्वाद्यस्य समूह उच्यते, तस्मादेव प्रत्ययोत्पत्तिः । यदा तु सम्बन्धषष्ठ्या सिद्धं देवानामित्यादि पदं समूह इत्यनेन सम्बध्यते, तदा देवानां समूह इत्यादिवाक्ये दैवमित्यादि । तद्धितस्य बाहुल्यात् पक्षे वाक्यं समासश्च पूर्ववदिति । एवं भिक्षाणां समूहः भैक्ष, युवतीनां समूहः यौवतं । किञ्च, यूनो युवतिरित्यनेन निपातनात् युवतीत्यस्य वाच्यलिङ्गत्वसम्भवाद्भगवति नतु ढरामे इत्यनेन प्राप्तपुम्वद्भावं प्राचीनमतेनैव वारयति अत्रेति । भागवृत्ति मते तु पुम्वद्भावो भवतीत्याह पुम्बद्भात्र इति । एवं काशिकाभागवृत्त्योमतभेदमवलोक्य युवतेः पुम्वद्विकल्पश्चेति जुमरः । तथाच भाष्यं । स्वरूपमभिनेपथ्यं कलाकुशलयौवनं । यस्य पुण्यकृतः प्रैष्यं सफल तस्य यौवनमिति । यस्य पुण्यकृज्जनस्य स्वानुरूपं साफल्य-भूषायुक्तं कलानिपुणं युवतिवृन्दं प्रैष्यमाज्ञाकारि तस्य यौवनं युवत्यं सफलमिति भाष्यपद्यार्थः । अत्रैव सामान्याधिकारे नृ काक क्षेत्र करीष अङ्गार सहस्र पद्धति दक्षिणा वर्मन् अथर्वन् गर्भिणी अर्हन्नित्यादयोऽपि ज्ञेयाः । विशेषे उदाहरणत्रयमाह आदित्यमित्यादि आदित्यानां समूह इत्यादिवाक्ये यथाक्रमं ण्य नृसिंहण-माधवढरामाः स्युः ॥ ३३६ ॥

**बाल०**—गोत्रा । तस्य समूह इत्यर्थे गोत्रात् गोत्रप्रत्ययान्तादुक्षादेश्चोत्तरो नृसिंहो वुर्भवति । वुः अकः । यदूनां समूहः यादवकं प्राग्दीव्यतीयसर्वेश्वरादावित्यनेनात्र गोत्रप्रत्ययमहाहरो न स्यात् । गर्गाणां समूहः गार्गकं विष्णुजनादिति यहरः । उक्ष्णां समूहः औक्षकमिति नान्तस्येति संसारहरः । एवं सूत्रस्थादिपदात् औष्ट्रकादयो नव ॥ ३३७ ॥

मासिकं वासन्तं प्रावृषेण्यम् । भवार्था वक्ष्यन्ते । देवता निवृत्ता ।

**३३९. तस्य समूहो ब्रह्मणि ।**

अत्रार्थे क्लीवे यथाविहितं स्यात् । देवानां समूहो दैवम् । भिक्षाणां भैक्षं, युवतीनां यौवतम् । अत्र भगवति नतु ढरामे इत्यस्य न प्राप्तिं मन्यन्ते, ततो न पुम्वद्भाव इति काशिका । पुम्वद्भावे यौवनमिति तु भागवृत्तिः । आदित्यं स्त्रैणं आग्नेयम् ।

**३४०. गोत्रादुक्षादेश्च वुनृसिंहः ।**

---

येप्रत्यया रुपदिश्यन्ते तएव भवन्ति । भवार्थस्तु शैषिको जाताद्यर्थो ज्ञेयः, तत्रैव कालाम्माधवठादे विधास्यमानत्वात् । तेन यथा मासे जातादि मासिकं, तथा मासोदेवतास्य मासिकमिति । एवं वासन्तं, ऋतु-नक्षत्राभ्यामिति केशवणः । प्रावृट् तेवतास्येति एण्य प्रत्ययेन साधुः । एवञ्च पौर्णमासं ग्रैष्मं शैशिरं हैमनमित्यादयः । एतेभ्यः सन्धि वेलादेरिति केशवणो वक्ष्यते । समाप्तो देवताधिकारः ।

**अमृता०**—३३९. तस्येति । तस्य समूह इत्यर्थे षष्ठ्यन्त नाम्नो यथास्वं प्रत्ययो भवति, तच्च पदं ब्रह्मणि वर्तते । अयमपि प्रभुश्चेति बोध्यम् । दैवमित्यादौ सामान्याधिकारेण केशवणः । प्रत्ययविभाषा वचनात् सर्वत्र वाक्यं समासश्चेति स्मरणात् देवानां समूहः, देवसमूह इत्येतयोश्च स्थितिः । यूनो युवति रित्यनेन लक्ष्म्यां निपातितस्य युवति शब्दस्य वाच्यलिंगत्वसम्भवात्, भगवति नतु ठरामे इत्यनेन पुम्वद्भावे प्रसक्ते तत्र मतानैक्यं दर्शयति—अत्रेत्यादिना । अत्र काशिका पुम्वद्भावं नाङ्गीकरोति । भिक्षादिषु युवते ग्रहणसामर्थ्यादिति तदुक्ता युक्ति र्ज्ञेया । भागवृत्ति स्तु तं मन्यते, भिक्षादिषु युवतेः पाठाभावादिति तत्र च युक्तिः । एतदेव भाष्यसम्मतम् । अथ विशेषविधिभिश्चोदाहरति—आदित्यमित्यादित्रयम् । आदित्यानां समूहः आदित्यः, दित्यदित्येत्यादिना ण्यरामः, विष्णुजनादिति यरामहरः । नृसिंहणः—स्त्रैणं, माधवठः—आग्नेयम् ।

**अमृता०**—३४०. गोत्रादिति । तस्यसमूह इत्यर्थे गोत्रप्रत्ययान्तात् उक्षादेश्चोत्तरे

---

**बाल०**—केदा । तस्य समूह इत्यर्थे केदारादुत्तरो नृसिंहषः चकारान्नृसिंहवुरपि भवति । केदाराणि क्षेत्राणि तेषां समूहः कैदार्यं कैदारकमिति । कैदारिकमिति चेष्यत इति माधवठेन कैश्चिदिति शेषः । गणि । तस्य समूह इत्यर्थे यथासङ्ख्यं नृसिंहयमाधवठाभ्यां सह गणिकाया गाणिक्यं कवचिनः कावचिकमिति द्वे साधुनी भवतः ।।३३८।।

**बाल०**—ब्राह्म । तस्य समूह इत्यर्थे ब्राह्मणमानववाडवपृष्ठेभ्यो यरामः स्यात् । ब्राह्मणानां समूहः ब्राह्मण्यमिति । एवं मानव्यं वाडव्यं पृष्ठ्यमिति । स्तोत्रार्थपृष्ठात् क्रतावित्येके । पृष्ठ्यः षडहो याग इति क्रमदीश्वरः ।। ३३९ ।।

यादवकं गार्गकं औक्षकं औष्ट्रकं औरभ्रकं राजकं राजन्यकं राजपुत्रकं वात्सकं मानुष्यकं आजकं वार्द्धकञ्च ।

## ३४१. केदारान्नृसिंह-यश्च ।

कैदार्यं कैदारकं, कैदारिकञ्चेष्यते । गणिकाया गाणिक्यं, कवचिनः कावचिकं साधुनी ।

---

ब्रह्मणि नृसिंह वुः स्यात् । वो रकादेशः । गोत्रशब्देनात्र अपत्यमात्रं गृह्यते । तेन यदोरपत्यं गोत्रापत्यं वा पुमान् यादवः, ततो यादवानां समूहो यादवकमिति । प्रागुदीव्यतीय सर्वेश्वरादावित्यादिना गोत्रप्रत्ययस्य न महाहरः । एवं माधव यरामान्तात् गार्ग्य शब्दाद् वुः, विष्णुजनादिति यरामहरः, गार्गकम् । उक्षादिभ्य उदाहरति—औक्षकमित्यादीनि । सूत्रोक्तादिपदेन औष्ट्रकमित्यादीनि ग्राह्यानि ।

**अमृता०**—३४१. केदारादिति । तस्य समूह इत्यर्थे केदारशब्दान्नृसिंह यः स्यात्, चकारान्नृसिंहवुरपि भवति । केदाराणां ( क्षेत्राणां ) समूह इति कैदार्यमित्यादि द्वयम् । कैदारिकमिति च माधवठेन कैश्चिदिष्यते । समूहार्थे गणिका शब्दान्नृसिंह येन गाणिक्यमिति तथा कवच शब्दान्माधव ठेन कावचिकमिति साधुनी भवतः ।

---

**बाल०**—ग्राम । तस्य समूह इत्यर्थे ग्रामादिषड्भ्यस्ताप् स्यात् । ग्रामाणां समूहः ग्रामतेति आवन्तत्वाल्लक्ष्म्यां वर्त्तते । एवं गजता जनता बन्धुता सहायता ॥ ३४० ॥

**बाल०**—अह्नः । क्रतुविषये तस्य समूहः इत्यर्थेऽहन् शब्दात् खरामो भवति । लिङ्गसूचनपूर्वकवाक्योदाहरणे आह क्रताविति । क्रतुविषयादन्यत्रतु आह्नमित्यत्र केशवण एव सामान्यात् । किञ्च, अह्नष्टखरामयोरेवेति नियमान्नात्र संसारहरः । व-म सत्सङ्गहीनस्येत्यनेन त्वरामहरः । पशू । तस्य समूह इत्यर्थे यद्यत्प्रत्ययेन इष्टसिद्ध भवति, तत्तत्प्रत्ययेन सार्द्धं पर्शुप्रभृतीनां कार्यिणां पार्श्वप्रभृतीनि साधूनि भवन्ति । न ह्येकस्य समूहः सम्भवतीति केशस्येत्यत्र अश्वस्येत्यत्रच जात्यपेक्षयैकवचनं । तथाच, पर्शूनां पृष्ठास्थ्नां समूह इति निपातात् च्वण् चणावितौ संसारहरश्चिति आदिमर्णेश्वरस्येति वृष्णीन्द्रः पार्श्वं । केशानां समूह इति निपातान्माधवठ नृसिंहयौ कैशिकं कैश्यमिति । अश्वानां समूह इति निपातनात् छरामकेशवणौ अश्त्रोयं आश्वमिति । अस्मिन्नधिकारे अनुदात्तादेरित्यनेन केशवण विधाय दण्डिनां समूहः दाण्डं वन्दिनां समूहः वान्दमिति यज्जुमरादिभिरुदाहृतं तत्त्वस्माकं सब्रह्मचार्यादेः समूहाद्यणि चेत्यनेन सब्रह्मचार्यादेरन्तर्गणत्वात् सिद्धं । एवं खण्डिकादेश्चेत्यनेनापि खण्डिकानां सब्रह्मचार्यादिरन्तर्गणत्वात् सिद्धं । एवं खण्डिकादेश्चेत्यनेनापि खण्डिकानां समूहः खाण्डिकं शूनां समूहः शौवं तथा यौगं वारत्रं हारिद्रं वाडवं हालवन्दं भैक्षुकं शौकं औलूकं आह्नमितिच यदुदाहृतं तदप्यस्माकमौत्सर्गिककेशवणरामेण सिद्धमिति सूत्रकरणं नावश्यकमिति ॥ ३४१ ॥

**३४२. ब्राह्मण-मानव-वाडव-पृष्ठेभ्यो यरामः ।**

**ब्राह्मण्यम् ।**

**३४३. ग्राम-गज-जन-बन्धु-सहायेभ्यस्ताप् लक्ष्म्याम् ।**

**ग्रामता ।**

**३४४. अह्नः खरामः क्रतुविषये ।**

---

**अमृता०**—३४२. ब्राह्मणेति । तस्य समूह इत्यर्थे ब्राह्मणादि चतुर्भ्यो यरामः स्यात् । ब्राह्मणानां समूहो ब्राह्मण्यम् । एवं मानव्यं वाडव्यं पृष्ठ्यमिति ।

**अमृता०**—३४३. ग्रामेति । समूहार्थे ग्रामादि षड्भ्यो लक्ष्म्यां ताप् प्रत्ययः स्यात् । पइत् । ग्रामाणां समूहो ग्रामता । लक्ष्म्यामेव ताप् प्रत्ययस्य प्रवृत्ते र्नतु स्त्रीप्रत्ययान्तरोत्पत्तिः । एवं गजता जनता बन्धुता सहायतेति ।

**अमृता०**—३४४. अह्न इति । तस्यसमूह इति क्रतुविषयेऽर्थे अहन्शब्दात् खरामः स्यात् । खईनः । अह्नष्ट-खरामयोरेवेति संसारहरः—अहीनः । समूहार्थे ब्रह्मत्वे प्राप्ते विशेषमाह—पुंस्ययमिति । अन्यत्रेति क्रतु विषयादन्यत्र तु आह्नमिति सामान्यतः केशवणः । इह तु यथाप्राप्तं नपुंसकमेव । किञ्च ट-खरामयो रेवेति नियमात् नात्र संसार हरः, किन्तु वमसत्सङ्गहीनस्येत्यरामहरः । पर्शूनां पृष्ठास्थ्नां समूह इत्यर्थे केशवणेन पार्श्वमिति साधुः स्यात् । संसार हराभावोऽत्र निपातात् । केशात् नृसिंह ठ-याभ्यां

---

**बाल०**—पाश्या । वृत्तिमाह यावेति । याप् अन्ते येषां ते यावन्ताः, ते आदिर्येषां ते यावन्तादयः । तस्य समूह इत्यर्थे यावन्तादयः सन्तः पाश्यादयश्च भवन्तो लक्ष्म्यां वर्त्तन्ते । वृत्तौ यावाद्यन्ता इति पाठश्चेत् तदा व्याख्याने कष्टाभावः । किम्वा योगविभागात् यावन्तादयश्चेति पृथक् सूत्रं माधव इत्येतन्मात्रं वृत्तिः । तथा सति तस्य समूह इत्यर्थे पाश्यादयश्च यावन्तादयश्च साधवः सन्तः लक्ष्म्यां वर्त्तन्ते । पाशानां समूहः पाश्येति । एवं तृण्यादिगव्यान्ताः । एते सर्वे यावन्ताः । यावन्तादेरादिपदेन त्राप् कड्यापोर्ग्रहणमित्याह त्रावित्यादि । यावन्तादयश्चेत्यस्य वृत्तित्वपक्षे चशब्दस्य प्रयोजनाभावादनुक्तसमुच्चयार्थाङ्गीकारेण रथकड्येत्यस्मात् परत्र हल्या अङ्गार्या नड्या पिटक्या पोट्या गण्या इति षट्कमुदाहार्यं । यावन्तेत्यस्यापि सूत्रत्वपक्षेतु परचकारस्योक्तसमुच्चयार्थत्वात् पूर्वचकारस्यानुक्तसमुच्चयार्थत्वेन वन्येत्यस्मात् परस्मिन्नेव हल्यादिषट्कमुदाहार्यं । अन्यथा चकारद्वयमनर्थकं ॥ ३४२ ॥

**बाल०**—इनी । इनुच ईप्च इनीपौ तावन्ते येषां ते इनीवन्ताः । तस्य समूह इत्यर्थे इनीवन्ताश्च साधवो भवन्ति । खलानां समूहः खलिनी । तथा उलूकिनी पद्मिनी । एवमत्र कुन्दुमिनी नलिनी कुमुदिनीत्याद्यप्युदाहार्यं ॥ ३४३ ॥

क्रतौ अह्नां समूहः अहीनः, पुंस्ययम्। अन्यत्र आह्नम्। पर्शूनां पार्श्वं केशस्य कैशिकं कैश्यं, अश्वस्याश्वीयमाश्वञ्च साधूनि।

**३४५. पाश्यादयश्च लक्ष्म्याम्।**

यावाद्यन्ताः साधवः। पाश्या तृण्या धूम्या याम्या खल्या वन्या गव्या, त्राप् गोत्रा। कड्या आप्—रथकड्या रथ्या।

**३४६. इनीवन्ताश्च।**

खलिनी उलुकिनी पद्मिनी।

---

कैशिकं कैश्यञ्च साधूभवतः। तथा अश्वात् निपातेन छ केशव णौ स्याताम्। अश्वानां समूहः—अश्वीयं आश्वञ्च।

अमृता०—३४५. पाश्येति। वृत्तिमाह—यावाद्यन्ता इति। याप् आदयः प्रत्यया अन्ते येषां ते यावाद्यन्ताः साधवो भवन्ति। आदि पदेन कड्यापोर्ग्रहणम्। तस्य समूह इत्यर्थे पाश्यादयो यावाद्यन्ता अर्थाल्लक्ष्मीसिद्धा एव निपात्यन्त इत्यर्थः। पाशानां समूहः पाश्या। एवमन्ये च ज्ञेयाः। गोशब्दात् त्राप् च, तेन गव्या गोत्रा। रथात् कड्या आप् च, तेन रथकड्या रथा, याप च, रथ्येति।

अमृता०—३४६. इनीवन्ता इति। इन् च ईप च इनीपौ, तौ अन्ते येषां ते इनीवन्ताः। तस्य समूहइत्यर्थे इनीवन्ताश्च साधवः स्युः। खलानां समूहः खलिनी। यावन्तः खल्या तु दर्शितः पूर्वत्र। उलुकिन्यादयस्तु नित्यमेवेति ज्ञेयम्। एवञ्च कुमुदिनी नलिनी कुटुम्बिनीत्यादयः।

---

बाल०—चरु। तस्य समूह इत्यर्थे चरणेभ्यो धर्मवत् प्रत्ययाः स्युः। कठानां समूहः काठकमित्यत्र गोत्रचरणाभ्यां वुर्नृसिंह इति वुः। छान्दोग्यमित्यत्र छन्दोगौक्थिक यज्ञिक वह्वृच नटेभ्यो ण्यराम इति ण्यः। आथर्वणमित्यत्र आथर्वणिकस्येकलोपश्चेति केशवण इकलोपश्च॥ ३४४॥

बाल०—अचि। तस्य समूह इत्यर्थे अचितु हस्तिधेनुभ्यो नृसिंहठः स्यात्। अपूपानां समूहः आपूपिकं। तथा हास्तिकं। चतुर्भुजान्तादितीत्यनेन ठस्य कः, धेनुकमिति। प्रकरणमुपसंहृति उक्तमिति समूहेऽर्थे उदाहरणमुक्तमित्यर्थः॥ ३४५॥

बाल०—तद। वृत्तिमाह अत्रेति। अत्रार्थे तदधीते नाम्नो यथाविहितं प्रत्ययः स्यादित्यर्थः। अयमपि प्रभुश्च एवमुत्तरत्रापीत्युक्तत्वात्। किञ्च, अधीत इति कर्त्तरि विहिताच्युत ते सिद्धं। वेत्तिप्रभृतीनां वेदादयो न वेत्यनेन निपातनाद्वेदेत्यपि कर्त्तरि विहिततिप् सिद्धं। अतस्तत्तत्क्रियाकर्त्तैव प्रत्ययवाच्यः। यत्तु तच्छब्दवाच्यं तस्मात् प्रत्ययः। अधिकारसूत्रे प्रथमनिर्दिष्टविष्णुभक्त्यन्तादित्युक्तेः। वाक्यद्वयस्य पृथक्करणात् तदध्ययनकर्त्तरि तद्वेदनकर्त्तरि चप्रत्ययो वाच्यः। ननु युगपत् तदध्ययनवेदनकर्त्तर्येव।

## ३४७. चरणेभ्यो धर्मवत् ।

काठकं छान्दोग्यं अथर्वणम् ।

---

अमृता०—३४७. चरणेभ्य इति । तस्यसमूह इत्यर्थे चरणेभ्योऽर्थाद् वेदैकदेशेभ्यो धर्मवत् प्रत्ययाः स्युः । चरणाद्धर्माम्नायो रिति वक्ष्यमाणेन वक्ष्यमाणेन यथा धर्मार्थे नृसिंह वुरामादयः प्रत्यया भवन्ति तथैव समुहार्थेऽपि त एव भवन्तीत्यर्थः । काठकमिति —कठमधीयतेविदन्तिवेति केशव णः, ततः कठ-चरकाभ्यामिति तस्य महाहरः—कठाः, तेषां समूह इति गोत्रचरणाभ्यामिति नृसिंह वुः, वोरकः—काठकम् । एवं कालापकम् । छान्दोग्यमिति—छन्दोगौक्थिकेत्यादिना ण्यरामः । आथर्वणमिति—आथर्वणिकस्येक-लोपश्चेति केशवण इक लोपश्च ।

---

वाक्यभेदेऽप्येकयोगकरणादध्ययनसाहचर्याच्च यस्य वेदनमध्ययनञ्च सम्भवति तस्मादेव प्रत्ययः । अस्मादेव महापुरुषादेर्वाचकान्मुख्यात् सङ्कर्षणादिशब्दान्न प्रत्ययः । यतः सङ्कर्षणादेर्वेदनमेव सम्भवति नत्वध्ययनं । यद्युपचारात् सङ्कर्षणादिर्ग्रन्थे वर्त्तते तदा तदादेरध्ययनं वेदनञ्च सम्भवतीति गौणादपि प्रत्ययः स्यात् तेन सङ्कर्षणादिशब्देन तत्प्रतिपादकग्रन्थ उच्यते यदा तदा तमधीते वेद वेति सङ्कर्षण इत्यादि । वैयाकरण इति सामान्यतः केशवणः वृष्णीन्द्रस्थानचतुःसनादेशेत्यनेन ऐयादेशः । ज्योतिरधीते वेद वेति ज्यौतिषः विष्णुपदान्तत्वाभावादत्र न ऐयादेशः । छन्दोऽधीते वेद वेति छान्दस इति । एवमुत्सर्गं सिद्धत्वात् यथासम्भवमन्येऽपि केशवणान्ता उदाहार्याः ॥ ४४६ ॥

बाल०—क्रतु । तदधीते वेद वेत्यर्थे क्रतुविशेषात् उक्थादिपञ्चभ्यश्च अकल्प-पूर्वाल्लक्षणकल्पसूत्रान्ताच्च परो माधवठो भवति । अग्निष्टोममधीते वेद वेति आग्निष्टो-मिक इति अग्निष्टुदादयो यज्ञे इत्यनेनात्र षत्व । अग्निष्टोम इति क्रतुविशेषस्तस्य कर्म-स्वरूपत्वादध्ययनं न सम्भवति वेदनन्तु सम्भवत्येव तस्मात्तत्सहचरितग्रन्थाध्ययनद्वारेण तदध्ययनं तद्वेदनञ्च वक्तव्यं । क्रतुविशेषादिति पृथङ्निर्देशात् क्रतुविशेषमात्रवाचकस्यात्र ग्रहणं, तेन ज्यौतिष्टोमिक इत्यादिरपि । उक्थादेरुदाहरणमौक्थमधीते वेद वेत्यर्थः पूर्ववत् । उपचारादत्रोक्थशब्द औक्थिक्यार्थे इति जुमरः । यद्यप्युक्थशब्दः सामविशेष-मेवाभिधत्ते तथाप्यत्रौक्थिक्यार्थः । औक्थिक्यस्तु उक्थाख्यसाम्नो लक्षणग्रन्थः प्रति-पादितस्तस्मात् सामवाचके उक्थशब्दे नायं प्रत्ययोऽनभिधानादित्यभिप्राय इति तट्टीका-कृच्च । सामविशेषवाचकस्याप्युक्थस्याध्ययनं वेदनञ्च सम्भवतीत्यस्माकं ग्रन्थकृतातु विशेषो न कृतस्तेनोभयत्रापि प्रत्ययः । इत्यादीत्यादिपदेन याज्ञिकः लौकायतिकः नैयायिकः नैयासिक इति । लक्षणान्तादेरुदाहरणं दर्श्यते तथेति । गवां लक्षणं गोलक्षणं तदधीते वेद वेति गौलक्षणिकः । एवं प्राथमकल्पिकः ब्राह्मसूत्रिक इति । नेहेति कल्प-पूर्वत्वादिति शेषः । यद्यपि काल्पसूत्र इत्येव प्रत्युदाहृत तथापि अकल्पपूर्वादित्यस्य लक्षणान्तकल्पान्तयोरपि विशेषणत्वात् काल्पलक्षणः कालकल्प इति चोदाहार्यं । किम्वा अकल्पपूर्वादित्यस्य लक्षणान्तादेर्विशेषणत्वेऽपि शिष्टाचारात् काल्पसूत्र इत्येव प्रत्युदाहृतो नान्याविति ॥ ३४७ ॥

## ३४८. अचित्त-हस्ति-धेनुभ्यो नृसिंह ठः ।

आपूपिकं हास्तिकम् । चतुर्भुजान्तादिति—धैनुकम् । उक्तं समूहे ।

## ३४९. तदधीते वेद वा ।

अमृता०—३४८. अचित्तेति । तस्य समूह इत्यर्थे अचित्तवाचिशब्दात् हस्तिन स्तथा धेनोश्चोत्तरे नृसिंह ठः स्यात् । तत्रापूपिकमिति अचित्तोदाहरणम् । हस्तिनां समूहो हास्तिकम्, नान्तस्येति संसारहरः, चतुर्भुजान्तादित्यादिना ठस्य कः—धैनुकम् । समूहाधिकारः सम्पूर्णः ।

अमृता०—३४९. तदिति । तदधीते तद्वेद वेत्यर्थे नाम्नो यथाविहितं प्रत्ययः स्यादित्यधिकारः । तच्छब्द वाच्यात् कर्मपदात् प्रत्ययः, किन्तु तत्तत् क्रियाकर्त्ता हि

बाल०—विद्या । तदधीते वेद वेत्यर्थे विद्यान्ताच्च माधवठो भवति । अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तात्तु न भवति । आख्या । तदधीते वेद वेत्यर्थे आख्यानाख्यायिकेतिहासपुराणेभ्यश्च माधवठः स्यात् । वस । पूर्ववदर्थे वसन्तादिभ्यश्च माधवठो भवति । तत्र विद्यान्ताद्यथा । वैष्णवविद्यामधीते वेद वेति वैष्णवविद्यिकः । एवं शैवविद्यिकः ब्राह्मविद्यिक इत्यादि । नेह निषेधादिति शेषः । अङ्गविद्या व्याकरणादि तदधीते वेद वेति सामान्यात् केशवणः आङ्गविद्यः । तथा क्षात्रविद्यः धार्मविद्यः । एवं त्रैविद्य इति तु त्र्यवयवा विद्या त्रिविद्या इत्यस्मात् योगविभागादित्यनेन श्यामरामसिद्धात् केशवणं विधाय साधनीयं अन्यथा त्रिराम्याश्चेत्यनेन प्रत्ययस्य महाहरः स्यात् । ननु यद्यङ्गादिपूर्वादन्यस्माद्विद्यान्तान्माधवठस्तर्हि कथं चातुर्विद्य इत्याक्षेपे समादधाति चातुर्विद्य इति । चतसृषु विद्यासु कुशल इति तद्धितार्थत्रिरामी । आख्यानेत्यस्य रूपाक्षि यथा आख्यानाख्यायिकेत्यनयोः स्वरूपस्य न ग्रहणं किन्तु वाचकस्यैव सम्भवत्वात् । आख्यानं ग्रन्थान्तर्भूतमुपक्षेपागतस्य वर्णनं, आख्यायिकातु प्रबन्धविशेषः । यवक्रीतमधिकृत्य कृतमाख्यानं यावक्रीतं तदधीते वेद वेति यावक्रीतिकः । वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता तामधीते वेद वेति वासवदत्तिकः । यावक्रीतेत्यादेः प्रत्येकमप्याख्यानाख्यायिकात्वं न यथाक्रममित्यपि बोद्धव्यं । उक्तञ्चान्यैः । यवक्रीतं वासवदत्ताञ्चाधिकृत्य कृतमाख्यायिका चेति । इतिहासमधीत इत्यादि ऐतिहासिकः । एवं पौराणिकः । वसन्त ऋतुविशेषस्तस्याध्ययनं न सम्भवति वेदनन्तु कष्टकल्पनया घटते तेन यो वसन्ते नियमेन पठ्यते यत्र वा वसन्तो वर्ण्यते स वसन्तसहचरितग्रन्थस्तमधीत इत्यादि वासन्तिक इति । वसन्त वर्षा शरद् हेमन्त शिशिर प्रथमगुण चरमगुण आत्मगुण आथर्वण अथर्वन् पुनरुक्त चर्चा क्रमेतर श्लक्ष्ण संहिता वृत्ति गण आयुर्वेद द्विपदा त्रिपदा ज्योतिष अनुपद अनुकल्प लक्ष लक्षण अनुषु संघातेति वसन्तादिर्गणः । किञ्चात्र वर्षाच शरच्चेति रामकृष्णं समासान्तारामप्रत्ययञ्च कृत्वा वर्षाशरदेत्यरामान्तपाठो न्यासे व्यवस्थितः । शरदिति विष्णुजनान्तं शब्दद्वयञ्च एतदन्येषां मतं ॥ ३४८ ॥

अत्रार्थे यथाविहितं स्यात् । व्याकरणमधीते वेद वा वैयाकरणः ज्यौतिषः छान्दसः ।

**३५०. क्रतुविशेषादुक्थ-यज्ञ-लोकायत-न्याय-न्यासेभ्यो लक्षण-कल्पसूत्रान्ताच्चाकल्पपूर्वात् माधवठः ।**

आग्निष्टोमिकः औक्थिक इत्यादि । तथा गौलक्षणिकः प्राथमकल्पिकः ब्राह्मसूत्रिकः । नेह—कालपसूत्रः ।

**३५१. विद्यान्ताच्च नत्वङ्गक्षणधर्म-त्रि-पूर्वात्, आख्यानाख्यायिकेतिहास-पुराणेभ्यश्च, वसन्तादिभ्यश्च ।**

---

प्रत्ययेन बाच्यो भवतीति ज्ञेयम् । वैयाकरण इति—सामान्यतः केशवणः, वृष्णीन्द्रस्थान चतुःसनादेशेत्यादिना ऐय् । ज्योतिरधीते वेद वेति पूर्ववत् केशवणः । एवं छान्दस इति च ।

**अमृता०**—३५०. क्रत्विति । तदधीते वेद वेत्यर्थे क्रतुविशेषात्, उक्थादि पञ्चभ्य स्तथा अकल्प पूर्वात् लक्षण कल्प सूत्रान्ताच्च माधव ठः स्यात् । सर्वत्र ह्यर्थद्वयं प्रयोक्तव्यमिति तु नियमाभाव इति दर्शयति—आग्निष्टोमिक इति । क्रतुविशेषस्याग्निष्टोमस्याध्ययनायोगाद् वेदनमेवात्रार्थः । एवं याज्ञिक इति च । उक्थ प्रभृतिभ्यस्तु द्वयोरेवार्थयोः प्रत्ययो ज्ञेयः । इत्यादि पदेन—लोकायतिकः नैयायिकः नैयासिक इति । गवां लक्षणं गोलक्षणं, तद् वेत्ति, तथा तन्नामानं ग्रन्थमधीते वा गौलक्षणिकः । एवं प्राथमकल्पिक इति द्वयम् । कालपसूत्र इति कल्पशब्दपूर्वत्वान्नमाधवठः, किन्तु सामान्येन केशवणः । एवं कालपलक्षणः कालपकल्प इति च ।

**अमृता०**—३५१. विद्येति । तदधीते वेदवेत्यर्थे विद्यान्तशब्दात् माधवठः स्यात्, किन्तु अङ्ग-क्षत्र-धर्म-त्रि-पूर्वाद् विद्यान्तादसौ न भवति । तथा आख्यातादि चतुर्भ्यो

---

**बाल०**—पदो । तदधीत इत्यादि पूर्वोक्तेऽर्थे केशवठेन सह पदोत्तरपदस्य पदोत्तरपदिकः साधुः । भाष्यवृत्तिकृद्भागवृत्तेरप्येतदभीष्टं जयादित्येन त्वेतदन्यथा व्याख्यातं पदशब्द उत्तरस्थितो यत्र तत् पदोत्तरपदं, तेनैव पूर्वपदिक इति पदोत्तरपदिक इत्यप्युदाहृतञ्च । शत । तदधीत इत्यादि पूर्वोक्तेऽर्थे केशवठेन सार्द्धं शतपथषष्टिपथयोः शतपाथिकषष्टिपथिकौ साधू भवतः ॥ ३४९ ॥

**बाल०**—क्रमा । क्रमादिभ्यः पूर्वोक्तेऽर्थे वुर्भवति । क्रममधीते वेद वेति वुरकः क्रमकः । तथा पदमधीत इत्यादिपदकः । प्रकारान्तरेण क्रमादिगणं दर्शतति एवमिति । अत्र सामन्त्रित्यपि कश्चित् पठति ॥ ३५० ॥

विद्यान्तात्-वैष्णवविद्यिकः। नेह—आङ्गविद्यः। चातुर्विद्य इति तु कुशलार्थे। आख्यानेति—यावक्रीतिकः, वासवदत्तिकः। ऐतिहासिकः पौराणिकः वासन्तिकः।

**३५२. पदोत्तरपदिकः साधुः, शतपथिक-षष्टिपथिकौ केशवठेन साधू।**

---

वसन्तादिभ्यश्च माधव ठो भवति। वैष्णव विद्या भक्तिः, तां वेत्ति, तदधिकृतग्रन्थमधीते वेति वैष्णव विद्यिकः। एवं ब्राह्मविद्यिकः धानुर्विद्यिकः धानुर्विद्यिक इत्यादि। अङ्गविद्या शिक्षा कल्प व्याकरणादि वेदाङ्गविषयिनी विद्या। अत्राङ्ग पूर्वत्वान्न माधव ठः, किन्तु केशवणः। एवं क्षात्रविद्यः, धार्मविद्यः, इति च।

ननु चातुर्विद्य इत्यत्र कथं न माधव ठः? इत्याशङ्क्य समाधत्ते—कुशलार्थ इति। चतसृषु विद्यासु कुशल इत्यर्थे केशवणः। आख्यानेति—आख्यानं ग्रन्थान्तर्भूतं प्रसङ्गागत वस्तुवर्णनम्, आख्यायिका प्रबन्धविशेष इति भेदः। आख्यानाख्यायिकयो र्नहि स्वरूपग्रहणं किन्तु वाचकस्यैवेति दर्शयति—यावक्रीतिक इति। यवक्रीतमधिकृत्य कृतमाख्यान याव-कीतं, तदधीते वेद वेति यावक्रीतिकः। वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता, तामधीते वेद वेति वासवदत्तिकः। इतिहासः पुरावृत्तः, तमधीत इत्याद्यर्थे ऐतिहासिकः: एवं पौराणिक इति। वसन्त स्तद्विषयवर्णित ग्रन्थविशेषस्तमधीत इति वासन्तिकः।

**अमृता०**—३५२. पदेति। तदधीते वेद वेत्यर्थे केशवठेन सह पदोत्तरपद शब्दस्य पदोत्तरपदिक इतिसाधुः स्यात्, तथा शतपथ षष्टिपथयोः केशवठेन शतपथिक षष्टिपथिकौ साधूभवतः। सामान्येन केशव णे प्राप्ते तदपवाद केशवठस्य विधानं निपातफलम्।

---

**बाल०**—अनु। पूर्वोक्तेऽर्थेऽनु ब्राह्मणीति नान्तः साधूः। नान्त इति सर्वत्र पुस्तकेषु दृश्यते। किन्त्वानुब्राह्मणीनन्त इति पाठश्चेत्तदा सुगमस्तथा सति ब्राह्मणाख्यो वेदैकदेश-स्तत्सदृशो ग्रन्थोऽनुब्राह्मणशब्देनोच्यते सादृश्येऽव्ययीभावात्। ततोऽनुब्राह्मणशब्दान्नि-पातादिन् प्रत्ययः। अस्त्यर्थेन इना सिद्धमिति चन्द्रेन यदुक्तं यदयुक्तं तदधीते वेद वेत्यर्थे उत्सर्गसिद्धकेशवणेन बाधा स्यात्॥ ३५१॥

**बाल०**—सर्वा। तदधीते वेद वेत्यर्थे सर्वादेः सर्वपूर्वात् सादेः सरामपूर्वाच्च नाम्नः त्रिराम्याश्च सामान्यसिद्धकेशवणस्य महाहरः स्यात्। प्रोक्त। पूर्वोक्तेऽर्थे प्रोक्तप्रत्ययान्ताच्च नाम्नस्तद्विधकेशवणस्य महाहरो भवति। सङ्ख्या। सङ्ख्या प्रकृतिर्यस्य तत् सङ्ख्या-प्रकृति तच्च तत् सूत्रञ्चेति सङ्ख्याप्रकृतिसूत्रं तस्मात् क उद्धवो यस्य तत् कोद्धवं तस्मात्। कोद्धवात् सङ्ख्याप्रकृतिपूर्वाच्च तद्विधकेशवणस्य महाहरः स्यात् पूर्वोक्तेऽर्थे। सर्ववेदमधीते वेद वेति सर्ववेदो वार्त्तिको ग्रन्थविशेषः तेन सह वर्त्तमानो यो ग्रन्थः स सवार्त्तिकः। कल्पशब्द. कल्पोपलक्षितग्रन्थविशेषः पञ्च कल्पानधीते वेद वेति पञ्चकल्पः। अत्र तद्धितार्थे

**३५३. क्रमादिभ्यो वुः ।**

क्रमकः पदकः । एवं शिक्षा मीमांसोपनिषद्भ्यः ।

**३५४. अनुब्राह्मणी नान्तः साधुः ।**

**३५५. सर्वादेः सादे स्त्रिराम्याश्च महाहरः, प्रोक्तप्रत्ययान्ताच्च, संख्याप्रकृतिसूत्राच्च कोद्धवात् ।**

सर्ववेदः सवार्त्तिकः पञ्चकल्पः । पाणिनिना प्रोक्तं पाणिनीयं, तदधीते वेद वा पाणिनीयः । अष्टकं पाणिनिसूत्रं, तदधीते वेद वा अष्टकः । तदधीते वेदेति निवृत्तम् ।

---

**अमृता०**—३५३. क्रमेति । तदधीते वेद वेत्यर्थे क्रमादिभ्यो वुः स्यात्, वोरकः । अइ-द्वयस्येत्यरामहरः—क्रमकः । क्रमादेर्गणं निर्दिशति—एवमित्यादिना । अत्र सामन् शब्दश्च केचित् पठन्ति ।

**अमृता०**—३५४. अनु इति । प्रोक्तार्थेऽनुब्राह्मणशब्दादिन् प्रत्ययेन अनुब्राह्मणीति साधुः स्यात् । केशवणस्यापवादार्थं साधुत्वम् । इहब्राह्मणो वेदैकदेशः, तत् सदृशो ग्रन्थोऽनुब्राह्मणः ।

**अमृता०**—३५५. सर्वादेरिति । तदधीते वेद वेत्यर्थे सर्वादेः ( सर्व पूर्वात् ), सादेः सरामपूर्वात् नाम्न स्तथा त्रिराम्याश्च सामान्यप्राप्त केशव णस्य महाहरो भवति । प्रोक्तेति—तेनप्रोक्तमित्यर्थे विहितप्रत्यान्ताच्च नाम्न उक्तार्थे केशवणस्य महाहरो भवति । संख्येति—कउद्धवो यस्य स कोद्धवः । संख्या प्रकृति मूलं यस्य तत् संख्याप्रकृति, तच्च तत्सूत्रञ्च संख्याप्रकृतिसूत्रम् । कोद्धवात् संख्या प्रकृति सूत्राच्च नाम्न स्तदधीत इत्याद्यर्थे केशव णस्य महाहरो भवति ।

सर्ववेदमधीते वेद वेति केशवणः, तस्यात्र महाहरश्च । वार्त्तिको वृत्ति ग्रन्थविशेषः, तेन सह वर्त्तमानः सवार्त्तिकः, तमधीते वेद वेति पूर्ववन्महाहरः । कल्पो वेदाङ्गविशेषः । पञ्च कल्पानधीत इत्याद्यर्थे त्रिरामी । एवमेककल्प इत्यादि । अष्टौ अध्याया यत्र तदष्टकं पाणिनि सूत्रम् । एवं द्वादशकाः मीमांसकाः पञ्चकाः सौपद्मा इत्यादयः । समाप्तोऽध्ययनाद्यधिकारः ।

---

त्रिरामी । एकमेककल्पः द्विकल्प इत्यादि । शेषद्वयस्य वाक्योदाहरणे स्पष्टे । पाणिनीय-मित्यादिवृष्णीन्द्राच्छरामः ॥ ३५२ ॥

**बाल०**—तेन । वृत्तिमाह अत्रेति । तेन दृष्टे सामनि वाच्ये यत्तत्पदवाच्यं तस्मान्नाम्नो यथाविहितं प्रत्ययः स्यादिति निर्गलितोऽर्थः । अयमपि प्रभुश्च । वाशिष्ठमिति सामान्यात् केशवणः । अग्निना दृष्टं साम आग्नेयं । अत्राग्निकलिभ्यां माधवढ इति ढः ॥ ३५३ ॥

**बाल०**—वाम । तेन दृष्टं सामेत्यर्थे यरामेण सह वामदेवस्य वामदेव्यं साधू ॥३५४

**३५६. तेन दृष्टं साम ।**

अत्रार्थेऽपि यथाविहितं स्यात् । वशिष्ठेन दृष्टं साम वाशिष्ठं आग्नेयम् ।

**३५७. वामदेव्यं साधु ।**

**३५८. दृष्टे सामनि जाते च केशवणो वा चिदिष्यते ।**

औशनंसाम औशनसं वा, शातभिषः शातभिषजो बालः ।

**३५९. गोत्राद् वुनृंसिंहः ।**

गार्गकम् । दृष्टंसाम निवृत्तम् ।

---

**अमृता०**—३५६. तेनेत्यधिकार सूत्रम् । तेन दृष्टमित्यर्थे साम्निवाच्ये तत् पद-वाच्यात् नाम्नो यथाविहितं प्रत्ययः स्यात् । दृष्टपदेनालोचितार्थो बोध्यतेऽत्र । वाशिष्ठ-मिति सामान्येन केशवणः । आग्नेयमिति—अग्निकलिभ्यां माधव ढः ।

**अमृता०**—३५७. वामेति । तेन दृष्टं सामेत्यर्थे यरामेण वामदेवस्य वामदेव्यमिति साधु स्यात् । पूर्ववत् निपाताभिप्रायो बोध्यः ।

**अमृता०**—३५८. दृष्टेति । तेन दृष्टमित्यर्थे, तत्र जात इत्यर्थे च विहितो यः केशवणः स चित् वा इष्यते, तेन संसारहरः स्यादिति भावः । उशनसा दृष्टं सामेति संसारहरपक्षे औशनं, तदभावे औशनसम् । एवं विंशते स्ति हरः—वैंशं वैंशतमिति । शतभिषजि जातः शातभिष इत्यादि द्वयम् ।

**अमृता०**—३५९. गोत्रादिति । तेन दृष्टं सामेत्यर्थे गोत्र प्रत्ययान्तात् नृसिंह वुः स्यात् । गार्ग्येण दृष्टंसामेति बुः, वोरकः, विष्णुजनात्तद्धितेति यरामहरः—गार्गकम् । दृष्टं सामेत्यधिकारः समाप्तः ।

---

**बाल०**—दृष्टे । दृष्टे सामनि जाते चार्थे विहितकेशवणो वा चिदितीष्यते वक्तव्य-मित्यर्थः । उशनसा दृष्ट सामेति औशनमित्यादिद्वयं । एवं विंशतेस्तिहरश्चितीत्यनेन वैंशं वैंशतं वेति । प्रसङ्गाज्जातार्थेऽपि दर्शयति शातभिष इत्यादि शतभिषजो जात इत्यर्थः ॥ ३५५ ॥

**बाल०**—गोत्रा । तेन दृष्टं सामेत्यर्थे गोत्रप्रत्ययान्तान्नृसिंहो वुर्भवति । गार्ग्येण दृष्टं सामेति वुः विष्णुजनात्तद्धितेति यरामहरः ॥ ३५६ ॥

**बाल०**—तेन । वृत्तिमाहात्र चेति । अत्रार्थेच तत्पदवाच्यान्नाम्नो यथाविहितं प्रत्ययाः स्युः । अयमपि प्रभुश्च । वास्त्र इत्यत्र सामान्यात् केशवणः ॥ ३५७ ॥

**बाल०**—पाण्डु । तेन परिवृतो रथ इत्यर्थे पाण्डुकम्बलात् इन् भवति । पाण्डु-कम्बलेन परिवृतो रथः पाण्डुकम्बलीति ॥ ३५८ ॥

## ३६०. तेन परिवृतो रथः ।

**अत्र च यथास्वं प्रत्ययाः स्युः । वस्त्रेण परिवृतोरथो वास्त्रः ।**

## ३६१. पाण्डु कम्बलादिनिः ।

**पाण्डुकम्बली ।**

## ३६२. द्वैप-वैयाघ्रौ तच्चर्मणा परिवृते रथे साधू ।

---

**अमृता०**—३६०. तेनेत्यर्थाधिकारः । रथश्चेद् वाच्य स्तर्हि तेनपरिवृत इत्यर्थे तत् पदवाच्यान्नाम्नो यथा विहितं प्रत्ययःस्यात् ।

**अमृता०**—३६१. पाण्डिवति । तेतपरिवृत इत्यर्थे रथे वाच्ये पाण्डुकम्बल शब्दादुत्तरे इनिः स्यात् । पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बली ।

**अमृता०**—३६२. द्वैपेति । तयो द्विप-व्याघ्रयोश्चर्म तच्चर्म, तेन परिवृते रथे वाच्ये

---

**बाल०**—द्वैप । तयोर्द्वीपव्याघ्रयोश्चर्म तच्चर्म तेन परिवृते रथे वाच्ये केशवणेन सह द्वीपव्याघ्रयोर्द्वैपवैयाघ्रौ साधू भवतः । तच्चर्मणेत्यस्य साम्याय द्वीपव्याघ्रशब्दाभ्यां लक्षणया द्वीपचर्म व्याघ्रचर्मणी लक्ष्येते । किं वात्र निपातनादुभयत्र चर्मणोऽप्रयोगः । केशवण एवात्र निपातफलं । ऐयादेशस्तु वृष्णीन्द्रस्थानचतुःसनेत्यनेन सिध्यत्येव । स्वमतं परेषां मतेन परिपुष्णाति शकटेति । शकटादि अपि रथत्वेन पण्डिता मन्यन्ते इति क्षीरस्वाम्याह । टित्वादीप् द्वैपीति । एतद्वाच्यश्च दर्शयति गन्त्रीत्यादि ॥ ३५९ ॥

**बाल०**—नक्ष । अत्रापीति विवरणं । नक्षत्रेण युक्तः काल इत्यर्थे नक्षत्रवाचकाच्छदाद्यथायोग्यं प्रत्ययः स्यात् । अयमेव विभुश्च । पुष्येण युक्तमित्यत्र अह इति शेषः । तिष्यपुष्ययोर्नक्षत्राणीत्यनेन यरामहरः पौषमह इति । एवमिति । मघया युक्ता रात्रिः माघी रात्रिरित्यनयोः सामान्यात् केशवणः । एवमन्यान्यप्युह्यानि । किञ्च, सामीप्यादत्र नक्षत्रशब्दश्चन्द्रवाचीति जुमरः । ननु कालस्य नित्यत्वात् विभुत्वाच्च सर्वदैव नक्षत्रेण योगस्तत् कथं पौषादिभिः कालविशेषोऽभिधीयतामिति चोद्यपरीहारमाह सामीप्यादिति । यदा यन्नक्षत्रसमीपवर्त्ती चन्द्रो भवति तदा तन्नक्षत्रनामा भवतीति । सामीप्यात् यथा, गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गाशब्देन तत्समीपतीरमधीयते तथा नक्षत्रेणापि चन्द्रोऽभिधीय इति विशिष्टसमीपवर्त्तिना चन्द्रसमस, कालस्य योगः सम्भवति व्यभिचरति चेति । तट्टीका त्विति विशेषो गोस्वामिना न कृतः प्रयोजनावश्यकाभावात् । कालः किं किमर्थं कालविधायित्वा भावात् पुष्येणेति वाक्यस्यैव विश्रान्तिः ॥ ३६० ॥

**बाल०**—राम । नक्षत्रेण युक्तः काल इत्यर्थे रामकृष्णसमासान्तात् नक्षत्रात् छरामो वा भवति । सन्निहितयोरेव नक्षत्रयोः रामकृष्णेऽयं विधिः न दूरान्तरितयोः यतस्तयोरेकस्मिन्नहनि चन्द्रमसापि सामीप्यं न घटते । राधाच अनुराधाच राधानुराधे ताभ्यां युक्तः कालस्तद्विशेषो बा राधानुराधीय इत्यादि । पक्षे सामान्यतः केशवणः राधानुराध इत्यादिच ॥ ३६१ ॥

शकटाद्यपि रथत्वेन मन्यन्त इति क्षीर स्वामी। द्वैपीगन्त्री, द्वैपगर्ण इति। परिवृतो निवृत्तः।

## ३६३. नक्षत्रेण युक्तः कालः।

अत्रापि यथास्वम्। पुष्येण युक्तं पौषमहः। एवं माघी रात्रिः। कालः किम्—पुष्येण युक्तः शशी।

---

केशवणेन सह द्वीप वैयाघ्रौ साधूभवतः। ऐयादेशस्तु सिद्ध एव। रथत्वेन मण्यत इति—पश्चिमदेशे माथुरादौ प्रसिद्ध एव। गन्त्रीति द्वैपीत्यस्य वाच्यः। रथ विशेष इत्यर्थः। द्विपो व्याघ्र जातिभेदः। एवमर्णश्च रथविशेषो वाच्यः। समाप्तोऽयमधिकारः।

**अमृता०**—३६३. नक्षत्रेणेत्यधिकारः। नक्षत्रेण युक्तः काल इत्यर्थे नक्षत्र वाचकान्नाम्नो यथाविहितं प्रत्ययः स्यात्। पौषमित्यादौ सामान्यतः केशवणः। तिष्य-पुष्ययो र्नक्षत्राणीति यरामहरः। प्रत्युदाहरति—पुष्येण युक्तः शशीति। अत्र कालवाच्याभावान्न प्रत्ययः किन्तु वाक्यमेव तिष्ठति।

---

**बाल०**—पौषा। नक्षत्रयुक्तायाः पौर्णमास्या अधिकारेण मासे वाच्ये पौषादयः प्रयोगा निपात्यन्ते। अह्नो रात्रेश्च यथा कालविशेषवाचिता तथा पौर्णमास्या अपीति वाक्येन प्रदर्शयति पौषीति। पुष्येण युक्ता पौर्णमासी पौषी सा अत्र मासे इति निपातात् केशवणः अ इद्वयस्येतीरामाहरः पौष इति। एवमिति माघी पौर्णमास्यत्र माघः। फाल्गुणी पौर्णमास्यत्र फाल्गुण इत्याद्या एकादश। सर्वत्रैव पौर्णमासीत्यस्याप्रयोगः पौष्यादेर्वाच्यत्वेन निर्देशात्। पुष्ययुक्ता पौर्णमासी पौषी मासेतु यत्र सा। नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे इत्यमरः॥ ३६२॥

**बाल०**—यत्र। इदानीं विशेषप्रतिपादकानि चत्वारि सूत्राणि युगपदाह यत्रेत्यादिना। यत्र यत्र चैवम्बिधानि कार्याणि सच सच स्मरहरसंज्ञ इत्यन्वयः। यत्रेति। यत्र महाहरे प्रकृतेर्लिङ्गस्य तद्वचनस्य प्रकृतेर्वचनस्यैकत्वादेश्च प्रत्यावृत्तिः पुनरावृत्तिर्भवति स महाहरः स्मरहरसङ्ज्ञः स्यात्। यत्र चेति। अत्र चशब्दस्यानुक्तसमुच्चयार्थत्वादुत्तरत्रापि यत्र यत्रेत्यध्याहार्यं। यत्र पुनर्महाहरे हरीतक्यादिषु प्रयोगेषु तल्लिङ्गस्यैव हरितक्यादीनां लिङ्गस्यैव प्रत्यावृत्तिर्न वचनस्य स चापि महाहरः स्मरहरसङ्ज्ञः। खलेति। यत्र खलतिकादिषु तद्वचनस्यैव प्रत्यावृत्तिर्न तल्लिङ्गस्य स चापि स्मरहसङ्ज्ञः। समेति। बहुवचन विषयो गोचरो यस्य तद्बहुवचनविषय तच्च तदुत्तरपदञ्चेति बहुवचनविषयोत्तरपदं तस्य सम्बन्धो विद्यते ययोस्तयोः, यत्र समासेतु सति बहुवचनविषयोत्तरपदसम्बन्धिनोरेव तयोर्लिङ्गवचनयोः प्रत्यावृत्तिः स इत्यादिः पूर्ववत्। अयं लुप्संज्ञ इत्यन्ये पण्डिता वदन्ति। यथेति। क्रमेण दर्शयत इत्यर्थं। वङ्गा इति बहुषु लक्ष्मीं विनेत्येनेन केशवणस्य महाहर इत्युक्तं। तेषां वङ्गानां निवास इत्यथ वक्ष्यमाथकेशवणस्य जनपदे स्महरः स्यादित्यर्थः। वङ्गा जनपद इत्यत्र प्रकृतिलिङ्गवचनयाः प्रत्यावृत्तिः चातुरर्थिकस्य

**३६४. रामकृष्णाच्छरामो वा।**

राधानुराधीयः कालः, अहोरात्रो वा।

**३६५. पौषादयो मासे निपात्यन्ते।**

पौषी पौर्णमास्यत्र पौषः। एवं माघाद्याः।

**३६६. यत्र प्रकृतिलिङ्गस्य तद्वचनस्य च प्रत्यावृत्तिः, यत्र च**

---

**अमृता०**—३६४. रामेति। नक्षत्रेण युक्तः काल इत्यर्थे रामकृष्ण समासान्तात् नक्षत्रात् छरोमो वा भवति। पक्षे केशवण एव।

**अमृता०**—३६५: पौषेति। नक्षत्रयुक्त पौर्णमास्या उपलक्षिते मास्ये वाच्ये पौषादयः प्रयोगा निपात्यन्ते। पौर्णमास्या अपि कालवाचित्वमस्ति। तेन पुष्येण युक्तेति केशवणः, ईप् पौषी पौर्णमासी, सा विद्यते यत्र स पौषो मासः। एवं माघी पौर्णमासी अत्रेति माघः। एवं फाल्गुण इत्याद्या दश।

**अमृता०**—३६६. संज्ञासूत्रचतुष्टयमाह—यत्रेति। यत्रसमाहारे प्रकृते लिङ्गस्य

---

स्मरहर इत्यधिकारादनन्तरं तन्नाम्नि देशे इति वक्ष्यमाणलक्षणेनन जनपदवाच्य यः स्मरहरो वक्ष्यते तेन स्मरहरेण वङ्गा इति जनपदस्य विशेषणमिति। हरीतक्याः फलानीत्यर्थे वक्ष्यमाणकेशवणस्य पुष्पफलमूलेषु स्मरहरो बहुलमिति स्मरहरः। हरितक्यः फलानि प्रकृतेर्लिङ्गस्यैवात्र प्रत्यावृत्तिर्न वचनस्य तथा सति हरितकी स्यात्। अतो वाच्यानुरूपं वचनं। तथेत्यारभ्य वनानीतिपर्यन्ते वाक्येऽपि अदूरभवनस्य चतुरर्थत्वात् चातुरर्थिकस्य स्मरहर इत्यनेनैव केशवणस्य स्मरहरः, खलतिकं वनानि। प्रकृतेर्वचनस्यैवात्र प्रत्यावृत्तिर्न लिङ्गस्य तथा सति खलतिकः स्यात्, अतो वाच्यानुरूपं लिङ्गं। तथेति एका मथुराच वङ्गा इतिवज्जनपदार्था वहवः पञ्चालाश्चेति रामकृष्णे सति मथुरापञ्चाला इत्यत्र पाञ्चाला इत्युत्तरपदस्य तन्नाम्नि देशे इत्यनेन चातुरर्थिकस्मरहरतया बहुवचनविषयात् तल्लिङ्गवचनयोः प्रत्यावृत्तिः। नेहेत्यत्र उत्तरपदस्य बहुवचनविषयत्वाभावादिति शेषः। पाञ्चालाश्च मथुरा चेति पञ्चालशब्दस्य जनपदार्थत्वादेकत्वे एव बहुवचनत्वात् मथुरया सह समासे द्वित्वमेव सङ्गच्छत इति पञ्चालमथुरे इत्यत्र द्विवचनं॥ ३६३॥

**बाल०**—स्मर। स्मरहरार्थस्य विशेषणानिच तद्वत् स्मरहरार्थवद्भवन्ति। पञ्चालाः देशः कथम्भूताः सम्पन्नाः प्राप्ताः। पुनः कथम्भूताः बहुविप्राः बहवो विप्रा यत्र तथाभूताः॥ ३६४॥

**बाल०**—नतु। जातेः स्मरहरार्थायाः विशेणानि तद्वन्नतु भवन्ति। पूर्वेण प्राप्ते निषेधोऽयं। पञ्चाला इत्यनेन जनपदजातिरुच्यते इति। रमणीय इत्यत्र पाञ्चाला इतिवन्न बहुवचनं॥ ३६५॥

**हरीतक्यादिषु तल्लिङ्गस्यैव, खलतिकादिषु वचनस्यैव, समासे तु बहुवचनविषयोत्तरपदसम्बन्धिनोरेव तयोः प्रत्यावृत्तिः समहाहरः स्मरहरसंज्ञः ।**

लुविस्यन्ये । यथा, वङ्गस्यापत्यानि बहूनि वङ्गाः, तेषां निवास इत्यर्थे केशवणस्य स्मरहरः—वङ्गा जनपदः । हरीतक्याः फलानि हरितक्यः । तथा खलतिकस्य गिरेरदूरभवानि वनानि खलतिकम् । तथा मथुरा बहवः पञ्चालाश्च मथुरापञ्चालाः । नेह—पञ्चालमथुरे ।

---

वचनस्य च प्रत्यावृत्तिः पुनरावृत्तिर्भवति स महाहरः स्मरहर संज्ञः स्यात् । यत्र च महाहरे हरितक्यादिषु प्रयोगेषु हरितक्यादीनां लिङ्गस्यैव प्रत्यावृत्ति नंतु वचनस्य सोऽपि महाहरः स्मरहर संज्ञो भवति । पुनर्यत्र खलतिकादिषु तेषां वचनस्य हि प्रत्यावृत्ति र्भवति नतु लिङ्गस्य स महाहरश्च स्मरहरसंज्ञः स्यात् । तथा समासे तु विषये यत्र बहुवचनविषयो यदुत्तरपदं तत् सम्बन्धिनोरेव तयो र्लिङ्गवचनयोः प्रत्यावृत्तिः र्भवति सोऽपि महाहरः स्मरहर संज्ञः स्यात् ।

वङ्गा इति—बहुषु लक्ष्मीं विनेति केशवणस्य महाहर उक्तः, अथ तेषां निवास इत्यर्थे वक्ष्यमाण जनपदे केशवणस्य स्मरहरः । अत्र प्रकृते लिङ्ग वचनयोः ( अर्थात् पुंस्त्व-बहुत्वयोः ) प्रत्यावृत्ति दर्शिता । चातुर्थिकस्य स्मरहर स्तन्नाम्नि देश इति वक्ष्यमाणेन स्मरहरोऽत्र ज्ञेयः, तस्य निवास इति चातुर्थिकस्यैवान्तर्भूतत्वात् । हरितक्याः फलानीत्यर्थे पुष्प फलमूलेषु स्मरहरो बहुलमिति वक्ष्यमाणेन केशवणस्य स्मरहरः । अत्र प्रकृते लिङ्गस्यैव प्रत्यावृत्ति र्नतु वचनस्य । तथा सति एक वचनमेव स्यात् । खलतिकमित्यत्र चातुर्थिकस्य स्मरहर इत्यनेन केशवणस्य स्मरहरः । अत्र प्रकृते वंचनस्यैव प्रत्यावृत्ति र्नतु लिङ्गस्य । तथा सति पुंस्त्वमेव स्यात् । तथा मथुरा इति—एका मथुरा पञ्चालाश्च बहवो जनपदः, तयो रामकृष्णसमासे मथुरा पञ्चाला इत्यत्र पञ्चाला इत्युत्तरपदस्य तन्नाम्नि देशे इति चातुर्थिक केशव णस्य स्मरहरः । अत इह बहुवचनविषयोत्तर पदत्वेन तल्लिङ्गवचनयोः प्रत्यावृत्तिः । अथ चतुर्थसूत्रस्य प्रत्युदाहरणं दर्शयति—पञ्चालमथुरे इति । पञ्चालाश्च मथुरा चेति उत्तरपदस्य बहुवचन विषयत्वविरहान्नात्र स्मरहरः । पञ्चाला इति जनपद वाच्यत्वेन एकत्वे हि बहुवचन प्रयोगात् मथुरा पदेन समासे द्वित्वं प्रयुक्तम् ।

---

**बाल०**—मनुष्य । मनुष्यवाच्ये स्मरहरे च सति विशेषणानां विशेषवत्त्वस्य निषेधः स्यात् । चञ्चा तृणप्रतिमा सा इवेति इवार्थे कः प्रकृतौ सञ्ज्ञायाञ्चेति कः । मनुष्ये तस्य स्मरहरः इति चञ्चामनुष्यो दर्शनीय इत्यत्र दर्शनीये चञ्चावल्लिङ्ग न स्यात् । तदेव स्पष्टयति चञ्चेति । दर्शनीया इति प्रयोगो नाभुदित्यर्थः । प्रतिकृतौ विषये कप्रत्ययस्यैव स्मरहर इत्याह अत्रेति । तदिति तत्तस्मादेवम्प्रकारेण स्थिते स्मरहरे इत्यर्थः ॥ ३६६ ॥

**३६७. स्मरहरार्थस्य विशेषणानि च तद्वत् ।**

पञ्चालाः सम्पन्ना बहुविप्राः ।

**३६८. न तु जातेः ।**

पञ्चाला जनपदो रमणीयः ।

**३६९. मनुष्य स्मरहरे च निषेधः ।**

चञ्चा मनुष्यो दर्शनीयः । चञ्चा दर्शनीया इति मा भूत् । अत्रैव प्रतिकृतौ कस्य स्मरहरः । तदेवं स्थिते,

---

**अमृता०**—३६७. स्मरेति । स्पष्टम् । सम्पन्नाः समृद्धा इत्यर्थः । बहवो विप्रा यत्र बहुविप्राः । पञ्चाला इत्येव विशेष्यं; तद्वदिति विशेषणेषु च विशेष्यवल्लिंग वचनयो र्यथादिष्टं प्रत्यावृत्ति रितिभावः ।

**अमृता०**—३६८. नत्विति । जातेः स्मरहरार्थस्य विशेषणानि तु तद्वन्न भवन्ति । अत्र पञ्चाला इत्यनेन जनपदजाति रुच्यते, अतो रमणीय इति न बहुत्वम् ।

**अमृता०**—३६९. मनुष्येति । मनुष्यवाच्ये स्मरहरे च, विशेषणानां विशेष्यवल्लिङ्ग वचनप्रत्यावृत्ति र्न भवतीत्यर्थः । चञ्चा तृण प्रतिमा सा इवेति मनुष्य वाच्ये इवार्थे प्रतिकृतौ संज्ञायाञ्चेति कः, तस्य च स्मरहरः । ततो दर्शनीय इति विशेषणे चञ्चावन्न लक्ष्मीत्वम् । तदेव स्फुटयति—चञ्चेति ।

---

**बाल०**—स्मर । कालाविशेषे वाच्ये प्रागुक्तनक्षत्रप्रत्ययस्यैव स्मरहरः स्यादिति । वर्त्म पन्था इत्यर्थः प्रागुक्तोऽत्र केशवण एव नान्यः । अद्येत्यादि स्पष्ट । कालविशेषे विधानात् कालविशेषेतु न स्यादित्याह कालेति । तेन श्रावणीत्यत्र स्मरहरो न स्यात् ॥ ३६७ ॥

**बाल०**—कुमा । अपूर्वपति कुमारीमूढवान् यः कुमारः स कौमारः । तत्कुमारेण तथाविधां कुमारीमूढवता कुमारेण उढा या कुमारी साच पुनः कौमारी । वृत्तिमाह अत्रेति । अत्रार्थे कुमारकुमार्योः केशवणेन सार्द्धं कौमारकौमारीति द्वयं साधु स्यादित्यर्थः । तथाच भट्टौ दृश्यते (७।९०) । उपलम्भ्यामित्यस्मात् पूर्वं पद्यार्द्धन्त्वेवं । म्रियामहे न गच्छामः कौशल्यायनिवल्लभां । रावणेन हृतायां सीतायां श्रीरामस्योन्मादप्रश्नोऽयं । पततां वर हे जटायो ॥ ३६८ ॥

**बाल०**—तत्र । तत्र भुक्तोत्सृष्टमुद्धृतमित्यर्थे पात्रवाचकान्नाम्नः अण् स्यात् । अणिति विवरणं । भुक्तोच्छिष्टमुद्धृतमुच्यत इत्यन्ये । शरेति स्पष्ट । व्रतार्थं स्थण्डिले भूमौ शेते इत्यर्थेऽणा सह स्थण्डिलस्य स्थाण्डिलः साधुः स्यात् ॥ ३६९ ॥

**३७०. स्मरहरः कालाविशेषे प्रागुक्त नक्षत्रप्रत्ययस्यैवेति वर्त्म।**

अद्य पुष्यः अद्य विशाखा। पुष्यादियुक्तं कालमात्रमत्राभिधीयते नतु तद्विशेषः। कालविशेषे तु—श्रावणी रात्रिः।

**३७१. कुमारीमूढवान् कुमारः कौमार स्ततुकुमारेणोढा सा च कौमारी।**

अत्र द्वयं साधु। उपलम्भ्यामपश्यन्तः कौमारीं पततां वर इति भट्टिः।

---

**अमृता०**—३७०. स्मरेति। कालस्य अविशेषे वाच्ये प्रागुक्त नक्षत्रप्रत्ययस्यैव स्मरहरः स्यादिति वर्त्म पन्थाः। नक्षत्रेण युक्तः काल इत्यर्थे केशव णस्य स्मरहरो भवतीति फलितार्थः। अत्र दिवा रात्रि यामादि काल संज्ञा हि कालविशेषेण बोध्यते। तेन दर्शितोदाहरण द्वये तदभावेन केशवणस्य स्मरहरः। प्रत्युदाहरणे रात्रेः कालविशेषवाचित्वान्न हि तत् प्रत्ययस्य स्मरहरः।

**अमृता०**—३७१. कुमारीमिति। अपरिणतो जनः कुमार उच्यते। तादृशः कुमारस्तादृशीं कुमारीमूढवांश्चेत् स कौमारः प्रोच्यते। या च कुमारी तादृशेनोढा सा कौमारी कथ्यते। अत्रार्थे केशवणेन कौमार कौमार्यौ साधू भवतः। भट्टि प्रयोगेण तत् समर्थयते—उपलम्भ्यामिति। अस्य पूर्वार्द्धं यथा—म्रियामहे न गच्छामः कौशल्यायनिवल्लभामिति। श्रीसीताहरणात् पश्चात् तामन्वेषमाणानां कपीनां जटायुं प्रति वचनम्। ७।८२। उपालम्भ्यां स्तुत्यामित्यर्थः।

---

**बाल०**—तत्र। सस्कृतं सत उत्कर्षाधानं। वृत्तिमाह अत्रेति। तत्र सस्कृतं भक्ष्यश्चेदित्यर्थे यत्तच्छब्दनिर्दिष्टं तस्माद्यथास्वं प्रत्ययः स्यात्। खवविषदमभ्यवहार्यं भक्ष्यमिति जयादित्यादिभिरत्र रूढिरूपमुक्तं। तत्र भृष्टमुद्गादि खवं अभ्यवहार्यं ओदनादि विषदमभ्यवहार्यं। भ्राष्ट्र इति वाक्योदाहरणे स्पष्टे॥ ३७०॥

**बाल०**—उख्य। वृत्तिमाह अत्रेति। अत्रोक्तार्थे उख्याद्यौदश्वित्कान्ता इत्येते षट् यरामादिभिश्चतुर्भिर्यथायोग्यं साधवो भवन्ति। केशवणरामेण चेत्यत्र चशब्दात् माधवठरामेणापि सहेति योज्यं। एषु। सर्वत्रैव तत्र संस्कृतं भक्ष्यमिति वाक्यं योज्यं। किञ्च, क्षीरे संस्कृतस्य खवविषदत्वं नास्तीति अभ्यवहरणीयमात्रभक्ष्यमिति जयादित्यादिभिः क्षैरेयी यवागूरित्युदाहृत। दाधिकमिति तेन संस्कृतमित्यनेनापि सिद्धं भविष्यति, एतदर्थं भवनार्थन्त्वत्र दर्शितं। दध्न्यधिकरणे यद्द्रव्यान्तरेण संष्क्रियते यदनेनोच्यते इति न्यासश्च। दध्नि संस्कृतमित्यर्थविवक्षायां टण् मा भूदित्याहुराचार्याः, किन्तु न किञ्चद्दध्नि संष्क्रियमाणं प्रसिद्धमस्ति यस्याभिधानं दाधिकं भवेदिति स्पष्टार्थं वचनमिति भागवृत्तिः। औदश्वित्क इति तान्ताच्चेति ठस्य कः॥ ३७१॥

## ३७२. तत्र भुक्तोत्सृष्टमित्यर्थे पात्रात् ।

अण्येव । शरावे भुक्तोत्सृष्टं शारावम् । व्रतार्थं स्थण्डिले शेते स्थाण्डिलः, अणन्तः साधुः ।

## ३७३. तत्र संस्कृतं भक्ष्यञ्चेत् ।

अत्रापि यथास्वम् । भ्राष्ट्रे संस्कृता भ्राष्ट्रा अपूपाः ।

## ३७४. उख्यादयश्च ।

अत्र उख्य शूल्य क्षैरेय दाधिक औदश्वित औदश्वित्का इत्येते यरामेण माधव ढराम-ठरामाभ्यां केशवणरामेण च यथास्वं साधवः ।

---

**अमृता०**—३७२. तत्रेति । अग्रभुक्तं पश्चादुत्सृष्टं (त्यक्तं) भुक्तोत्सृष्टं, स्नातानुलिप्तवत् समासः । तत्रभुक्तोत्सृष्टमित्यर्थे पात्रवाचिनो नाम्नः केशवणः स्यात् । व्रतार्थे स्थण्डिले भूमौ शेते इत्यर्थे अणा सह स्थाण्डिल इति साधुर्भवति ।

**अमृता०**—३७३. तत्रेति । संस्कृतमुत्कर्षाधानम् । तत्र संस्कृतं भक्ष्यञ्चेदित्यर्थे पात्रवाचकाद् यथास्वं प्रत्ययाः स्युः । भ्राष्ट्रं अम्बरीसम्, मुद्गचणकादिभर्जनपात्रमित्यर्थः । एवं पीठरे (मृत्पात्र भेदे) संस्कृतः पैठरः सूपः ।

**अमृता०**—३७४. उख्येति । वृत्तिमाह—अत्रेत्यादि । उखायां हण्डिकायां संस्कृतं—उख्यम् । शूले संस्कृतः शूल्यो वार्त्ताकुः । उभयत्र यरामेण साधू । क्षीरे संस्कृतः क्षैरेयः अलावुः, माधवढ रामेण साधुः । दध्नि संस्कृतं दाधिकम् । दध्नि अधिकरणे यद्द्रव्यान्तरेण संस्क्रियते तदनेनोच्यत इति न्यासः । उदश्विति तक्रे संस्कृतं औदश्वितं, पक्षे माधव ठेन औदश्वित्कमिति च । एभ्यः प्रत्ययान्तरं माभूदित्येव तत्तत् प्रत्ययेन साधुत्वम् ।

---

**बाल०**—सोऽत्र । अत्र स वर्त्तते इत्यर्थे पूर्णमासान्नम्नः केशवणः स्यात् । सोऽत्र वर्त्तत इत्यर्थे अन्यायादेरुत्तरो माधवठः स्यात् । पूर्णो मासोऽत्र वर्त्तते पौर्णमासीति, अन्यायोऽत्र वर्त्तते आन्यायिक इति, उत्पातोऽत्र वर्त्तते औत्पातिक इति, नवयज्ञोऽत्र वर्त्तते नावयज्ञिक इत्यादि । नावयज्ञिक इत्यत्र नारयज्ञिक इति क्वचिद्दृश्यते तदपि नासङ्गतं सम्भवत्वात् ॥ ३७२ ॥

**बाल०**—पितृ । पितृभ्राता आदिर्यस्य स पितृभ्रात्रादिस्तदादौ वाच्ये यथास्वं प्रत्ययेन पित्रादेः पितृव्यादयः साधवो भवन्ति । पितुर्भ्रातेत्यर्थे पितृशब्दान्निपातात् व्यः पितृव्य इति । आदिपदात् पितुः पितेत्यर्थे तच्छब्दात् तद्वदामहच् पितामहः । प्रपितामहस्तु प्रकृष्टः पितामह इति मध्यपदलोपिसमाससिद्धः । तथा मातुर्भ्रातेत्यर्थे मातृशब्दादुलच् मातुल इति । मातुः पितेत्यर्थे पूर्ववदामहच् मातामह इति । प्रपितामहवत् प्रमातामहोऽपि । मातुर्मातामहाद्यं वमित्यमरेणाप्युक्तं ॥ ३७३ ॥

**३७५. सोऽत्र वर्त्तत इति पूर्णमासात् केशवण:, अन्यायादे र्माधव ठ: ।**

पौर्णमासी तिथि:, आन्यायिक: औत्पातिक: नावयज्ञिक: ।

**३७६. पितृव्यादय: पितृभ्रात्रादौ ।**

साधव: ।

**३७७. अविषोढाविदूषाविमरीषाण्यविदुग्धे ।**

साधूनि ।

**३७८. तिलपिञ्ज-तिलपेजौ निष्फलतिले ।**

साधू ।

---

**अमृता०**—३७५. स इति स्पष्टार्थम् । पूर्णमासोऽत्र वर्त्तते पौर्णमासी । अन्यायोऽत्र वर्त्तते आन्यायिक: । उत्पातो विद्यतेऽत्र औत्पातिको यज्ञ: । नरयज्ञो विद्यतेऽत्र नारयाज्ञिक: । नावयाज्ञिक इति च पाठान्तरम् ।

**अमृता०**—३७६. पितृव्येति । पितृभ्रात्रादौ वाच्ये पितृव्यादयो निपात्यन्ते । अत्र व्यप्रभुति प्रत्यया स्तत्तदर्थाश्च निपातादेव ज्ञेया: । पितृशब्दात् व्यप्रत्ययोऽत्र निपातात्, पितुर्माता इत्यर्थ: । आदिपदेन—मातुभ्रातेत्यर्थे उलच्, संसार हर:—मातुल: । पितु: पितेत्यर्थे आमहच्—पितामह: । मातु: पिता मातामह इति ।

**अमृता०**—३७७. अवीति । अवे र्मेष्या दुग्धे वाच्ये अविशब्दात् सोढ-दूष-मरीष प्रत्ययै: सह अविषोढादित्रयं निपात्यते ।

**अमृता०**—३७८. तिलेति । निष्फलेतिले वाच्ये तिलशब्दात् पिञ्ज पेज-प्रत्ययाभ्यां तिलपिञ्ज-तिलपेजौ साधूभवत: ।

---

**बाल०**—अवि । अविर्मेषस्तद्दुग्धे वाच्येऽविशब्दस्य षोढदूषमरीषै: सार्द्धं क्रमेण अविषोढादीनि त्रीणि साधूनि भवन्ति ।। ३७४ ।।

**बाल०**—तिल । फलरहिततिले वाच्ये तिलशब्दस्य पिञ्जपेजाभ्यां सह तिलपिञ्जेत्यादिद्वयं साधु भवति ।। ३७५ ।।

**बाल०**—तस्य । वृत्तिमाह अत्रेति । अत्रार्थे तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्यय: स्यात् । वाक्योदाहरणे स्वयमाह यदूनामिति ।। ३७६ ।।

**बाल०**—राज । तस्य विषये देशे राजन्यादिभ्यो नृसिंहो वुर्भवति । राजन्यस्य विषयो देश: राजन्यक: । मानवस्य विषयो देश: मानवक इति ।। ३७७ ।।

**बाल०**—सोऽस्य । अत्रेपि विवरणं । तच्छब्देन छन्दोविशेष उच्यते इदमुशब्देनतु प्रगाथविशेष: । एवं सति स छन्दोविशेषोऽस्य प्रगाथविशेषस्य आदिरित्यर्थे छन्दोविशेषवाचकादुत्तरो यथास्वं प्रत्यय: स्यात्, प्रगाथविशेषेषु वाच्येषु । प्रगाथशब्दस्य दुष्पष्टत्वा

**३७९. तस्य विषये देशे ।**

अत्र यथास्वम् । यदूनां विषयो देशो यादवः ।

**३८०. राजन्यादिभ्यो वुर्नृसिंहः ।**

राजन्यको मानवको देशः ।

**३८१. सोऽस्यादिरिति छन्दसः प्रगाथेषु ।**

अत्र च यथास्वम् । प्रगाथो मन्त्रविशेषः । पङ्क्तिरादि रस्य प्रगाथस्य पाङ्क्तः प्रगाथः । दवमानुष्टुभः ।

---

**अमृता०**—३७९. तस्येति । अर्थाधिकारसूत्रम् । तस्य विषये देशे इत्यर्थे यथास्वं प्रत्यया भवन्ति । यादव इति सामान्येन केशवणः ।

**अमृता०**—३८०. राजन्येति । तस्य विषये देशेऽर्थे राजन्यादि शब्देभ्यो नृसिंह वुः स्यात् । राजन्यस्य विषयो देशो राजन्यकः । एवं मानवकः ।

**अमृता०**—३८१ सइति । सपदेन छन्दो विशेष उच्यते, अस्य पदेन तु प्रगाथः । दशाक्षरविशिष्ट प्रतिपादं छन्दः पङ्क्ति रिति तथाष्टाक्षरप्रतिपादं छन्दः अनुष्टुविति छन्दः शास्त्रम् । अनुष्टुप् आदिरस्य प्रगाथस्य आनुष्टुभः प्रगाथः ।

---

स्वयं स्पष्टयति प्रगाथ इति । यत्र प्रग्रन्थनात् प्रगानाद्वा द्वे ऋचौ तिस्रः क्रियेते स मन्त्रः प्रगाथ इत्यर्थः । पङ्क्तिरित्यादि स्पष्टं । दशाक्षरैर्वर्णितपादेन पङ्क्तिरित्यादि छन्दोग्रन्थे-अनुसन्धेयं । पङ्क्ति इत्यत्र सामान्यतः केशवणः । एवमुत्तरत्रापि । एवमिति अनुष्टुप् आदिरस्य प्रगाथस्य अनष्टुभः प्रगाथ इति ।। ३७८ ।।

**बाल०**—छन्द । स्वार्थेऽर्थे छन्दसश्छन्दोवाचकात् पूर्ववत् केशवणः स्यात् । त्रिष्विति स्पष्टं । इतः परं ये ये वाक्योदाहरणे ग्रन्थकृद्दास्यति ते ते मयात्र नोत्थाप्येते इति ज्ञेयं । जगत्येवेति जागतं । एतद्द्वयस्य ब्रह्मण्येव वर्त्तनमित्याह ब्रह्मेति ।। ३७९ ।।

**बाल०**—तद । वृत्तिमाह अत्रेति । तच्छब्देन प्रयोजनमुच्यते इदमृशब्देन युद्धं तथा तच्छब्देन योद्धार इदमृशब्देन युद्धं । तत् प्रयोजनमस्य युद्धस्येत्यर्थे तथा ते योद्धारोऽस्य युद्धारोऽस्य युद्धस्येत्यर्थेच सति युद्धे वाच्ये प्रयोजनवाचकात् योद्धृवाचकेभ्यश्च यथायोग्यं प्रत्ययाः स्युः । सुभद्रा प्रयोजनमस्य सौभद्रं । एवं रौक्मिणमित्याद्यपि यथायथमूह्यं । सामान्यादेषु केशवणः । स्त्री प्रयोजनमस्येति पुमान् प्रयोजनमस्येति स्त्रैणमित्यादिद्वयं क्रमेण । विशेषादत्रतु स्त्रीपुंसाभ्यामित्यनेन नृसिंहणस्नौ । एवं हालेयं कालेयं । उत्तरसूत्रस्य वाक्योदाहरणे आह भरतेति । एवं भैष्मः भैमः आर्जुन इत्यादि ।। ३८० ।।

**बाल०**—तद । क्रीडायां तत् प्रहरणमस्यामित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो णरामो भवति । मुष्टिः प्रहरणमस्यां मौष्टा, पल्लवः प्रहरणमस्यां पाल्लवा । याष्टा शाक्ता इत्यादि ।। ३८१ ।।

**३८२. छन्दसः स्वार्थे ।**

त्रिष्टुवेव त्रैष्टुभम् । एवं जागतम् । ब्रह्मण्येवाभिधानम् ।

**३८३. तदस्येत्यर्थे प्रयोजनाद् योद्धृभ्यश्च युद्धे ।**

अत्र च यथास्वम् । सीता प्रयोजनमस्य सैतं युद्धम् । एवं सौभद्रं पौंस्नम् । भरता यौद्धारोऽस्य भारतः संग्रामः ।

**३८४. तदस्यां प्रहरणमिति क्रीडायां णः ।**

दण्डः प्रहरणमस्यां क्रीडायां दाण्डा क्रीडा । एवं मौष्टापाल्लवा ।

**३८५. सास्यां क्रियेति घणो णः ।**

श्येनपातः क्रिया अस्यां श्यैनम्पाता मृगया, तैलम्पाता स्वधा । अनयोर्मुम् च । मौषलपाता भूमिः ।

---

**अमृता०**—३८२. छन्दसइति । स्वार्थे छन्दो वाचकात् पूर्ववत्केशवणः स्यात् । प्रतिपादैकादशाक्षर च्छन्दः तिष्टुभ्, प्रतिपाद द्वादशाक्षराजगती छन्दः ।

**अमृता०**—३८३. तदस्येति । युद्धे वाच्ये तदस्य प्रयोजनमित्यर्थे प्रयोजन वाचिभ्य स्तथा तेऽस्य योद्धार इत्यर्थे योद्धृभ्यश्च यथास्वं प्रत्ययाः स्युः । तदिति सामान्येन ब्रह्मत्वनिर्देशः । सैतं सौभद्र मिति प्रयोजनार्थे केशवणः । स्त्रैणमित्यादि द्वये तु स्त्री पुंसाभ्यामिति नृसिंह नस्नौ । एवं कलिः कालेयम् । उत्तरमुदाहरति—भरताइति । एवं भैष्मः आर्जुन इत्यादि ।

**अमृता०**—३८४. तदस्यामिति । क्रीडायां वाच्यायां तत् प्रहरणमस्यामित्यर्थे नाम्नो ण प्रत्ययः स्यात । दाण्डा इति—णित्वाद् वृष्णीन्द्रः, केशवत्वाभावात् लक्ष्म्यां न ईप् । एवं मुष्टिः प्रहरणं पल्लवः प्रहरणमस्यां मौष्टा पाल्लवा ।

**अमृता०**—३८५. सास्यामिति । सा क्रिया अस्यामित्यर्थे घणन्त शब्दात् पाः स्यात् । श्येनस्य पक्षिविशेषस्य पातः पतनमिति घणन्तः श्येनपातः, तत स्तद्रूपा क्रिया यस्यामिति णः, सा च मृगेन्वेषण रूपा क्रिया । तिलपातः क्रिया अस्या मिति तैलम्पाता, स्वधा यज्ञाङ्गमन्त्र विशेषः । अनयोर्मुम् चेति तद्धित बाहुल्यादिति भावः ।

---

**बाल०**—सा । सा क्रियास्यामित्यर्थेऽन्यपदार्थे वाच्ये घणो घणन्तात् णः स्यात् । श्येनः पक्षिविशेषः तस्य पातः पतनं श्येनपातः स एवात्र क्रिया पतधातोर्घणन्तत्वात् । आदिसर्वेश्वरस्येति वृष्णीन्द्रः । मृगयेति मृगान्वेषणा । तिलपातः क्रिया अस्यामिति तैलम्पाता । स्वधेति यज्ञार्हो मन्त्रविशेषः । स्वाहा देवदाने श्रौषट् वौषट् वसट् स्वधेत्युक्तेः । प्रयोगद्वयेऽत्र मुमागमश्चेत्याह अनेति । अनयोर्मुम् चेति तद्धितबाहुल्यादिति शेषः । तच्च पूर्वपदात् सर्वैरिष्टं । मुषलपातः क्रिया अस्यां मौषलपातेति ॥ ३८२–३८५ ॥

अथ चातुरर्थिकाः ।

## ३८६. तदस्मिन्नस्तीति देशे तन्नाम्नि ।

**अत्र च यथास्वम् । पर्वता अस्मिन् सन्ति पार्वतो देशः ।**

## ३८७. तेन निर्वृत्तम् ॥

**अत्र च यथास्वम् । कुशाम्बेन निवृत्ता कौशाम्बी पुरी ।**

## ३८८. तस्य निवासः ।

**अत्र च यथास्वम् । शिवानां निवासः शैवः ।**

## ३८९. तददूरभवश्च ।

---

अथेति । चतुर्षु अर्थेषु भवाश्चतुर्रथिकाः प्रत्यया इत्यधिकारः । तेच चत्वारोऽर्थाश्चतुःषु सूत्रेषु वक्ष्यन्ते । प्रत्यया स्तु सामान्य विशेषा ऊक्ता दर्शयिश्यन्ते च ।

**अमृता०**—३८६. तदिति । तदस्मिन्नस्तीत्यर्थे, यद् यस्मिन्नस्ति तन्नाम्नदेशे वाच्ये नाम्नो यथास्वं प्रत्ययः स्यात् । अयमेकोऽर्थः, मत्वर्थापवादः ।

**अमृता०**—३८७. तेनेति । तेन निर्वृत्तं निष्पन्नमित्यर्थे नाम्नो यथाविहितं प्रत्ययः स्यात् । तन्नाम्नि देशे इत्यनुवर्त्तनीयं चतुर्षु तेनेति यथासम्भवं कर्त्तरि करणे वा तृतीया योज्या । अयं द्वितीयः अर्थः । कुशाम्ब इति कस्यचिन्नृपस्य नाम ।

**अमृता०**—३८८. तस्येति । तस्य निवास इत्यर्थे तच्छब्दोद्दिष्टनाम्नो यथास्वं प्रत्ययो भवति । तृतीयार्थोऽयम् । शैव देश इत्यर्थः ।

**अमृता०**—३८९. तदिति । तस्यादूरभव इत्यर्थे च यथास्वं प्रत्ययः स्यात् । चतुर्थो-

---

अथेति । चतुर्षु भवाश्चातुरर्थिकाः अथानन्तं चातुरर्थिकाः प्रत्यया दर्श्यन्त इत्यर्थः ।

**बाल०**—तद । अत्रेति विवरणं । तदस्मिन्नस्तीत्यर्थे यद्यस्मिन्नस्ति तन्नाम्नि देशे वाच्ये तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात् ॥ ३८६ ॥

**बाल०**—तेन । अत्रेति प्राथमिकसूत्रात् परं सर्वत्रैव विवरणमिति बोद्धव्यं । तेन निर्वृत्त इत्यर्थे यस्मिन् कस्मिन् वाच्ये तच्छब्दनिर्देशान्नाम्नो यथास्वं प्रत्ययः स्यात् । निर्वृत्त इति निर्मितो निष्पन्न इति यावत् ॥ ३८७ ॥

**बाल०**—तस्य । तस्य निवास इत्यर्थे यस्मिन् कस्मिन् वाच्ये तच्छब्दनिर्दिष्टात् यथास्वं प्रत्ययो भवति ॥ ३८८ ॥

अत्र च यथास्वम् । यमुनाया अदूरभवो यामुनः । एतेऽर्थाः प्रभवः । उक्तेष्वेतेषु चतुर्षु वक्ष्यमाणा ज्ञेया इत्यर्थः ।

**३९०. अरीहणादे र्वु नृसिंहः ।**

अरीहणोऽस्मिन्नस्तीत्याद्यर्थे चतुष्टयेऽपि आरीहणकम् ।

**३९१. कृशाश्वादेश्छो नृसिंहः ।**

कार्शाश्वीयम् ।

**३९२. ऋष्यादेः कः ।**

ऋष्यकः ।

---

ऽयमर्थः । एते चत्वारोऽर्थाः प्रभुसंज्ञकाधिकाराः । एषु अर्थेषु सामान्यतः केशवणः स्याद्, शब्दविशेषात्तु प्रत्ययविशेषो वक्ष्यते ।

**अमृता०**—३९०. अरीहणादेरिति । तदस्मिन्नस्तीत्यादि चतुर्षु अर्थेषु अरीहणादे रुत्तरे नृसिंह वुः स्यात् । वोरकः । अरीहणोऽस्मिन्नस्ति, अरीहणेन निर्वृत्तं, अरीहणस्य निवासः, अरीहणस्यादूरभव इति आरीहणकम् । गणस्तु परिशिष्टे दृष्टव्यः ।

**अमृता०**—३९१. कृशाश्वेति । प्रागुक्ते अर्थ चतुष्टये कृशाश्वादेरुत्तरे नृसिंह छः स्यात् । कृशाश्वोऽस्मिन्नस्तीत्याद्यर्थेषु कार्शाश्वीयम् । एवमारिष्टीयमित्यादयश्च गण-दृष्टया बोद्धव्याः ।

**अमृता०**—३९२. ऋष्यादेरिति । तदस्मिन्नस्तीत्याद्यर्थेषु ऋष्यादेरुत्तरे कप्रत्ययः स्यात् । एवं न्यग्रोधक इत्यादयः ।

---

**बाल०**—तद । तस्यादूरभवश्चेत्यर्थे यस्मिन् कस्मिन् वाच्ये यथास्वं प्रत्ययः स्यात् । एष्वर्थेषु सर्वत्र सामान्यतः केशवणो विशेषात्तु विशेष एव । एतानर्थानेकत्रैवाधिकरोति एत इति । एते चत्वारोऽर्थाः प्रभुनामानो भवन्ति । प्रत्ययोत्पत्तिव्यवस्थां निगमयति उक्तेष्विति ॥ ३८९ ॥

**बाल०**—अरी । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये अरीहणादेरुत्तरो नृसिंहो वुर्भवति । प्रथमस्य वाक्योदाहरणे दर्शयति अरीति । अरीहण द्रुघण खदिर भगण चन्दन उलुन्द साम्बरायण क्रौष्टायन भास्त्रायण प्राश्यायन शौत्रायण त्रैगर्त्तायन विपथ विपाश उद्दण्ड उदञ्चन खाडायन खाण्डूर वीरण काशकृत्स्न जाम्बत शिंशपा किरण रैवत बिल्व वैमतायन सौमायन शाण्डिल्यायन सुयज्ञ शिरीष बधिर चाप श्वासेत्यरीहणादि-श्चतुस्त्रिंशत् ॥ ३९० ॥

**बाल०**—कृशा । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये कृशाश्वादेर्नृसिंहश्छो भवति । कृशाश्वोऽस्मिन्नस्तीत्याद्यर्थे कार्शाश्वीयमिति । कृशाश्व अरिष्ट अरण्य वेश्मन् विशाल रोमक शयन कूट लोमश वर्चस् सुकर पूतन सदृश सुगर सुख धूम अजिर अविनत विनत अरुस् शायस मौद्गल्येति कृशाश्वादिर्द्वाविंशः ॥ ३९१ ॥

**३८३. कुमुदशर्करादे ष्ठरामः । स च माधवो वा ।**

कुमुदिकं शर्करिकम् । कौमुदिकमित्यादि ।

**३८४. कालदेरिलः ।**

काशिलम् ।

**३८५. तृणादेः सः ।**

तृणसः नडसा नदी ।

**३८६. प्रेक्षादेरिनिः ।**

प्रेक्षी ।

---

**अमृता०**—३८३. कुमुदेति । उक्तार्थ चतुष्टये कुमुदादिभ्यः ठरामः स्यात्, शर्करादि साहचर्यादिव, अन्यथा सोमवारादि साहचर्येण तु कुमुदादे र्माधव ठो वक्ष्यते । एवं शङ्कुटिक इत्यादि । पक्षे माधवत्वादादिसर्वेश्वरस्य वृष्णीन्द्रः ।

**अमृता०**—३८४. काशादे रिति । तदस्मिन्नस्तीत्याद्यर्थं चतुष्टये काशादेरुत्तरे इल प्रत्ययः स्यात् । एवं पलाशिल इत्यादि ।

**अमृता०**—३८५. तृणादेरिति । उक्तार्थचतुष्टये तृणादेरुत्तरे स प्रत्ययो भवति । एवं पर्णसः कुशस इत्यादयः ।

**अमृता०**—३८६. प्रेक्षादेरिति । तदस्मिन्नस्तीत्याद्यर्थं चतुष्टये प्रेक्षादेरुत्तरे इनि प्रत्ययः स्यात् । इराम इत्, इन् तिष्ठति । एवं हलका अस्मिन्नस्ति, हलकया निर्वृत्तः, हलकाया निवासः, हलकाया अदूरभव इति हलकी इत्यादि ।

---

**बाल०**—ऋष्या । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये ऋष्यादेरुत्तरः कः स्यात् । ऋष्योस्मिन्नस्तीत्याद्यर्थचतुष्टये ऋष्यक इति । ऋष्य न्यग्रोध शर निलीन विधान वितान विनद्ध परिगूढ उत्तराश्मन् स्थूलवाहुः खदिर शर्करा अन्तर परिवेश खण्ड वीरणेति ऋष्यादिः षोडशः ।। ३८२ ।।

**बाल०**—कुमु । कुमुदश्च शर्कराच कुमुदशर्करे ते आदौ यस्य स कुमुदशर्करादिस्तस्मात् तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये ठरामो भवति । वक्ष्यमाण-कुमुदादिभ्यो माधवठो भविष्यति तद्भेदार्थमिदं । कुमुदोऽस्मिन्नस्तीत्याद्यर्थचतुष्टये कुमुदिकं । एवं शर्करिकं । सूत्रस्थादिपदात् गर्त्त न्यग्रोध इक्वट कङ्कट वीज वल्वज परिवाद परिवाप अश्वत्थ शिरीष सुराज्ञ पलाश कूप विकङ्कतेति चतुर्दशो गृह्यते ।।३८३।।

**बाल०**—काशा । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये काशादेः पर इलः स्यात् । काशोऽस्मिन्नस्तीत्याद्यर्थचतुष्टये काशिलमिति । काश वास पलाश अश्वत्थ पीयूक्षा विष तृण नड वल कर्मम कर्वूर कण्टक गृहा इति काशादि स्त्रयोदशः ।। ३८४ ।।

**बाल०**—तृणा । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये तृणादेरुत्तरः सः स्यात् । तृणमस्मिन्नस्तीत्याद्यर्थचतुष्टये तृणस इति । एवं नडसा लक्ष्यामत्राप् । तृण नड पर्ण वर्ण स्वर्ण छल बल जलेत्यष्टौ तृणादिः ।। ३८५ ।।

**३९७. अश्मादिभ्यो रः ।**

अश्मरः ।

**३९८. सख्यादे र्माधव ढः ।**

साखेयम् ।

**३९९. सङ्काशादे ण्यः ।**

साङ्काश्यं काम्पिल्यम् ।

**४००. बलादे र्यः ।**

बल्यम् ।

---

**अमृता०**—३९७. अश्मादिभ्य इति । उक्तार्थं चतुष्टये अश्मादिभ्य उत्तरे रः प्रत्ययः स्यात् । एवं ऊषर इत्यादि ।

**अमृता०**—३९८. सख्यादेरिति । उक्तार्थं चतुष्टये सख्यादेरुत्तरे माधव ढः स्यात् । एवं आग्निदत्तेयमित्यादि ।

**अमृता०**—३९९. सङ्काशेति । उक्तार्थं चतुष्टये सङ्काशादे रुत्तरे ण्यप्रत्ययः स्यात् । एवं सासीयीयमित्यादि ।

**अमृता०**—४००. बलादेरिति स्पष्टम् । एवं वन्यं कुल्यमित्यादयः ।

---

**बाल०**—प्रेक्षा । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये प्रेक्षादेः पर इनिर्भवति । प्रेक्षास्मिन्नस्तीत्याद्यर्थचतुष्टये प्रेक्षीति । प्रेक्षा फलका बन्धुका ध्रुवका धुरका क्षिपका न्यग्रोध इक्कट सङ्कट प्रकटेति दश प्रेक्षादिः ।। ३९६ ।।

**बाल०**—अश्मा । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्येऽश्मादेरुत्तरो रो भवति । अश्मास्मिन्नस्तोति पूर्ववत् । अश्मर इति लक्ष्म्यान्तु अश्मरा । रोगे पुनरश्मरी गौरादित्वात् । अश्मन् ओष यूथ मीन दर्भ वृन्द गूड खण्ड काण्ड नख शिकेत्येकादशोऽश्मादिः ।। ३९७ ।।

**बाल०**—सख्या । उक्तार्थचतुष्टये पूर्ववद्वाच्ये सख्यादेर्माधवढः स्यात् । सखास्मिन्नस्तीत्याद्यर्थचतुर्थेऽपि साखेयमिति । सखि सखिदत्त वाग्दत्त गोभिल भल्लपाल चक्र चक्रवाक छगल अशोक चीर वीर शीकर सरस समग सुरसेति सख्यादिः पञ्चदशः ।। ३९८ ।।

**बाल०**—शङ्का । तदस्मिन्नस्तीत्यादि पूर्वार्थे तन्नाम्नि देशादौ वाच्ये सङ्कशादेरुत्तरो ण्यरामः स्यात् । सङ्काशोऽस्मिन्नस्तीत्याद्यर्थचतुष्के साङ्काश्यमिति, एवं काम्पिल्यं । शङ्काश कम्पिल कांश्मीर कर्मार शूरसेन सूर्प (यूप ?) अङ्ग नाथ अश्मन् कूट अलीन पुलिन तीर्थ अगस्ति विकर्ण विकर नासिका सगदिन् सुगदिन् कलिर खडिर चूडार मज्जार कोविदारेति सङ्काशादिश्चतुर्विंशतिः ।। ३९९ ।।

**४०१. पक्षादे र्माधव फः ।**

पाक्षायणः ।

**४०२. कर्णादेः फि नृंसिहः ।**

कार्णायणिः ।

**४०३. सुतङ्गमादे रि नृंसिहः ।**

सौतङ्गमिः ।

**४०४. प्रगदिनादे र्ण्यः ।**

प्रागदिन्यः ।

---

**अमृता०**—४०१. पक्षादेरिति । उक्तार्थ चतुष्टये पक्षादेरुत्तरे माधव फः स्यात् । एवं तौषायण इत्यादि । माधवत्वादीप् तौषायणीत्यादि ।

**अमृता०**—४०२. कर्णादेरिति । स्फुटम् । फिरायनिः । एवं वाशिष्ठायनिरित्यादि ।

**अमता०**—४०३. सुतेति । तदस्मिन्नस्तीत्याद्यर्थं चतुष्टये सुतङ्गमादे रुत्तरे नृसिंह इ र्भवति । आदिपदेन मौनिचित्ति रित्यादयः ।

**अमृता०**—४०४. प्रगेति । प्रोक्तार्थं चतुष्टये प्रगदिन् प्रभृतिभ्यो ण्य प्रत्ययो मवति । एवं शारदिन्य इत्यादयः ।

---

**बाल०**—बला । तदस्मिन्नस्तीत्यादिचतुर्ष्वर्थेषु तन्नाम्नि देशादौ वाच्ये बलादे-रुत्तरो यो भवति । बलोऽस्न्निस्तीत्याद्यर्थे बल्यमिति । बल पुल उल कुल हल दुल नल सुख नद वनेति बलादिर्दश ॥ ४०० ॥

**बाल०**—पक्षा । तदस्मिन्नस्तीत्याद्यर्थे पूर्ववद्देशादौ वाच्ये पक्षादेर्माधवफो भवति । पक्षोऽस्तीत्याद्यर्थचतुष्के पाक्षायण इति । पक्ष ओष अशुक अलिक चित्र अतिश्व कुम्भ शीकर शकर समन रोमन् लोमक लोमश हंसक सुवर्णक हस्तिबिलेति षोडशः पक्षादिः ॥ ४०१ ॥

**बाल०**—कर्णा । तदस्मिन्नस्तीत्यादिपूर्ववदर्थे वाच्येच कर्णादेरुत्तरो नृसिंह फिः स्यात् । कर्णोऽस्मिन्नस्तीत्याद्यर्थचतुष्टये कार्णायणिरिति । कर्ण अर्क वसिष्ठ वेश शप द्रुपद पाञ्चजन्य स्फिक कुलिश कुम्भी अण्डीवत् जीवेति द्वादशः कर्णादिः ॥ ४०२ ॥

**बाल०**—सुत । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये सुतङ्गमादेः परस्मिन् नृसिंह-इर्भवति । सुतङ्गमोऽस्मिन्नस्तीत्याद्यर्थे सौतङ्गमिरिति । सुतङ्गम मुनिचित्त विप्रचित्त महाचित्त महापुत्र श्वेत गदिक शुद्ध शुक्र विग्र वीज श्वन् अर्जुन अजिरेति सुतङ्गमादिश्चतुर्दशः ॥ ४०३ ॥

## ४०५. वराहादे नृंसिह कः।

वाराहकम्।

## ४०६. कुमुदसोमवारादिभ्यो माधवठः।

कौमुदिकं सौमवारिकं गौमठिकम्।

---

**अमृता०**—४०५. वराहादे रिति। उक्तार्थं चतुष्टये वराहादेरुत्तरे नृसिह कः स्यात्। एवं फालाशकमित्यादयः।

**अमृता०**—४०६. कुमुदेति। प्रोक्तार्थं चतुष्टये कुमुदादिभ्यो माधव ठः स्यात्। एवं रथकारोऽस्मिन्नस्ति, रथकारेण निर्वृत्तः, रथकारस्य निवासः, तस्यादूरभवश्चेति राथकारिकमित्यादयो ज्ञेयाः।

---

**बाल०**—प्रग। तदस्मिन्नस्तीत्यादिपूर्वोक्तेऽर्थे वाच्येच प्रगदिनादेरुत्तरो ण्यरामः स्यात्। प्रगदिनोऽस्मिन्नस्तीत्याद्यर्थे प्रागदिन्य इति, एवं सौपन्थ्यः। किन्तु सुपन्थशब्दस्याभावात् सर्वैरेवास्मिन् सुपथशब्दस्य थात् पूर्वं नरामागमो मन्यते, सुपन्थशब्दोऽस्तीत्यपि कैश्चित्। प्रगदिनादिराकृतिगणो ज्ञेयः॥ ४०४॥

**बाल०**—वरा। तदस्मिन्नस्तीत्यादिपूर्ववदर्थे वाच्येच वराहादेर्नृसिंहकः स्यात्। वरोहोऽस्मिन्नस्तीद्यर्थे वाराहकमिति। वराह पलाश शिरीष विनद्ध विदग्ध विजग्ध विभग्न स्थूल बाहु खदिर शर्करेति द्वादशो वराहादिः॥ ४०५॥

**बाल०**—कुमु। तदस्मिन्नस्तीत्याद्यर्थचतुष्टये पूर्ववद्वाच्ये कुमुदात् सोमवारादिभ्यश्च माधवठो भवति। कुमुदमस्मिन्नस्तीत्यद्यर्थे कौमुदिकमिति। एवं सौमवारिकं। तथादिपदात् गौमठिकं। सोमवार गोमठ रथकार दासग्राम पाश्वायन अश्वत्थ शाल्मली मुनिस्थल कूटन्नट कर्ण शिरीष शर्करेति द्वादशः सोमवारादिः। उदन्तादसुवास्त्वादेर्णट्। तथा विपाशोत्तरकूपे चेति जुमरसूत्रद्वयं। एतद्द्वयं सञ्ज्ञायामिति तट्टीका। अवटवः सन्त्यस्मिन्नित्याद्यर्थे आवटवमिति। सुवास्तु वन्तु तण्डु खण्डु शैवलिन् कर्पूरिन शिखण्डिन् गर्त्त कर्कश कठी विकर्ण कृष्ण कर्ण कर्कन्धू मती गाह अद्रि भगीरथ भीमरथ रोणी रोण्यन्त कुपान्तेति द्वाविंशतिः सुवास्त्वादिः। उकारान्तादन्येषामप्यत्र गणे ग्रहणं विपाशोत्तरकूपे चेत्यनेन णट्प्राप्तिनिरासार्थं। तेनास्माद्गणात् सञ्ज्ञाया अन्यत्रौत्सर्गिकः केशवणः। विपाशा नाम नदीविशेषस्तस्या उत्तरकूपे वाच्ये दत्तेन निर्वृत्त कूप इति दात्त इत्यादिः। तस्या दक्षिणे कूपेतु पूर्ववदौत्सर्गिकः केशवणः। मतोर्बह्वजिविहितात्। वह्वचः कूपे चेति जुमरसूत्रद्वयमप्यत्र वर्त्तते क्रमेण ऐक्वावतं दैर्घवरणं इत्युदाहरणद्वयञ्च णडन्तमिति। किञ्च, णट्केशवणयोरभेदात् तद्धितप्रत्ययान्तानां सर्वेषामपि नाम्नां यायः सञ्ज्ञात्वसम्भवाच्च एतत्सूत्रचतुष्टयं चान्द्रेण नादृतमिति गोस्वामिचरणैरपि प्रकरणेऽस्मिन्न कृतं॥ ४०६॥

## ४०७. चातुर्थिकस्य स्मरहर स्तन्नाम्नि देशे ।

पञ्चालाः सन्त्यस्मिन् पञ्चालाः । एवं कुरवः ।

## ४०८. वरणादिभ्यश्च ।

वरणा ग्रामः । गोदौ नाम ह्रदौ ग्रामः, खलतिकं वनानि । एवं शिरीषा शृङ्गी गया उज्जयिनी ।

---

**अमृता०**—४०७. चातुर्थिकेति । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशे वाच्ये यश्चातुर्थिकः प्रत्यय उक्त स्तस्य स्मरहरो भवति । लिङ्गवचनादेः प्रत्यावृत्तौ महाहरस्यैव स्मरहरस्यैव स्मरहर संज्ञ इति प्रागुक्तम् । पञ्चालस्यापत्यानि बहूनि पञ्चालाः, तत स्ते सन्त्यस्मिन्निति चातुर्थिकस्य सामान्यतो यो केशवण स्तस्येह स्मरहरः । अत्र वाच्यस्य देशस्यैकवचनत्वेऽपि पञ्चाला इति बहु वचनम् । एवं वङ्गाः कलिङ्गा इत्यादयश्च ।

**अमृता०**—४०८. वरणादिभ्य इति । तदस्मिन्नस्तीत्यर्थे देशमात्रे (ग्रामादौ) वाच्ये वरणादिभ्यश्च चातुर्थिक प्रत्ययस्य स्मरहरः स्यात् । चकारः अनुक्तसमुच्चये, तेन चैषामाकृतिगणत्वं सूच्यते । वरणानामदूर भवो वरणा ग्रामः । गोदौ नाम ह्रदौ विद्यते अस्मिन्निति गोदौ ग्रामः । खलतिकस्य गिरेरदूरभवानि खलितकं वनानि । अत्र वचनस्यैव प्रत्यावृत्तिः । शृङ्गिणां निवासः शृङ्गी पुरी । गयनाम्ना असुरेण निर्वृत्ता गया नगरी ।

---

**बाल०**—चातु । तदस्मिन्नस्तीत्यादावर्थे नाम्नश्चातुर्थिकस्य प्रत्ययस्य यथास्वं स्मरहरसंज्ञः स्यात् । यत्र महाहरे प्रकृतिलिङ्गवचनादेः प्रत्यावृत्तिः स महाहरः स्मरहर इति पूर्वमुक्तं । अधिकारसूत्रमेतत् । प्रभुरयमित्यसाक्षात् प्रतीयम्नानं ज्ञेयं । तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि क्षत्रियसनाम्नि देशे वाच्ये नाम्नः सामान्यसिद्धकेशवणस्य स्मरहरः स्यात् । पञ्चालस्यापत्यानि बहूनि पञ्चालाः ते सन्त्यस्मिन्नित्येकत्वे वाच्येऽपि पञ्चाला इति बहुवचनान्तं । एवमिति कुरोरपत्यानि बहूनि कुरवः ते सन्त्यस्मिन् कुरव इति ॥ ४०७ ॥

**बाल०**—वर । तदस्मिन्नस्तीत्याद्यर्थे यथाकथञ्चिद्वाच्ये वरणादिभ्यश्च यथाप्रत्ययस्य स्मरहरः । वरणानामदूरभवो ग्रामः वरणा इति । आदिपदगृहीतानामुदाहरणान्याह गोदावित्यादिना । नाम इति । सञ्ज्ञा स्याच्चेतना नामेत्यमरात् । तथा सति गोदौ ह्रदसञ्ज्ञौतावत्र ग्रामे स्तः तयोरदूरभवो ग्रामो वा गोदाविति । खलतिकस्य गिरेरदूरभवानि वनानि खलतिकमिति । उदाहरणद्वयेऽत्र औत्सर्गिककेशवणस्य स्महरः । एवमिति एवम्प्रकारेणेत्यर्थः । यथा गोदखलतिकौ वरणादिः । एवं शिरीषा शृङ्गी गया उज्जयनीति चत्वारश्च तथा गोमती काञ्ची शाल्मली तक्षशिला गङ्गेति पञ्चच । अत्र मध्ये शिरीषशब्दात् वराहादित्वेन नृसिंहकस्य सोमवारादित्वेन माधवठस्यच स्मरहरः । शाल्मलीशब्दादपि तदादित्वेन तस्य स्मरहरः । शेषेभ्यस्तु केशवणस्यैव । शिरीषेत्यत्र लक्ष्मीत्वमतन्त्रं पुरुषोत्तमस्यापि सम्भवात् । तद्धिदबाहुल्यात्तु यत्र यत्र यद्यत् प्रत्ययस्य स्मरहरः पक्षे तत्तत्प्रत्ययस्य स्थितिरपि ॥ ४०८ ॥

## ४०९. शर्कराया वा ।

शर्करा शार्करं, माधव ठ-छरामश्च शार्करिकं शर्करीयम् । स्मरहरो निवृत्तः ।

## ४१०. नद्यां मतुः संज्ञायां त्रिविक्रमश्च ।

उडुम्बरावती नदी ।

## ४११. मध्वादिभ्यश्च ।

मधुमान् । अद्वयेति मतो मंस्य वः, विषवान् ।

---

अमृता०—४०९. शर्कराया इति । पूर्वोक्तार्थ चतुष्टये शर्कराया उत्तरस्य चातुर्थिक प्रत्ययस्य स्मरहरो वा भवति । शर्करा शब्दात् सामान्यतः केशवणः सिद्धः, सोमवारादित्वेन माधव ठ उक्तः, तथा उत्करादित्वेन छरामो वक्ष्यते चेति त्रयाणामेव स्मरहरे शर्करेति, पक्षे तेषाञ्च स्थिति दर्शिता ।

अमृता०—४१०. नद्यामिति । तदस्मिन्नस्तीत्याद्यर्थे चतुष्टये संज्ञायां गम्यमानायां नद्यां वाच्यायां नाम्नो मतु प्रत्ययः स्यात्, तस्य त्रिविक्रमश्च भवति । उडुम्बरोऽस्यामस्तीत्यादि उडुम्बरावती । एवं पुष्करावती मशकावतीत्यादि ।

अमृता०—४११. मध्वेति । प्रोक्तार्थ चतुष्टये मधुप्रभृति शब्देभ्यश्च मतुः स्यात् । परिशिष्टे गणो द्रष्टव्यः ।

---

बाल०—शर्क । तदस्मिन्नस्तीत्माद्यर्थे यथासम्भववाच्ये शर्कारायाः उत्तरस्य पूर्वोक्तप्रत्ययस्य स्मरहरो वा स्यात् । शर्करेत्यत्र केशवणमाधवव-छरामाणां स्मरहरः पक्षे एतेषां स्थितिरिति । शार्करमित्येत्र सामान्यसिद्धकेशवस्य स्थितिः । एवं माधवठ-छरामयोरपि पक्षे स्थितिरित्याह माधवेति । शार्करिकमित्यत्र सोमवारादित्वान्माधवठः । शर्करीयमित्यत्र उत्करादित्वाच्छरामः ॥ ४०९ ॥

बाल०—नद्या । तदस्मिन्नस्तीत्याद्यर्थचतुष्टये सञ्ज्ञायां गम्यमानायां नद्यां वाच्यायां नाम्न उत्तरो मतुस्तस्य त्रिविक्रमश्च भवति । उडम्बरोऽस्यामस्तीत्याद्यर्थे उडुम्बरावतीति । एवं शरारती इक्षुमतीत्यादिः । अत्र असुवास्त्वादेर्नद्यामिति सूत्रं विधाय कश्चित् सौवास्तवीति प्रत्युदाहरति ॥ ४१० ॥

बाल०—मध्वा । तदस्मिन्नस्तीत्याद्यर्थे यथाकथञ्चिद्वाच्ये मध्वादिभ्यश्च मतुः स्यात् । मध्वस्मिन्नस्तीत्याद्यर्थे मधुमानिति । अत्वसन्तोद्धवस्येति त्रिविक्रमः । अचश्चतु-र्भुजानुबन्धानाञ्चेति नुम् सत्सङ्गान्तस्येति तरामहरः । अद्वयमाभ्यामित्यनेन मतोमस्य व इति सूचयति अद्वयेति । विषं मृणालं तद्वान् जलाशय इति । मधु विष स्थाणु इक्षु वेणु कर्कन्धू शमी करीर हिम किशरा शार्याणा वर्मन् रमण पार्दाकी शर इष्टका आसुति शक्ति रिष्टि आसन्दी शकटेत्यर्कविंशतिर्मध्वादिः ॥ ४११ ॥

## ४१२. कुमुद-नड-वेतसेभ्यो मतुच् ।

कुमुद्वान् नड्वान् वेतस्वान् ।

## ४१३. महिषाच्च ।

महिष्वान् ।

## ४१४. नड-शादाभ्यां बलच् ।

नड्वलं शाद्वलम् ।

## ४१५. शिखाया बलः ।

शिखाबलम् ।

## ४१६, उत्करादिभ्यश्छरामः ।

उत्करीयम् ।

---

अमृता०—४१२. कुमुदेति । उक्तार्थेषु कुमुदादिभ्यः त्रिभ्योमतुच्स्यात् । चित् करणात् संसारहरः ।

अमृता०—४१३. महिषेति स्पष्टम् ।

अमृता०—४१४. नडेति । प्रोक्तार्थ चतुष्टये नड-शाद्वल शब्दाभ्यां बलच् स्यात् । चित्वात् संसारहरः ।

अमृता०—४१५. शिखाया इति । पूर्वोक्तार्थेषु शिखा शब्दाद् बलः स्यात् ।

अमृता०—४१६. उत्करेति । प्रोक्तार्थ चतुष्टये उत्करादिभ्य उत्तरे छरामः स्यात् । उत्करोऽस्मिन्नस्तीत्याद्यर्थ चतुष्टये उत्करीयम् । एवं सभरीयमित्यादि । गणस्तु परिशिष्टे द्रष्टव्यः ।

---

बाल०—कुमु । तदस्मिन्नस्तीत्यादिचतुरर्थेषु यथासम्भववाच्ये कुमुदनडवेतसेभ्यो मतुज्भवति । संसारस्य हरश्चितीति संसारहरः कुमुदमस्मिन्नस्तीद्यर्थे कुमुद्वानित्यादित्रयं ॥ ४१२ ॥

बाल०—महि । महिषाच्चोत्तरः पूर्ववन्मतुच् स्यात् । महिषोऽस्मिन्नस्तीत्याद्यर्थे महिष्वानिति ॥ ४१३ ॥

बाल०—नड । तदस्मिन्नस्तीत्याद्यर्थे पूर्ववद्वाच्ये नडशादाभ्यां बलज् भवति । नडोऽस्मिन्नस्तीत्यादिपूर्ववत् नड्वलं । एवं शाद्वलं ॥ ४१४ ॥

बाल०—शिखा । तदस्मिन्नस्तीत्याद्यर्थे यथाकथञ्चिद्वाच्ये शिखाया बल स्यात् । शिखा अस्मिन्नस्तीत्याद्यर्थे शिखाबलमिति ॥ ४१५ ॥

बाल०—उत् । तदस्मिन्नस्तीत्यादिपूर्वोक्तेऽर्थे पूर्ववद्वाच्ये उत्करादिभ्यश्छरामः स्यात् । उत्करोऽस्मिन्नस्तीत्याद्यर्थे उत्करीयमिति । उत्कर सङ्कर सम्फल पिप्पल

## ४१७, नडादिभ्यः कुक् च ।

नडकीयम् । नड वनप्लक्ष ।

## ४१८, कुञ्चाया वामनश्च, उक्ष्णो नलोपश्च ।

कुञ्चकीयं उक्षकीयम् । उक्ता श्चातुरर्थिकाः ।

## ४१९, शेषार्थे विधिः प्रागविकारात् ।

उक्तेभ्योऽन्ये शेषाः । ते च द्विविधा, प्रसिद्धया प्रयुज्यमानाः, वक्ष्यमाणास्तत्र जातादयश्च । पूर्वे यथा,—चक्षुषा गृह्यते चाक्षुषं रूपम् । एवं श्रावणः शब्द इत्यादयः । चाक्षुषादावेतेऽपि,—अश्वैरुह्यते अश्वो

---

अमृता०—४१७. नडेति । पूर्वोक्तार्थेषु नडादिभ्य उत्तरे छरामः स्यात्, तस्मिन् सति कुक् चागमो भवति । एवं बनकीयमित्यादि । बिल्व वेणु वेतस तृण कष्ट इक्षु वेत्र कपोता नडादौ ज्ञेयाः ।

अमृता०—४१८. कुञ्चाया इति । प्रोक्तार्थ चतुष्टये कुञ्चा शब्दात् छप्रत्ययो वामन स्तथा कुक् चागमो भवति । तक्षन्शब्दात् पूर्ववत् छरामो नरामहरः कुक् च भवति । स्पष्टे उदाहरणे । चातुरर्थिकाः सम्पूर्णाः ।

अमृता०—४१९. शेषार्थ इति । विकारात् प्राक् शेषार्थे विधिः ( प्रत्ययविधानं ) क्रियते । अनेन विधिरधिकारश्चायमिति ज्ञापितम् । इतः परं आसमाप्ति सर्वे ह्यर्थाः शैषिक संज्ञकाः । तेषु विकारात् प्राक तत्र जातः, कृतलब्ध क्रीत कुशला इत्येवमादि द्वाविंशति सूत्राक्तानर्थानधिकृत्य विधिरयं यत्र प्रकृतिविशेषेभ्यो विधास्यमानाः प्रत्ययाः

---

पिप्पलीमूल अश्मन् अर्क पर्ण सुपर्ण खण्डाजिन अग्नितिक कितव अतिप अनेक पलाश त्रिवेणी चिबुक पिचुक अश्वत्थ काश कुश भस्त्रा विशाला शाला अन्यजन कर्मन् उत्क्रोश ऋतु खदिर शूर्पनाय श्वावनाय नैरोचक कसित नितान्त वृक्ष इन्द्रवृक्ष आर्द्र वृक्ष शर्करेति उत्करादिरष्टात्रिंशत् ।। ४१६ ।।

बाल०—नडा । तदस्मिन्नस्तीत्यादिचतुरर्थेषु पूर्ववद्वाच्ये नडादिभ्यश्छरामस्तस्मिन् परे कुगागमश्च स्यात् । नडोऽस्मिन्नस्तीत्याद्यर्थे नडकीयमिति । यथा नड बल प्लक्षेति त्रयं नडादिः । तथा बिल्व वेणु वेत्र वेतस इक्षु तक्षन् काष्ठकपोतेत्यष्टावपि ज्ञेयः । किञ्च, नामान्तस्येत्यनेन तक्ष्णो नरामहरश्च ।। ४१७ ।।

बाल०—कुञ्चा । उक्तचतुर्ष्वर्थेषु यथावद्वाच्ये कुञ्चायाश्छरामस्तस्य वामतस्तथा कुक्च भवति । पूर्ववदुक्ष्णश्छरामो नरामहरः कुक्च स्यात् । कुञ्चास्मिन्नस्ति कुञ्चाया निर्वृत्तः कुञ्चाया निवासः कुञ्चाया अदूरभव इत्यर्थचतुष्टयेऽपि कुञ्चकीयं । एवमुक्षकीयमिति । चातुरर्थिकान् समापयति उक्ताश्चेति ।। ४१८ ।।

**रथः। एवं चातुरं शकटम्। दृशदि पिष्टा दार्शदा माषाः। एव-मौलूखलाः शक्तवः। चतुर्दश्यां दृश्यते चातुर्दशो राक्षस इत्यादि। उत्तरे तूदाहरिष्यन्ते।**

**४२०, राष्ट्राद् घरामः।**

**राष्ट्रे जातादिः राष्ट्रियः।**

**४२१, अवार पारात् खरामः।**

**अवारपारीणः।**

---

शेषार्थाधिकारोक्तेष्वर्थेषु एव भवन्ति, नतु पूर्वोक्तेष्वपत्याद्यर्थेष्विति विधिसार्थक्यम्। पूर्वो यथेति—लोकप्रसिद्धया प्रयुज्यमाना इत्यर्थः। तेच शेषार्थाः—ग्रहण वहन पेषण दर्शन प्रकारकभेदा इत्युदाहरति—चक्षुषेत्यादिना। उत्तरे इति जातादय इत्यर्थः। तेचार्थाः पुरस्ताद् वक्ष्यन्ते, ततः पूर्वन्तु नामविशेषेभ्यः प्रत्यय विशेषानादिष्टुमुपक्रमते,—

**अमृता०**—४२०: राष्ट्रादिति। वक्ष्यमाण जाताद्यर्थे राष्ट्र शब्दाद् घरामः स्यात्। राष्ट्रे जातादीत्यत्र आदिपदेन राष्ट्रे कृतः, राष्ट्रे लब्धः, राष्ट्रे प्रायेण भवतीत्यादयोऽर्था ज्ञेयाः। घ इयः—राष्ट्रियः।

**अमृता०**—४२१. अवारेति स्पष्टम्।

---

**बाल०**—शेषा। विकारात् प्राक् पूर्वं विधिः प्रत्ययविधानं शेषार्थे भवति। महाविभुरयं। शेषाः के इत्यपेक्षायामाह उक्त इति। तेन रक्तं रागादित्यादितददूर-भवश्चेत्यन्तेभ्य उक्तेभ्योऽन्येऽर्थाः शेषा स्युः। शेषार्थानां द्वैविध्यमाह त इति। प्रसिद्धया लोकप्रसिद्धयुक्त्या प्रयुज्यमानाः सर्वेषां प्रयोगार्हा इति। अनन्तरमत्रैव वक्ष्यमाणास्तत्र जातादयश्चेति ते शेषार्थाः पुनर्द्विविधाः स्युः। किञ्च, वक्ष्यमाणाः प्रत्ययाः तेन रक्तमित्य-द्यर्थेषु न भवति। अनन्तरोद्दिश्येषु सर्वेष्ववार्थेषु तु भवन्तीति शेषार्थाधिकारप्रयोजनमिति। तेषां मध्ये प्रथमतः प्रसिद्धया शेषार्था यथोदाह्रियन्त इत्याह पूर्व इति। तेन दीव्यतीत्यतः प्रागर्थे केशवणस्याधिकारादत्र प्रसिद्धयर्थेषु केशवण एव। श्रावण इति श्रवणेन गृह्यत इत्यर्थः। चक्षुषादावर्थे एतेऽव्यवहिततक्ष्यमाणा अपि ज्ञेया इत्याह चाक्षिवति। चातुरमिति चतुर्भिरुह्यत इत्यर्थः। औलूखला इति उलूखले पिष्टा क्षुण्णा वेत्यर्थः। इत्यादीत्यादिपदेन शिष्टप्रयोगानुसारादन्येऽप्यूह्याः। इदानीं तत्र जातादावुदाहरिष्यन्नाह उत्तरे त्विति ॥४१৫

**बाल०**—राष्टा। तत्र जातादावर्थे राष्टादुत्तरो घराम स्यात्। घ इयः अ-इद्वयस्येत्यरामहरः ॥ ४२० ॥

**बाल०**—अवा। तत्र जातादौ अवारपारात् खरामः स्यात्। अवारपारे जातादिः अवारपारीण इति ॥ ४२१ ॥

## ४२२. विगृहीताच्च ।

अवारीणः पारीणः पारावारीण इति चेष्यते ।

## ४२३. ग्रामाद् य-नृसिंह खौ ।

ग्राम्यः ग्रामीणः । न वृष्णीन्द्रहेत्विति पुरुषोत्तमवत्त्वनिषेधः—ग्रामीणाभार्यः ।

## ४२४. कुल-कुक्षि-ग्रीवाभ्यो माधव ढकः श्व-खड्गालङ्कारेषु ।

**कौलेयकः श्या, कौक्षेयकः खड्गः, ग्रैवेयकः कण्ठाभरणः ।**

---

**अमृता०**—४२२. विगृहीतादिति । अवारपार शब्दं समासात् विगृहीतकरणेन पृथक् कृतात् च खरामः स्यात्, तथा विपरीतभावेन स्थितात् च खरामः स्यात् जाताद्यर्थे । स्पष्टीकृतमुदाहरण त्रयेण ।

**अमृता०**—४२३. ग्रामादिति । जाताद्यर्थे ग्राम शब्दाद् यरामः, नृसिंह खरामश्च भवति । ग्राम्य इति—तद्धिते यश्चेति यरामस्य भगवत्संज्ञत्वात् अइ द्वयस्येत्यरामहरः । खरामान्तस्य लक्ष्मीत्वे—वाच्यलिङ्ग लक्ष्मी स्तुल्याधिकरण जातीययो रित्यनेन प्राप्तस्य पुरुषोत्तमवत्त्वस्य निषेध लक्षणं स्मारयति—नवृष्णीन्द्रहेत्विति । तुल्याधिकरणे—ग्रामीणाभार्या यस्येति पीताम्बरः । अत्र नृसिंह खरामस्य वृष्णीन्द्रहेतु तद्धितत्वेन तदन्त-लक्ष्म्या न पुरुषोत्तमवत्ता ।

**अमृता०**—४२४ कुलेति । तत्रजाताद्यर्थे श्व-खड्गालङ्कारेषु वाच्येषु यथाक्रमं कुल कुक्षिग्रीवा शब्देभ्यो माधव ढकः ष्यात् । ढ एय इत्युपदिष्टम्, तेनात्र एयक इत्येवं प्रत्यय स्वरूपम् । माधवत्वाद् वृष्णीन्द्रः ।

---

**बाल०**—विगृ । तत्र जातादौ विगृहीतादपारात् परात् व्याख्यानतो विशेषलाभ इति शिष्टोक्त्या व्युत्क्रमाच्च खराम स्यात् । तेन अवारे पारे पारावारे जातादिरिति क्रमेणावारीण इत्यादित्रयं ॥ ४२२ ॥

**बाल०**—ग्रामा । तत्र जातादावर्थे ग्रामादुत्तरे य नृसिंहखौ भवतः । ग्रामे जातादि-रिति ग्राम्य इत्यादिद्वयं । एतत्प्रत्ययान्तस्य लक्ष्मीत्वे वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरण-जातीयोरित्यनेन प्राप्तपुरुषोत्तमवत्त्वस्य बाधकलक्षणं स्मारयति न वृष्णीति । न वृष्णीन्द्र-हेतुतद्धितान्तलक्ष्मीररक्तविकारयोरिति समुदायः । ग्रामीणाभार्या यस्येति पीताम्बरसमासे ग्रामीणाभार्यः ॥ ४२३ ॥

**बाल०**—कुल । तत्र जातादावर्थे श्वखड्गालङ्कारेषु वाच्येषु यथाक्रमं कुलकुक्षि-ग्रीवाभ्यो माधवढको भवति । स्पष्टमुदाहरणं वाक्यन्तु पूर्ववद्योज्यं ॥ ४२४ ॥

**४२५. कन्थाया माधव-ठः ।**

कान्थिकः ।

**४२६. निसस्त्यरामो देशान्निर्गते ।**

निष्ट्य श्चाण्डालादिः ।

**४२७. नित्यं ध्रुवे साधु ।**

**४२८. कर्त्र्यादिभ्यो माधव ढकः ।**

**कर्त्रिः कार्त्र्येयकः, कुम्भी कौम्भेयकः । एवं ग्रामेयकः नागरेयकः ।**

---

**अमृता०**—४२५. कन्थाया इति । तत्र जातादावर्थे कन्था शब्दान्माधव ढः स्यात् । कान्थिकः कीटविशेषः ।

**अमृता०**—४२६. निस इति । जातादौ देशान्निर्गतेऽर्थे निस् इत्यव्ययादुत्तरेत्यरामः स्यात् । देशोऽत्र ग्रामनगरादि स्थानम् । चाण्डालादि वर्णाश्रमवहिष्कृता निकृष्टजातिः ।

**अमृता०**—४२७. नित्यमिति । ध्रुवे वाच्ये त्यप्रत्ययेन सह निसः स्थाने नित्यमिति साधु स्यात् । निसः सरामहर इह निपातफलम् ।

**अमृता०**—४२८. कर्त्र्यादिभ्य इति । तत्र जातादावर्थे कर्त्रिप्रभृतिभ्यो माधव ढकः स्यात् । कुत्सिता स्त्रयो यत्र स कर्त्रिः, कोः कद्भावो निपातात्, तत्र जातादिः कर्त्रेयकः । कर्त्रि कुम्भी उम्भि पुष्कर पुष्कल ग्राम नगर कुण्डिन माहिष्मती कर्मण्वती गोमती हस्ति मोदन उख्या भक्ति इत्येते कक्ष्यावयः ।

---

**बाल०**—कन्था । तत्र जातादावर्थे कन्थाया उत्तरो माधवठः स्यात् । कन्था चीरवस्त्रनिर्मिता तस्यां जातादिः कान्थिकः कीटादिः ॥ ४२५ ॥

**बाल०**—निस । तत्र जातादौ मध्ये देशान्निर्गतेऽर्थे निसः परस्त्यरामो भवति । निर्गतो देशादिति निष्ट्यः निर्दुप्रादुराविश्चतुरामित्यनेन षत्वं । षात् परस्येति तरामस्य ढराम इति । निरो वर्णाश्रमवहिष्कृते इति कश्चित् ॥ ४२६ ॥

**बाल०**—नित्यं । ध्रुवे वाच्ये त्यप्रत्ययेन सह निसः स्थाने नित्यं साधु । त्यप्रत्ययो निसः सरामहरश्चात्र निपातफलं ॥ ४२७ ॥

**बाल०**—कर्त्र्यां । तत्र जातादावर्थे कर्त्र्यादिभ्यो माधवढको भवति । कर्त्र्यां जातादिः कार्त्रेयक इति कौम्भेयक इत्यादि । कर्त्री कुम्भी ग्राम नगरी माहिष्मती कर्मण्वती कर्त्रि हस्तिन् पुष्कर पुष्कल यौवन कुण्डिनेति द्वादशः कर्त्र्यादिः । किञ्चात्र कर्त्रीति कर्तृशब्द ईवन्तः । कत्रीतितु कुत्सितास्त्रयो यत्रेति कोः कदित्यनेन कदादेशसिद्धमिति जिनेन्द्रः ॥ ४२८ ॥

## ४२९. नद्यादिभ्यो माधव ढः ।

नादेयं जलं, वाराणसेयो जनः ।

## ४३०. दक्षिण पश्चात् पुरोभ्यो माधव ढः ।

दक्षिणाशब्दोऽयमव्ययम् । दाक्षिणात्यः पाश्चात्यः पौरस्त्यः ।

## ४३१. रङ्कोरमनुष्ये माधवफ-केशवणौ ।

रङ्कुर्देशः, राङ्कवायणो गौः राङ्कवं वस्त्रम् ।

## ४३२. द्यु-प्रागवागुदक्प्रतीचो यरामः ।

दिव्यं प्राच्यं अवाच्यं उदीच्यं प्रतीच्यम् ।

---

**अमृता०**—४२९. नद्यादिभ्य इति । तत्र जाताद्यर्थे नद्यादिभ्य उत्तरे माधव ढः स्यात् । नद्यां जातं नादेयम् । नदी मही वाराणसी कौशाम्बी श्रावस्ती साल्वा दार्वा खादिरी काशफरी पूर्वनगरी वामा दामा सेनकी इति नद्यादिः ।

**अमृता०**—४३०. दक्षिणेति । तत्र जाताद्यर्थे दक्षिणा-पश्चात्-पुरः शब्देभ्यो नृसिंहः त्यप्रत्ययो भवति । यद्यपि कृष्णनामगणे प्रविष्टस्य दक्षिण शब्दस्य लक्ष्मांदक्षिणा शब्दः प्रसिध्यति तथाप्यत्र तन्निराकर्त्तुं विशेषमाह—अव्ययमिति । मुग्धबोधमतेन विभाषया तलो पेन पाश्चात्य इति च सिध्यति ।

**अमृता०**—४३१. रङ्कोरिति । तत्र जातादावर्थे अमनुष्ये वाच्ये माधव फः केशवणश्च भवतः । रङ्कु नामा देशः, तत्र जातादिः, उद्वयस्येति गोविन्दः—राङ्कवायणः गौः । अमनुष्य इति किम्—राङ्कवको मनुष्य ।

**अमृता०**—४३२. द्यु इति । तत्र जाताद्यर्थे दिव् प्राच् अवाच् उदच् प्रत्यच इत्येतेभ्यो यरामः स्यात् । उदीच्यमिति—उदच उदीचि भगवतीति उदीचादेशः । प्रतीच्यमिति—अचोऽरामहरो भगवतीति यरामापाये पूर्वे रामस्य त्रिविक्रमः ।

---

**बाल०**—नद्या । तत्र जातादावर्थे नद्यादिभ्यो माधवढः स्यात् । नद्यां जातादि नादेयमिति तथा वाराणसेयमित्यादि । नदी वाराणसी ग्रावन्ती मही कौशायनी कादिरी वामा दामा साल्वा दूर्वा दार्वी सेनकी पूर्वनगरीति नद्यादिश्चतुर्दशः ।। ४२९ ।।

**बाल०**—दक्षि तत्र जातादावर्थे दक्षिणापश्चात्पुरोभ्य उत्तरो नृसिंहस्त्यः स्यात् । दक्षिणाशब्दो यद्यपि आवन्तोऽव्ययश्चास्ति तथाप्यव्ययसाहचर्यादव्ययस्यैव ग्रहणमित्याह दक्षिणेति । दक्षिणादिशि जातादि. दाक्षिणात्य इति । अनव्ययत्वेऽत्र पुरुषोत्तमवत्त्वं स्यात् । एवं पाश्चात्य इति द्वयं ।। ४३० ।।

**बाल०**—रङ्को । तत्र जातादावर्थे मनुष्ये वाच्ये रङ्कुशब्दान्माधवफकेशवणौ भवतः । रङ्कोर्दुष्पष्टार्थत्वादर्थं स्पष्टयति रङ्क्विति । राङ्कवायण इत्यत्र द्वये वाक्यं पर्ववत् ।। ४३१ ।।

## ४३३. अव्ययात् कालवाचिनः केशवस्तनः ।

प्राक्तनः ।

## ४३४. ऐषमोह्यः श्वसस्त्यश्च ।

ऐषमस्तनः ऐषमस्त्यः । एवं ह्यस्तनः । इत्यादि माधवठेन शौवस्तिक-श्चेष्यते ।

## ४३५. अमाविःक्वेहतसित्रेभ्य स्त्यरामः ।

अमात्यः आविष्टयः क्वत्यः इहत्यः इतस्त्यः अत्रत्यः ।

---

**अमृता०**—४३३. अव्ययादिति । तत्रजातादावर्थे कालवाचिनोऽव्ययात् परः केशवतनप्रत्ययः स्यात् । प्रागित्यव्ययं नतु अञ्चधातु—निष्पन्नः । एवं सायन्तनः दिवातन इत्यादयश्च । केशवत्वादीप्—सायन्तनी पूजा ।

**अमृता०**—४३४. ऐषम इति । तत्रजातादयथे ऐषमस् ह्यस् श्वस् इत्येतेभ्य उत्तरे त्यप्रत्ययश्च भवति, चकारात् केशव तनश्च । ऐषमो वर्त्तमान वत्सरः, तत्र जातः—ऐषमस्तनः ऐषमस्त्यः । ह्यस् शब्दो गतकल्यवाची, ह्यस्तनः ह्यस्त्यः । श्व आगामिकल्प-वाची, श्वस्तनः श्वस्त्य इति । शौवस्तिकश्चेष्यत इति—श्वस् शब्दात् ठरामे कृते वृष्णीन्द्र स्थानेत्यादिना वरामस्य औव् , ततोनिपातात् तुगागमः । अव्ययादित्यनुवर्त्तनीयम् ।

**अमृता०**—४३५. अमेति । पूर्वोक्तार्थे अमा प्रभृत्यव्ययेभ्यः त्यप्रत्ययः स्यात् । अमा सह स्थितः अमात्यो राजमन्त्री । आविष्टय इति—निर्दुः प्रादुरित्यादिना षत्वं, षात् परस्येति टवर्गत्वम् । क्वप्रभृतय स्तद्धिताव्ययानि ।

---

**बाल०**—द्यु प्रा । तत्र जातादौ द्यु प्रागवादुकप्रतीचो यरामो भवति । दिवि जातादि दित्यमित्यादि ॥ ४३२ ॥

**बाल०**—अव्य । तत्र जातादौ कालवाचिनोऽव्ययात् केशवस्तनः स्यात् । क्विवन्त-प्रपूर्वाञ्चधातोरपि प्राक् सम्भवतीति अव्ययादित्युक्तं । तेन प्राक् पूर्वं जातादिः प्राक्तन इति ॥ ४३३ ॥

**बाल०**—ऐष । पूर्वोक्तार्थे ऐसामोह्यःश्वस उत्तरस्त्यो भवति चकारात् तनोऽपि । एतेषां कालवाचिरूपाव्ययत्वान्नित्य तने प्राप्ते पाक्षिकार्थं वचनं । वर्त्तमानवत्सर ऐषमस् तत्र जातादिः ऐषमस्तन इत्यादिद्वयं । ह्यो गतकल्यवचनं तत्र जातादिः ह्यस्तनः ह्यस्त्यश्च । इत्यादीत्यादिपदेन भाव्यहोवाचि श्वस् तस्मिन् जातादिः श्वस्तनः श्वस्त्यश्चेति । तत्र जाताद्यर्थे माधवठेन सह श्वसः स्थाने शौवस्तिकश्चेतीष्यते । वक्तव्यप्रकारान्तरमेतत् तरामागमश्चात्रेष्टः ॥ ४३४ ॥

**बाल०**—अमा । तत्र जातादौ अमादिभ्यस्त्यरामो भवति । अमाशब्दः समीपवाची स्वरादिगणपाठादव्ययं तत्र जातादिः अमात्यः बन्धुवर्गः । आविःशब्दश्चाद्यव्ययं पूर्ववद्वाक्ये

**४३६. अरण्याण्णरामः ।**

**आरण्यः ।**

**४३७. दूरादेत्यः ।**

**दूरेत्यः ।**

**४३८. उत्तरान्नृसिंहाहः ।**

**औत्तराहः ।**

**४३९. तीरोत्तरपदात् केशवणः, रूप्योत्तरपदाण्णरामः ।**

**गाङ्गतीरं गाङ्गरूप्यम् ।**

---

**अमृता०**—४३६. अरण्यादिति स्फुटम् ।

**अमृता०**—४३७. दूरादिति च स्पष्टम् ।

**अमता०**—४३८. उत्तरादिति । तत्र जाताद्यर्थे उत्तरशब्दादाहृ प्रत्ययः स्यात् ।

**अमृता०**—४३९. तीरेति । तीरमुत्तर पदं यस्य तस्मात् केशवणः स्यात्तत्र जाताद्यर्थे, तथा रूप्यमित्युत्तरपदं यस्य तस्मात् णरामः स्यात्तत्रैवार्थे। गङ्गातीरे जातं गाङ्गतीरं फलादि । प्रत्यय सिद्धे—ईवापोः संज्ञायां बहुलमिति वामनः । गङ्गाया आगतं गङ्गारूप्यं, तत्र जातं गाङ्गरूप्यं, पूर्ववत् वामनः।

---

निर्दुःप्रादुराविरिति षत्वं । षात् परस्येति तस्य टत्वं आविष्ट्य इति । क्वेति किम्शब्दस्य सप्तम्यन्त वदाद्यव्ययं क्वत्य इति । इहेति इदम्शब्दस्य सप्तम्यन्तं वदाद्यव्ययं इहत्य इति । इत इति इदम्शब्दस्य पञ्चम्यास्तसिप्रत्ययान्तं वदाद्यव्ययं इतस्त्य इति। अत्रेति इदम्शब्दस्य सप्तम्यास्त्रप्रत्ययान्तं वदाद्यव्ययं अत्रत्य इति। क्वेत्यादिचतुर्णां निपातसाध्यत्वं वक्ष्यते । किञ्च, तसित्रेत्यनेन तसि त्रप्रत्ययान्तं गृह्यते, न केवलमुदाहृतद्वयं तेन कुतस्त्यः कुत्रत्यः यतस्त्यः यत्रत्य इत्यादयोऽपि यथासम्भवमूह्याः ॥ ४३५ ॥

**बाल०**—अर । तत्र जातादौ अरण्याण्णरामः स्यात् ॥ ४३६ ॥

**बाल०**—दूर । तत्र जातादौ दूरशब्दादेत्यो भवति ॥ ४३७ ॥

**बाल०**—उत्त । तत्र जातादौ उत्तरशब्दात् नृसिंहरूप आहः स्यात् ॥ ४३८ ॥

**बाल०**—तीर । तीरमुत्तरपदं यस्य तस्मात् तत्र जातादौ केशवणः स्यात् । रूप्यमुत्तरपदं यस्य तस्मात्तु पूर्वोक्तेऽर्थे णरामः । गङ्गायास्तीरं गङ्गातीरं तस्मिन् जातादि गाङ्गरूप्यमित्यत्र द्वये समासावस्थायां ईवापोः संज्ञायां बहुलमिति वामनः । केशवणत्वात् लक्ष्म्यान्तु गाङ्गतीरी लताप्रभृतिः । किञ्च, गाङ्गरूप्यमित्यत्र रूप्यप्रत्ययस्य केवलयत्वाभावात् विष्णुजनात्तद्धितयस्येत्यनेन यहरो न स्यात् ॥ ४३९ ॥

**४४०. दिक् पूर्वपदादनाम्नि णरामः ।**

पौर्वशालः औत्तरशालः ।

**४४१. नृसिंहेरामाद् गोत्रात् केशवणः ।**

छरामापवादः । दाक्षेर्जातादि दाक्षः ।

**४४२. आदि वृष्णीन्द्राच्छरामः, नामधेयाद्वा ।**

वैष्णवीयः राधीयः तदीयः त्वदीयः । द्वित्व-बहुत्वयोर्युष्मदीयः, एवं मदीयः अस्मदीयः ।

---

**अमृता०**—४४०. दिगिति । दिग्वाचि शब्दः पूर्वपदं यस्य तस्मादनाम्नि असंज्ञायां जाताद्यर्थे णरामः स्यात् । पूर्वस्यां शालायां भवः, तद्धितार्थे त्रिरामी पौर्वशालः । एव मौत्तरशाल इत्यादि ।

**अमृता०**—४४१. नृसिंहेति । तत्र जातादावर्थे गोत्रार्थको यो नृसिंह इरामः तदन्तान्नाम्न उत्तरे केशवणः स्यात् । छरामापवाद इति—आदि वृष्णीन्द्रादिति योऽनन्तरो वक्ष्यते तस्यापवाद इत्यर्थः ।

**अमृता०**—४४२. आदीति । आदिः आद्यक्षरो वृष्णीन्द्रो यस्य तस्माज्जातादावर्थे छरामः स्यात् । आदि वृष्णीन्द्रान्नामधेयात्तु छो वा भवति । पक्षे केशवणः । तदादेश्चादि वृष्णीन्द्रत्वमतिदिष्टं प्राक्, अत इहोदाहरति—तदीय इत्यादि । त्वयि जातादि स्त्वदीयः । युष्मदीय इति—युष्मदस्मदो स्तवन्मदावुत्तरपद प्रत्यययोरेकत्वे इत्यनेन एकत्वे हि त्वदादेशोक्तं द्वित्व-बहुत्वयोस्तु नादेशः । नामधेयात् तृतीयसूत्रे दर्शयिष्यते ।

---

**बाल०**—दिक् । दिक् पूर्वपदं यस्य तस्माच्छब्दात् तत्र जातादावर्थेऽनाम्नि वाच्ये णरामो भवति । पूर्वस्यां शालायां जातादिः पौर्वशाल इति । एवमौत्तरशालः । अनाम्नीति किं पूर्वा चासौ इषुकामशमी केति सप्तर्षय इत्यादिवत् संज्ञायां श्यामरामः । पश्चात् तत्र जातादौ सामान्यतः केशवणः दिशस्त्वमद्राणामित्यनेनोत्तरपदस्य वृष्णीन्द्रः पूर्वेषुकामशमित्येकस्य संज्ञा ॥ ४४० ॥

**बाल०**—नृसिं । पूर्वोक्तेऽर्थे नृसिंह इरामो यत्र तस्माद्गोत्रवाचकान्नाम्नः केशवणः । वक्ष्यमाणछरामस्यापवादोऽयमित्याह छरेति ॥ ४४१ ॥

**बाल०**—आदि । आदिवृष्णीन्द्राच्छब्दात् तत्र जातादौ छरामः स्यात् । आ ऐ औरामा यस्येत्यनेन तद्यदादयश्चेत्यनेन चादिवृष्णीन्द्रसंज्ञोक्ता । न,म । पूर्वोक्तेऽर्थे नामधेयात् संज्ञाशब्दात् छरामो भवति । वैष्णवे जातादिः वैष्णव्यां वा वैष्णवीय इत्यादि । तस्मिन् तस्यां वा जातादिः तदीयः । एव यदीय इत्यादिः । त्वयि जातादिः त्वदीयः । युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरेकत्व इत्यनेनात्र त्वदादेशः । द्वित्वबहुत्वयोरित्यनेन द्विवचनबहुवचनयोर्विषययोर्युष्मदस्मदोस्त्वन्मदादेशौ न भवत इति सूचितं । तेन

**४४३. तावक-तावकीन-यौष्माक-यौष्माकीनाश्च ।**

**४४४. मामकादयश्च पूर्ववत् साधवः ।**

नामधेयाद् वा, कृष्णीयाः कार्ष्णाः, रामीयाः रामाः ।

**४४५. भवतो माधवठः ।**

भावत्कः ।

**४४६. भवदीयश्च ।**

तत्रसाधुः स्यात् ।

---

**अमृता०**—४४३. तावकेति । जातादावर्थे युष्मच्छब्दजातस्य तव पदस्य नृसिंहवुखरामाभ्यां सह तावक-तावकीनौ साधूभवतः, तथा युष्माकमित्यस्य केशवण-नृसिंह ख रामाभ्यां सह यौष्माक यौष्माकीनौ साधू भवतः ।

**अमृता०**—४४४. मामकेति । पूर्वोक्तार्थे अस्मच्छब्द जातस्य ममेति पदस्य पूर्ववत् प्रत्ययाभ्यां सह मामक-मामकीनौ साधू स्याताम् । पूर्वोक्त सूत्रस्य प्रतीक्—नामधेयाद्वेति । कृष्णे जाताः कृष्णीयाः, पक्षे सामान्यसिद्धः केशवणः—कार्ष्णा इति ।

**अमृता०**—४४५. भवत इति । तव जाताद्यर्थे भवतु शब्दात् माधव ठः स्यात् । भावत्क इति—चतुर्भुजान्तादित्यादिना तान्तत्वेन ठस्य कः ।

**अमृता०**—४४६. भवदीय इति । वृत्तिमाह—तत्र साधुरिति । पूर्वोक्तार्थं एव छप्रत्ययेन साधुरित्यर्थः । भवतः तरामस्य दराभो निपातात् ।

---

युवयोर्युष्मासु वा जातादिः युष्मदीय इति । एवम्प्रकारेण मयि जातादिः मदीयः । आवयोरस्मासु वा जातादिः । अस्मदीय इति ॥ ४४२ ॥

**बाल०**—ताव । प्रागुक्तेऽर्थे तवेत्यस्य नृसिंहवुखाख्यां सह तावकतावकीनाविति द्वौ द्वित्वबहुत्वयोर्वर्त्तमानस्य युष्मदस्ताभ्यां यौष्माकयौस्माकीनाविति द्वौच साधू भवतः, खात् पूर्वं करामागमश्च भवति । षष्ठ्याः सामान्यसम्बन्धनिरूपकत्वात् यथायथमपादानादिसम्बन्धबोधकत्वमप्यस्ति तस्मादर्थार्थं नेदं लक्षणं, किन्तु तवेत्यस्य विष्णुभक्तिमहाहराभावार्थं युष्मदः संसारस्यारामार्थं नृसिंहवुखार्थं खे करामागमार्थञ्चेति ॥ ४४३ ॥

**बाल०**—माम । पूर्ववत् तावकादिवत् । तत्तत्प्रत्ययकार्याभ्यां ममादीनां मामकादयश्च साधवो भवन्ति । तव-युवयोर्युष्माकं वा सम्बन्धे जातादिरिति वाक्ये तावकादयश्चत्वारः । एवं मम आवयोरस्माकं वा सम्बन्धे जातादिर्मामक मामकीन आस्माक आस्माकीना इति चत्वारश्च । उत्तरसूत्रस्योदाहरणार्थमाह नामेति । कृष्णे जातादयः कृष्णीयाः, पक्षे औत्सर्गिककेशवणः कार्ष्णा इतिच । एवं रामीया इत्यादिद्वयं ॥ ४४४ ॥

**बाल०**—भव । तत्र जातादौ भवच्छब्दान्माधवठो भवति । भावत्क इत्यत्र चतुर्भुजान्तादित्यनेन तान्तात् ठस्य कः ॥ ४४५ ॥

**४४७. काश्यादिभ्यष्ठो नृसिंहो माधवश्च ।**

काशिका काशिकी, वैदिका वैदिकी ।

**४४८. आदि वृष्णीन्द्रादपि बहुवचनविषयाज्जनपदाद् वुर्नृसिंहः, समुद्रान्नौ-मनुष्ययोः, नगरात् कुत्सा-प्रावण्ययोः, अरण्यान्मनुष्य पथ्यध्याय न्याय-विहार-हस्तिषु, गोमये वा ।**

शौरसेनकः माथुरकः । सामुद्रिका नौः, सामुद्रिको मनुष्यः । नागरकौ खल-कुशलौ । आरण्यको मनुष्यः, आरण्यकः पन्था इत्यादि । आरण्यकं आरण्यं गोमयम् ।

---

**अमृता०**—४४७. काश्येति । तत्र जातादावर्थे काशीप्रभृतिभ्यो नृसिंहठः माधव ठश्च भवति । काश्यां जाता ठ इकः, लक्ष्म्यामापकाशिका, माधव ठ पक्षे तु ईप्— काशिकीति । आदि पदेन वैदिकेत्यादि । गणस्तु परिशिष्टे दृष्टव्यः ।

**अमृता०**—४४८. आदीति । तत्र जाताद्यर्थे आदिवृष्णीन्द्राद् बहुवचन विषयाज्जनपदात् ( अपिना अनादि वृष्णीन्द्राच्च तादृशात् ) नृसिंह वुः स्यात् । तत्रैवार्थे नौ-मनुष्ययो र्वाच्ययोः समुद्रात् नृसिंह वुः स्यात् । तत्रैवार्थे कुत्सा-प्रवीणता वाच्ययो र्नगरात् नृसिंह वुः स्यात । तथा तत्रैवार्थे मनुष्यादि वाच्य षट्के अरण्य शब्दान्नृसिंह वु र्भवति । गोमये वाच्ये तु अरण्यात् नृसिंह वु र्वा भवति । प्रथमसूत्रस्योदाहरणद्वयं—शौरसेनक इत्यादि । शूरसेने भवा येऽन्तरालदेशास्ते शौरसेनाः, तेषु जातः शौरसेनकः । एवं पाञ्चालकः आङ्गकः आजमीढकः कालञ्जक इत्यादयश्च । अथावशिष्ट सूत्रत्रयस्योदाहरणानि क्रमतआह—सामुद्रिकेत्यादीनि । गोमये वाच्ये विकल्पविधानात् पक्षे— अरण्याण्णराम इत्यनेन णरामः ।

---

**बाल०**—भव । वृत्तिमाह तत्रेति । तत्र पूर्वोक्तार्थे छेन सह भवतो भवदीयश्च साधुर्भवेत् । अत्र छः भवतो दश्च निपातफलं ।। ४४६ ।।

**बाल०**—काश्या । पूर्वोक्तेऽर्थे काश्यादिभ्यो नृसिंहो माधवश्च ठो भवति । काश्यां जातादिर्या सा काशिका वृत्त्यादिः माधवत्वात् काशिकीति । एवं वैदिका वैदिकी विद्यादिः । काश्यादेरित्यनेन सिद्धेऽपि यद्बहुवचनं तेनैतेषां ग्रहणं काशी वेद चेदि सञ्जाति सम्पाति सन्तापि सम्वाह्य मोदमान अच्युत सकुलाद हस्तिकर्षू कुनामन् हिरण्य करण गोवासन भावर्द्धि सुरङ्ग अरिन्दम सरमित्र साधुमित्र दासमित्र देवदत्त दासग्राम सोधावतान सौरतान युवराज युपराज उपराज सिन्धुमित्र देवराजेति काश्यादि-स्त्रिशत् ।। ४४७ ।।

**बाल०**—आदि । तत्र जातादौ आदिवृष्णीन्द्रात् बहुवचनविषयाज्जनपदात् अधिकारात् अनादिवृष्णीन्द्राच्च तद्रूपाज्जनपदात् नृसिंहो वुर्भवति । समु । पूर्वोक्तेऽर्थे

## ४४९. कौरवक-यौगन्धरकौ वा ।

साधू ।

## ४५०. मद्रकश्च ।

साधुः ।

## ४५१. करामोद्भवाद्देशात् केशवणः, कच्छादिभ्यश्च ।

ऋषिकात् आर्षिकः । काच्छः सैन्धवः । कच्छ सिन्धु कम्बोज गन्धार काश्मीर शाल्व कुरु रङ्कु ।

---

**अमृता०**—४४९. कौरवकेति । तत्र जाताद्यर्थे नृसिंह वु प्रत्ययेन कुरु-युगन्धरयोः कौरवक-यौगन्धरकौ वा साधूभवतः, पक्षे सामान्यतः केशव णः—कौरवः गौगन्धर इति ।

**अमृता०**—४५०. मद्रक इति स्पष्टम् । नृसिंह वु प्रत्ययस्य कार्यं वृष्णीन्द्र, तदभाव एवात्र साधुता ।

**अमृता०**—४५१. करामेति । कराम उद्भवो यस्य तादृशात्देशनाम्न उत्तरे पूर्वोक्तार्थे केशवणः स्यात्, तथा कच्छादिभ्यश्च देशनामभ्यो केशवणो भवति । ऋषिक नामा देश स्तत्र जात आर्षिकः । एवं माहिषिकः एक्षाक इत्यादयश्च । आदि पदेन सिन्धु प्रभृतयो ग्राह्या इति दर्शयति—कच्छेत्यादिना । अणु खण्ड विजापक अजवाह द्वीप अनूप इत्येते चात्र संग्राह्याः ।

---

नौमनुष्ययोर्वाच्ययोः समुद्रात् नृसिंहो वुः स्यात् । नग । पूर्वस्मिन्नर्थे कुत्साप्रावीण्ययोर्नगरात् नृसिंहो वुः स्यात् । अर । तत्र जातादौ मनुष्यादिषु षट्सु वाच्येषु अरण्यान्नृसिंहो वुर्भवति, गोमये वाच्येतु वा भवति । शूरसेने भवा येऽन्तरालदेशास्ते शौरसेनास्तेषु जातादिः शौरसेनकः । एवं शाकेत आर्जुनायन दाण्डायन राजगृह धार्त्तरङ्गी माठर व्याहार त्र्याहार आञ्जिकुलादिभ्यश्च । मथुराया एकत्वेऽपि बहुत्वमादराधिक्यात् । तेन मथुरासु जातादिः माथुरकः । एवं धूम चण्ड शशादन स्थली घोषस्थली महास्थली शस्त्रापितृ भक्ष्याणी मद्रकुल शस्याय वर्वर गर्दभ घोष पुष्प पल्ली अवयातीर्थ सक्षि द्वीप अन्तरीप अरुण उज्जयनी दाक्षिणापथेत्यादिभ्यश्च । समुद्रादित्यादिसूत्रत्रयस्य क्रमेणोदाहरणानि दर्शयति सामुद्रिकेत्यादिना । इत्यादीत्यादिपदेनाध्यायन्यायविहारस्तिनो ज्ञेयाः । गोमये वैकल्प्यात् आरण्यमित्यत्र अरण्याण्णराम इति णः ।। ४४८ ।।

**बाल०**—कौर । तत्र जातादावर्थे नृसिंहवुना साकं कुरुयुगन्धरयोः कौरवकयौगन्धरकौ वा साधू भवतः । पक्षे औत्सर्गिककेशवणेन कौरवयौगन्धरौ ।। ४४९ ।।

**बाल०**—मद्र । मद्रे जातादिरित्यर्थे करामेण मद्रकश्च साधुर्भवति ।। ४५० ।।

**बाल०**—करा । कराम उद्भवो यस्य तस्माद्देशनाम्नस्तत्र जातादौ केशवणः स्यात् ।

**४५२. मनुष्य-तत्स्थयोस्तु वु नृसिंहः ।**

काच्छको मनुष्यः । तत्स्थे—काच्छक मस्य हसितम् । सैन्धविका चूडा ।

**४५३. गहादिभ्यश्छरामः ।**

गहीयः नान्तरीयः । एवमेकग्राम-अन्तस्थ-सम-विषमेभ्यः ।

**४५४. मध्यस्य मध्यमश्च ।**

मध्यमीयः ।

---

**अमृता०**—४५२. मनुष्येति । मनुष्ये मनुष्यस्थे च वाच्ये पूर्वोक्तार्थे कच्छादिभ्यो नृसिंह वुः स्यात् । अस्य हसितमिति कच्छजात मनुष्यस्येत्यर्थः । सैन्धविकेति—सिन्धुदेशे जातो मनुष्यः सैन्धविकः, तत् स्थिता चूडा सैन्धविका ।

**अमृता०**—४५३. गहेति । पूर्वोक्तार्थे गहादिभ्य उत्तरे छरामः स्यात् । गहादेर्गण मुद्दिशति—एवमित्यादिना । अन्ये च परिशिष्टे द्रष्टव्याः ।

**अमृता०**—४५४. मध्यस्येति । गहादौ पठितस्य मध्यस्य मध्यमादेशश्च भवति । मध्ये जातो मध्यमीय इति ।

---

कच्छा । पूर्वोक्तेऽर्थे कच्छादिभ्यश्च देशेभ्यः केशवणो भवति । ऋषिकादिति ऋषिक-मुद्दिश्यादाह्रियते । ऋषिके जातादिः आर्षिक इति । एवमैक्षवाक नैलीनक वैजायक-प्रभृतयश्च । कच्छे जातादिः काच्छः । एवं सैन्धव इत्यादिः । कच्छादिगणं दर्शयति कच्छेत्यादिरङ्क्वन्तेन । अत्र वर्ण अङ्गार मधूमत् विरूप अनुषण्ड द्वीप अजपाद कुतूभर इत्येतानपि केचित् पठन्ति ।। ४५१ ।।

**बाल०**—मनु । पूर्वोक्तेऽर्थे मनुष्यमनुष्यस्थयोर्वाच्ययोस्तु कच्छादिभ्यो नृसिंहो वुर्भवति । अस्य कच्छजातादेर्हसितमपि काच्छकं । एवं तत्स्थिता चूडा सैन्धविकेत्यपि ।।४५२

**बाल०**—गहा । गहादिभ्यस्तत्र जातादौ छरामो भवति । गहः घटा तस्मिन् जातादिः गहीय इत्यादि । अतिदेशेनैव गणं निर्दिशति एवमिति । एकग्रामादिचतुर्भ्योऽपि छः स्यात् । सूत्रे आदिशब्दत्वेऽपि यद्बहुवचनं तदन्यानपि संगृह्णाति यथा । उत्तम अङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाखि उत्तमशाखि समानशाखि एकपलाश इषुप्र इष्वनीक अवस्यन्दन कामप्रस्थ खाडायन गान्धारि शेवनिका शैशरि काठेराण शौङ्गि आसुरि आहिंसि आमिति आमित्रि व्याडि भौरि भौलि आध्यश्वि आग्निशर्मि शौद्रि वाराटकि वाल्मीकि क्षौमधृति उत्तर उत्तम नेमि धन्वन् दत्ताश इत्यादि । एषां केचिद्भूयः सामान्यतः केचिद्भूयः करामोद्धवादित्यतश्च केशवणे प्राप्ते केचिद्भूय आदिवृष्णीन्द्रादपीति नृसिंहवु प्राप्ते केचिद्भूयोऽप्राप्ते विधानमिदं ।। ४५३ ।।

**४५५. पर-जन-देव-राजभ्य: कीयः ।**

परकीयमित्यादि चान्द्रमतम् । स्व शब्दात्तु न दृश्यते । तस्मादप्येके, तेन स्वोयं स्वकीयम् । स्वीयमित्यसाधु रिति पशुपतिः ।

**४५६. वेणुकादिभ्यश्छरामो वृष्णीन्द्रश्च ।**

वैणुकीयं, चैत्रकीयं, चैत्रकीयमित्यादि ।

**४५७. पार्वताच्छरामः ।**

पार्वतीयः ।

---

**अमृता०**—४५५. परेति । एतेऽपि गहादौ पठ्यन्ते । जातादावर्थे परप्रभृति चतुर्भ्य उत्तरे कीयः प्रत्ययः स्यात् । "जन परयोः कुक् च", 'देवस्य चे'ति वार्त्तिकमतम् । केचिदत्र स्व शब्दञ्च पठन्ति, तत्तु न पाणिन्यादिसम्मतमित्याह—स्वशब्दात्तु न दृश्यत इति । येतु पठन्ति तदुदाहरणं दर्शयति—स्वीयं स्वकीयमिति । एतन्मते कुगागमो वा । मउस्यैतस्या-सारस्यं सूचयति पशुपति वाक्येन—असाधुरिति ।

**अमृता०**—४५६. वेणुकेति । पूर्वोक्तार्थे वेणुकादिभ्यः छरामः स्यात, तेषां वृष्णीन्द्रश्च भवति । नृसिंहछ इत्येव कथनमुचितं, तथापीदृश्युक्ति र्बुद्धि वैचित्र्यर्था । आदि पदेन औत्तरपदकीयं माध्यपदकीयं प्रास्थकीयमित्यादि । आकृतिगणोऽयम् ।

**अमृता०**—४५७. पर्वतादिति स्पष्टम् । पार्वतीयो मनुष्यः ।

---

**बाल०**—मध्य । पूर्वोक्तेऽर्थे मध्यस्य सम्बन्धे छरामस्तस्मिंस्तस्य मध्यमञ्च स्यात् । मध्ये जातादिर्मध्यमीयः ॥ ४५४ ॥

**बाल०**—पर । पूर्वोक्तेऽर्थे परादिभ्यश्चतुर्भ्यः कीयो भवति । परस्मिन् जातादिः परकीयं । इत्यादीत्यादिपदेन जनकीयं देवकीयं राजकीयमिति । चान्द्रस्याप्येतन्मत-मित्याह चान्द्रेति, चान्द्रमतमित्यस्मात् चशब्दः प्रयोक्तव्यः तत्था सति चान्द्रमतञ्चेत-दित्यर्थः । सूत्रेऽस्मिन् स्वशब्दस्यापि ग्रहणमिति परमतेनोपपादयन्नाह स्वेति । स्वशब्दात्तु न दृश्यते कीय इत्यन्ये । तस्मात् स्वशब्दादपि कीय इत्येकेच । तेन मतभेदेन कीयभावा-भावत्वात् स्वीयं स्वकीयञ्चेति । किञ्च, स्वशब्दात् कीयराहित्यं पशुपतेरनभीष्टमित्याह स्वोयमित्यादिना । भङ्ग्या एकेषां पशुपतेश्च मतमेव स्वमतमिति सूचितं दुर्बले बलवद्बा-धापातात् ॥ ४५५ ॥

**बाल०**—वेणु । तत्र जातादौ वेणुकादिभ्यश्छरामस्तस्मिन् वेणुकादीनां वृष्णीन्द्रश्च भवति । नृसिंहछ इति यन्न कृतं तद्वैचित्र्यार्थं । इत्यादीत्यादिपदात् औत्तरपदकीयं । माध्य-पदकीयमिति । आकृतिगणोऽयं । करामोद्धवादित्यनेन प्राप्तकेशवणबाधनार्थमिदं ॥४५६॥

**बाल०**—पर्व । पूर्वोक्तेऽर्थे पर्वतात् छरामः स्यात् । मनुष्यविषयोऽयं परत्रा-मनुष्येत्युक्तेः । पर्वते जातादिः पर्वतीयो मनुष्यः ॥ ४५७ ॥

**४५८. अमनुष्ये तु वा ।**

पर्वतीयं फलं पार्वतं वा ।

**४५९. अर्द्धाद् यरामः, सपूर्वान्माधवढः ।**

अर्द्धयं, माथुरार्द्धिकम् ।

**४६०. परार्द्धादि यरामः ।**

परार्द्धयं, अवरार्द्धयं, अधमार्द्धयं मध्यमार्द्धयं उत्तरार्द्धयम् ।

**४६१. दिक् पूर्वार्द्धादुभौ ।**

पौर्वार्द्धिकं पूर्वार्द्धयं, दक्षिणार्द्धिकं दक्षिणार्द्धयम् ।

**४६२. ग्राम-जनपदैक देशत्वे केशवण-माधवठौ ।**

---

**अमृता०**—४५८. अमनुष्य इति । तत्र जातादावर्थे अमनुष्ये तु वाच्ये पर्वताव् छरामो वा स्यात् । पक्षे सामान्यतः केशवणः ।

**अमृता०**—४५९. अर्द्धादिति । पूर्वोक्तार्थे अर्द्धवशब्दाद् यरामः स्यात्, पूर्ववद विशिष्टादर्द्धात्तु माधव ठो भवति । अर्द्धे जातं अर्द्धयम् । मथुराया अर्द्धं मथुरार्द्धं, तत्र भवो माथुरार्द्धिकमिति ।

**अमृता०**—४६०. परार्द्धादिरिति । पूर्वोक्तार्थे परार्द्धादि शब्दाद्यरामः स्यात् । परार्द्धे जातं परार्द्धयम् । आदिना चत्वारोग्राह्या इति दर्शितम् ।

**अमृता०**—४६१. दिगिति । दिग् वाचिशब्दः पूर्वे यस्य तथाभूतादर्द्धादुभौयराम-माधव ठौ भवतः । पूर्वार्द्धे जातं पौर्वार्द्धिकमिति द्वयम् । एवमन्ये च ज्ञेयाः ।

**अमृता०**—४६२. ग्रामेति । दिक्पूर्वार्द्धादित्युनुवर्त्तते । तत्र जातादावर्थे ग्रामैक देशत्वे च वाच्ये दिक् पूर्वार्द्धात् केशवण-माधवठौ भवतः । पूर्वार्द्धे स्थिता जाता वा पौर्वार्द्धाः, तत्र ग्रामादि वाच्य प्रतीयते वाक्यमाह—इमे इत्यादि । इमे वृक्षा जना वेत्यर्थः ।

---

**बाल०**—अम । अमनुष्ये वाच्येतु प्रागुक्तार्थे पर्वताच्छरामो वा स्यात् । पक्षे सामान्यतः केशवणश्च । पर्वते जातादि पार्वतीयमित्यादिद्वयं ॥ ४५८ ॥

**बाल०**—अर्द्धा । पूर्वोक्तेऽर्थे अर्द्धशब्दाद्यरामः स्यात्, पूर्वपदेन सह वर्त्तमानात्तु तस्मान्माधवठः । अर्द्धजातादि अर्द्धयमिति । मथुराया अर्द्धं मथुरार्द्धं तस्मिन् जातादि माथुरार्द्धिकं ॥ ४५९ ॥

**बाल०**—परा । प्रागुक्तार्थे परार्द्धादिरुत्तरो यरामः स्यात् । परार्द्धे जातादि परार्द्धय-मित्यादि पञ्चकं । एवमूर्द्धयं अधरार्द्धयं उत्तमार्द्धयं ॥ ४६० ॥

**बाल०**—दिक् । दिक् पूर्वे यस्य तथाभूतादर्द्धात् पूर्वोक्तेऽर्थे उभौ माधवठ-यरामौ भवतः । पूर्वार्द्धे जातादि पौर्वार्द्धिकमित्यादिचतुष्कं ॥ ४६१ ॥

इमेऽस्य ग्रामस्य जनपदस्य वा पौवार्द्धाः पौर्वार्द्धिकाः ।

**४६३. मध्यमादिमावमाधमाः ।**

साधवः । मध्यः साम्प्रतिकेनात्युच्चैर्नातिनीचैः ।

**४६४. समुद्रद्वीपजातादौ द्वैप्यः ।**

साधुः ।

**४६५. कालान्माधवठः ।**

संख्याया वर्षस्याभाविनीत्युत्तरपदवृद्धिः-द्विवार्षिकः ।

---

सर्वत्र विशेषविधानेन सामान्योक्त केशव णस्य बाधः कल्प्यते, अन्यथाधिकार प्राप्तेऽपि तस्य पुनर्विधानानुपपत्तें रिति विवेच्यम् ।

**अमृता०**—४६३. मध्यमेति । तत्र जातादावर्थे मध्य आदि अवस् इत्येतेषां मप्रत्ययेन मध्यमादयश्चत्वारः साधवो भवन्ति । मध्ये भवो मध्यम इत्याद्यर्थः । अवमो निकृष्टः, तथैवाधमः । अवसधसोः सलोपो निपात कार्यम्, अन्ययोस्तु साहचर्यादुक्तिः । मध्य इति—साम्प्रतिकेऽर्थे अप्रत्ययेन मध्यस्य मध्य इति साधु स्यात् । साम्प्रतिकं न्याय मुचितमिति यावत् । तदेव व्यनक्ति—नात्युच्चैरित्यादिना । अत्रार्थ वैशिष्ट्यप्रदर्शनार्थो मस्यापवादोऽप्रत्ययः ।

**अमृता०**—४६४. समुद्रेति । समुद्रद्वीपे जातादावर्थे द्वीपशब्दस्य नृसिंह यरामेण द्वैप्यइति साधुः स्यात् । समुद्र शब्देनात्र लक्षणया तत्-सान्निध्यं गमयति । तेन समुद्र-समीपवर्त्ती यो द्वीपः, तत्र जातादिः—द्वैप्य इत्यर्थः ।

**अमृता०**—४६५. कालादिति । तत्र जाताद्यर्थे कालवाचकात् शब्दान्माधवठः स्यात् । संख्याया इत्युत्तरपदवृष्णीन्द्रस्य विधिसूत्रम् ।

---

**बाल०**—ग्राम । पूर्वोक्तेऽर्थे ग्रामस्य जनपदस्य चैकदेशत्वे वाच्ये दिक्पूर्वार्द्धात् केशवणमाधवठौ भवतः । तत्र जातादेरादिपदगृहीतविशेषैकार्थोऽयं । तेन प्रकारान्तरं वाक्यं दर्शयत्ति इम इत्यादि वेत्यस्मात् पूर्वार्द्धा इति योज्यं ॥ ४६२ ॥

**बाल०**—मध्य । तत्र जातादौ मध्य आदि अवस् अधस् इत्येतेषां मरामेण सह मध्यमादयश्चत्वारः साधवो भवन्ति । सलोपश्चावोऽधसोरिति क्रमदीश्वरः । पूर्वोक्तेऽर्थे साम्प्रतिके वाच्ये अरामेण सह मध्यस्य मध्यः साधुः स्यात् । वाक्योदाहरणेन दर्शयति नात्युच्चैरिति । मध्यो वैयाकरणादिः, प्रत्ययकरणमत्रार्थनिरूपणार्थं नान्यत् प्रयोजनं ॥ ४६३ ॥

**बाल०**—समु । समुद्रद्वीपजातादौ द्वीपस्य नृसिंहयरामेण सार्द्धं द्वैप्यः साधु स्यात् । समुद्रशब्दस्यात्र तत्समीपे लाक्षणिकत्वात् समुद्रसमीपवर्त्तिद्वीपजातादिः सर्वो द्वैप्यशब्द-वाच्यः । अन्यथा समुद्रग्रहणवैयर्थ्यं ॥ ४६४ ॥

## ४६६. शारादिकं श्राद्धे, रोगातपयोर्वा ।

साधु ।

## ४६७. नैशिक-प्रादेशिकौ वा ।

साधू ।

## ४६८. सन्धिबेलादेः केशवणः, ऋतुनक्षत्राभ्याञ्च ।

सान्धिबेलं सान्ध्यं आमावस्यं त्रायोदशं चातुर्दशं पौर्णमासं प्रातिपदम् । साम्वत्सरन्तु फलपर्वणोरेव । ऋतोः—ग्रैष्मं शिशिरं । नक्षत्रात्—तैषं पौषम् ।

---

अमृता०—४६६. शारदिकमिति । तत्र जातादौ श्राद्धे वाच्ये शरत् स्थाने माधव ठेन सह शारदिकमिति साधु स्यात् । रोगातपयोस्तु वाच्ययो स्तस्मान्माधव ठो वा भवति, पक्षे केशव णः । शारदिकः शारदो रोग आतपो वा । अर्थविशेषे साधुता ।

अमृता०—४६७. नैशिक इति । पूर्वोक्तार्थे निशा प्रदोषयो र्माधवठेन सह नैषिक-प्रादेषिकौ साधू वा भवतः । पक्षे केशवणः, नैशः प्रादोषइति ।

अमृता०—४६८. सन्धीति । तत्र जातादावर्थे कालवृत्तिभ्यः सन्धिवेलादिभ्य,, तादृग्भ्यः ऋतु नक्षत्रेभ्यश्च केशवणः स्यात्, ठस्यापवादः । सन्धिवेलायां जातं सान्धि-वेलम् । एवं सन्ध्यायां जातं सान्ध्यमित्यादि । सम्वत्सरे जात साम्वत्सरं फलं पर्वं वा । तैषमिति—तिष्यपुष्ययो र्नक्षत्राणीति यरामहरः ।

---

बाल०—काला । पूर्वोक्तेऽर्थे कालवाचकतात् माधवठो भवति । उत्तरपदस्य वृष्णीन्द्रप्रतिपादकसूत्रं सूचयति सङ्ख्ये ति । द्वयोवर्षयोर्जातादिः द्विवार्षिक इत्यादि ।।४६५

बाल०—शार । तत्र जातादौ श्राद्धं वाच्ये शरदः स्थाने माधवठेन सह शारदिकं नित्यं साधु स्यात् । रोगातपयोर्वाच्ययोस्तु विकल्पः । पक्षे शारदो रोग आतपो वा ।। ४६६ ।।

बाल०—नैशि । तत्र जातादौ निशाप्रदोषयोर्माधवठेन सहकं नैशिकप्रदोषिकौ साधू वा भवतः । अत्रापि पक्षे औत्सर्गिककेशवणः स्यात् ।। ४६७ ।।

बाल०—सन्धि । पूर्वोक्तेऽर्थे सन्धिबेलादेः केशवणो भवति । ऋतुनक्षत्राभ्याञ्च तद्वत् केशवणः स्यात् । सन्धिवेलायां जातादि सन्धिवेलमित्यादि प्रातिपदमित्यन्तं सप्तसङ्ख्यकं । सम्वत्सरं केशवणान्तं भवत् सत् पुनः फलपर्वणोर्वाच्ययारेव भवति । एवं वाहीक कलकीट शूरसेन पटच्चर पर्वत उदपान तक्षन् लोमनृ यकृत् महत् कमल भिदा परिखा गोष्ठी गोमती पलदी नैतकोभ्यश्च । ऋतोरिति रूपं दर्श्यते इति शेषः । ग्रीष्मे जातादि ग्रैष्मं । एवं शैशिरं वासन्तमित्यादि । नक्षत्रात् नक्षत्रमधिकृत्य रूपं दर्श्यते । तिष्ये जातादि तैषमित्यादि तिष्यपुष्ययोर्नक्षाणीत्यनेनात्र यहरः ।। ४६८ ।।

**४६९. प्रावृषेण्यः ।**

साधुः ।

**४७०. वर्षाभ्यो माधव ठः ।**

वार्षिकं पौर्ववर्षिकम् ।

**४७१. हैमन-हैमन्तौ ।**

अरामणन्तौ साधू ।

**४७२. सायन्तन-चिरन्तन-प्राह्णेतन-प्रागेतनानि ।**

सायादीनां केशवतनान्तानि साधूनि ।

---

**अमृता०**—४६९. प्रावृषेण्य इति । प्रावृष् शब्दस्य एण्यप्रत्ययेन पूर्वोक्तार्थे साधुः ।

**अमृता०**—४७०. वर्षाभ्य इति । तत्र जाताद्यर्थे वर्षा शब्दात् माधवठः स्यात् । ऋतुत्वेन माधवठस्यापवादो यः केशव णो विहितः, पुनरिह तदपवाद उच्यते । वर्षाशब्दो बहुत्वे हि प्रयुज्यते । अत्र दतन्तविधिरिष्यत इति समासान्तत्वेऽपि पौर्ववर्षिकमिति ।

**अमृता०**—४७१. हैमनेति । पूर्वोक्तार्थे हेमन्त शब्दस्य अरामण् प्रत्ययेन हैमन-हैमन्तौ साधूभवतः । पूर्ववत् पक्षे केशवणस्यापवादः । हेमन्ते जातं हैमनं धान्यम् । अत्र तलोपो निपातात्, पक्षे हैमन्तम् ।

**अमृता०**—४७२. सायन्तनेति । पूर्वोक्तार्थे साय चिर प्राह्ण प्रगे इत्येतेषां केशव तन प्रत्ययेन सायन्तनादीनि चत्वारि साधूनि भवन्ति । माधव ठस्यापवादः । केशवत्वात् सायन्तनी पूजा । एते तु शब्दा नाव्ययानि, अनन्तराग्रिमसूत्रे—अव्ययादिति पृथगुपादानात् । अतः प्रथमद्वयस्य मुमागमः, परत्र ङे र्महाहराभावो निपातफलम् ।

---

**बाल०**—प्रावृ । तत्र जातादौ एण्यप्रत्ययेन साकं प्रावृषः प्रावृषेण्यः साधुः स्यात् । ऋतुनक्षत्रेति प्राप्तकेशवणबाधकमिदं ।। ४६९ ।।

**बाल०**—वर्षा । पूर्वोक्तऽर्थे वर्षाभ्यो माधवठो भवति । वर्षासु जातादि वार्षिकं । नाम्नातु क्वचिदित्युक्तत्वात् समासान्तादपि स्यात् तेन पूर्वासु गतासु वर्षासु जातादि पौर्ववर्षिकमित्यपि । वर्षाभ्य इत्यनेन वर्षाशब्दस्य बहुवचनान्तत्वं सूचितं तेनैकवचनेऽस्य प्रयोगो नास्ति ।। ४७० ।।

**बाल०**—हैम । तत्र जातादौ अरामण् अन्तो ययोस्तथाभूतौ हैमनहैमन्तौ साधू भवतः । वृत्तौ णरामान्तावित्यकृत्वा अरामणन्तावित्यकृत्वा अरामणन्ताविति यत् कृतं तत्तु शिष्याणां व्युत्पत्तिवैचित्र्यार्थं । अत्र वामनात् ङञणना इत्यनेन णस्य द्वित्वं न स्यात् उणादिति ङन्तसनन्तादिदत् सूत्रनिर्देशबलात् । निपातादत्र णप्रत्ययः । पक्षे हेमन्तस्य तलोपश्च । केशवणान्तत्वेन निपातनं विना अरामणन्तत्वेन यन्निपातनं तदेतज्ज्ञापकात्

**४७३. अव्ययाद्दिवातन-दोषातन-प्रातस्तनादीनि च ।**

साधूनि ।

**४७४. चिरत्न-पुरत्ने च, अग्रिम-पश्चिमान्तिमानि च ।**

साधूनिः ।

**४७५. पूर्वाह्णेतन-पराह्णेतने वा ।**

**साधुनी । पक्षे पौर्वाह्णिकम् । शैषिकार्थाश्चैते ।**

---

**अमृता०**—४७३. अव्ययादिति । प्रोक्तार्थे अव्ययानि येदिवादिशब्दा स्तेभ्य उत्तरे तनप्रत्ययेन दिवातनादीनि साधूनि भवन्ति । माधव ठस्य बाधार्थो निपातः ।

**अमृता०**—४७४. चिरत्नेति । पूर्वोक्तार्थे चिर-पुरयोः त्नप्रत्ययेन चिरत्न पुरत्ने साधुनी भवतः । तथा अग्र पश्चात् अन्तशब्दानां इमच् प्रत्ययेन अग्रिमादीनि साधूनि भवन्ति । पूर्ववत् साधुता ।

**अमृता०**—४७५. पूर्वेति । प्रोक्तार्थे पूर्वाह्ण-पराह्ण शब्दयोः तनप्रत्ययेन पूर्वाह्णेतन-पराह्णे तने वा साधुनी स्याताम् । पूर्वाह्णे जातनित्यर्थे सप्तम्यलुक् निपात-सामर्थ्यात् । पक्षे कालान्माधव ट इति । शैषिकाः प्रत्यया एते उक्ताः ।

---

लक्ष्म्यां वाच्यायां हैमाना हैमन्तेति स्यात् । हेमन्तास्तलोपश्च वेति कस्यचित् सूत्रं । तन्मते टणो विकल्पात् पक्षे कालान्माधवठ इति ठश्च तेन लक्ष्म्यां हैमनी हैमन्तिकीच स्यात् ॥४७१

**बाल०**—साय । सुगमं । वृत्तिमाह सायेति । तत्र जातादौ सायादीनां सायन्तनादीनीति योज्यं । अत्र तनप्रत्ययः पूर्वद्वये मुगागमः परद्वये ङेर्महाहराभावश्च निपातफलं ॥ ४७२ ॥

**बाल०**—अव्य । तत्र जातादौ अव्ययादुत्तरे तनप्रत्ययेन सह दिवादीनां दिवातनेति त्रयादीनि साधूनि भवन्ति । अत्राव्ययादित्युक्तत्वादनव्ययदिवादीनामेतानि न भवन्तीति ज्ञेयं । आदिपदात् शिष्टप्रयोगानुसारेण यथासम्भवमन्यान्यूह्यानि ॥ ४७३ ॥

**बाल०**—चिर । तत्र जातादौ चिरपुरयोस्त्नप्रत्ययेन सजुचिरत्नपुरत्ने इति द्वे च साधुनी भवतः । अग्रि । तत्र जातादौ क्रमेणाग्रपश्चादन्तानामिमच्प्रत्ययेन सहाग्रिमादीनि त्रीणि साधूनि स्युः ॥ ४७४ ॥

**बाल०**—पूर्व । तत्र जातादावर्थे पूर्वाह्णपराह्णयोस्तनप्रत्ययेन ङेरलुकाच साकं पूर्वाह्णेतन-पराह्णेतने इति द्वे साधूनी वा भवतः । पक्षे कालान्माधवेत्यनेन पौर्वाह्णिकं पाराह्णिकमितिच । सामान्यशैषिकार्थान् समापयति शैषिकेति ॥ ४७५ ॥

**४७६. तत्र जातः ।**

**अत्र यथास्वमणादयः । माथुरः राष्ट्रिय इत्यादि ।**

**४७७. प्रावृषष्ठरामः ।**

**प्रावृषिकः ।**

---

इदानी पूर्वसूचिता जातादयोऽर्था दर्श्यन्ते, यथा—

**अमृता०**—४७६. तत्रेति । वृत्तिमाह—यथास्वमिति । तत्र सामान्यतः केशवणः विशेषतस्तूक्ता एव प्रत्यया ज्ञेयाः । मथुरायां जातोमाथुरः । अत्र सामान्यतः केशवणः । राष्ट्रियइति—राष्ट्राद् घराम इत्युक्तमेव । इत्यादि पदेन—ग्रामे जातो ग्रम्यः ग्रामीणः अरण्ये जातः आरण्यः, वैष्णवे जातो वैष्णवीय इत्यादयः । एवमुत्तरेष्वप्यर्थेषून्नेयम् । तत्र कांश्चिद् विशेषानाह—

**अमृता०**—४७७. प्रावृषइति । तत्र जात इत्यर्थे प्रावृष् शब्दात् ठरामः स्यात् । प्रावृषि जातः प्रावृषिको मेघः । प्रावृषेण्यः साधुरिति यदक्तं तत्तु सर्वान् शैषिकार्थानपेक्ष्य, जातार्थे विशेषोऽयम् ।

---

**बाल०**—तत्र । इदानीं शैषिकार्थेषु पृथक् पृथगर्थं दर्शयितुमारभते तत्रेत्यादिना यावत्समाप्ति । वृत्तिमाह अत्रेति । यथास्वमिति सामान्यतः सामान्यं विशेषतस्तु विशेषः । अणादय इति केशवणादय इत्यर्थः । प्रभुरयमिति गम्यमत्र ज्ञेयं, पूर्वं प्रतिज्ञातत्वात् । मथुरायां जातः माथुरः । तेन दीव्यतीत्यतः प्रागित्यनेनात्र केशवणः । राष्ट्रे जातः राष्ट्रियः, राष्ट्राद्घराम इत्यनेनात्र घः । इत्यादीत्यादिपदेन पूर्वोक्तजातादावर्थे यद्यस्माद्गणाद्यो यः प्रत्ययो विहितस्तस्मात्तस्मादत्रार्थेऽपि स स बोद्धव्य इति सूचितं । यत्किञ्चिद्यो यो विशेषस्तत्तदर्थं ग्रन्थकृता लक्षणानि वक्ष्यन्ते ॥ ४३६ ॥

**बाल०**—प्रावृ । तत्र जात इत्यर्थे प्रावृट्शब्दात् ठरामः स्यात् । ऋतुनक्षत्राभ्याश्चेत्यनेन प्राप्तकेशवणसा प्रावृषेण्यः साधुरित्यनेन विहित एण्यप्रत्ययो बाधकस्तद्बाधकस्त्वयं । एतेन तत्र जातादौ यो यो विहितस्तस्य तस्यापि सामान्यत्वादत्रार्थे वक्ष्यमाणान्यार्थेच विहितो बाधकः स्यात् । तद्धितबाहुल्यात् क्वचित् क्वचित् सच सचापि स्यादित्यपि बोद्धव्यं ॥ ४७७ ॥

**४७८. शारदकादयो मुद्गादौ, पन्थकः पथिजाते ।**

साधवः ।

**४७९. अमावास्याया अराम-वुरामौ वा ।**

अमावास्यः अमावास्यकः । आमावास्यम् ।

**४८०. सिन्धोः सिन्धुक-सैन्धवौ ।**

साधू ।

**४८१. श्रविष्ठाफल्गुण्यनुराधास्वाति - तिष्य - पुनर्वसु - हस्ता-विशाखाषाढाबहुलाभ्यो महाहरः ।**

---

**अमृता०**—४७८. शारदकेति । तत्र जात इत्यर्थे मुद्गादौ शस्ये वाच्ये नृसिंह वुना सह शारदक प्रभृतयः साधवः स्युः, तथा पथि जाते पदार्थे वाच्ये पथशब्दस्य वुप्रत्ययेन पथक इति साधुर्भवति । शरदि जातः शारदको मुद्गः । ऋतुनक्षत्रेति विहितकेशव णस्यापवादोऽयम् ।

**अमृता०**—४७९. अमेति । उक्तार्थे अमावास्याया उत्तरस्मिन् अराम-वुरामौ वा भवतः । आमावास्यमिति पक्षे सन्धिवेलादेरिति केशवणः ।

**अमृता०**—४८०. सिन्धोरिति । तत्र जातार्थे सिन्धुशब्दस्य वु केशवणाभ्यां सिन्धुकक-सैन्धवौ साधूभवतः । आदि वृष्णीन्द्रादपीत्यादिना प्राप्त नृसिंह वो र्बाधकरूपं साधुत्वम् । सिन्धुषु जनपदेषु जातः सिन्धुकः सैन्धवो घोटकः । यद्वा सिन्धौ समुद्रे जातः सिन्धुक इति द्वौ, लवण इत्यर्थः ।

**अमृता०**—४८१. श्रविष्ठेति । तत्र जात इत्यर्थे श्रविष्ठादि दशभ्यः ऋतुनक्षत्राभ्या-मित्यनेन विहित केशवणस्य महाहरो भवति । सर्वाण्येवातानि नक्षत्र नामानि । एषां

---

**बाल०**—शार । तत्र जातार्थे शरदादीनां नृसिंहवुना सह शारदकादयः साधवो भवन्तो मुद्गादौ वाच्ये भवन्ति । ऋतुनक्षत्रेति विहितकेशवणस्यापवादोऽयं मुद्गादे-रन्यत्रतु स एव । पन्थ । पथि जाते वाच्ये पथो वुना सह पन्थकः साधुः स्यात् । अत्र वुः पथः पन्थादेशश्च निपातनात् । ठरामापवादोऽयं ॥ ४७८ ॥

**बाल०**—अमा । पूर्वोक्तेऽर्थे अमावास्याया उत्तरस्मिन् अरामवुरामौ वा भवतः । अमास्यायां जातः अमावास्य इत्यादिद्वयं । पक्षे, आमावास्यमित्य सन्धिबेलादे केशवणः ॥ ४७९ ॥

**बाल०**—सिन्धो । तत्र जातेऽर्थे वुणाभ्यां सह सिन्धोः सिन्धुकसैन्धवौ साधू भवतः ॥ ४८० ॥

एतत् पर्यायाश्च गृह्यन्ते । लक्ष्मो प्रत्ययस्य महाहरः । श्रविष्ठः फल्गुणोऽर्जुनः ।

## ४८२, स्वार्थे त्वरामण् ।

फाल्गुणः ।

## ४८३. चित्रा-रोहिणी-रेवतीभ्यो लक्ष्म्यां महाहरः, फल्गुण्याषाढाभ्यां ठारामयोः ।

चित्रा रोहिणी रेवती । एवं फल्गुणी आषाढा ।

शैषिकेषु जातार्थाः ।

## ४८४. श्राविष्ठीयाषाढीयौ वा ।

साधू ।

---

ग्रहणेन एतत्पर्यायशब्दा अपि गृह्यन्त इत्याह—एतदिति । लक्ष्मी प्रत्ययस्य महाहर स्तद्धितमहाहर इत्यनेनापश्च महाहरः । फल्गुण्यर्जुन्यौ एकपर्यायशब्दाविति द्वयोरपि ग्रहणमत्र दर्शितम् ।

**अमृता०**—४८२. स्वार्थे इति । तुशब्देन जातार्थो निराक्रियते । एभ्यो नक्षत्रेभ्यः स्वस्यार्थे तु अरामण स्यात् । फल्गुणी एव फाल्गुणः । एवं विशाखैव वैशाख इत्यादयः ।

**अमृता०**—४८३. चित्रेति । तत्र जात इत्यर्थे लक्ष्म्यां विषये चित्रादित्रिभ्य उक्तस्य केशव णस्य महाहरः स्यात् । उक्तार्थे लक्ष्मीविषये फल्गुण्या-षाढाभ्यां ठरामारामयोः महाहरो भवति । चित्रायां जाता कन्या चित्रा, प्रत्यमहाहरादनन्तरंपुन स्त्रियामाप् । एवं रोहिणीत्यादावीप ।

**अमृता०**—४८४. श्राविष्ठीयेति । पूर्वोक्तार्थे श्रविष्टाषाढयोः नृसिंह छे न श्रविष्ठीया-

---

**बाल०**—श्रवि । तत्र जातेऽर्थे श्रविष्ठादि बहुलान्तेभ्य उत्तरस्य ऋतुनक्षत्रेत्यनेन विहितकेशवणस्य महाहरः स्यात् । श्रविष्ठादीनां ग्रहणेनात्र तत्पर्यायाणामपि ग्रहणमित्याह एतदिति । पूर्वोक्तलक्षण स्मारयति लक्ष्मीति । किञ्चात्र महाहर इत्यस्मात् परं तद्धित-महाहरे इति योज्यं । श्रविष्ठायां जातः श्रविष्ठ इत्यादि ॥ ४८१ ॥

**बाल०**—स्वार्थे । स्वार्थेऽर्थे पुनर्जातार्थप्रत्ययहरात् फल्गुणात् अरामण् स्यात् । ण इत् अरामः । शेषः फाल्गुण एव फाल्गुणः ॥ ४८२ ॥

**बाल०**—चित्रा । पूर्वोक्तेऽर्थे लक्ष्म्यां वाच्यायां चित्रारोहिणीरेवतीभ्यः पूर्वोक्त-केशवणस्य महाहरः स्यात् । फल्गु । पूर्वोक्तेऽर्थे फल्गुण्याषाढाभ्यामुत्तरयोष्ठरामाराम-योर्लक्ष्यां महाहरः स्यात् । चित्रायां जाता बाला चित्रेत्यादिषु लक्ष्मीप्रत्ययस्येत्यनेन तद्धितमहाहरे सत्यावीपोर्महाहरेऽपि पुनर्लक्ष्मीत्वे आवीपौ भवतः ॥ ४८३ ॥

**४८५. स्थानान्त-गोशाल-खरशालेभ्यो महाहरः ।**

गोस्थाने जातो गोस्थानः । एवं गोशालः ।

**४८६. वत्सशालाभिजिदश्वयुक्-शतभिषग्भ्यो महाहरो वा ।**

वत्सशालः वात्सशालः ।

**४८७. नक्षत्रेभ्यो बहुलं महाहरः ।**

रौहिणो रोहिणः, मृगशिराः मार्गशीर्षः । पूर्णो जातः ।

---

षाढीयौ वा साधूभवतः, पक्षे छस्य महाहरः । श्राविष्ठाषाढीयावित्यपि पाठः, तत्र पक्षे केशवण-छरामयो महाहरो ज्ञेयः ।

**अमृता०**—४८५. स्थानान्तेति । तत्र जात इत्यर्थे स्थान शब्दोऽन्ते यस्य तस्मात्, दथा गोशाल-खरशालाभ्याञ्च केशवणस्य महाहरः स्यात् । गोस्थान इतिवत् अश्वस्थानः करिस्थान इत्यादि चोन्नेयम् ।

**अमृता०**—४८६. वत्सेति । पूर्वोक्तार्थे वत्सशालादिभ्य श्चतुर्भ्यः केशव णस्य महाहरो भवति । एवमभिजित् आभिजितः, अश्वयुक् आश्वयुजः, शतभिषक् शातभिषज इति ।

**अमृता०**—४८७. नक्षत्रेभ्य इति । तत्र जातेऽर्थे प्रोक्तमहाहरेभ्योऽन्य नक्षत्रेभ्यः केशवणस्य महाहरो बहुलं यथास्यात्तथा भवति । रोहिण्यां जातः रौहिणः रोहिणः, अतो लक्ष्मीप्रत्ययस्यापि महाहरः । मार्गशीर्षइति—शिरसः शीर्षोऽणीति शीर्षादिशः । समाप्तो जातोऽर्थः ।

---

**बाल०**—श्रवि । तत्र जातार्थे केशवणछाभ्यां साकं श्रविष्ठाषाढयोः श्राविष्ठाषाढीयौ वा साधू भवतः । पक्षे पूर्वोक्तो महाहरः ॥ ४८४ ॥

**बाल०**—स्थाना । पूर्वोक्तेऽर्थे स्थानमन्ते यस्य तस्मात् गोशालखरशालाभ्याञ्चौत्सर्गिककेशवणस्य महाहरो भवति । गोस्थान इतिवत् घोटकस्थान इत्यादिच । गोशाल इत्यस्मादित्यादीति योज्यं ॥ ४८५ ॥

**बाल०**—वत्स । पूर्वोक्तेऽर्थे वत्सशालादिभ्य सामान्यतः प्राप्तकेशवणस्य महाहरो वा स्यात् । वत्सशाले जातः वत्सशाले जातः वत्सशाल इत्यादिद्वयं । एवं, अभिजित् अश्वयुक् शतभिषक् । पक्षे आभिजित इत्यादि ॥ ४८६ ॥

**बाल०**—नक्ष । तत्र जातेऽर्थे नक्षत्रवाचिभ्यः केशवणस्य महाहरो बहुलं यथा स्यात्तथा भवति । रोहिण्यां जातः रौहिणो रोहिणश्च । किन्त्वत्र लक्ष्मीप्रत्ययेति पूर्ववदीठमरः । मृगशिरा इत्यत्र अत्वसन्तस्येत्यनेन त्रिविक्रमः स-ररामयोरिति विष्णुसर्गः । मार्गशीर्ष इत्यत्र नाम्नातु क्वचिदित्युक्तः शिरसः शीर्षोऽणीत्यनेन शीषादेशः । अर्थं समापयति पूर्ण इति ॥ ४८७ ॥

## ४८८. कृतलब्धक्रीतकुशलाः ।

तत्रेति सर्वत्रानुवर्त्तते । तत्र कृतादिषु यथास्वं भवति । मथुरायां कृतो लब्धः क्रीतः कुशलो वा माथुरः । एवं राष्ट्रियः ।

## ४८९. प्रायभवः ।

अत्रापि यथास्वम् । मथुरायां प्रायेण भवति माथुरः । एवं राष्ट्रियः ।

## ४९०. उपजानूपकर्णोपनाविभ्यो माधवठः ।

औपजानुकः पाणिः । एवं औपकर्णिकः औपनीविकः ।

## ४९१. स्थितः ।

अत्र च यथास्वम् । माथुरो राजा ।

---

**अमृता०**—४८८. कृतेति । तत्र कृतः, तत्र लब्धः, तत्र क्रीतः, तत्र कुशल इत्यर्थे चतुष्टये यथा स्वं प्रत्यया: स्युः । सप्तम्यन्त नाम्नः प्रत्ययः स्यादिति दर्शयति—मथुराया-मित्यादिना । एवं ग्रामे कृतादि ग्रास्यं, तथा दिव्यं आरण्यं परकीयमित्यादीनि ।

**अमृता०**—४८९. प्रायेति । तत्रप्राय भव इत्यर्थे च नाम्नो यथास्वं शैषिकाः प्रत्यय भवन्ति । पूर्ववद त्रार्थे च ग्रास्यं दिव्यमित्याद्युदाहार्यम् ।

**अमृता०**—४९०. उपेति । तत्र प्रायभव इत्यर्थे उप जानूपकर्णोपनीवि शब्देभ्यो माधव ढः स्यात् । औपजानुक इति चतुर्भुजान्तादिति ठस्य कः ।

**अमृता०**—४९१. स्थित इति । अत्रार्थे च यथास्वं प्रत्यया भवन्ति । मथुरायां स्थितो माथुरः । एवं दिव्यः ग्राम्य इत्यादयश्च ।

---

**बाल०**—कृत । तत्रेत्यस्य निवृत्तिशङ्कापरिहारार्थमाह तत्रेति । किञ्चानेन तत्रेत्यस्य वक्ष्यमाणप्रायभवादिष्वनुवृत्तिं सूचयन् कृतादिभिः सह प्रत्येकं सम्बन्धोऽपि सूचितः । यद्यपि यत्र यत् कृतं तत्तत्र जातमपि भवति, यद्यत्र क्रीतं तत्तत्र लब्धमपि भवति, तथापि शब्दार्थस्य भिन्नत्वाद्भेदोऽप्यस्त्येव न पर्यायत्वमिति पृथगुपादानं । तथाहि, स्वभाव-निष्पत्तावपेक्षितपरव्यापारः कृतशब्दस्यार्थः, आत्मजन्मन्यनुभूतकर्त्तृभावो जातशब्दस्यार्थः, प्राप्तिसामान्यं लब्धशब्दस्यार्थः, मूल्येन प्राप्तिः क्रीतशब्दस्यार्थः, इत्यादि यथासम्भवं । वृत्तिमप्याह तत्र कृतेति । यथास्वमिति प्रत्यय इति शेषः । अर्थाद् यत्र कृतादिस्ततएव प्रत्ययः । अत्रार्थेऽपि सामान्यतः केशवणो विशेषतस्तु विशेष एवेति सूचयन् वाक्योदा-हरणानि ददाति मथुरायामिति । पूर्णोऽयमर्थः ॥ ४८८ ॥

**बाल०**—प्राय । विवरणमाह अत्रापीति । यथास्वमित्यनेनैव सामान्यतः सामान्यं विशेषतस्तु विशेष एवेति सूचितं । यथास्वमित्यस्मात् परस्मिन्नाम्नः प्रत्ययाः स्युरिति द्रष्टव्यं ॥ ४८९ ॥

**४९२. कोषाद् विकारे माधव ढः ।**

**कौषेयं वस्त्रम् ।**

जातार्थाः ।

**४९३. कालात् ।**

**तत्रभवात् प्राक् । प्रभुरयम् ।**

**४९४. साधु-पुष्यत्-पच्यमानाः ।**

**साधुरित्याद्यर्थे कालात् यथास्वम् । हेमन्ते साधु हैमनं वासः । वसन्ते पुष्यति वासन्ती लता । शरदि पच्यन्ते शारदामाषाः ।**

---

**अमृता०**—४९२. कोषादिति । तत्र स्थित इत्यर्थे विकारे वाच्ये कोषशब्दात् माधवढः स्यात् । कीटविशेषेण निर्मितं स्वगृह मिह कोष उच्यते । कोषे स्थित विकारं कौषेयं सूत्रम्, तच्च स्वकारणे कार्योपचारात् वस्त्रमेव ।

**अमृता०**—४९३. कालादिति । अधिकारोऽयम् । तत्र भवात् प्रागर्थेषु काल वाचिनः शब्दात् यथास्वं प्रत्ययः स्यात् ।

**अमृता०**—४९४. साध्विति । तत्र साधुः, तत्र पुष्यति, तत्र पच्यन्ते इति त्रिष्वर्थेषु कालाद् यथास्वं प्रत्ययः स्यात् । साधुः प्रशस्त इत्यर्थः । स्पष्टान्येवोदाहरणानि ।

---

**बाल०**—उप । तत्र प्रायभव इत्यर्थे उपजानूपकर्णोपनीविभ्यो माधवठो भवति ।।४९०

**बाल०**—स्थित । अत्र चेति पूर्ववद्विवरणं ।। ४९१ ।।

**बाल०**—कोषो । तत्र स्थितेऽर्थे विकारे वाच्ये कोषशब्दान्माधवढः स्यात् । कीटविशेषैर्निर्मितमात्मगृहं कोषस्तत्र स्थितविकारं कौषेयं । कौषेयशब्दस्य रूढित्व-प्रतिपादनार्थं वस्त्रमित्युक्तं, यदपि कौयेयं सूत्रमप्युच्यते, तदपि कारणे कार्योपचारात् । कौषेयं कृमिकोषोत्थमित्यमरः ।। ४९२ ।।

**बाल०**—काला । तत्र भावात् प्रागर्थे कालवचनाद्यथास्वं प्रत्ययः स्यात् । अयं विधिः प्रभुनामाधिकारः ।। ४९३ ।।

**बाल०**—साधु । विवरणं साधुरिति । साधुरिति सुप्रतिष्ठितः । पुष्प विकसने दिवादिरित्यस्य पुष्यदिति शत्रन्तं । डु पचष पाकेऽदादिरित्यस्य पच्यमानमिति कर्मकर्त्तरि शानान्तं । तत्र साधुस्तत्र पुष्यत् तत्र पच्यमानमित्यर्थे कालवाचिनो यथायोग्यं प्रत्ययो भवति । प्रत्येकमर्थानामुदाहरणान्याह हेमन्त इत्यादिना । हैमनमिति हैमनहैमन्तावित्यनेन साध । वासन्तीति ऋतुनक्षत्रेत्यनेन केशवणरामान्तं । एवं शारदा इत्यपि ।। ४९४ ।।

**४८९५. उप्तः ।**

अत्र च यथास्वम् । ग्रैष्मः शालिः ।

**४८९६. आश्वयुज्या वु नृंसिंहः ।**

आश्वयुज्यां पूर्णमायामुप्ता आश्वयुजका यवाः ।

**४८९७. ग्रीष्म-वसन्ताभ्यां वा ।**

ग्रैष्मकं वासन्तकं । पक्षे स्वरामण् ।

**४८९८. देयमृणम् ।**

मासे देयमृणं मासिकम् । ऋणं किं—मासे देया भिक्षा ।

---

**अमृता०**—४८९५. उप्त इति । तत्रोप्त इत्यर्थे च कालाद् यथास्वं स्यात् । डुवप धातोः कर्मणि क्तः—उप्तः । ग्रीष्मे उप्तः ग्रैष्मः शालि धान्य विशेषः । एवं वर्षासूप्तो वार्षिको माष इत्यादि ।

**अमृता०**—४८९६. आश्वेति । तत्रोप्त इत्यर्थे कालवाचकादाश्वयुजी शब्दात् नृसिंह वुः स्यात् । अश्वयुक् अश्विनी पर्यायः । तद् युक्ता पौर्ण मसीति—नक्षत्रेण युक्तः काल इत्यनेन केशवणः, ईप्—आश्वयुजी पूर्णिमा, तस्यामुप्ता अश्वयुजका यवाः । कालान्माधव ठस्यापवादोऽयम् ।

**अमृता०**—४८९७. ग्रीष्मेति । तत्रोप्त इत्यर्थे ग्रीष्म-वसन्ताभ्यां नृसिंह वु र्वा भवति । पक्षे तु ऋतुनक्षत्राभ्यामिति सिद्ध एवाण् ।

**अमृता०**—४८९८. देयमिति । तत्र देयं ऋणमित्यर्थे कालात् यथास्वं प्रत्ययः स्यात् । मासिकमिति—कालान्माधव ठः । अन्यदेयत्वे तु नेति प्रत्युदाहरति—मासे देया भिक्षेति । अत्रार्थे प्रत्ययान्तराप्राप्ते वाक्यस्यैव स्थितिः ।

---

**बाल०**—उप्तः । अयमपि प्रभुः । डु वप वीजतन्तुसन्ताने कर्मणि क्तः । तत्रोप्त इत्यर्थे कालाद्यथास्वं प्रत्ययः स्यात् । ग्रीष्मे उप्तः ग्रैष्म इति ऋतुनक्षत्रेत्यनेन केशवणः ।। ४८९५ ।।

**बाल०**—आश्व । तत्रोप्तेऽर्थे कालवाचकादाश्वयुजीशब्दान्नृसिंहो वुर्भवति । अश्विनीपर्यायोऽश्वयुक्शब्दस्तद्युक्ता पूर्णमासीति नक्षत्रेण युक्तकाल इत्यनेन केशवणरामान्तश्वयुजीत्यस्याः कालान्माधवठ इत्यनेन प्राप्तठरामापवाचकमिदं । वाक्योदाहरणे स्पष्टे ।। ४८९६ ।।

**बाल०**—ग्रीष्म । तत्रोप्ते ग्रीष्मवसन्ताभ्यां नृसिंहो वुर्वा भवति । ग्रीष्मे उप्तं ग्रैष्मकं । एवं वासन्तकं । पक्षे, ऋतुनक्षत्राभ्याञ्चेत्यनेन केशवण इति । प्रकारान्तरेणाह ऋत्वरामणिति । किन्त्वनेनात्र टित्त्वाभावोऽपि सूचितः ।। ४८९७ ।।

**४९९, ग्रीष्मावरसमाभ्यां वुर्नृसिंहः ।**

ग्रैष्मकं आवर समकं ऋणम् ।

**५००, सम्वत्सराग्रहायणीभ्यां नृसिंहवु-माधव ठौ ।**

साम्वत्सरकं साम्वत्सरिकम् ।

**५०१, व्याहरति मृगः ।**

अत्र च यथास्वम् । निशायां व्याहरति मृगो नैशः नैशिकः । तत्रेति निवृत्तम् ।

---

**अमृता०**—४९९. ग्रीष्मेति । तत्र देयमृणमित्यर्थे ग्रीष्मात् अवरसमाच्च नृसिंह वुः स्यात् । अवर सम आगामीवत्सरः, तत्र देयं परिशोध्यं ऋणं—आवरसमकमिति ।

**अमृता०**—५००. सम्वत्सरेति । तत्र देयमृणमित्यर्थे सम्वत्सराग्रहायणीभ्यां नृसिंह वु-माधव ठौ भवतः । यद्यपि कालान्माधव ठ इत्यधिकारादेव लभ्यते तथापीह माधवठस्योक्तिः सन्देहवारणाय, केवलनृसिंह वु रित्युक्तौ तु प्रोक्त ठस्यापवादोऽयमिति प्रत्ययः स्यात्, अत स्तद्वारणायेत्यर्थः ।

**अमृता०**—५०१. व्याहरतीति । तत्र व्याहरति क्रीडतीत्यर्थे कालाद् यथास्वं प्रत्ययः स्यात् । नैशिक-प्रादेशिकौ वेति ठान्तो निपात उक्तः, तदभावपक्षे केशव णः । तत्रेति सर्वत्रानुवर्तत इति यदादिष्ठं तदिह समाप्तम् ।

---

**बाल०**—देय । तत्र देयमृणमित्यर्थे कालात् यथास्वं प्रत्ययः स्यात् । प्रभुत्वादि-गम्यमिति प्रागुक्तं न विस्मर्त्तव्यं मासिकमित्यत्र कालान्माधवठः । ऋणमिति किं किमर्थं ऋणं यर्हि न स्यात्तर्हि न स्यादित्यभिप्रायः । तेन भिक्षाया ऋणत्वाभावाद्वयस्यैव स्थितिरिति ॥ ४९८ ॥

**बाल०**—ग्रीष्मा । अवरा चासौ समा चेति अवरसमा आगामी वत्सर उच्यते वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणेति पुम्वद्भावः । तत्र देयमृणमित्यर्थे ग्रीष्मावरसमाभ्यां नृसिंहो वुः स्यात् कालादिति प्राप्तमाधवठापवादोऽयं ॥ ४९९ ॥

**बाल०**—सम्ब । सम्वत्सराग्रहायणीभ्यां कालवाचिभ्यां तत्र देयमृणमित्यर्थे नृसिंहवु-माधवठौ भवतः । ननु सम्वत्सराग्रहायणीभ्यां नृसिंहवुर्णेति कृतेऽपि वु-त्यक्त पक्षे कालादित्यनेन माधवठो भविष्यति तर्हि माधवठेति किमर्थं उच्यते, फले देये ऋणे विवक्षिते साम्वत्सरन्तु फलपर्वणोरित्यनेन प्राप्तकेशवणं बाधित्वात्रार्थे सम्वत्सरा-न्माधवठस्यैव भवनार्थं । यथा साम्वत्सरकमित्यादिद्वयं तथा आग्रहायणकं आग्रायणिक-मितिच । प्रकरणेऽत्र कलापाश्वत्थयववुषादक इति सूत्रं विधाय क्रमदीश्वरः कलाप्यादीनां मयूरादिवाचित्वात् कालवाचित्वमघटमानमाशङ्क्य यत्र मयूराः कलापिनः स कालः साहचर्यात् कलापी यत्राश्वत्थाः फलिनः सोऽश्वत्थः । यत्र यववुषमुत्पद्यते स यववुषमिसि कालत्वं निगमय्यच तत्र देयमृणं कलापकं अश्वत्थकं यववुषकमिति त्रयं साधयतीति ज्ञेयं ॥ ५०० ॥

## ५०२. तदस्य सोढम् ।

अत्र च यथास्वम् । निशा सह चरितं कर्म निशा, तत् सोढं जितमभ्यस्तमस्येति नैशो वैष्णवः, नैशिकः । नैशिक-प्रादेशिकौ वेति विकल्पः । उक्तं कालात् ।

भवार्थाः ।

## ५०३. तत्र भवः ।

अत्र च यथास्वम् । मथुरायां भवो विद्यमानः माथुरः । एवं राष्ट्रियः । भवोऽयं प्रभुः प्राक् ततआगतात् ।

## ५०४. दिगादिभ्यो यरामः ।

दिश्यं वन्यं रहस्यं गण्यं अन्त्यं यूथ्यं वंश्यम् ।

---

**अमृता०**—५०२. तदस्येति । तदस्य सोढमित्यर्थे कालाद् यथास्वं प्रत्ययः स्यात् । सोढं जितं अभ्यस्तं वेत्यर्थः । तत्तु कालस्य न सम्भवतीति तत् साहचर्यात् कर्मण्येव सोढत्वमुपचर्यत इति स्फुटयति— निशेति । निशा सह चरितं कर्म—अध्ययनं कीर्त्तनादिकं वा तत् जितमभ्यस्तं वाऽस्येति नैश इति द्वयम् । कालादित्यधिकारः पूर्णः ।

**अमृता०**—५०३. तत्रेति स्पष्टम् ।

**अमृता०**—५०४. दिगिति । तत्र भव इत्यर्थे दिगादिभ्यो यरामः स्यात् । दिशि भवं दिश्यमित्यादीनि । गणोऽस्य परिशिष्टे द्रष्टव्यः । अत्र मुखजघनशब्दौ पठ्येते शरीरावयवत्वाविवक्षया, यथा वैष्णव मुख्यः, सेना जघन्य इति ।

---

**बाल०**—व्याह । तत्र व्याहरति मृग इत्यर्थे कालाद्यथास्यं प्रत्ययः स्यात् । व्याहरति क्रीडतीत्यर्थः । नैशिकप्रादोषिकौ वेति विकल्पनिपातात् पक्षे केशत्रणश्चेति नैश इत्यादिद्वयं । तत्रेति सर्वत्रानुवर्त्तत इति यदुक्तं तत् समापयति तत्रेति ।। ५०१ ।।

**बाल०**—तद । तदस्य सोढमभ्यस्तमित्यर्थे कालाद्यथास्वं प्रत्ययः स्यात् । सोढ सहनं जितमभ्यस्तमध्ययनमिति पर्यायस्तत्तु कालस्य न सम्भवतीति साहचर्यात् कालेन सहचरितं कर्म सहनादिकाले समर्प्य कालसहचरितकर्माभ्यासेन तदभ्यस्तं प्रतिपादयति निशेति । निशया सहचरितं यत् कर्म तदेव निशा तत् सोढमित्यादि स्पष्टं वाक्यं । नैशो वैष्णवो नैशिकश्च । विकल्पसूत्रं सूचयति नैशिकेति । वेति विकल्प इत्यत्र वेति विकल्पादिति योज्यं । कालाधिकारं समापयति उक्तमिति ।। ५०२ ।।

**बाल०**—तत्र । तत्र भव इत्यर्थे यतो भवति तस्मात् यथास्वं प्रत्ययः स्यात् । भवो विद्यमानार्थो न जननार्थो गतार्थत्वादिति वाक्येनैव स्पष्टयति मथुरायामिति । माथुर इति सामान्यात् केशवणः । राष्ट्रिय इति राष्ट्राद् घराम इति घः । तत आगत इत्यस्मात् प्राक् पूर्वस्मिन्नयं भवो प्रभुनामेत्यधिक्रियते भव इति ।। ५०३ ।।

**५०५. शरीरावयवाच्च ।**

दन्त्यं तालव्यं, आस्ये भवमास्यम् ।

शैषिकेषु भवार्थाः ।

**५०६. विष्णुजनाद्धरिमित्रस्य हरो हरिमित्रे वा ।**

आस्यम् ।

**५०७. जिह्वामूलीयाङ्गुलीयौ ।**

साधू ।

---

**अमृता०**—५०५. शरीरेति । तत्र भवार्थे शरीरावयवाच्च यरामः स्यात् । दन्ते भवं दन्त्यं अक्षरम् । तालव्यमिति—उद्वयस्येति गोविन्दः । एवं स्तन्यं क्षीरं, ओष्ठ्यः नासिक्यः वर्णः ।

**अमृता०**—५०६. विष्णिवति । हरिमित्रे परे विष्णुजनादुत्तरस्य हरिमित्रस्य हरो वा भवति । अनेन आस्येत्यस्य प्राचीन यरामे हरे प्रत्यय-यरामस्य हि स्थितिः । पक्षे पूर्वोक्तस्य च स्थिति र्ज्ञेया ।

**अमृता०**—५०७. जिह्वेति । तत्रभवार्थे छरामेण जिह्वामूलीयाङ्गुलीयौ साधू भवतः । शरीरावयवत्वादनयो र्यरामे प्राप्ते तदपवादोऽयम् ।

---

**बाल०**—दिगा । तत्र भव इत्यर्थे दिगादिभ्यो यरामो भवति । भवइत्यलन्त-मत्प्रत्ययान्तश्च सम्भवतीति ब्रह्मलिङ्गमपि तेन दिशि भवं दिश्यमित्यादि । दिश् बाल रहस् गण अन्त यूथ वंश वर्ग मृग पक्ष धार्य मित्र मेष अन्तर पथि बहुल उखा शाखिन् आदि मुख जघन मेघ यूथ न्याय अनुवंश वेश वरण काल आकाशेति त्रिंशद्दिशादिः । बालधार्यशाखिन् आदि आकाशेत्येतेभ्य आदिवृष्णीन्द्रादित्यनेन छे प्राप्ते शेषेभ्य केशवणे प्राप्ते विधानं । मुखजघनाभ्यां शरीरावयवाच्चेत्यनेन यरामे सिद्धेऽपि यदत्र तयोर्ग्रहणं तत्तु शरीरावयवार्थं यतः सेनाद्यवयवौ मुखजघनशब्दात्रशरीरावयवौ ॥ ५०४ ॥

**बाल०**—शरी । तत्र भवेऽर्थे शरीरावयवाच्च यरामो भवति । दन्ते भवं दन्त्यं । एवं तालव्यमिति द्वयं । किञ्च, तालुशब्दाद्यं सति उद्वयस्येति गोविन्द, ओद्वयस्येत्यवच् । केशवणं यावदयं बाध्यत एव तावदादिवृष्णीन्द्रादिति छमपि बाध्यत इति सूचयितुं तालव्यमिति द्वयमुपन्यस्तं । एवमोष्ठ्यं स्तन्यं कर्ण्यं ललाट्यं नासिक्य-मित्यादि ॥ ५०५ ॥

**बाल०**—विष्णु । हरिमित्रे परे विष्णुजनाद्धरिमित्रस्य हरो वा स्यात् । तदास्य-मितिच पूर्ववत् ॥ ५०६ ॥

**बाल०**—जिह्वा । तत्र भव इत्यर्थे छरामेण सह जिह्वामूलाङ्गुल्योर्जिह्वा-मूलीयाङ्गुलीयौ साधू भवतः । शरीरावयवत्वेन प्राप्तयरामबाधनार्थमिदं ॥ ५०७ ॥

**५०८. दृति-कुक्षि-कलशि-वस्ति-अस्ति-अहीत्येतेभ्यो माधवढः ।**

दार्त्तेयम् ।

**५०९. ग्रैव-ग्रैवेयके ।**

साधुनी ।

**५१०. गम्भीर-बहिर्देव-पञ्चजनेभ्यो ण्यरामः ।**

गाम्भीर्यम् । अव्ययस्यारादादिवर्जमिति संसारहरः, बाह्यम् ।

तद्धिते ।

**५११. अव्ययीभावाण्ण्यरामः, नतूपकलादिभ्यः, अन्तः पूर्वपदात्तु-माधवठः, पर्यनुपूर्वे ग्रामाच्च ।**

---

**अमृता०**—५०८. दृतीति । तत्र भव इत्यर्थे दृति प्रभृतिभ्यः षड्भ्यो माधवढः स्यात् । दृति चर्म तस्मिन् भवो दार्त्तेयः । एवं कौक्षेयः कालशेयः वास्तेयः आस्तेयः आहेय इति । अत्र वामन्तातो हि कलशि शब्दो गृह्यते, कलशिमुदधिगुर्वीं बल्लवा लोड-यन्तीति माघप्रयोगात् । अस्तीति धनवाचि बलवाचि वा तिङन्तप्रतिरूपकमव्ययमेतत्, न किल तिङन्तम् ।

**अमृता०**—५०९. ग्रैवेति । तत्र भवार्थे केशवण-माधव ढकाभ्यां ग्रीवाया ग्रैव-ग्रैवेयके साधुनी स्याताम् । अयमपि यरामापवादः ।

**अमृता०**—५१०. गम्भीरेति । तत्र भवार्थे गम्भीरादिभ्य श्चतुर्भ्यो ण्यरामः स्यात् । गम्भीरे भवं गाम्भीर्यम् । एवं बाह्यं दैव्यं पाञ्चजन्यमिति ।

**अमता०**—५११. अव्ययीति । तत्र भवार्थे अव्ययीभाव समस्तात् शब्दात् ण्यरामः स्यात्, उपकूलादिभ्यस्तु स नभवति, अन्तरिति पूर्वपदं यस्य तादृशादव्ययीभावात्तु माधव

---

**बाल०**—दृति । तत्र भवेऽर्थे दृत्यादिभ्यो माधवढो भवति । दृति चर्म तत्र भवो दार्त्तेयः । तथा कौक्षेयः कालसेयः वास्तेयः आस्तेयः आहेयः । किञ्चास्तीति तिङन्त-प्रतिरूपकमव्ययं विद्यते । यथा अस्तिक्षीरा ब्राह्मणीति, अस्तिच धनवाचकं तथा ह्यस्तिमानिति बलवानुच्यते इति द्वयोरेवात्र ग्रहणं, तिङन्तस्यतु न नामत्वाभावात् । कलशिशब्दोऽत्र वामनान्तः । कलशिमुदधिगुर्वीं वल्लवा लोडयन्तीति माघप्रयोगात् (११।८) ॥ ५०८ ॥

**बाल०**—ग्रैव । तत्र भवेऽर्थे केशवणमाधवढकाभ्यां सह ग्रीवाया ग्रैवग्रैवेयके साधुनी भवतः । अयमपि यरामापवादः ॥ ५०९ ॥

**बाल०**—गम्भी । गम्भीरेत्येवमादिभ्यस्तत्र भवेऽर्थे ण्यरामो भवति । गम्भीरे भवं गाम्भीर्यं । संसारहरविधायसूत्रं स्मारयति अव्ययस्येति । बहिर्भवं वाह्यं । एवं दैव्यं पाञ्चजन्यं ॥ ५१० ॥

पारिमुख्यं पारिहनव्यं । नेह—औपकूलः औपशालः आन्तर्देहिकः पारिग्रामिकः ।

५१२. माधव ठः ।

प्रभुरयम् ।

---

ठः स्यात्, तथा परि पूर्वादनुपूर्वाच्च ग्रामशब्दाच्च माधवठो भवति । पारिमुख्यमिति—अप परि बहि रञ्चन्ता इत्यनेनाव्ययीभावः—परिमुखं, तत्रभवमिति ण्यः । परिहनु, तत्र भवः, उद्वयस्येति गोविन्दः—पारिहनव्यम् । एवं अनुपथं अनुगङ्गं अनुवंशमित्येतेभ्यश्च ज्ञेयम् । कुलस्य समीपे भव मौपकूलम् । सामान्यतः केशव णः । अन्तर्देहमिति सप्तम्यर्थेऽव्ययी भावः । एवमनुग्राममिति—अनु र्यस्य समीपमाहेत्यनेन तत्समासः ।

अमृता०—५१२/५१३. अध्यात्मादेरिति । तत्र भवार्थे अव्ययीभावनिष्पन्नादध्यात्मादेरुत्तरे माधवठः स्यात् । आत्मानमधिकृत्येति विग्रहे अव्ययीभावः—अध्यात्मं, तत्र भवः

---

बाल०—अव्य । तत्र भव इत्यर्थेऽव्ययीभावसमस्तान्नाम्नो ण्यरामः स्यात् । ननु । पूर्वोक्तेऽर्थे तादृशेभ्य उपकूलादिभ्यो ण्यरामो ननु स्यात् । अन्तः । अन्तरिति पूर्वपदं यस्य तस्मादव्ययीभावात्तु तत्रार्थे माधवठो भवति । पर्य । पूर्वार्थे पर्यनुपूर्वौ यस्य तस्मात्तथाभुताद्ग्रामाच्च माधवठः स्यात् । अपपरिबहिरञ्चन्ता इत्यनेन परिमुखं तस्मिन् भवं पारिमुख्यं । एवं पारिहनव्यं । एवं पर्योष्ठ परिखल परिसीर अनुसीर अनुपथ अनुतिल अनुगङ्ग अनुशीत अनुमास अनुयव अनुसूप अनुवंश इत्येतेभ्य । किञ्चात्र उपसीर उपदृश उपकलापानामपि ग्रहणमुपकूलादिगणादन्यत्वादिति केषाञ्चिन्मतं । केचित्तूपकूलादिगणे पठन्त्येतानिति मतभेदः । मुखं परि परिमुखमिति कथमव्ययीभावो यतोऽपरीत्यादिना पञ्चम्या अव्ययीभावः । पञ्चमीच वर्जनार्थापपरीति । ननु परिमुखे वर्जनं गम्यते, किन्तर्हि पर्वतो भावः, तस्माद्योगविभागादिना यत्नेनाव्ययीभावः करणीयः । येतु परिहनुप्रभृतयस्तेष्वप्यपपरीत्यादिनाव्ययीभावः कथं तेष्वपि वर्जनं न गम्यते, तस्मात् परिमुखवद्यत्नेनैवेति यदन्यैरुक्तं तत्त्वस्माकं नाभीष्टं मुखादीन् वर्जयित्वा भवनस्यान्यत्रापि सम्भवात् । नेहेति निषेधादिति शेषः । तत्र समीपे इत्यनेन कूलस्य समीपमिति विग्रहे उपकूलं तत्र भवः ओपकूलः साभान्यादत्र केशवणः । एवं शालायाः समीपे भवः ओपशालः । तथा ओपकृष्ण इत्याद्याकृतिगणोऽयं । अन्तःशब्दो णत्वविधावित्यनेनोपेन्द्रत्वप्रतिपादनादव्ययत्वं निश्चितं । तेन देहस्यान्तरिति विग्रहेऽन्तःशब्दस्य सप्तम्यर्थत्वात् । अव्ययं सप्तम्याद्यर्थेष्वित्यनेन समासादव्ययोभावसिद्धमन्तर्देहं तत्र भवः आन्तर्देहिक इति । इति । अपपरीत्यनेन न पूर्ववत् परिग्रामं तत्र भवः पारिग्रामिकः । तथा अनुर्यस्य समीपमाहृयस्यच दैर्घ्यं तेनेत्यनेन अनुग्रामं तत्र भवः आनुग्रामिक इति ॥ ५११ ॥

बाल०—माध । तत्र भव इत्यर्थे नाम्नो माधवठो भवन् यथास्वं स्यात् । माधवठमधिकरोति प्रभुरिति ॥ ५१२ ॥

५१३. अध्यात्मादेः ।

आध्यात्मिकः आधिभौतिकः, चातुर्र्थिकः त्रैर्वणिकः साम्प्रतिकः गैरिकमित्यादिः ।

तद्धिते ।

५१४. समानात् तदादेश्च ।

सामानिकः सामानग्रामिकः ।

५१५. ऊर्द्धन्धमोर्द्धदेहाभ्याम् ।

और्द्धन्धमिकः और्द्धदेहिकः ।

५१६. लोकोत्तरपदात् ।

ऐहलौकिकः ।

---

आध्यात्मिकः । एवमाधिदैविक इत्यत्र चोभयपदवृष्णीन्द्रः । चतुर्ष्वर्थेषु भव श्चातुरर्थिकः । त्रिषु वर्णेषु भवः त्रैर्वणिकः । एवमौपजानुक इत्यादयश्च बोध्याः ।

**अमृता०**—५१४. समानादिति । तत्र भवार्थे समान शब्दात् तथा समानमादि यस्य तस्माच्च माधव ठः स्यात् । स्पष्टमुदाहरणम् ।

**अमृता०**—५१५. ऊर्द्धेति । उक्तार्थे ऊर्द्धन्धम ऊर्द्धदेह शब्दाभ्यां माधव ठः स्यात् । उच्चरवकारी ऊर्द्धन्धम उच्यते, तत्रभव और्द्धन्धमिकः । एवमौर्द्धदेहिकः ।

**अमृता०**—५१६. लोकेति । तत्र भवार्थे लोक इत्युत्तरपदं यस्य तस्मात् माधवठः स्यात् । ऐहलौकिक इति—अणुशतादीनाञ्चेति उभयपदवृष्णीन्द्रः । एवं पारलौकिक इत्यादिः ।

---

**बाल०**—अध्या । तत्र भवेऽर्थे अध्यात्मादेर्माधवठो भवति । अव्ययं सप्तम्याद्यर्थेष्वित्यनेनात्मानमधिकृत्येति विग्रहे अध्यात्मं तत्र भवः आध्यात्मिकः । एवमाधिभौतिकः तथाधिदैविक इति । एवमिह लोकेत्यनयोरुभयपदवृष्णीन्द्र उक्तः । चतुष्वर्थेषु भवः चातुरर्थिकः । त्रिषु वर्णेषु भवः चातुरर्थिकः । त्रिषु वर्णेषु भवः त्रैर्वणिकः । एवं साम्प्रतिकः गैरिकमिति । इत्यादीत्यादिपदात् औपजानुकः औपकर्णिकः औपनीविक इत्यादिच ॥ ५१३ ॥

**बाल०**—समा । पूर्वोक्तेऽर्थे समानशब्दात् तत्समानमादि यस्य तस्माच्च माधवठः स्यात् । समाने भवः सामानिकः । एवं सामानग्रामिकः सामानदेशिक इत्यादि ॥ ५१४ ॥

**बाल०**—ऊद्ध्र्व । तत्र भवेऽर्थे ऊद्ध्र्वन्धमोद्ध्र्वदेहाभ्यां माधवठो भवति । उदाहरणे स्पष्टे ॥ ५१५ ॥

**५१७. मुखतसः पार्श्वतस श्छरामः ।**

मुखतीयः पार्श्वतीयः ।

**५१८. मध्यीय-माध्यम-मध्यमीयाः ।**

साधवः ।

**५१९. मध्यस्य मध्यन्दिनं केशवणश्च ।**

माध्यन्दिनमुपगायति ।

शैषिकेषु भवार्थाः ।

**५२०. थाम्नोऽजिनान्ताच्च महाहरः ।**

अश्वत्थामा कृष्णाजिनः ।

---

**अमृता०**—५१७. मुखतस इति । प्रोक्तार्थे मुखतस् पार्श्वतस् शब्दाभ्यां छरामो भवति । अत्र सप्तम्यर्थे तस्प्रत्ययत्वात् मुखतो भवः मुखतीय इत्यादि द्वयम् । अव्ययादारादादि वर्जमिति संसारहरः ।

**अमृता०**—५१८. मध्यमीयेति । तत्र भव इत्यर्थे मध्यस्य छराम-केशवणाभ्यां सह मध्यीय-मध्यम-मध्यमीयाः साधवो भवन्ति । मधीय इति केवल छः, मध्यम इति केशव णः, निपातात् मुमागमः, मध्यमीय इति छरामः, निपातात् मुमागमः ।

**अमृता०**—५१९. मध्यस्येति । प्रोक्तार्थे मध्य शब्दात् केशवणः स्यात्, तस्मिन् सति मध्यस्य मध्यन्दिनमित्यादेशश्च भवति । मध्ये भवं माध्यन्दिनं गीतमुपगायतीत्यर्थः ।

**अमृता०**—५२०. थाम्न इति । प्रोक्तार्थे थामन् शब्दात्, अजिनान्त शब्दात् च प्राप्तकेशव णस्य महाहरः स्यात् । यद्यपि थामाजिनान्तात् इत्येव विवक्षा तथापि तादृशोक्ति व्युत्पत्ति वैचित्र्यर्थम् ।

---

**बाल०**—लोक । पूर्वोक्तेऽर्थे लोक उत्तरपदं यस्य तस्मान्नाम्नो माधवठो भवति । इह लोके भवः ऐहलौकिकप्रभृतिः उभयपदवृष्णीन्द्रस्तु पूर्ववत् ।। ५१६ ।।

**बाल०**—मुख । तत्र भवेऽर्थे मुखतसः पार्श्वतसश्च छरामः स्यात् मुखतीयेति द्वयेऽत्र अव्ययस्यारादिवर्जमित्यनेन संसारहरः ।। ५१७ ।।

**बाल०**—मध्यीय । तत्र भवेऽर्थे छरामकेशवणाभ्यां सह मध्यस्य मध्यीयमध्यम-मध्यमीयास्त्रयः साधवो भवन्ति । अत्र केवलछो मुगागमसहितौ केशवणछरामौच निपातनात् ।। ५१८ ।।

**बाल०**—मध्य । तत्र भव इत्यर्थे मध्यस्य सम्बन्धे केशवणस्तस्मिन् सति तस्य मध्यन्दिनादेशो भवति । माध्येति मध्ये भवं गीतमुपगायतीत्यर्थः ।। ५१९ ।।

**५२१. वर्गान्ताच्छराम: ।**

कवर्गीय: ।

**५२२. अशब्दे यराम-खरामौ वा ।**

कृष्णवर्ग्य: कृष्णवर्गीण: कृष्णवर्गीय: ।

**५२३. कर्णिका-ललाटिके अलङ्कारे ।**

साधू । उक्तो भव: केवल: ।

**५२४. तस्य व्याख्यानमिति च व्याख्यातव्यनाम्न: ।**

---

अमृता०—५२१. वर्गेति । पूर्वोक्तार्थे वर्गान्तशब्दात् छराम: स्यात् । कवर्गे भव: कवर्गीय: शब्द:, यथा काकु: । एवं चवर्गीय इत्यादय: ।

अमृता०—५२२. अशब्द इति । तत्र भव इत्यर्थे शब्देतरे वाच्ये वर्गान्तशब्दात् यराम-खरामौ वा भवत:, पक्षे छरामश्च । कृष्णवर्ग्य इत्यादौ वर्गशब्द: पक्षार्थक: ।

अमृता०—५२३. कर्णिकेति । उक्तार्थे अलङ्कारे वाच्ये ठरामेण कर्ण-ललाटयो: कर्णिका-ललाटिके साधू भवत: । कर्णे भवा कर्णिका कर्ण भूषणम् । एवं ललाटिका । केवलभवार्थ: समाप्त: ।

अमृता०—५२४. तस्येति । वृत्तिमाह—तस्येत्यादिना । तत्र भवार्थश्चानुवर्त्तते

---

बाल०—थाम्नो । तत्र भव इत्यर्थे थामन्शब्दात् अजिनान्ताच्च प्राप्तकेशवणस्य महाहर: स्यात् । ननु सूत्रे थाम्न इत्युद्दिष्टं तर्ह्यश्वत्थाम्नि भवोऽश्वत्थामेति कथमुदाहृतं भद्रमुच्यते । वर्णेन विधीतदन्तस्य कार्यं स्यान्नाम्नातु क्वचिदिति पारिभाषिकन्याय-बलाद्यद्यपि थाम्न इति दर्शितं तथाप्यन्तर्भूतात्तस्मान्महाहर इति ज्ञेयं । थामाजिनान्ता-दित्यकृत्वा यत् थाम्न इत्यादिकृतं तत्तु छात्राणां व्युत्पत्तिवैचित्र्यार्थं । कृष्णशब्देनात्र कृष्णसारमृग उच्यते, तस्याजिनं चर्म तस्मिन् भव: कृष्णाजिन इति ।। ५२० ।।

बाल०—वर्गा । वर्गोऽन्ते यस्य तस्मात्तत्र भवेऽर्थे छराम: स्यात् । अशब्द इत्यव्यवहितवक्ष्यमाणादत्र शब्दो वाच्यो गम्यत इत्यनुमीयते । कवर्गे भव: कवर्गीय: शब्द: । एवं चवर्गीय: टवर्गीय इत्यादि ।। ५२१ ।।

बाल०—अश । तत्र भवेऽर्थेऽशब्दे वाच्ये वर्गान्ताद्यराम-खरामौ वा भवत: । कृष्णस्य वर्ग: पक्षस्तत्र भव: कृष्णवर्ग्य इति द्वयं । पक्षे छश्च कृष्णवर्गीय इति ।। ५२२ ।।

बाल०—कर्णि । तत्र भव इत्यर्थेऽलङ्कारे वाच्ये ठरामेण सार्द्धं कर्णललाटयो: कर्णिकाललाटिके साधू भवत: । अलङ्कारादन्यत्र शरीरावयवादित्यनेन य: कर्ण्यं ललाट्य-मिति । केवलभवार्थं समापयति उक्त इति ।। ५२३ ।।

तस्य व्याख्यानमित्यर्थे च व्याख्यातव्यनाम्नो यथाविहितं स्यात्। कृतो व्याख्यानं कृत्सु भवो वा कार्त्तो ग्रन्थः।

**५२५, षात्वणत्विक-कार्त्ततद्धितिकादयः।**

भव-व्याख्यानयो र्माधव ठान्ताः साधवः।

**५२६, क्रतुभ्यो यज्ञेभ्यश्च माधव ठः।**

आग्निष्टोमिकः राजसूयिकः पाञ्चौदनिकः।

**५२७, ऋषिशब्दादध्याये।**

वाशिष्ठिकोऽध्यायः।

---

इति सूत्रे च शब्देन हि सूच्यते, तत एवोदाहरण वाक्ये—कृत्सु भवो वेति प्रोक्तम्।

अमृता०—५२५. षात्वेति। वृत्तौ स्पष्टीकृतम्। षत्व-णत्वयो व्याख्यानं तत्र भवोवा षात्वणत्विकः। एवं कृत्-तद्धितयो व्याख्यानमित्यादि कार्त्ततद्धितः।

अमृता०—५२६. क्रतुभ्य इति। पूर्वोक्तार्थद्वये क्रतुभ्यो यज्ञेभ्यश्च माधव ठः स्यात्। यत्र पशुबधोऽस्ति स यागः क्रतुरुच्यते, तद्रहितो यज्ञ इति भेदः। अत्र तत्तत् पर्याय-ग्रहणार्थं बहुवचनम्। अग्निष्टोमस्य व्याख्यानं तत्र भवो वा अग्निष्टोमिकः, ग्रन्थो मन्त्रो वा। तत्र प्रथमद्वयं क्रतोरुदाहरणे, पाञ्चौदनिक इति यज्ञस्य।

अमृता०—४२७. ऋषीति। अध्याये वाच्ये ग्रन्थवाचिन ऋष्यभिधानात् शब्दात् प्रोक्तार्थे माधव ठो भवति। वशिष्ठस्य ग्रन्थस्य व्याख्यानं तत्र भवो वा वाशिष्ठिकोऽध्यायः। एवं वैश्वामित्रक इत्यादि। अध्याय इति किम्—वाशिष्ठं रामायणम्।

---

**बाल०**—तस्य। व्याख्यायतेऽनेनेति टनः करणाधिकरणयोरिति करणे टनः। अत्र तत्रभवार्थश्चानुवर्त्तेत इति सूत्रस्थ-चशब्देन सूचितमिति तदर्थमपि विवरणेन स्फुटीकरोति तस्येति। यथाविहितमित्यस्मात् प्रत्यय इति पूरणीयं। प्रभुश्चायमिति गम्यं। कृत इति कृत्प्रत्ययस्य। कार्त्त इत्यत्र सामान्यतः केशवणः। ग्रन्थश्चात्र कृदन्तपादो ज्ञेयस्तेनैव कृते व्याख्यानस्य कृत्सु भवनस्यच सम्भवत्वात्। एवं सौपः तैपः। ग्रन्थे वाच्ये एव तस्मादन्यत्रतु न मथुराया व्याख्यानी सुकोशला इति वाक्यस्यैव स्थिति॥ ५२४॥

**बाल०**—षात्व। वृत्तिमाह भवेति। षत्वणत्वयोर्व्याख्यानं तयोर्भवो वा षात्वणत्विक इति। कृत्तद्धितयोर्व्याख्यानं तयोर्भवो वा कार्त्ततद्धितिक इति। सूत्रस्थादिपदात् णात्वषत्विकः समासतद्धितिकः ताद्धितसमासिकः सान्धिसुवन्तिकः सौवन्तसन्धिक इत्यादि॥ ५२५॥

**बाल०**—क्रतु। तस्य व्याख्यानं तत्र भवो वेत्यर्थे क्रतुवाचिभ्यो यज्ञवाचिभ्यश्च माधवठः स्यात्। यस्मिन् यज्ञे पशुर्हिंसास्ति स क्रतुरुच्यते। यत्रतु पशुर्हिंसा नास्ति स यज्ञ इति भेदो विवक्षणीयः। तस्य व्याख्यानमित्यर्थे क्रत्वादिना क्रत्वादिप्रतिपादकमन्त्रो लक्ष्यते तस्यैव व्याख्यानसम्भवात्। तत्र भवार्थेतु मुख्यार्थेऽपि न कश्चिद्विरोधापत्तिः। आग्नीत्यादिद्वयं क्रतूदाहरणं। पाञ्चौदनिक इति यज्ञोदाहरणं॥ ५२६॥

## ५२८. पौरोडाश-पुरोडाशाभ्यां केशव ठः ।

पौरडाशिकी पुरोडाशिकी ।

## ५२९. छन्दसो यरामाणौ ।

छन्दस्यः छन्दसः ।

## ५३०. द्विसर्वेश्वर-ऋराम-ब्राह्मण-ऋच्-प्रथम-अध्वर-पुरश्चरण-नामाख्यात इत्येभ्यो माधव ठः ।

नैष्ठिकः चातुर्होतृकः ब्राह्मणिकः आर्चिक इत्यादि । नामाख्यातात्—नामाख्यातिकः । विगृहोताच्च नामिकः,आख्यातिकः, आख्यातनामिकः ।

---

अमृता०—५२८. पौरोडाशेति । तस्य व्याख्यानं तत्र भवो वेत्यर्थे पौरोडाश-पुरोडाशाभ्यां केशव ठः स्यात् । पुरोडाशः चरुः, तत् संस्कारको ग्रन्थः पौरोडाशः, तस्य व्याख्यानं तत्र भवो वा पौरडाशिकी ऋक् । पुरोडाश सहचारितो मन्त्रोऽपि पुरोडाशः, तस्य व्याख्यानमित्याद्यर्थे पुरोडाशिकी ।

अमृता०—५२९. छन्दस इति । पूर्वोक्तार्थे छन्दः शब्दात् यरामः अण् च भवतः ।

अमृता०—५३०. द्वीति । तस्य व्याख्यानमित्याद्यर्थे द्विसर्वेश्वरात् ऋरामात् ब्राह्मणात् ऋचः तथा प्रथमादिचतुर्भ्यश्च माधव ठः स्यात् । निष्ठाया व्याख्यानंनिष्ठायां भवो वा नैष्ठिक इत्यादीनि । एवं प्राथमिकः आध्वरिकः पौरश्चारणिकः । विगृहीतादिति पृथक् कृतादित्यर्थः ।

---

बाल०—ऋषि । अध्याये वाच्ये ग्रन्थवाचकात् ऋष्यभिधानान्नायस्तद्व्याख्याने तत्र भवार्थेच माधवठो भवति । साहचर्यादृषिशब्दोऽत्र ग्रन्थविशेषप्रवचनमभिधत्ते केवल-ऋषिवाचकस्य व्याख्यानासम्भवादिति जूमरादयः । वशिष्ठस्य व्याख्यानं वशिष्ठे भवो वा वाशिष्ठिक इति । एवं वैश्वामित्रक इत्यादि । अनध्यायेतु वाशिष्ठी ऋक् ।। ५२७ ।।

बाल०—पौर । तद्व्याख्याने तत्रभवार्थेच ग्रन्थवाचिकाभ्यां पौराडाशपुरोडाशाभ्यां केशवठः स्यात् । पुरोडाशस्य संस्कारको ग्रन्थः पौरोडाशस्तस्य व्याख्या तत्र भवो वा पौरोडाशिकी ऋक् । पुरोडाशसहचरितो मन्त्रः पुरोडाश उच्यते । तेन तस्य व्याख्येत्यादि पूर्ववत् ।। ५२८ ।।

बाल०—छन्दसो । पूर्वोक्तेऽर्थे छन्दःशब्दाद्यरामाणौ भवतः । छन्दसो व्याख्यानं छन्दसि भवो वा छन्दस्य इत्यादिद्वयम् ।। ५२९ ।।

बाल०—द्विस । तद्व्याख्याने तत्र भवेच द्विसर्वेश्वरात् ऋरामात् ब्राह्मणादिभ्यः सप्तभ्यश्च माधवठो भवति । अत्रापणनामानावपि पठति कश्चित् । निष्ठाया व्याख्यानं निष्ठायां भवो वा नैष्ठिक इति, एवं चातुर्होतृकादित्रयं । इत्यादीत्यादिपदेन प्राथमिकः

**५३१. ऋगयणादेः केशवणः ।**

आर्गयणः नैरुक्तः शैक्षः नैगमः वैयाकरणः यौगः पादः । भव-व्याख्याने निवृत्ते ।

**५३२. तत आगतः ।**

अत्रापि यथास्वं । माथुरः राष्ट्रियः । प्रभुरयं प्रभवतीति यावत् ।

**५३३. आयस्थानेभ्यो माधव ठः, शुण्डिकादिभ्यस्तु केशवणः ।**

आपणादागतः आपणिकः । एवं शौल्किकः । एवं शौण्डिकः कार्कशः ।

---

अमृता०—५३१. ऋगिति । प्रोक्तार्थे ग्रन्थवाचकात् ऋगयणादेः केशवणः स्यात् । ऋचामयनं ऋगयणं, उपचाराद् ग्रन्थविशेषः, यस्य व्याख्यानं तत्र भवो वा आर्गयणः । आदिपदग्राह्यानपि दर्शयति—नैरुक्त इत्यादिना । एवं पुनरुक्त अङ्गविद्या उपनिषत् प्रभृतयश्च ऋगयणादौ पठ्यन्ते । समाप्तौ भव-व्याख्यानरूपावर्थौ ।

अमृता०—५३२. तत इति । अर्थाधिकारोऽयं विधिश्च । मथुराया आगतो माथुरो जनः ।

अमृता०—५३३. आयेति । आयः स्वामिग्राह्यो भागः, तस्य स्थानानि पदानि, तेभ्यः, लाभस्थलेभ्य इत्यर्थः, तत आगत इत्यर्थे माधवठः स्यात्, तत्रैवार्थेशुण्डिकाभ्यस्तु

---

आध्वरिकः पौरश्चरणिकः आपणिकः नामिकः । नामाख्यातयो शब्दद्वयंमिलनेन पृथग्रूपेण विपर्ययेणापि प्रयोगार्थं नामाख्यातिक इति पृथगुदाहृतं । एभ्यो ग्रन्थार्थेभ्य एव । अन्यत्रतु नेष्ठ इत्यादि । विगृहीताच्चेति विधिवाक्यं न सूत्र । नाम्नो व्याख्यानं नाम्नि भवो वेति नामिक इत्यादित्रयं ॥ ५३० ॥

बाल०—ऋग् । तद्व्याख्याने तत्र भवेच ऋगयणादेर्ग्रन्थवाचकात् केशवणो भवति । ऋचामयनं ऋगयणं उपचारादध्ययनक्रियाविशिष्टो ग्रन्थ उच्यते । तेन तद्व्याख्यानं तत्र भवो वा आर्गयण इत्यादि । ऋगयण निरुक्त पुनरुक्त शिक्षा निगम व्याकरण युग पाद न्याय पदव्याख्यान छन्दोव्याख्यान छन्दोमान छन्दोभाषा छन्दोविचिति छन्दोविजिति विद्या वास्तुविद्या क्षेत्रविद्या अङ्गविद्या त्रयीविद्या उत्पत्ति उदपति सम्वत्सर मुहूर्त्त निमित्त उपनिषदिति षड्विंशतिः ऋगयणादिः । शिक्षान्यायविद्याशब्देभ्यो द्विसर्वेश्वरान्माधवठे व्याकरणशब्दादादिवृष्णीन्द्रात् छे शेषेभ्यः षात्वणत्विकादेरादिपदान्माधवठे प्राप्ते विधानं । अधिकारं समापयति भवेति ॥ ५३१ ॥

बाल०—तत अत्रेति विवरणं । अत्रार्थेऽपादानवाचकान्नाम्नो यथाविहितं प्रत्ययः स्यात् । आद्यपादानादिति कस्यचित् सूत्रं । मथुराया आगतः माथुर इत्यत्र सामान्यतः केशवणः । राष्ट्रादागतः राष्ट्रिय इत्यत्रतु राष्ट्राद्घराम इति घः । प्रभवतीत्यवधीकृत्य प्रभुनामायमित्याह प्रभुरिति ॥ ५३२ ॥

### ५३४. विद्या योनिसम्बन्धेभ्यो वु नृसिंहः, ऋरामात्तु माधवठः, पितु र्यरामश्च ।

औपाध्यायकः शैष्यकः पैतामहकः मातुलकः । तथा हौतृकः मातृकः पैतृकः । ऋरामस्य रो ये, पित्र्यः ।

### ५३५. गोत्राद् वुनृसिंहः ।

अपत्याधिकारादन्यत्र गोत्रमपत्यमात्रमिति काशिका औपगवेभ्य आगतः औपगवकः । कुरुभ्य आगतः कौरवकः ।

---

आयस्थानेभ्यः केशव णो भवति । आपणः क्रयविक्रयस्थानं, तस्मादागतः आपणिकः द्रव्यविशेषः । शुल्कं करः, तत आगतः शौल्किकः । शुण्डिकादिभ्य इत्यत्र आदिपदेन—स्थण्डिल भूमि तृण पर्ण उपल इत्यादयो ग्राह्याः ।

**अमृता०**—५३४. विद्येति । तत आगत इत्यर्थे विद्या सम्बन्धे योनिसम्बन्धे च गम्यमाने तत्तदबोधक शब्देभ्यो नृसिंह वुः स्यात्, ऋरामान्तात् तत्तत् सम्बन्धे गम्ये तु माधव ठः स्यात्, पितृ शब्दात्तु यराम-माधव-ठौ भवतः । औपाध्यायक इति द्वयं विद्यासम्बन्धस्योदाहरणम् । तथा हौतृक इति च । अन्यानि तु योनिसम्बन्धस्य ।

**अमृता०**—५३५. गोत्रादिति । तत आगतेऽर्थे गोत्रवाचकशब्दात् नृसिंह वुः स्यात् । काशिकासम्मत गोत्रार्थमङ्गीकुर्वन्नाह—अपत्याधिकारादिति । औपगवेभ्य इति बहुत्वनिर्देशेन—प्राग् दीव्यतीये कर्तव्ये बहुषु लक्ष्मीं विनेति प्राप्तगोत्रप्रत्ययस्य महाहराभावः । कुरुभ्य इत्यत्र तु महाहर एव, बाहुल्यादितिभावः ।

---

**बाल०**—आय । आयः स्वामिग्राह्यो भागः स येभ्य उपलभ्येत तान्यायस्थानानि एभ्योऽपादानेभ्यस्तत आगतेऽर्थे माधवठो भवति । शुण्डि । शुण्डिक आदिर्येषां तेभ्य आयस्थानेभ्यस्तु तत आगतेऽर्थे केशवणो भवति । आपणं क्रयविक्रयस्थानं तस्मादिति योज्यं । शुल्कं मूल्यं तत आगतः शौल्किक इति । शुण्डिको मद्यकारस्तस्मादागतः शौण्डिकः कर्कशः कठिनस्तत आगतः कार्कश इति । शुण्डादेरादिपदात् कृकण स्थण्डिल उदपान उपल तीर्थ भूमि तृण पर्ण इत्येतेभ्यश्च केशवणः ॥ ५३३ ॥

**बाल०**—विद्या । तत आगतेऽर्थे विद्याकृतसम्बन्धो योनिकृतसम्बन्धश्चोपलभ्यते येभ्यस्तेभ्योऽपादानेभ्यो नृसिंहो वुः स्यात् । ऋरा । पूर्वोक्तेऽर्थे ऋरामान्ताद्विद्यायोनिकृतसम्बन्धवाचकादपादानात्तु माधवठः स्यात् । पितु । पूर्वोक्तेऽर्थेपितृरूपादपादानाद्यरामश्चकारान्माधवठः स्यात् । उपाध्यायादागतः उपाध्यायक इत्यत्र विद्याकृतसम्बन्धवाचकात् प्रत्ययः । एवं शैष्यक इत्यत्रापि । पितामहादागतः पैतामहक इत्यत्र तु योनिकृतसम्बन्धवाचकात् प्रत्ययः । एवं मातुलक इत्यत्रापि । हौतृक इत्यत्र ऋरामान्तान्माधवठे कृते चतुर्भुजान्तादिति ठस्य कः । एवं मातृकादिद्वयेऽपि । पितृशब्दात् पक्षे यप्रत्यये ररामविधानं स्मारयति ऋरामस्येति ॥ ५३४ ॥

## ५३६. हेतो र्मानवनाम्नश्च रूप्यो वा मयट् च ।

समादागतः समरूप्यः, विषमरूप्यः । पक्षे गहादित्वाच्छः समीयः विषमीयः । तथा विष्णुदत्तरूप्यः वैष्णुदत्तः । तथा सममयः विष्णुदत्तमयः । तत आगतो निवृतः ।

## ५३७. ततः प्रभवति ।

अत्रापि यथास्वं । हैमवती गङ्गा ।

---

**अमृता०**—५३६. हेतोरिति । हेतुभूताच्छब्दात् मानवनाम्नश्चोत्तरे तत आगत इत्यर्थे रूप्यो वा मयट् च वा स्यात् । समाद्धेतोरागत इत्यर्थे समरूप्यः । समादिशब्दा गहादौ पठ्यन्ते ततो विभाषाविधानेन गहादित्वात् छश्च भवतीत्याह—पक्ष इत्यादि । विष्णु दत्तादागतो विष्णु दत्तरूप्यः, पक्षे केशव णः—वैष्णुदत्तः । मयटं चोदाहरति—सम मय इति । टित्त्वादीप् सममयीति । पूर्णोऽयमर्थाधिकारः ।

**अमृता०**—५३७. ततः प्रभवतीति अधिकारः । हिमवतः प्रभवति प्रथमं आत्मानं प्रकटयति—हैमवती गङ्गा । ब्रह्मलोकादागताया स्तस्याः प्रथमदर्शनं हिमवत्येव लभ्यत इति भावः ।

---

**बाल०**—गोत्रा । गोत्रवाचकादपादानात् तत आगतेऽर्थे नृसिंहो वुर्भवति । अत्र काशिकासम्मतगोत्रमङ्गीकुर्वन्नाह अपत्येति । अपत्याधिकारादन्यत्रापत्यमात्रं गोत्रमित्यन्वयः । उपगवेभ्य इति बहुबचनेन प्राग्दीव्यतीये कर्तव्ये बहुषु लक्ष्मीं विनेत्यनेन प्राप्तगोत्रप्रत्ययमहाहराभावः सूचितः । एवं कुरुभ्य इत्यत्रापि ॥ ५३५ ॥

**बाल०**—हेतोः । हेतुभूताच्छब्दान्मनुष्यनाम्नश्च तत आगतेऽर्थे रूप्यो वा मयट्च वा स्यात् । पक्षे यथासम्भवं । रूप्यमयटाविति न कृतं क्रमनिरासार्थं । समादागत इति समाद्धेतोरागच्छतीत्यर्थः । विषमरूप्य इति विषमादागत इत्यर्थः । रूप्याभावपक्षे गहादित्वाच्छः स्यादित्याह पक्ष इति । मानवनाम्न उदाहरणार्थमतिदिशति तथेति । वैष्णवदत्त इत्यत्रौत्सर्गिककेशवणः । हेतुमानवनाम्नोर्युगपदुदाहरणं दर्शयति तथेति । अधिकारं निवर्तयति तत इति ॥ ५३६ ॥

**बाल०**—ततः । विवरणमत्रेति । प्रभवतीति प्रथमदर्शनबोधकं तेन यतोऽन्येषां प्रथमदर्शनमुपलभ्यते तस्मान्नाम्नोऽत्रार्थे यथाविहितं प्रत्ययः स्यात् । प्रभुश्चायमिति गम्यं । हैमवतीति हिमवतः प्रभवतीत्यर्थः सामान्यादत्र केशवणः । किन्च, ब्रह्मलोकाद्गङ्गाया आगमनं हिमवतस्तु प्रथमदर्शनमित्यागतः प्रभवतीत्यनयोर्महान् भेदः ॥ ५३७ ॥

**५३८. विदूराण्ण्यरामः ।**

वैदुर्यः ।

**५३९. तद्गच्छति पथिदूतयोः ।**

अत्र च यथास्वम् । माथुरः पन्थाः, द्वारकीयो दूतः ।

**५४०. अभिनिष्क्रामति द्वारम् ।**

अत्रापि यथास्वं । मथुरामभिनिस्क्रामति द्वारं माथुरम् । उपचाराद् द्वारं कर्त्तृ ।

---

अमृता०—५३८. विदूरादिति । ततः प्रभवतीत्यर्थे विदूरशब्दात् ण्यरामः स्यात् । विदूरं नाम नगरं, ततः प्रभवतीति वैदूयो मणिः ।

अमृता०—५३९. तदिति । तद्गच्छतीत्यर्थे पथि-दूरयो र्वाच्ययो र्यथास्वं प्रत्यय स्यात् । मथुरां गच्छति माथुरः पन्था दूतो वा । एवं द्वारकीयः पन्थाः दूतो वा ।

अमृता०—५४०. अभीति । कृष्ण प्रवचनीयोऽयमभिशब्दः । तेन तद् योगे द्वितीया पेक्षत्वात् यस्मादभिनिक्रामति द्वारं तस्माद् द्वितीयान्तात् प्रत्ययो भवति । मथुरामभि मथुरां लक्षीकृत्युत्यर्थः । ननु द्वारं प्रायशः करणत्वेन हि प्रसिद्धं, कथमहि तस्य कर्त्तृत्वमि-त्याशङ्कायामाह—उपचारादिति । अत्र द्वारस्य स्वतन्त्रत्वविवक्षया कर्त्तृत्वमुप-चारितमित्याशयः ।

---

बाल०—विदू । ततः प्रभवतीत्यर्थे विदूरशब्दाण्यरामो भवति । विदूरं नगरं ततः प्रभवति वैदूर्यो मणिः । वालवायाद्यण् विदूरश्चेति क्रमदीश्वरः सूत्रं । विदूरनाम्नि नगरे वैदूर्यः संस्क्रियते आद्युपलम्भस्तु तस्य वालवायगिरेः सकाशादिति वालवायस्यैव विदूरादेशं करोति नतु विदूरात् प्रत्यय इति तट्टीकाकृच्च । ताभ्यामित्येवं यदुक्तं तत्त्वस्माकं ग्रन्थकृतो नाभीष्टं यतो वालवायस्य तुल्यार्थता न ह्यादेशादेशिनोर्भिन्नार्थत्वं कुत्रचिदवगम्यते ।। ५३८ ।।

बाल०—तद्ग । तद्गच्छतीत्यर्थे पथिदूतयोर्वाच्ययोस्तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात् । मथुरां गच्छति माथुर इति सामान्यात् केशवणः । मथुराया नैरन्तर्यलक्षणा प्राप्तिरेव पथोगमनं । किंवा पथि स्थितेषु गच्छत्सु पन्था गच्छतीत्युपचारेणोच्यते । द्वारकां गच्छति द्वारकीय इति, आदिवृष्णीन्द्रादित्यनेनात्र छरामः । अपथिदूतयोस्तु मथुरां गच्छति वैष्णवः ।। ५३९ ।।

बाल०—अभि । लक्षणवीप्सेत्थम्भूतेष्वभिरित्यभेः कृष्णप्रवचनीयत्वाद्द्वितीयान्ता-पेक्षत्वं तेन यदभिनिष्क्रामति द्वारं तस्माद्यथास्वं प्रत्ययः स्याद्द्वारे वाच्ये । मथुरेति मथुरामभिमुखं निष्क्रामतीत्यर्थः । निष्क्रमणे द्वारं करणत्वेन प्रसिद्धं तर्हि कथमत्र कर्तृरूपं प्रतीयते इत्याक्षेपे सिद्धान्तमाह उपेति । करणत्वेऽपि स्वतन्त्रोपचारात् द्वारमत्र कर्तृ विवक्षितं । अद्वारेतु मथुरामभिनिष्क्रामति साधुः ।। ५४० ।।

**५४१. अधिकृत्य कृतो ग्रन्थः ।**

अत्र च यथास्वम् । सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः । एवं भैमरथी आख्यायिका । साहचर्यात् वासवदत्ता कादम्बरी ।

**५४२. शिशुक्रन्दाद् यमसभात् रामकृष्णसमासादिन्द्रजननादेश्च छरामः ।**

शिशुक्रन्दं रोगमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमसभीयः

---

अमृता०—५४१. अधिकृत्येति विषयीकृत कृते । ग्रन्थ इत्यर्थे यथास्वं प्रत्ययः स्यात् । अधिकृत्येत्यस्य कर्मपदात् प्रत्ययो ज्ञेयः । सुभद्रा वासुदेवस्य भगिनी, तामधिकृत्य कृतः रचितो ग्रन्थः सौभद्रः । सामान्यतः केशवणः । आख्यायिका गद्यमयश्चरितवर्णनो ग्रन्थभेदः । ननु वासवदत्ता कादम्बरीत्यादौ सत्यपि तदर्थे प्रत्ययोत्पत्तिः कथं न दृश्यत इत्याशङ्कायामाह—साहचर्या दिति । कथारूपेण तत्सम्पर्कि व्यक्त्या सहचरणात् तथा सह अभेद उपचर्यत इत्याभिप्रायः । प्रकृते वासवदत्ता या आख्यायिका सा वासवदत्ता नाम्न नायिकायाः कथारूपा, अतः कथारूपेण तत् सहचरत्वात् सा तद्भिन्नतया हि मन्यत इति सूत्रोक्तेऽर्थे प्रत्ययविधानमिह नावश्यकमिति भावः ।

काशिका तु—लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलमिति वार्त्तिकेन प्रत्ययस्य महाहरमाह । तत्तु भाषावृत्ति सुपद्मादि बहूनामसम्मतत्वात् प्रत्याख्यातंमस्मद्ग्रन्थकृद्भिः । दीक्षितेन च "शारीरकं भाष्यमिति त्वभेदोपचारादि" त्युक्त्या वार्त्तिक मतं नादृतमिति प्रतिभाति । एवं कादम्बरी कथा, तथा शिशुपालवधः, कुमारसम्भव इत्यादयश्चाभेदोपचारेणैव सिद्धा इति ज्ञेयम् । ग्रन्थ इतिकिम्—सुभद्रामधिकृत्य कृतः प्रासादः इह तु न प्रत्ययः ।

अमृता०—५४२. शिश्विति । तदधिकृत्य कृतो ग्रन्थ इत्यर्थे शिशुक्रन्द-यमसभ शब्दयोः, रामकृष्णसमासेन निष्पन्नात् शब्दात् तथा इन्द्र जननादेश्च छरामः स्यात् ।

---

बाल०—अधि । अधिकृत्य प्रकम्य आरभ्येति यावत् । अत्राप्यधिकृत्येति कर्मापेक्ष्यते इति यदधिकृत्य कृतो ग्रन्थस्तस्माद्यथास्वं प्रत्ययः स्यादधिकृत्य कृतग्रन्थे वाच्ये । सौभद्र इत्यत्र सामान्यतः केशवणः । अग्रन्थेतु सुभद्रामधिकृत्य कृतः प्रासाद इत्यत्र वाक्यस्यैव विश्रान्तिः । एवमिति भीमरथमधिकृत्य कृता आख्याधिका भैमरथीति पूर्ववदत्रापि केशवणः । सहचरितादपि प्रत्ययोत्पत्तिर्भवत्याह साहचर्यादिति । वासवदत्तः कश्चित् उत्सहचरितं कर्मादि वासवदत्तं तदधिकृत्य कृता आख्यायिका वासवदत्तेति अजादित्वादत्रेप् न स्यात् । एवं कादम्बरः कश्चित् तत्सहचरितं कर्माद्यधिकृत्य कृता आख्यायिका कादम्बरीति । किञ्च, अजादित्वाभावादत्राणकेशवेत्यनेन इप् ॥ ५४१ ॥

बाल०—शिशु । तदधिकृत्य कृतो ग्रन्थ इत्यर्थे शिशुक्रन्दाद्यमसभान्नाम्नो रामकृष्णसमाससिद्धाच्च नाम्न इन्द्रजननमादि यस्य तस्माच्चोत्तरश्छरामः स्यात् । यमस्य

किरातार्जुनीयः इन्द्रजननीयः । आदेः—शिष्योपनयनीयोऽध्यायः, सीतान्वेषणीयं काव्यं, प्रद्युम्नागमनीयम् । आकृतिगणोऽयम् ।

**५४३. रामकृष्णे देवासुरादेः प्रतिषेधः ।**

दैवासुरं गौणमुख्यम् ।

**५४४. सोऽस्यनिवासः ।**

अत्र च यथास्वं । माथुरः राष्ट्रीयः ।

**५४५. सोऽस्याभिजनः ।**

अत्र च यथास्वं । मथुराभिजनः कुलस्थानमस्य माथुरः ।

---

यमस्य सभा यमसभं, तदधि कृत्य कृतो ग्रन्थः यमसभीयः । किरातार्जुनौ अधिकृत्येत्यादि–किरातार्जुनीयः । आदिपदं विवृणीति—शिष्योपनयनीय इति ।

अमृता०—५४३. रामेति । उक्तार्थे रामकृष्णसमासे देवासुरादे रुत्तरे छरामस्य प्रतिषेधो भवति । देवासुरानधिकृत्य कृते । ग्रन्थो दैवासुरः । एवं गौणमुख्यम् । उभयत्र केशवणः । समाप्तोऽयमर्थाधिकारः ।

अमृता०—५४४. स इति स्फुटम् । प्रथमान्तात् प्रत्ययः । मथुरा निवासोऽस्य माथुरः । राष्ट्रो राज्यं निवासोऽस्य राष्ट्रीयः । राष्ट्राद् घराम उक्तः ।

अमृता०—५४५. सोऽस्येति । अभिजनं कुलस्थानं, पूर्वबान्धवनिवास इत्यर्थः । सोऽस्य अभिजनमित्यर्थे यथास्वं प्रत्ययः स्यात् ।

---

सभा यमसभमित्यत्र राजशब्दं राजविशेषनाम चेति ब्रह्मत्वं ततस्तदधिकृत्य कृतो ग्रन्थो यमसभीयः । किरातार्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयः । इन्द्रस्य जननं तदधीति पूर्ववदिन्द्रजननीयः । आदेरिति इन्द्रजननादेरादिपदाद्यथासम्भवमन्येऽपीति योज्यं । गणं दर्शयति शिष्योपेति । गणस्येयत्ताभावादाह आकृतीति ॥ ५४२ ॥

बाल०—राम । पूर्वोक्तेऽर्थे रामकृष्णसमासे देवासुरादेरुत्तरस्मिन् छरामस्य प्रतिषेधः स्यात् । देवासुराधिकृत्य कृतमाख्यानं दैवासुरं तथागौणमुख्यं राक्षोगन्धर्वमित्यादि अधिकृत्येति समाप्तम् ॥ ५४३ ॥

बाल०—सो । विवरणमत्रेति । निवसन्त्यस्मिन् निवास इत्यधिकरण-घणन्तं । सोऽस्य निवास इत्यर्थे तच्छब्दनिर्दिष्टाद् शादेरुत्तरो यथास्वं प्रत्ययो भवति । मथुरा निवासोऽस्य माथुर इत्यत्र सामान्यात् केशवणः । राष्ट्रो निवासोऽस्य राष्ट्रिय इत्यत्र राष्ट्राद्घराम इति घः ॥ ५४४ ॥

बाल०—सोऽस्या । सोऽस्याभिजनः कुलस्थानमित्यर्थे तच्छब्दनिर्दिष्टाद् शादेर्यथा-विहितं प्रत्ययः स्यात् । अभिजनः कुलस्थान पूर्ववान्धवनिवास इति यावत् । माथुर इति सामान्यतः केशवणः । विशेषेतु राष्ट्रिय इत्यादि ॥ ५४५ ॥

**५४६, पर्वतेभ्यश्छ आयुधजीविनि ।**

मन्दारः पर्वतोऽभिजन एषामायुधजीविनां मन्दारीयाः ।

**५४७; शण्डिकादेर्ण्यः ।**

शाण्डिक्यः साङ्काश्यः ।

**५४८; सिन्धु-तक्षशीलादिभ्यः केशवणः ।**

सैन्धवः तक्षशीलः काश्मीरः ।

**५४९, भक्तिः ।**

---

**अमृता०**—५४६. पर्वतेभ्य इति । सोऽस्याभिजन इत्यर्थे आयुध जीविनि वाच्ये पर्वतवाचिभ्यः शब्देभ्यः छरामः स्यात् । एवं माहेन्द्रिया त्रिकूटिया इत्यादयश्च ।

**अमृता०**—५४७. शण्डिकादेरिति । प्रोक्तार्थे शण्डिकादेरुत्तरे ण्यरामः स्यात् । शाण्डिकः स्थानविशेषोऽभिजनोऽस्य शाण्डिक्यः । एवं सांकस्यः । आदिपदेन सर्वसेन-सर्वकेश-शक-सद-रक-शङ्ख-बोध-कूटा बोध्याः ।

**अमृता०**—५४८. सिन्धु इति । सोऽस्याभिजन इत्यर्थे सिन्धुप्रभृतिभ्यः केशवणः स्यात् । सिन्धुरस्याभिजनः कुलस्थानं सैन्धवः ।

**अमृता०**—५४९. भक्ति रिति । सोऽस्येत्यनुवर्त्तते । कृतो बाहुल्यादिह भक्ति शब्दः

---

**बाल०**—पर्व । सोऽस्याभिजन इत्यर्थे आयुधजीविनि वाच्ये पर्वतवाचिभ्यश्छरामः स्यात् । पर्वतमात्रनिर्देशात् गोवर्द्धनीयाः त्रिकूटीयाः पञ्चकूटीया इत्यादि । आयुधजीविनीति किं ऋक्षोदोऽस्याभिजनः आर्क्षोदो ब्राह्मणः ॥ ५४६ ॥

**बाल०**—शण्डि । पूर्वोक्तेऽर्थे शण्डिकादेर्ण्यरामो भवति । शण्डिकोऽस्याभिजनः शाण्डिक्य इति । एवं साङ्काश्यः । शण्डिक सङ्काश सर्वसेन सर्वकेश शक शट शकवक शङ्ख बोध कूच वारेति शण्डिकादिर्द्वादशः ॥ ५४७ ॥

**बाल०**—सिन्धु । सोऽस्याभिजन इत्यर्थे सिन्धुतक्षशीलावादी येषां तेभ्यः केशवणः स्यात् । सिन्धुरस्याभिजनः कुलस्थानमिति सैन्धवः । एवं ताक्षशील इत्यादि । सिन्धु तक्षशील काश्मीर वर्ण मधुमत् कम्वोज साल्व किष्किन्ध शब्दिका उरस् गन्धार दरद शर वत्सोद्धरण कुवल कौत्सम्बर काण्ड वारण ग्रामणी सकल कंस छिन्न संकुचित सिंह कोष्ठ बन्ध वर्वट अम्नानेत्यष्टविंशतिः सिन्धादिः । सिङ्कु वर्ण कम्वोज मधुमत् काश्मीर साल्व इत्येतेभ्यो मनुष्यतत्स्थयोरित्यनेन कच्छादित्वान्नृसिंहवुरामे, कौत्सम्बर काण्ड वारण ग्रामणीत्येतेभ्यः काश्यादिभ्य इत्यनेन नृसिंहठे, शेषेभ्य आदिवृष्णीन्द्रादपि बहुचनविषया-दित्यनेन नृसिंहवुरामे प्राप्ते विधानम् ॥ ५४८ ॥

भज्यते सेव्यते भक्तिः । अत्रापि यथास्वं । विष्णु र्भक्तिरस्य वैष्णवः । एवं माथुरः ।

## ५५०. अचित्तादेशकालाम्माधवठः, महाराजाच्च ।

आपूपिकः । नेह,–माथुरः ग्रैष्मः । तथा माहाराजिकः ।

## ५५१. वासुदेवार्जुनाभ्यां वुरामः ।

वासुदेवकः अर्जुनकः ।

## ५५२. गोत्रक्षत्रियाख्याभ्यां बहुलं वुनृसिंहः ।

माधवकः, यौधिष्ठिरकः । बाहुलयात् क्वचिन्न–पाणिनीयः पौरवीयः ।

---

कर्मणि क्ति प्रत्ययान्त इति दर्शयति–भज्यत इत्यनेन । भजनीयः सेव्य इत्यर्थः । एवं मथुरा भक्ति र्भजनीयास्य माथुरः । एवं शैवः शाक्तः बौद्ध इत्यादयश्च ।

**अमृता०**—५५०. अचित्तादिति । सा भक्तिरस्येत्यर्थे देशकालभिन्नादचित्त वाचक शब्दात् तथा महाराज शब्दाच्च माधव ठः स्यात् । अपूपो भक्तिः सेव्योऽस्य आपूपिकः । देशकालात् प्रत्युदाहरति+नेहेति ।

**अमृता०**—५५१. वासुदेवेति । पूर्वोक्तार्थे वासुदेवार्जनाभ्यां वुरामो भवति । वासुदेवो भक्तिरस्येति वासुदेवकः । एवमार्जुनकः । वासुदेव शब्दोऽयं देववाची, नतु क्षत्रियवाची ततोऽग्रिमसूत्रेण नृसिंह वुरामेऽप्राप्ते विधानम्, अर्जुनशब्दात्तु तत् प्राप्ते केवलवो र्विधानमिति विवेच्यम् ।

**अमृता०**—५५२. गोत्रेति । सास्य भक्तिरित्यर्थे गोत्र प्रत्ययान्तात् क्षत्रियाख्य शब्दाच्च बहुलं नृसिंह वु र्भवति । मधो र्गोत्रापत्यं पुमान् माधवः, स भक्ति र्भजनीयोऽस्य

---

**बाल०**—भक्तिः । क्तो बाहुल्याद्भक्तिशब्दोऽत्र कर्मविहितक्तान्तः इत्याह भज्यत इति । यदि भक्तिरिति कर्मविहितक्तान्तं न स्यात्तदा विष्णुर्भक्तिरस्येत्यत्र विष्णुरित्युक्तं न स्यात् । अत्रेति वृत्तिः । अत्रेति सा भक्तिरित्यर्थे नाम्नो यथास्वं प्रत्ययः स्यात् । विष्णुर्भक्तिः सेव्य इत्यर्थः । माथुर इति मथुरा भक्तिरस्येत्यर्थः । विशेषेतु राष्ट्रिय इत्यादि ॥ ५४९ ॥

**बाल०**—अचि । सा भक्तिरस्येत्यर्थे देशकालव्यतिरिक्तादचित्तवाचकाच्छब्दान्माधवठो भवति । महा । पूर्वोक्तेऽर्थे महाराजशब्दाच्च माधवठः स्यात् । अपूपो भक्तिरस्येत्यर्थः। तथा शाष्कुलिकः देशकालवाचकात्तु सामान्यात् केशवणः स्यादित्याह नेहेति । तथेति महाराजो भक्तिरस्येत्यर्थः ॥ ५५० ॥

**बाल०**—वासु । पूर्वोक्तेऽर्थे वासुदेवार्जुनाभ्यां वुरामः स्यात् । वासुदेवशब्दो देवतावाचीत्यस्मात् केशवणे, अर्जुनशब्दात्तु गोत्रक्षत्रियाख्याभ्यामित्यनेन नृसिंहवुरामे प्राप्ते विधानं । वासुदेवो भक्तिरस्येत्यर्थे वासुदेवकः । एवमर्जुनकः ॥ ५५१ ॥

**५५३. बहुवचनविषयाज्जनपदाद्विहितस्तत्सनामराजभ्यः ।**

अङ्गानां निवासो अङ्गाः, तत्र जातः, आदिवृष्णीन्द्रादपीति वुर्नृसिंहः—आङ्गकः । तद्वत् अङ्गा राजानो भक्ति रस्य—आङ्गकः । भक्ति शब्दोऽत्र वेदाःप्रमाणमितिवत् । भक्ति निवृत्ता ।

**५५४. तेन प्रोक्तम् ।**

---

माधवकः । युधिष्ठिरः क्षत्रियाख्यः, सोऽस्य भक्तिः यौधिष्ठिरकः । तत्र बहुल ग्रहणफलं दर्शयति—क्वचिदिति । पणिनो गोत्रापत्यमिति केशवणः, नच गाथी विदथीत्यादिना संसारहरनिषेधः, सभक्तिरस्येति आदिवृष्णीन्द्रादिति छः—पाणिनीयः ।

**अमृता०**—५५३. बहु इति । आदिवृष्णीन्द्रादपीत्यादिना बहुवचनविषयात् जनपदाद् यो नृसिंह वु स्तत्र जातर्थे विहितः सोऽत्रापि जनपदसनामराजभ्यो भवति । यथा अङ्गेषु जात आङ्गकः, तथात्र अङ्गा राजानो भक्ति र्भजनीया अस्येति आङ्गकः । अत्र भक्तिरिति राजान इति बहुवचनस्य विशेषणत्वेऽपि एव वचनमसंगतमिति शङ्कमानाय समाधत्ते—वेदाः प्रमाणमितिवदिति । तत्र यथा उद्देश्यविधेयभावेनान्वय स्तथेहापि बोध्य इति भावः । समाप्तोऽयमर्थः ।

**अमृता०**—५५४. तेनेति । तच्छब्दप्रयुक्तात् नाम्नो यथास्वं प्रत्ययः स्यात् । प्रकर्षेण

---

**बाल०**—गोत्र । पूर्वोक्तेऽर्थे गोत्रप्रत्ययान्तात् क्षत्रियाख्यशब्दाच्च बहुल यथा स्यात्तथा नृसिंहो वुर्भवति । मधोर्गोत्रापत्यं माधवः, स भक्तिरस्य माधवकः । युधिष्ठिरो भक्तिरस्येति यौधिष्ठिरक इत्यादि । बाहुल्यादिति सूत्रस्य बाहुल्यात् क्वचित् स्थले गोत्रक्षत्रियाभ्यां नृसिंहो वुर्न स्यात् । पणिनो गोत्रापत्यमिति केशवणस्तस्मिन् नच गाथिविदथीत्यनेन संसारहराभावः, पाणिनः स भक्तिरस्येति आदिवृष्णीन्द्राच्छराम इति छः पाणिनीयः । एवं पौरवो भक्तिरस्य पौरवीय इतिच ॥ ५५२ ॥

**बाल०**—बहु । आदिवृष्णीन्द्रादित्यनेन बहुवचनविषयाज्जनपदात्तत्र जातादौ विहितो वुप्रत्ययस्तत्सनामराजभ्यो जनपद-सनामराजभ्यो भक्त्यर्थे भवति । अङ्गस्यापत्यानि पुमांस इति विहितकेशवणस्य बहुषु लक्ष्मीं विनेत्यनेन महाहरः । पश्चात्तस्य निवास इत्यस्य चातुरर्थिकस्य प्राग्दीव्यतीयत्वात् । अङ्गानां निवास इति वाक्ये तेन दीव्यतीत्यतः प्रागर्थेष्वित्यनेन केशवणस्ततश्चातुरर्थिकस्य स्मरहरस्तन्नाम्नि देश इत्यनेन तस्य स्मरहरस्तेन प्रकृतिलिङ्गवचनयोः प्रत्यावृत्तिः अङ्गा इति । ततस्तत्र जात इत्यर्थे आदिवृष्णीन्द्रादपीत्यनेन बहुवचनेति पूर्वोक्तादवुर्नृसिंह इत्येवं यथा आङ्गक इति तद्वदङ्गा इति वाक्येऽप्याङ्गक इति । भक्तिशब्दस्यैकवचनत्वे अङ्गा इत्यस्य बहुवचनत्वे विशेषण-विशेष्यभावस्यासङ्गतिमाशङ्क्य समादधाति भक्तिशब्द इति । वेदाप्रमाणमित्यत्र यथोद्देश्यविधेयभावान्वयस्तद्वदिहापीत्यर्थः । प्रकरणमुपसंहरति भक्तिरिति ॥ ५५३ ॥

अत्रापि यथास्वम् । अन्येन कृता माथुरेण प्रोक्ता व्याख्याता माथुरी वृत्तिः ।

**५५५. तित्तिर्यादिना प्रोक्तं छन्द आद्यधीयते विदन्ति वा ।**

तित्तिर्यादिभ्योऽस्मिन्नर्थे वक्ष्यमाणाः प्रत्ययाः स्युः ।

**५५६. तित्तिरि-वरतन्तु-खण्डिकेभ्यो नृसिंह छः ।**

तित्तिरिणा प्रोक्तं छन्दोऽधीयते विदन्ति वा तैत्तिरीयाः ।

**५५७. काश्यप-कौशिकाभ्यामृषिभ्यां णिनिः, कलापि-वैशम्पायन-योरन्तेवासिभ्यश्च ।**

---

उक्त प्रोक्त व्याख्यातमित्यर्थः, तदेव वाक्येन स्पष्टयति—अन्येनेति । अन्यथा तेन कृतो ग्रन्थ इत्यनेनेव गतार्थः स्यात् ।

**अमृता०**—५५५. तित्तिर्यादिनेति अग्रेव्यक्त भावि ।

**अमृता०**—५५६. तित्तिरीति । तेन प्रोक्त छन्दोऽधीयते विदन्तिवेत्यर्थे तित्तिरि वरतन्तु खण्डिकेभ्यो नृसिंह छ स्यात् । प्रोक्तप्रत्ययान्तच्चेत्यनेन प्राप्तो यः प्रत्ययमहाहर स्तत् प्रतिषेधार्थमिदम् । एवं वारतन्तवीयाः खाण्डिकीया इति ।

**अमृता०**—५५७. काश्यपेति । पूर्वोक्तार्थे ऋषिवाचिनोः कलापिवैशम्पायनयो र्येऽन्तेवासिन स्तेभ्योऽपि णिनि र्भवति । पूर्ववत् प्रत्ययमहाहर बाधनार्थमिदञ्च ज्ञेयम् । काश्यपेन प्रोक्त छन्द आदि अधीयते विदन्ति वेति काश्यपिनः । आदि पदेन कल्प-व्याक-

---

**बाल०**—तेन । अत्रार्थेऽपि तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात् । प्रकर्षेण उक्तः व्याख्यातमित्यर्थं वाक्येनैव स्पष्टयति अन्येनेति । अन्यथा तेन कृतो ग्रन्थ इत्यनेनाभिन्नार्थता स्यात् ॥ ५५४ ॥

**बाल०**—तित्तिर्या । अत्र सूत्रं विवरणञ्च स्पष्टे इति तत्तन्न व्याख्यातं । एतदिति । ग्रन्थस्यास्य स्वयं ग्रन्थकर्तैव वृत्तिकृदित्यात्मन उभयायितत्वात् आत्मानं वृत्तिकारं कल्पयित्वा विवरणमाहेत्युक्त, अन्यथा आहेत्ययुक्त स्यात् । एतस्य सामान्यसूत्रस्य विवरणं सूत्रं ग्रन्थकृदाहेत्यर्थः । विवरणमित्येकवचनमतन्त्रं, तेन विवरणानीति ज्ञेयं । तित्तिरीत्यादिबहुविधविवरणसूत्रस्य सम्भवाच्च ॥ ५५५ ॥

**बाल०**—तित्तिरि । तित्तिर्यादिना प्रोक्त छन्द आद्यधीयते विदन्ति वेत्यर्थे तित्तिरिवरतन्तुखण्डिकेभ्यो नृसिहछः स्यात् । प्रोक्तप्रत्ययान्ताच्चेत्यनेन प्रोक्तप्रत्ययान्तात् प्राप्तप्रत्ययमहाहरस्य प्रतिषेधार्थमिदं । पूर्ववदत्रापि तदध्येतृतद्वेदितृवाच्ययोर्न युगपत् प्रत्ययः किन्तु प्रत्येकं, वाशब्दस्य व्यवस्थार्थत्वात् । एवं वारतन्तवीयः खाण्डिकीयं इति । अत्र ऊखीयमपि कश्चित् पठति ॥ ५५६ ॥

काश्यपिनः कौशिकिनः। तथा हारिद्रविणः आलम्बिनः इत्यादि। एवमन्येऽपि।

## ५५८. कठ-चरकाभ्यां महाहरः।

कठेन प्रोक्तमधीयते कठाः।

---

रणादीनि वेदाङ्गानि ग्राह्यानि। तेन कौशिकेन प्रोक्तं कल्पमधीयते विदन्ति वेति कौशिकिन इति। उत्तरसूत्रमुदाहरति—तथेत्यादिभिः। तत्र कलापिनश्चत्वारः शिष्याः हरिद्रः छगली तुम्बुरुः उपल इति। वैशम्पायनस्य तु नव—आलम्बि पलङ्ग कमल ऋचाम अरुणि ताण्ड्य श्यामायन कठ कलापीति। हरिद्रणा प्रोक्तं छन्द आद्यधीयते बिदन्ति वा हारिद्रविण इत्यादयः। एवमन्येऽपीत्यनेन सूत्रान्तर पठति शब्दानाञ्च ग्रहणम्। यथा—भल्लव शट्यायन एतरेय पिङ्ग अरुण परुण इत्यादयः।

अमृता०—५५८. कठेति। तेन प्रोक्तमित्यद्यर्थे कठ चरकाभ्यां णिने र्महाहरः स्यात्। वैशम्पायनान्तेवासित्वात् प्राप्तस्य महाहरः।

---

बाल०—काश्य। तेन प्रोक्तं छन्द आदीत्यादि पूर्वोक्तेऽर्थे ऋषिवाचिभ्यां काश्यप-कौशिकाभ्यां णिनिर्भवति। इदमपि प्रोक्तप्रत्ययान्तात् प्रत्ययमहाहरबाधनार्थं। कला। पूर्वोक्तेऽर्थे कलापिवैशम्पायनयोरन्तेवासिभ्यश्च णिनिः स्यात्। इदमपि पूर्ववद्बाधकं। काश्यपेन प्रोक्तं छन्द आद्यधीयते वदन्ति वा काश्यपिन इति। एवं कौशिकिनः। काश्यपेन प्रोक्तं कल्पमधीयते इत्यादि क्रमदीश्वरवाक्यं। यज्ञकर्मण्यनुष्ठेयविधेर्विधायको ग्रन्थः कल्प इति तट्टीकाकृच्चेति। युक्तमेतत् छन्द आदीत्यत्रादिपदोपादानात्। ऋषिवाचकादन्यत्रतु कश्यपगोत्रः काश्यपः। तेन प्रोक्तमित्यर्थे तित्तिर्यादिपाठात् काश्यपीयमिति। उत्तर-सूत्रस्योदाहरणं दर्शयति तथेति। कलापिनः शिष्यो हरिद्रुस्तेन प्रोक्तं छन्द आद्यधीयते बिदन्ति वा हारिद्रविण इति। एवं तौम्बुरिणः उपलिनः। किन्तु छगलिन इति कलापिशिष्यस्य छागलेयिन इति साधु वक्तव्यं। इति हरिद्रवादिचत्वारं कलापिनः शिष्याः। अलम्बेन प्रोक्तं छन्द आद्यधीयते विदन्ति वा आलम्बन इति। इत्यादीत्यादिपदेन पलिङ्ग कम्बल ऋषभ अरुण तण्डुल श्यामायन कठकलापिनिति सप्तानां ग्रहणं। एवमन्येऽपीत्यनेनतु शौनक वाजसनेय शार्ङ्गरव शापेय शास्पेय खाडायन स्कन्द स्कम्भ देवदर्श रज्जुकण्ठ कठशाठ कषाय तलवकार रज्जुभार पुरुषायुष इति पञ्चदशानां ग्रहणं॥ ५५७॥

बाल०—कठ। तेन प्रोक्तं छन्द आद्यधीयते विदन्ति वेत्यर्थे वैशम्पायनान्तेवासित्वात् प्राप्तणिनेः कठचरकाभ्यां महाहरः स्यात्। कठो मुनिस्तेन प्रोक्तं कठवल्यादिच्छन्दो-विशेषमधीयते विदन्ति वा कठा इति। चरकोऽपि मुनिस्तेन प्रोक्तं चरकं वैद्यकशास्त्र-मधीयते विदन्ति वा चरका इति॥ ५५८॥

**५५९. कालापिनः कालापाः ।**

साधवः ।

**५६०. पाराशर्य-शिलालिभ्यां णिनिर्भिक्षु नटसूत्रयोः ।**

पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः । एवं शैलालिनो नटाः ।

**५६१. कर्मन्द-कृशाश्वाभ्यामिनिस्तयोः ।**

कर्मन्दी भिक्षुः, कृशाश्वो नटः । गतं प्रोक्ताध्यायनादि ।

---

**अमृता०**—५५९. कलापिन इति । कलापिना प्रोक्तं छन्द आद्यधीयते विदन्ति वेत्यर्थे केशव णेन सह कलापिनः कालापा इति साधुः स्यात् । वैशम्पायनान्तेवासित्वात् प्राप्तस्य णिने बाधकोऽयम् ।

**अमृता०**—५६०. पाराशर्येति+पूर्वोक्ताथ यथाक्रमं भिक्षुनटयो र्वाच्ययोः पाराशर्य शिलालिस्यां णिनः स्यात् । पाराशरिण इति विष्णुजनात्तद्धित यस्येत्यादिना गर्गादियरामस्यलोपः ।

**अमृता०**—५६१. कर्मन्देति । तेन प्रोक्तमित्याद्यर्थे तयोर्भिक्षुनटयो र्वाच्ययोः कर्मन्द कृशाश्वाभ्यां इनिप्रत्ययो भवति । कर्मन्देन प्रोक्त भिक्षु सूत्रमधीते वेत्ति वेति कर्मन्दी । एवं कृशाश्वीति ।

---

**बाल०**—कला । कलापिना प्रोक्तं छन्द आद्यधीयते विदन्ति वेत्यर्थे केशवणेन सार्द्धं कलापिनः कालापाः साधवो भवन्ति । कलापिनो वैशम्पायनशिष्यत्वात् णिनिप्राप्तेर्विधानमिदं । निपातनादत्र केशवणस्तस्मिन् संसारहरश्च ।। ५५९ ।।

**बाल०**—पारा । तेन प्रोक्तमित्यादिपूर्वोक्तेऽर्थे यथाक्रमं भिक्षुनट सूत्रयोर्वाच्ययोः पाराशर्यशिलालिभ्यां णिनिर्भवति । द्वन्द्वात् परः पूर्वो वेत्युक्तेन सूत्रस्य प्रत्येकं भिक्षुनटाभ्यामन्वय इति सूचनार्थं वाक्ये भिक्षुसूत्रमित्युक्तं, अधीयते इत्यस्माद्विदन्ति वेत्यपि योज्यं । पाराशर्येत्यस्य गर्गादिर्यरामान्तस्य विष्णुजनात्तद्धितयस्येत्यनेन यहरः। किञ्च, भिक्षुनटसूत्रयोर्यद्यपि सामान्यवाच्यताप्रतीतिस्तथापि प्रोक्तरूपवाच्यता नत्वध्येतृवेदितृवाच्यतेति स्पष्टयितुं पाराशरिण इत्यस्य भिक्षव इति विशेष्यं दर्शितं । एवमिति शिलालिना प्रोक्तं नटसूत्रमधीयते विदन्ति वा शैलालिनो नटा इत्यत्रापि सर्वं पूर्ववत् कल्प्यं ।। ५६० ।।

**बाल०**—कर्म । तेन प्रोक्तमित्यद्यर्थे तयोर्भिक्षुनटसूत्रयोर्वाच्ययोः कर्मन्दकृशाश्वाभ्यामिनिर्भवति । अत्रापि पूर्ववद्वाच्यत्वं ज्ञेयं कर्मन्दन प्रोक्तं भिक्षुसूत्रमधीयते वेत्ति वा कर्मन्दीति । अध्येतृवेदितृकर्त्रोर्बहुवचननियमाशङ्कानिरासार्थमेकवचनान्तमुदाहरणमत्रोपन्यस्तं । एवं कृशाश्वेनेत्यादि पूर्ववत् कृशाश्वीति भिक्षुः भिक्षाहारी नटो नर्तकः । ऋषिणा

**५६२. तेनैकदिक् ।**

अत्रापि यथास्वम् । सुदाम्ना पर्वतेन एकदिक् सौदामिनी विद्युत् । एवं कार्ष्णा स्तद्भक्ताः ।

**५६३. तसिश्च ।**

पूर्वार्थेतसिश्च स्यात् । सुदामतः कृष्णतः । वदादित्वादव्ययमिदम् ।

**५६४. उरसस्तसि-यौ ।**

उरस्तः उरस्यः ।

---

**अमृता०**—५६२. तेनेति । एक शब्द इहि तुल्यार्थवाची । अतएव "तुल्यार्थैः षष्ठी चेति" चकारात् तृतीया । तेनतुल्यदिशि वाच्यायां तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यादित्यर्थः । सौदामिनीति नान्तस्य न त्वणीपोरिति निषेधेन न संसारहरः । नच वम सत्सङ्गहीनस्येति अरामहरः शङ्क्यः, षन् हन् धृतराज्ञामेव अनन्तानां अण्यरामहर इति नियमात् । कार्ष्णा इति कृष्णेन एकदिशः कृष्णपक्षा इत्यर्थः ।

**अमृता०**—५६३. तसिश्चेति । सुगमं । स्वरादि चादि वदादि तद्धितेत्यादि यदुक्तं तत् स्मारयति—वदादित्वादिति । तसिन्नादयय: अव्ययानीत्यग्रे वक्ष्यते ।

**अमृता०**—५६४. उरस इति । तेनैक दिगत्यर्थे उरस् शब्दात् तसिः यश्च भवति । उरसैकदिक् उरस्तः उरस्यः ।

---

प्रोक्तयोर्ब्राह्मणकल्पयोर्वाच्ययोरध्ययनवेदनयोः सतोर्याज्ञवल्क्यादेरन्यस्यात् पूर्ववण्णिनिः स्यात् । शाट्यायनेन प्रोक्तं ब्राह्मणं वेदैकदेशमधीते वेत्ति वेति शाट्यायनी । पिङ्गेन प्रोक्तं कल्पमधीते वेत्ति वा पैङ्गीत्यादि । याज्ञवल्क्यादेस्तु—याज्ञवल्क्यः आश्वरथः सौलभन इत्येतेषु सामान्यात् केशवणः । अधिकारं निवर्तयति गतमिति ॥ ५६१ ॥

**बाल०**—तेनै । विवरणमत्रेति । एकशब्दस्तुल्यार्थ इत्यतस्तेनेत्यत्र तुल्यार्थैः षष्ठी चेत्यनेन तृतीया । तेन समानदिशि वाच्यायां तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यादिति फलितार्थः । सौदामनीत्यत्र तान्तस्य नत्वणीपोरिति निषेधां संसारहरो न स्यात् । षन्हन्धृतराज्ञामित्यनेनाणि नियमात् । वम-सत्सङ्गहीनस्येत्यनेनारामहरश्च न स्यात् । कार्ष्णा इति कृष्णेन एकदिश इत्यर्थः ॥ ५६२ ॥

**बाल०**—तसि । पूर्वस्मिन्नर्थे नाम्नस्तसिः स्यात् । पूर्वापरयोः परविधिर्बलवानिति न्यायेन औत्सर्गिकस्यापवादकस्तसिरित्याशङ्कानिरासार्थोऽत्र चकारः । सुदामत इति सुदाम्ना पर्वतेनैकदिगित्यर्थः । एवं कृष्णतः हिमवत्तु इत्यादि । स्वरादि चादिवदादितद्धित इति यदुक्तं तदेव स्मारयति वदादीति ॥ ५६३ ॥

**बाल०**—उर । पूर्वोक्तेऽर्थे उरसस्तसियंश्च भवति । उरसैकदिक् उरस्त इत्यादिद्वयं ॥ ५६४ ॥

**५६५. उपज्ञातम् ।**

अत्रापि यथास्वम् । तेनेत्यनुवर्त्तते तस्येदमित्यतः प्राक् । पाणिनिनोपज्ञातं प्रथमकृतं पाणिनीयं, कालापं व्याकरणम् । एवं काष्णी गीता, तद्वत् भागवतम् ।

**५६६. कृतो ग्रन्थः ।**

अत्रापि यथास्वम् । भागवती चतुःश्लोकी ।

**५६७. कृते संज्ञायाम् ।**

अत्रापि यथास्वम् । माक्षिकं मधु । एवं क्षौद्रमित्यादि ।

---

**अमृता०**—५६५. अपेति । वृत्तिमाह—अत्रापीति । तस्येदमिति वक्ष्यमाणसूत्रात् पूर्वेषु सूत्रेषु तेनेति अनुवर्त्तितव्यम् । उपज्ञातमित्यस्य अर्थमाह—प्रथमकृतमिति । कृष्णेनोपज्ञाता प्रथमकथिताकाष्णी गीता । भागवतमिति—भगवतोपज्ञात प्रथमोपदिष्ट ब्रह्मणे इति शेषः ।

**अमृता०**—५६६. कृत इति । तेनकृतो ग्रन्थ इत्यर्थे यथास्वं प्रत्ययः स्यात् । भगवता कृतो ग्रन्थो भागवती, चतुः श्लोकीति भागवतीत्यस्य विशेष्यम् । अरामान्तत्रिरामी लक्ष्मीरिति लक्ष्मीत्वम् ।

**अमृता०**—५६७. कृते इति । संज्ञायां गम्यमानायां तेन कृते इत्यर्थे नाम्नो यथास्वं प्रत्ययः स्यात् । मक्षिकाभिः कृतं माक्षिकं, संज्ञाबोधनाय मधु इति विशेष्योपादानम् । क्षुद्राभिः कृतं क्षौद्रं मधु । क्षुद्रा क्षुद्रमक्षिकेत्यर्थः । आदिपदेन—कार्मुक सारघं भ्रामरं बारटमिति ।

---

**बाल०**—उप । तस्येदमित्यतः पूर्वस्मिन् प्रागुक्तसूत्रेभ्यस्तेनेत्यनुवर्तयन्नाह तेनेति । तेनोपज्ञाते वाच्ये तच्छब्दवाच्यान्नाम्नो यथास्वं प्रत्ययः स्यात् । धातूनामनेकार्थत्वात् । उपसर्गेण धात्वर्थो बलादन्यत्र नीयत इति प्राचीनोक्तत्वाच्च उपज्ञातं प्रथमकृतमिति दत्तं । यत् केनापि न कृतं तत् प्रथमकृतं ज्ञेयं विनोपदेशेन ज्ञातमुपज्ञातमित्यन्ये । पाणनीयमित्यादिवृष्णीन्द्राच्छः । कालापमिति कलापिनोपज्ञातमित्यर्थः सब्रह्मचार्यादिः समूहाद्यणि चेत्यनेनात्र संसार हरः । काष्णीति कृष्णेनोपज्ञातेत्यर्थः । भागवत मिति भगवतोपज्ञातमित्यर्थः । कालापादीनां क्रमेण व्याकरणादित्रयं वाच्यपदं ॥ ५६५ ॥

**बाल०**—कृतो । तेनेत्यनुवर्तते पूर्वोक्तात्, अतएव तेन कृतः स्वयमुत्पादितो ग्रन्थ इत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो यथाविहितं प्रत्ययः स्यात् । भगवता कृता भागवतीति चतुःश्लोकीत्यत्र अरामान्तत्रिरामीत्यनेन लक्ष्मीता । ग्रन्थ इति किं वैष्णवाचार्येण कृता मालेत्यत्र न स्यात् ।। ५६६ ।।

**५६८. इन्द्रियादिभ्यो वु नृंसिहः ।**

ऐन्द्रियकं ज्ञानम् । तेनेति निवृत्तम् ।

**५६९. तस्येदम् ।**

अत्र च यथास्वं । हरेरिदं हारं । तस्येदमित्यनुवर्त्तते विकारं यावत् ।

**५७०. रथाद् यरामः, वाहनपूर्वात् केशवणः ।**

रथ्यं परमरथ्यं । तथा आश्वरथं चक्रम् ।

---

**अमृता०**—५६८. इन्द्रितेति । तेन कृतेऽर्थे इन्द्रियादि शब्देभ्यो नृसिंह वुः स्यात् । इन्द्रियं नेत्रादिकरणं, तेन कृतं ऐन्द्रियकम् । सूत्रस्थादिपदेन—कुलाल–वरुड चण्डाल निषाद कर्मार सेना सिरिध्रपरिषद् वधू रुरु ध्रुवदेवराज ब्रह्मन् अनडुह इत्येते गृह्यन्ते ।

**अमृता०**—५६९. तस्येदमिति स्पष्टम् । इदमिति सामान्यतो ब्रह्मत्वनिर्देशः ततः पुंसि स्त्रियाञ्चोदाहरिष्यते । हारं हरेः चरितम् ।

**अमृता०**—५७०. रथादिति । तस्येदमित्यर्थे रथशब्दाद् यरामः स्यात्, वाहनपूर्वात् रथात्तु केशवणो भवति । रथस्येदं रथ्यं चक्रम् । नाम्नातु क्वचिदिति तदन्तविधिरिह इष्यत इति दर्शयति—परमरथ्यमिति । अश्वेन युक्तो रथः अश्वरथः, तस्येदं आश्वरथम् ।

---

**बाल०**—कृते । संज्ञायां गम्यमानायां तेन कृते वाच्ये नाम्नो यथास्वं प्रत्ययः स्यात् । मक्षिकया कृतं माक्षिकमिति मधुनः संज्ञा तेन मध्विवति विशेष्यं दर्शितं । एवमिति क्षुद्रया कृतमित्यर्थः इत्यादीत्यादिपदेन गर्मुत पूतिका सरघा भ्रमर वरटा वातपेत्यादीनां ग्रहणं । एभ्योऽत्र सामान्यतः केशवणः ।। ५६७ ।।

**बाल०**—इन्द्रिया । तेन कृतेऽर्थे इन्द्रियमादि येषां तेभ्यो नृसिंहो वुर्भवति । इन्द्रियं नेत्रादि तेन कृतं ऐन्द्रियकं । एवं चक्रेण कृतं चाक्रं खण्डमित्यादि । अन्येत्वत्र कुलाल वरुड चण्डाल श्वपाक निषाद कर्मकार कुम्भकार सेना गिरिक देवराज परिषद् बधू ब्राह्मण उरु रुरु अनड्वाह इत्यादीन् पठन्ति । अनुवर्त्तनं निवर्त्तयति तेनेति ।। ५६८ ।।

**बाल०**—तस्ये । तस्येदमित्यर्थे यत्तत्पदनिर्दिष्ट तस्मान्नाम्नो यथास्वं प्रत्ययो भवति । लिङ्गवचनयोरतन्त्रत्वसूचनार्थमिदमित्यत्र सामान्यतो ब्रह्मत्वं दर्शितं । तस्येति यावद्विकारमागमिष्यति तावत्तस्येदमित्यनुवर्त्तत इत्यन्वयः ।। ५६९ ।।

**बाल०**—रथा । तस्येदमित्यर्थे रथशब्दाद् यरामः स्यात् । वाह । पूर्वोक्तेऽर्थे वाहनं पूर्वं यस्य तस्माद्रथात्तु केशवणः स्यात् । रथस्येदं रथ्यं । नाम्नातु क्वचिदित्यनेन तदन्तस्याप्यत्र ग्रहणमिति सूचनार्थं परमरथ्यमित्यप्युदाहृतं । वाहनपूर्वादप्यनेन यरामे प्राप्ते केशवणविधानं यत्तदुदाहरति तथेति । अश्वेन युक्तो रथोऽश्वरथस्तस्येदं आश्वरथं । रथावयवे वाच्ये एवेति ज्ञापनार्थं त्रयाणां विशेष्यं चक्रं दत्तं । रथावयवादन्यत्रतु रथस्येदं स्थानमित्यादौ न स्यात् ।। ५७० ।।

## ५७१. हल-सीराभ्यां माधवठः ।

हालिकम् ।

## ५७२. रामकृष्णाद् वु वैंरविवहनयो र्लक्ष्म्याम् ।

काकोलूकिका अत्रिभरद्वाजिका । दैवासुरमित्यत्र तु न दृश्यते ।

## ५७३. गोत्र चरणाभ्यां वुर्नृसिंहः, नतु दण्ड मानवान्तेवासिषु ।

गार्गकं । चरणाद्धर्माम्नाययोरेव, काठकं कालापकं । दण्डमानवादौ तु गौकक्षाः दण्डमानवाः, दाक्षा अन्तेवासिनः ।

---

अमृता०—५७१. हलेति स्फुटम् । एवं सैरिकम् ।

अमृता०—५७२. रामेति । तस्येदमित्यर्थे वैर-विवाहनयो र्गम्यमानयो र्लक्ष्म्यां रामकृष्णसमस्तात् शब्दाद् वुः स्यात् । काकश्च उलूकश्चेति नित्यवैरिणामित्यनेन समाहार रामकृष्णः—काकोलूकं, तस्येयं वैरी काकोलूलिका । प्रत्ययस्थात् कात् इत्यादिना पूर्वा-रामस्येरामः । अत्रि-भरद्वाजयो र्विवाह क्रिया आत्रभारद्वाजिकेति पूर्ववदिरामः । न दृश्यत इति—वैर देवासुरादिभ्यः प्रतिषेधो वक्तव्य इति वार्त्तिकादित्यर्थः ।

अमृता०—५७३. गोत्रेति । तस्येदमित्यर्थे गोत्र चरणाभ्यां नृसिंहवु र्भवति । किन्तु दण्डमानवान्तेवासिषु वाच्येषु स नभवति, अर्थात् तत्र विशेषवाधनेन सामान्यप्राप्तः केशवण एव स्यात् । गार्ग्यस्येदं गार्गकमिति विष्णुजनादित्यादिना यरामहरः । चरणो वेदैकदेशः, तद्वेत्ता पुरुष इह लक्ष्यते । तेन तस्येदमित्यर्थे धर्मे आम्नाये च वाच्ये हि नृसिंह वु र्भवति नत्वन्यस्मिन्नर्थे । तत्र धर्मो यश ऐश्वर्यादिगुणः, आम्नायस्तु पाठपरम्परा कठेन प्रोक्तं छन्द आद्यधीयत इति कठ चरकाभ्यां महाहर इति कठाः, तेषामिदं यशः काठकं । एवं कालापकमिति । दण्डप्रधाना मानवा दण्डमानवाः, मध्यपदलोपी श्याम-रामः । गोकक्षस्य गोत्रं गौकक्षः, तस्येमे इति गौकक्षा । एवं दाक्षाः । बहुवचनविषयोऽयं निषेध इति ज्ञापनार्थं विशेष्यद्वयं न्यस्तम् ।

---

बाल०—हल । तस्येदमित्यर्थे हलसीराभ्यां माधवठो भवति तथा सैरिकं ॥५७१॥

बाल०—राम । पूर्वोक्तेऽर्थे वैरविवहनयोर्वाच्ययो रामकृष्णसमासनिष्पन्नान्नाम्नो वुर्भवन् लक्ष्म्याँ वर्तते । काकश्च उलूकश्चेति नित्यवैरिणामित्यनेन समाहारः काकोलूकं तस्येयं वैरी काकोलूकेति । अत्रिभरद्वाजयोर्विवहनं विवाहक्रिया अत्रिभरद्वाजिकेत्युभयत्रापि आपि कृते प्रत्ययस्यात् कादित्यनेन पूर्वारामस्येरामः न दृश्यत इत्यनभिधानादिति शेषः । एवं राक्षोगन्धर्वमित्यादि । अदेवासुरादेर्वैरे इति जूमरः ॥ ५७२ ॥

बाल०—गोत्र । तस्येदमित्यर्थे यस्मिन् कस्मिन् सम्बन्धिनि वाच्ये गोत्रचरणाभ्यां नृसिंहो वुर्भवति । दण्डमानवान्तेवासिषु वाच्येषु आभ्यां नृसिंहो वुर्न भवति । गार्ग्यस्येदं गार्गकमिति विष्णुजनादित्यनेन यहरः । चर । चरणो वेदैकदेशः वेदननिमित्ते पुरुषे

**५७४. सङ्घाङ्क-लक्षण-घोषेषु वैद-गार्ग्य-दाक्षि प्रभृतिभ्यः केशवणः, शाकलान्नृसिंह वु श्च ।**

विदानां सङ्घोऽसङ्को लक्षणं घोषो वा वैदः, गार्गः दाक्षः । तथा शाकलकः शाकलः ।

**५७५. छन्दो गौक्थिक-याज्ञिक-बह्वृच नटेभ्यण्यरामः ।**

---

अमृता०—५७४. सङ्घेति । तस्येदमित्यर्थे सङ्घाङ्क लक्षण घोषेषु वाच्येषु वैदगार्ग्य दाक्षि प्रभृतिभ्यो गोत्रप्रत्ययान्तशब्देभ्य: केशवण: स्यात् तथा शाकलात् नृसिंह वुः केशवणश्च भवति । विदानामिति—विदादेरगोपवनादेरिति बहुत्वे केशवणस्य कृतमहाहरस्य ग्रहणम् । परम्परा सम्बन्धः अङ्कः, यथा बिदानां गोमत्त्वम्, साक्षात् सम्बन्धस्तु लक्षणं, यथा विदानां विद्यावत्त्वम् । घोष आभीर निवासः । पूर्ववत् गार्ग इत्यत्र यराममहाहर स्तथा दाक्ष इत्यत्र इरामहरो ज्ञेयः ।

अमृता०—५७५. छन्दोगेति । एभ्यो ण्यरामः स्यात् । कस्मिन्नर्थे इत्याकाङ्क्षाया-

---

वर्तमानः कठादिश्चरणवाचकस्तस्मात्तस्येदमित्यर्थे धर्मे आम्नायेच वाच्ये एव नृसिंहो वुर्भवति नान्यस्मिन् । धर्मो गुणादिः । आम्नायः पाठपरम्परा । कठेन प्रोक्त छन्द आद्यधीयते विदन्ति वेति कठचरकाभ्यां महाहर इति केशवणस्य महाहरः कठास्तेषामिदं काठकमिति । एवं कलापिनः ये कालापाः सिद्धास्तेषामिदं कालापकमिति । दण्ड प्रधाना मानवा दण्डमानवा इति योगविभागादित्यनेन श्यामरामस्तदादौ वाच्येतु प्रयोगो यथा । गोकक्षस्य गोत्रमिति विदादित्वात् केशवणः गौकक्षस्तस्येमेगौकक्षा इति, एवं दाक्षस्येमे दाक्षा इति । बहुत्वविषयेऽयं प्रतिषेध इति प्रतीत्यर्थं दण्डेत्यादिविशेष्यद्वयं बहुवचनान्तमुपन्यस्तं ।। ५७३ ।।

बाल०—सङ्घा । तस्येदमित्यर्थे सङ्घाङ्कलक्षणघोषेषु वाच्येषु वैदगार्ग्यदाक्षिप्रभृतिभ्यः केशवणः स्यात् । शाक । पूर्वोक्तेऽर्थे सङ्घादिषु वाच्येषु शाकलात् नृसिंहवुः केशवणश्च भवति । अङ्को गवादिस्थौ न गवादीनां सम्भवति किन्तु गवादिस्वामिनः । लक्षणन्तु देवदत्तादिस्थं देवदत्तादेरेवेत्यङ्कलक्षणयोर्गोवलीवर्दवद्भेद इहाङ्गीकृत उभयोरुपादानात् । विदादेरगोपवनादेरित्यनेन बहुत्वे विदादेः केशवणस्य महाहर इति वाक्ये विदानामित्युक्तं । अन्यथा सूत्रे वैदादीनां ग्रहणमनर्थकं स्यात् । एवं गर्गाणां सङ्घादिरिति प्रथमतो बहुषु लक्ष्मीं विनेत्यनेन गर्गादेर्माधवयस्य महाहरस्ततः केशवणः गार्ग इति । तथा बहुष्विरत्वनेन दक्षाणां सङ्घादिरित्यत्रापि अरामान्तत्वाद्विहितनृसिंहेरामस्य महाहरः । पश्चात् केशवणः दाक्ष इति । तथेति । शाकल्यशब्दो गर्गादेर्माधवयान्त इत्यस्मात् शाकल्येन प्रोक्तमित्यर्थे विधानान्तराभावात् केशवणस्तस्मिन् सति विष्णुजनात्तद्धितेत्यनेन यहरः । तस्मात् पुनस्तदधीते वेद वेत्यनेन विहितकेशवणस्य प्रोक्तप्रत्ययान्ताच्चेत्यनेन महाहरः । पुनः शाकलस्य सङ्घादिरिति नृसिंहवुकेशवणौ शाकलकः शाकल इति ।। ५७४ ।।

सामान्येन तस्येदमित्यर्थे । धर्माम्नाययोरित्येके । छान्दोग्यम् ।

**५७६. रैवतिकादिभ्यश्छरामः ।**

रैवतिकीयम् ।

**५७७. कौपिञ्जल-हास्तिपादाभ्यां केशवणः ।**

कौपिञ्जलं हास्तिपादम् ।

**५७८. आथर्वणिकस्येकलोपश्च ।**

आथर्वणो धर्मः आम्नायो वा । पूर्णः शेषाधिकारः ।

---

माह—सामान्येनेति । उभयमतमेव स्वाभिप्रेतम् । धर्माम्नाययोरिति च । छन्दोगस्येदं कर्म छान्दोग्यं धर्मः आम्नायो वा । एवं औक्थिक्यं याज्ञिक्यं बाह्वृच्यं नाठ्यम् ।

**अमृता०**—५७६. रैवतिकेति । तस्येदमित्यर्थे रैवतिकादिभ्यः छरामः स्यात् । एतेऽपि अपत्यप्रत्ययान्ता ज्ञेयाः । रेवत्या अपत्यमित्यर्थे माधवठः—रैवतिकः तस्येदं रैवतिकीयम् । आदिपदेन स्वापिषि क्षैमवृद्धि गौरग्रीवि औदमेघि औदवापि वैजवापि इत्येषां ग्रहणम् ।

**अमृता०**—५७७. कौपिञ्जलेति । तस्यदमित्यर्थे गोत्रप्रत्ययाभ्यां कौपिञ्चल हास्तिपादाभ्यां केशवणः स्यात् नृसिंह वो रपवादः ।

**अमृता०**—५७८. आथर्वणिकस्येति । प्रोक्तार्थे आथर्वणिकस्य सम्बन्धे केशवणः स्यात्, तस्मिन् सति तस्य इक लोपश्च भवति । शेषाधिकारः समाप्तः ।

---

**बाल०**—छन्दो । सहेतुकस्वाभिप्रेतवृत्तिमाह सामेति । सामान्येन हेतुना तस्येदमित्यर्थे यस्मिन् कस्मिन् वाच्ये छन्दोगोक्थिकयाज्ञिकबह्वृचनटेभ्यो ण्यरामः स्यात् । तस्येदमित्यर्थे धर्माम्नाययोर्वाच्ययोश्छन्दगादिभ्यो ण्यरामः स्यादित्यन्ये । छन्दोगशब्दो सामवेदिवचनः । ऊक्थिकः सामव्याख्यानाध्येतृवचनः । याज्ञिको यज्ञविद्याध्येतृवचन । बह्वृच ऋग्वेदिवाचीति । छन्दोगस्येदं छान्दोग्यमिति कर्म धर्मं आम्नायो वा । एवमौक्थिक्यं बाह्वृच्यं नाट्यमिति ॥ ५७५ ॥

**बाल०**—रैव । तस्येदमित्यर्थे रैवतिकादिभ्यश्छरामो भवति । रैवतिकादयो ह्यत्रापत्यप्रत्ययान्ता ज्ञेयाः । रैवतिकीयमिति । रेवत्या अपत्यमित्यर्थे रेवत्यादेर्माधवठ इति रैवतिकस्ततस्तस्येदमित्यर्थे छः । सूत्रस्थादिशब्दात् बहुवचनाच्च स्वापिशि क्षौमधृति सौरग्रीवि ऊदमेघि ऊदवापि वैजवापीत्येतेषां ग्रहणं । एभ्यस्त्वपत्यार्थेऽरामान्तत्वान्नृसिंहेरामः । पश्चात्तस्येदमित्यर्थे छः स्वापिणीयमित्यादि ॥ ५७६ ॥

**बाल०**—कोपि । पूर्वोक्तेऽर्थे कोपिञ्जलहास्तिपादाभ्यां केशवणः स्यात् । आभ्यां गोत्रप्रत्ययान्तत्वात् गोत्रचरणाभ्यामित्यनेन नृसिंहवुप्राप्तौ विधानमिदं । कोपिञ्जलस्येदं कोपिञ्जलमिति । एवं हास्तिपादं ॥ ५७७ ॥

**५७६. तस्य विकारः।**

अत्रार्थे यथाविहितं प्राग्दीव्यतीयः स्यात् । आश्मनः आग्नेयः स्त्रैणः ।

**५८०. अवयवे च प्राण्योषधि- वृक्षेभ्यः ।**

एभ्यो विकारेऽवयवे च यथास्वं स्यात्। प्राणिनः—मयूराणां विकारोऽवयवो वा मायूरः, भक्ष्याच्छादनयो-रेव । अन्यत्र तु मयूरमयश्च वक्ष्यमाणानुरोधात् । औषधेः—मौर्वं भस्म मौर्वं काण्डं । वृक्षात्-आश्वत्थं । अतः

---

अमृता०—५७६. तस्येति । वृत्तिमाह—अत्रार्थे इति । विभुनामाधिकार एषः । अश्मनो विकारोऽवस्थान्तरं आश्मनः । तेन दीव्यतीत्यतः प्रागर्थेषु केशव ण इत्यनेन सामान्यतः केशव णः । अग्नेर्विकारः आग्नेयः; अग्निकलिभ्यामिति माधवठः । स्त्रैण इति स्त्री पुंसाभ्यां नृसिंह न स्नो इति नप्रत्ययः ।

अमृता०—५८०. अवयव इति । विवृणोति—एभ्य इत्यादि । यद्यपि विकारे अवयवे चेति सामान्यत उक्त तथापि वक्ष्यमाण—विशेषमपेक्ष्य विशिनष्टि—भक्ष्याच्छादनयोरेवेति । अतो मायूरो भक्ष्यविकारो माँसमित्यर्थः । आच्छादनावयवः पुच्छमित्यर्थः । औषधिः फलपाकान्तः क्षुद्र वृक्ष इत्यर्थः । अत्रतु केवलविकारार्थे, अवयवार्थे च । मुर्वाया

---

बाल०—आथ । तस्येदमित्यर्थे आथर्वणिकस्य सम्बन्धे केशवणस्तस्मिंस्तस्येकलोपश्च भवति । इदमपि पूर्ववद्वुप्राप्ते विधानं । धर्माम्नाययोरेवेति स्वाभिप्रेतं सूचयति धर्म इत्यादि । शेषाधिकारं निवर्तयति पूर्ण इति ।। ५७८ ।।

बाल०—तस्य । वृत्तिमाह अत्रेति । अयं विभुश्च । विकारः प्रकृतेरवस्थान्तरं कारणस्यान्यथात्वमिति यावत् । शेषार्थो निवृत्तः प्राग्दीव्यतीयस्तु न निवृत्त इति सूचनार्थं वृत्तौ प्राग्दीव्यतीय इत्युक्तं । तस्मादेव तेन दीव्यतीत्यतः प्रागर्थेषु केशवण इत्यनेन केशवणस्याधिकारात् । अश्मनो विकार इत्यर्थे आश्मन इत्यत्र सामान्यतः केशवणः । आत्मनो विकारे वा इत्यनेन संसारहरस्य विकल्पात् आत्मश्चेति । आग्नेय इत्यग्निकलिभ्यामित्यनेन माधवठः स्त्रैण इति स्त्रीपुंसाभ्यां नृसिंहनस्नाविति नः ।। ५७६ ।।

बाल०—अव । एभ्य इति विवरणं । यथास्वमित्यस्मात् प्रत्ययः प्रयोक्तव्यः । अवयवे चेति चशब्दस्योक्तसमुच्चयार्थत्वात् विकारे इति व्याख्यातं । प्राणिन इति प्राणिनं लक्षीकृत्योदाह्रियते इति गम्ययवन्तात् पञ्चमी । यद्यपि विकारेऽवयवे चेति सामान्येनोक्तं, तथापि भक्ष्याच्छादनरूपयोर्विकारावयवयोरेव केशवणान्तो मायूरः । आभ्यामन्यत्राभक्ष्याच्छादनयोस्त्त मयडन्तं मयूरमयं, चकारात् केशवणान्तं मायूरञ्चेत्याह भक्ष्येत्यादिना। हेतुमाह वक्ष्यमाणेति । वक्षमाणन्तु मयड् वेति । भक्ष्यविकारो मांसं । आच्छादनावयवं पुच्छं । अभक्ष्यविकारो विष्ठादिः । अनाच्छादनावयवः पादादिरिति भेदः । औषधेरिति ऊषधिमवलम्ब्योदाह्रियते । ओषधिः फलपाकान्तः । मौर्वमिति मुर्वाया विकारो भस्मेत्यर्थः । एवं मुर्वाया अवयवं काण्डमित्यर्थः । तथा दौर्वमित्यादि । वृक्षादिति पूर्ववत् ।

परं प्राण्यादिभ्यो विकारावयवयोः प्रत्ययः, अन्येभ्यस्तु विकार मात्र इति ज्ञेयम् ।

**५८१. त्रपु- जतुनो स्त्रापुष- जातुषे ।**

साधुनी ।

**५८२. शम्याः शमीनश्च ।**

शमीनी स्रुक् ।

**५८३. मयड् वा विकारावयवयोरभक्ष्याच्छादनयोः ।**

विकारे—सुवर्णमयः सौवर्णः । विकारावयवयोः—मयूर मयं मायूरं, मुर्वामयं मौर्वम् । अभक्ष्याच्छादनयोः किं मौद्गः सूपः, कार्पासं वासः ।

---

विकारो भस्म, मुर्वाया अवयवः काण्डम् । एवं व्रीहि गोधूम श्यामाक इक्षु प्रभृतिभ्यश्च । आश्वत्थ मित्यत्रापि विकारावयवयोरेव केशवणः । इत ऊर्द्ध्वं प्रत्ययोत्पत्ति व्यवस्थापकं विशेषलक्षणमाह—अत इति । अन्यभ्य इति—प्राण्योषधि वृक्षेभ्य इतरेभ्य इत्यर्थः ।

अमृता०—५८१. त्रप्विति । तस्य विकारेऽर्थे सुडागमेन केशवणेनच त्रपुष-जतुनोः शब्दयोः त्रापुष-जातुषे साधुनी स्याताम् ।

अमृता०—५८२. शम्या इति । तस्य विकार इत्यर्थे शमी शब्दात् केशवणः, तस्य शमीनादेशश्च भवति । आदि सर्वेश्वरस्येति वृष्णीन्द्रः शामीनीति ।

अमृता०—५८३. मयूडिति । भक्ष्याच्छादनभिन्नयो र्विकारावयवयो र्वाच्ययोः नाम्ना मयट् वा स्यात्, पक्षे केशवणः । अत्र यथासम्भवे अर्थे प्रत्यय इति दर्शयति—विकार इत्यादिना । एतेन प्राणिभ्य एवोभयार्थे भवतीत्यायातम् । मयूरस्य विकारोऽवयवो वा मयूरमयं मायूरञ्च । मौद्ग इति—मुद्गस्य विकारः सूपः कार्पासस्य विकारे । वासः । पूर्वत्र भक्ष्यत्वादुत्तरत्राच्छादनत्वान्न हि मयट् किन्तु सामान्यतः केशवण एव ।

---

वृक्षः फलपुष्पवान् । आश्वत्थमिति अश्वत्थस्य विकारो भस्म अवयवः काण्ड वेत्यर्थः । एवं विल्व व्रीहि मुद्ग काण्ड मयूर गोधूम इक्षु वेणुगवेधुका कर्पासी पाटलि कर्कन्धू कुटीर बार्हिण इन्द्रादिश इन्द्रायुध इन्द्रसुरीष वरुण श्यामाक पीयुक्षादिभ्यश्चौत्सर्गिककेशवणः । इतः परं प्रत्ययोत्पत्तिव्यवस्थापकविधिवाक्यमाह अत इति । अन्येभ्यस्त्विति प्राण्योषधिवृक्षसकाशाद्भिन्नेभ्य इत्यर्थः ॥ ५८० ॥

बाल०—त्रपु । तस्य विकार इत्यर्थे सुडागमकेशवणाभ्यां सह त्रपजतुनोः स्थाने त्रापुषजातुषे साधुनी भवतः । टिदागमस्य परसम्बन्धित्वात् षत्वन्त्वीश्वरहरिमित्रकङ्भ्य इत्यनेन ॥ ५८१ ॥

बाल०—शम्या । तस्य विकार इत्यर्थे शम्याः केशवणस्तस्मिंस्तस्याः शमीनादेशश्च भवति । आदिसर्वेश्वरस्येति वृष्णीन्द्रः शमीनीति ॥ ५८२ ॥

**५८४. आदि वृष्णीन्द्रात् शरादेश्च मयट् ।**

आम्रमयं शालमयं मृण्मयं दर्भमयं वृषमयम् ।

**५८५. एकसर्वेश्वराच्च ।**

वाङ्मयं त्वङ्मयं स्रङ्मयम् ।

**५८६. प्राणिभ्यो रजतादेश्च केशवण: ।**

मयडपवाद: । मायूरं राजतं शैशं लौहं औडुम्बरम् । पुरीं द्रक्ष्यथ काञ्चनीम् ।

---

**अमृता०—५८४.** आदीति । यथासम्भवं विकारांवयवयो र्वाच्ययो: आदि वृष्णीन्द्र-भूतशब्दात् तथा शरादेश्च मयट् स्यात् । आम्रस्य विकर आम्रमयम्, एवं शालमयमिति । शरस्य विकार: शरमयं । शर दर्भ सोम तृण कुटी मृत् बल्लज कूपेति शरादि: । अभक्ष्याच्छादनयोरेव; नेह–तार्णं छत्रम् ।

**अमृता०—५८५.** एकेति । विकारावयवयो रेकसर्वेश्वरादुत्तरे च मयट् स्यात् । वाचो विकार: वाङ्मयमित्यादि । प्राण्यादिभ्योऽन्यत्वात् केवलविकारार्थे हि ज्ञेया: ।

**अमृता०—५८६.** प्राणिभ्य इति । विकारावयवयो र्वाच्ययो: प्राणिभ्यो विकारे तु रजतादिभ्य: केशवण: स्यात् । सामान्यत: प्राप्तेऽपि केशवणे पुनस्तस्य विधानं मयटोऽप-वादार्थम्, अन्यथा मयट् वेत्यादिना पक्षे मयट् च स्यात् । अभक्षाच्छादनयोरेव । मयूरस्य (मृतस्य) विकार: मायूरं अवयव: पुच्छं वा । रजतस्य विकार: राजतं सिंहासनम् । पुरीमित्यादिर्भट्टि प्रयोग: । रजतादि राकृति गण: ।

---

**बाल०—**मयड् । यथासम्भवं भक्ष्याच्छादनव्यतिरिक्तयोस्तद्विकारावयवयोर्वाच्य-योर्नाम्नो मयड् वा भवति । पक्षे उत्सर्गिककेशवण: । सुवर्णादप्राणित्वात् विकार एव प्रत्ययोत्पत्तिरिति सूचयन्नुदाहरति विकार इति । मयूरादे: प्राणित्वाद्विकाऽययवेच प्रत्ययोत्पत्तिरिति सूचनपूर्वकमुदाहरति विकारेति । अभक्ष्येति । अभक्ष्याच्छादनयोरिति किं किमर्थं भक्ष्याच्छादनयोरिति यदि स्यात्तर्हि किं स्यादित्यर्थ: । भक्ष्याच्छादनरूप-विकारवाच्यत्वात् मौद्गादिद्वये केशवण एव ॥ ५८३ ॥

**बाल०—**आदि । यथा सम्भवं तद्विकारावयवयोर्वाच्ययोरादिवृष्णीन्द्रात् शरादेश्च परो मयड् । आम्रस्य विकार आम्रमयमित्यादिद्वयमादिवृष्णीन्द्रोदाहरणं । एवमन्यदप्यु-दाहार्यं । शरस्य विकार: शरमयमित्यादि शरादेरुदाहरणं । वृषमयमितितु प्राणित्वाद्विकारावयवयोर्ज्ञेयं ॥ ५८४ ॥

**बाल०—**एक । यथायोग्यं तद्विकारावयवोर्वाच्ययोरेकसर्वेश्वराच्च मयड् भवति । वाचो विकारो वाङ्मयमित्यादि ॥ ५८५ ॥

**बाल०—**प्राणि । यथासम्भवं तद्विकारावयवयोर्वाच्ययो: प्राणिभ्यो रजतादेश्चापर: केशवण: स्यात् । सामान्यत: केशवणे प्राप्तेऽपि पुन: केशवणविधानात् मयड्वेत्यनेन

**५८७. कौषेयं वस्त्रे; गोमयं गोः पुरीषे ।**

गव्यमन्यत्र ।

**५८८. पिष्टकः पिष्टिका चसंज्ञायाम् ।**

अन्यत्र तु पिष्टमयम् ।

**५८९. व्रीहिमयः पुरोडाशे ।**

व्रैहमन्यत् ।

**५९०. तैलं यावश्च संज्ञायाम् ।**

अन्यत्र तु तिलमयं यवमयम् ।

---

**अमृता०**—५८७. कौषेयमिति । कोषस्यविकार इत्यर्थे वस्त्रे वाच्ये माधव ठेन सह कौषेयं साधु स्यात्, तथा गोविकारे गोः पुरीषे वाच्ये मयटा सह गोमयं साधु भवति । पुरीषरूपविकारादन्यत्र विकारेतु गव्यं क्षीरमित्यर्थः ।

**अमृता०**—५८८. पिष्टक इति । तस्य विकारेऽर्थे संज्ञायां कप्रत्ययेन पिष्टस्य पिष्टकः पिष्टिका च साधू भवतः । अन्यत्रेति–संज्ञा भिन्नेऽर्थे–पिष्टमयं क्रीडणम् ।

**अमृता०**—५८९. व्रीहीति स्पष्टम् । पुरोडाशोयज्ञपायसम् ।

**अमृता०**—५९०. तैलमिति । स्फुटम् । तिलमयं तिलविकारो भक्ष्य विशेषः ।

---

प्राप्तपाक्षिकमयटोऽपवादकोऽयमिति स्वयं वृत्तिकारः सन्नाह मयडपेति । ननु भक्ष्याच्छादनयोर्मायूरमिति दत्तमेव भक्ष्याच्छादनयोस्तु मयूरमयं मायूरञ्च दत्तमिदानीं मयडपवादादयमप्यभक्ष्याच्छादनयोरिति लभ्यते, तथाभूतत्वेऽपि यद्यत्र मायूरमेव तर्हि कथं तत्र मयूरमयमित्युदाहृतं सत्यं उच्यते । यद्यपि सामान्येनाभक्ष्याच्छादनयोरित्युक्तं, तथाप्यत्र किञ्चिद्विशेषो विवक्षणीयः सत्वेवं प्रवर्त्तते, मयूरशब्देनात्र तन्मृतरूपस्य विवक्षणीयत्वात् तत्र पुच्छादेर्लक्षणीयत्वाच्च तत्तद्रूपस्याभक्ष्याच्छादनरूपे विकारेऽवयवेच मायूरमिति सर्वमविरुद्धं । रजतस्य विकारो राजतमिति, एवं शैशादि । रजत शीश लोह उडम्बर नीपदारु रोहितक विभीतक पीतदारु त्रिकटक कण्टकारेति रजतादिराकृतिगण इत्यतः शिष्टोदाहरणं दर्शयति पुरीमित्यादि ।। ५८६ ।।

**बाल०**—कौषे । तस्य विकार इत्यर्थे वस्त्रे वाच्ये माधवटेन साकं कोषस्य कौषेयं साधु स्यात् । गो । गोर्विकारावयवरूपे पुरीषे वाच्ये मयटा सह गोशब्दस्य गोमयं साधु । गव्यमिति यरामान्तं वक्ष्यते । अन्यत्रेति गोपुरीषादन्यत्र दुग्धादावित्यर्थः ।। ५८७ ।।

**बाल०**—शिष्ट । तस्य विकार इत्यर्थे संज्ञायाम् वाच्यायां केन सह पिष्टस्य पिष्टकः पिष्टिकाच साधू भवतः । अन्यत्रेति संज्ञाया अन्यत्रतु मयड्वेत्यनेन पिष्टमयमित्यत्र मयट् स्यात् ।। ५८८ ।।

**बाल०**—व्रीहि । तस्य विकार इत्यर्थे परोडाशे वाच्ये मयटा सह व्रीहेर्व्रीहिमयः साधुः स्यात् । व्रैहमन्यत् विकारमात्रमित्यथः, सामान्यादत्र केशवणः ।। ५८९ ।।

**५८१. तालादेः केशवणः ।**

मयडाद्यपवादः । तालं धनुः ।

**५८२, सुवर्णवाचिभ्यः परिमाणे केशव णः ।**

परिमाणरूपे विकार इति योज्यं । हाटकं निष्कः, जातरूपं कार्षापणं । परिमाणे किं–हाटकमयी यष्टिः ।

**५८३, विकराद्यर्थे दैवदारवादेः केशवणः ।**

दैवदारवस्य विकारोऽवयवो वा दैवदारवः । एवं शामीलः कापित्थः दाधित्थः पालाशः खादिरः । एवमुरामप्रकृतिकाः सर्वे; तथा प्राणि रजतादयश्च ज्ञेयाः ।

---

अमृता०—५८१. तालादेरिति । तालो वृक्षभेदः, तस्य विकारः तालं धनुः । एवं पलाश-खदिर शिंशपा शिरीष इत्यादिभ्यश्च ।

अमृता०—५८२. सुवर्णेति । परिमाणरूपे विकारेऽर्थे सुवर्ण वाचिभ्यः केशवणः स्यात् । निष्कः तोलक द्वयं, कार्षापणं षोडश पलम् ।

अमृता०—५८३. विकारेति । विकारावयवौ अर्थौ यस्य तादृशात् देव दारवादेरुत्तरे पुनर्विकारे अवयवे च केशव णः स्यात् मयडपवादः । देवदारो विकारोऽवयवो वा दैवदारव इति सामान्यतः केशवणः, पुनस्तस्य विकारोऽवयवोवेति दैव दारवः । आदि पदग्राह्यानुदाहरति–एवमित्यादिना । शम्या विकारः शामीलः, तस्य विकारः शामील इत्यादि उराम प्रकृतिकाः–कङ्गु वेणु इक्षु अलावु कर्कन्धु प्रभृतयः, तेषामपि विकाराद्यर्थे प्रत्ययान्तानां केशवणः स्यात् । तथा प्राणि रजतादीनाञ्च तथाभूतानां पुनर्विकाराद्यर्थे केशवणो भवति; यथा कापोतं राजतमित्यादयः ।

---

बाल०—तैल । तस्य विकारार्थे संज्ञायां वाच्यायां केशवणेन साकं तिलयवयोस्तैलं यावञ्च साधुनी भवतः । संज्ञाया अन्यत्रतु मयडित्याह अन्येति ॥ ५८० ॥

बाल०—ताला । पूर्वोक्तेऽर्थे धनुरादौ वाच्ये तालादेः केशवणः स्यात् । मयडादीत्यादिपदात् माधवट-यरामयोर्ग्रहणं । तालस्य विकारस्तालमिति । आकृतिगणोऽयं तेन, पलाश खदिर शिंशपा स्यन्दन पुन्नाग करीर शिरीष यवाश किङ्कतेत्येतेषां ग्रहणं पलाशादेर्मयडपीत्येके ॥ ५८१ ॥

बाल०—सुवर्णं । परिमाणात् पूर्वं तस्येत्यपि योज्यं । तथा सति तस्य परिमाणरूपे विकारार्थे सुवर्णवाचिभ्यः शब्देभ्यः केशवणः स्यादित्यर्थः । निष्कस्तोलकद्वयं कार्षापणन्तु षोडशपलं । परिमाणादन्यत्र विकारे मयडेवेति सङ्गमयति परीति ॥ ५८२ ॥

## ५९४. परिमाणात् क्रीतवत् ।

सङ्ख्याप्यत्र परिमाणतया गृह्यते । तस्माद् विकारे क्रीतस्येव प्रत्यया वाच्याः । यथा निष्केण क्रीतस्तथा निष्कस्य विकारोऽपि नैष्किकः, शत्यः शतिकः ।

## ५९५. महाहरश्च क्रीतवत् ।

द्विसहस्रः द्विसाहस्रः ।

## ५९६. उष्ट्राद् वुर्नृसिंहः, उमोर्णयो वा ।

---

**अमृता०**—५९४. परीति । परिमाण वाचकात् विकारेऽर्थे ते प्रत्यया भवन्ति ये खलु—तेनक्रीत इत्यर्थे विधास्यन्ते । उदाहरति—यथेति । निष्केण क्रीत इत्यर्थेऽपि प्राग वते माधव ठो वक्ष्यते, सएव निष्कस्य विकार इत्यर्थेऽपि भवति, नैष्किक इति । शत्यः शतिक इति—शतात् ठयरामौ इति वक्ष्यमाणेन शतस्य विकार इत्यर्थेऽपि तौ भवतः ।

**अमृता०**—५९५. महेति । क्रीतार्थे यथामहाहरो वक्ष्यते तथा विकारार्थेऽपि महाहरो विधेय इत्यर्थः । संख्याया अपि परिमाणत्वात् अध्यर्द्ध पूर्वात् त्रिरामाश्चेत्यादिना महाहरो वक्ष्यते, स चात्रापिद्वयोः सहस्रयो विकार इति तद्धितार्थे त्रिरामी, तेन ठराम॰ यरामो महाहर इत्यर्थः ।

**अमृता०**—५९६. उष्ट्रादिति । विकारेऽत्रयवे वार्थे उष्ट्रात् नृसिंह वुः स्यात्, तत्त-

---

**बाल०**—विका । विकारादिरर्थो यस्य स विकाराद्यर्थः स चासौ दैवदारवादिश्चेति विकाराद्यर्थ दैवदारवादिस्तस्मात् पुनस्तस्य विकारेऽवयवेच केशवणः स्यात् । एवमित्यतिदेशेन विकाराद्यर्थशामीनादीनां पुनस्तद्विकारावयवयोः केशवणः इति सूचितं । एवमिति प्रागुरामप्रकृतिका यदि पश्चाद्विकाराद्यर्थास्तदा पुनस्तद्विकारावयवयोरेवम्प्रकारेण केशवणान्तो ज्ञेयाः । यथा कङ्गोर्विकारः काङ्गवः पुनः काङ्गवस्य विकारः काङ्गव इत्यादि । तथेत्यनेन प्राणिरजतादयश्च पूर्ववज्ज्ञेयः । यथा आश्वस्य विकारोऽवयवो वा आश्व इत्यादि । राजतस्य विकारो राजत इत्यादि ॥ ५९३ ॥

**बाल०**—परि । संख्याया अप्यत्र परिमाणत्वेन ग्रहणं प्रतिपादयन्नाह संख्येति । वृत्तिमाह तस्मादिति क्रीतस्येवेति सप्तम्यर्थे षष्ठी । तस्मात् परिमाणवाचकात् विकारार्थे यथा प्रत्यया भविष्यन्ति, तथा प्रत्यया वक्तव्या इत्यर्थः । यथा निष्केण क्रीत इत्यर्थे प्राग्वतेर्माधवठ इति वक्ष्यमाणठेन नैष्किको भविष्यति तथेति सम्बन्धः । शत्य इत्यादिद्वयेतु शतात् ठराम-यरामाविति वक्ष्यमाणसूत्रेण क्रीत्यर्थे यथा ठयौ तद्वदत्रार्थेऽपि ॥ ५९४ ॥

**बाल०**—महा । सङ्ख्यायाः परिमाणत्वात् क्रीतार्थे यथा प्रत्ययस्य महाहरस्तथा विकारार्थे च । द्वयोः सहस्रयोर्विकार इति तद्धितार्थे त्रिरामी द्विसहस्र इत्यादिद्वये कार्षापणसहस्रसुवर्णेति वक्ष्यमाणेन क्रीत्यर्थे यथा विकल्पमहाहरस्तथात्रापि ॥ ५९५ ॥

उराष्ट्रस्यावयवो विकारो वा औष्ट्रकः, औमकं औमं, और्णकं और्णम् ।

**५९७. एण्या माधव ढः ।**

ऐणेयं, एणात्तु ऐणः ।

**५९८. गव्य-पयस्ये ।**

साधुनी ।

**५९९. द्रो र्द्रव्यं साधु, द्रो र्माने द्रुवयं साधु ।**

**६००. फले ।**

प्रभुरयम् ।

---

दर्थयोः । उमोर्णयोः सम्बन्धे नृसिंह वु र्वा भवति । पक्षेच केशवणः । उमा अतसिः, उर्णा मेष लोम ।

**अमृता०**—५९७. एण्या इति । तस्य विकारे अवयवे वार्थे एणीशब्दान्माधव ढः स्यात् । एणी मृगी । नाम्नो ग्रहणे लिङ्गविशिष्टस्यैव ग्रहण मिति परिभाषा त्वत्र नेष्यत इत्याह- एणादिति । सूत्रे लक्ष्मीनिर्देश बलादित्यर्थः ।

**अमृता०**—५९८. गव्येति । विकारेऽवयवे चार्थे गो-पयसोः स्थाने गव्य पयस्ये यरामेण सह साधुनी भवतः । गव्यं पय आदि, पयस्यं नवनीतादिकम् ।

**अमृता०**—५९९. द्रोरिति । विकारेऽर्थे द्रु शब्दात् यप्रत्ययेन सह द्रव्य मिति साधु स्यात् । तथा मानरूपे विकारेऽर्थे वयप्रत्ययेन सह द्रु स्थाने द्रु वय इति साधुर्भवति ।

**अमृता०**—६००. फल इत्यधिकारः ।

---

**बाल०**—उष्ट्रा । तस्य विकारेऽवयवेच उष्ट्रान्नृसिंहो वुर्भवति । उमो । तत्तद्विकारावयवयोरुमोर्णयों सम्बन्धे नृसिंहो वुः स्यात् । अतसिः स्यादुमा क्षुमा इत्यमरः । उर्णा पलाशतमित्युक्तं ।। ५९६ ।।

**बाल०**—एण्या । तस्य विकारोऽवयवो वेत्यर्थे एण्या माधवढो भवति । एणी हरिणी । सूत्रे लक्ष्मीत्वनिर्देशात् एणात्तु ऊत्सर्गिककेशवण इत्याह एणात्त्विति । नाम्नो ग्रहणे लिङ्गविशिष्टस्य ग्रहणमत्र नेष्टं ।। ५९७ ।।

**बाल०**—गव्य । तत्तद्विकारावयवयोरर्थयोर्गोपयसोः स्थाने यरामेण सह गव्यपयस्ये साधुनी भवतः । गव्यं दुग्धादि, पयस्यं नवनीतादि ।। ५९८ ।।

**बाल०**—द्रो । तस्य विकार इत्यर्थे यप्रत्ययेन सह द्रु शब्दस्य द्रव्यं साधु स्यात् । द्रो । तस्य विकारे माने वाच्ये वयप्रत्ययेन सह द्रोः स्थाने द्रु वयं साधु स्यात् ।। ५९९ ।।

**बाल०**—फले । फले वाच्ये यथास्वं कार्यं स्यात् । अयं विधिः प्रभुनामा स्यात् ।।६००

## ६०१. महाहरः ।

विकारावयवयो रुक्तस्य फले महाहरः स्यात् । लक्ष्मीप्रत्ययस्येति वदर्या विकारोऽवयवो वा फलं बदरं । एवं कुवलं आमलकम् ।

## ६०२. प्लक्षादेः केशवणः ।

प्लाक्षं नैयग्रोधं काकुभं बाहतं आश्वत्थं वैणवम् ।

## ६०३. जम्ब्वा णो महाहर-स्मरहरौ च वा ।

जाम्बवं फलं, महाहरे जम्बु फलं जम्बूनि फलानि, स्मरहरे जम्बूः फलं जम्बवः फलानि ।

---

**अमृता०**—६०१. महेति । वृत्तौ स्वयं स्पष्टीकृतम् । उक्तस्य मयडादि प्रत्ययस्येत्यर्थः । एवमिति—कुवली बदरी तस्या विकारः अवयवो वा फलं कुवलम् । एवञ्चामलकमिति ।

**अमृता०**—६०२. प्लक्षादेरिति । तस्य विकारेऽवयवे च फले प्लक्षादे रुत्तरे केशवणः स्यात् । प्लक्षस्य विकारोऽवयवो वा फलं प्लक्षम् । एवमन्येऽपि ज्ञेयाः ।

**अमृता०**—६०३. जम्ब्वा इति । तस्यविकारावयवयोः फलमित्यर्थे जम्बुशब्दात् णरामो वा स्यात्, पक्षे तस्य महाहरस्मरहरौ च भवतः । स्मरहरे—हरितक्यादिषु तल्लिङ्गस्यैवोक्तत्वात् जम्बू इत्यत्र न ब्रह्मत्वं किन्तु फलत्वेऽपि लक्ष्मींत्वस्य प्रत्यावृत्तिः ।

---

**बाल०**—महा । वृत्तिमाह विकारेति । तस्य विकारावयवयोरर्थयोर्मय ड्वेत्यादिनोक्तस्य मयडादेः फले वाच्ये महाहरः स्यादित्यर्थः । लक्ष्मीप्रत्ययस्येत्यस्मात् परं महाहरस्तद्धितमहाहरे इति योज्यं । वदर्या इत्यस्य उपचारिकप्राणित्वं कल्पयित्वा विकारोऽवयवो वेत्युक्तं । अन्यथा अन्येभ्यत्तु विकारमात्र इत्यनर्थकं स्यात् । एवमिति कुवली वदरी तस्या विकारोऽवयवो वा फलं कूवलं । आमलक्या विकारादि आमलकं॥६०१

**बाल०**—प्लक्षा । तस्य विकारेऽवयवेच फले वाच्ये प्लक्षादेः केशवणः स्यात् । प्लक्षो जटी पर्कट्टिः स्यादित्याद्यमरप्रसिद्धं । न्यग्रोधो वटः, ककुभोऽर्जुनः, वृहती कण्टकारिका, अश्वत्थः प्रसिद्धं, वेणुर्वंशः ॥ ६०२ ॥

**बाल०**—जम्ब्वा । तस्य विकारोऽवयवो वा फलमित्यर्थे जम्ब्वा । उत्तरो णरामो वा भवति, पुनर्मयड्वेत्यनेन प्राप्तमयट्केशवणयोर्महाहरस्मरऽरो वा भवतः । जम्ब्वा विकारोऽवयवो वा फलमिति जाम्बरमित्यादि । महाहर इति रूपं दर्श्यते इति शेषः । जम्बूनीति बहुवचनान्तं समासाशङ्कानिरासार्थं स्मरहरे बहुवचनविषयकजम्बव इत्यस्य भेदज्ञापनार्थश्च । हरीतक्यादिषु तल्लिङ्गस्यैवेत्युक्तत्वात् जम्बव इत्यत्र न ब्रह्मलिङ्ग ॥६०३

**६०४. फलपाकशुषः स्मरहरः ।**

यवादीनां फलानि यवाः । तिलाः मुद्गाः ।

**६०५. पुष्प फल मूलेषु स्मरहरो बहुलम् ।**

सल्लिका करवीरं जाती पुष्पं, क्रमुकं फलं विदारी मूलम् । एवं हरीतक्यादयः । बाहुल्यात् पाटलं अशोकं पुष्पं, बैल्वानि फलानि । उक्तं विकारावयवयोः, प्राग्दीव्यतीयाश्च समापिताः ।

**६०६. तद्वहतीत्यतः प्राङ् माधव ठः ।**

विभुरयम् ।

**६०७. तेन दीव्यति खनति जयति जितम् ।**

तेनेत्यनुवर्त्तते ओजोयावत् यत्रान्यन्नास्ति । चक्रेण दीव्यती खनति जयति जितं वा चाक्रिकः । अक्षैर्जितं आक्षिकं द्रव्यमित्यपि ।

---

अमृता०—६०४. फलेति । फलस्य पाकेन शुष्कता यस्य तादृशाच्छब्दात् विकारावयवरूपे फले वाच्ये प्राप्तमयटः महाहरः स्यात् ।

अमृता०—६०५. पुष्पेति । विकारावयव रूपेषु पुष्प फल मूलेषु वाच्येषु नाम्न उत्तरस्य मयटो बहुलं यथा स्यात्तथा स्मरहरो भवति । हरीतक्यादिषु तल्लिङ्गस्यैवेति नियमेन मल्लिकादित्रिषु तल्लिङ्गस्यैव प्रत्यावृत्ति नंतु वचनस्य । एवं क्रमुकमिति द्वयमपि । बहुग्रहण फलं दर्शयति—पाटलमित्यादि एषु न स्मरहरः । विकारावयवयोः सम्बन्धे प्रत्ययोदाहरणमुक्तम् । प्राग् दीव्यतीयो महाधिकारश्च पूर्णो जात इत्यर्थः ।

अमृता०—६०७. तेनेति । तेन दीव्यतीत्यादिषु चतुर्ष्वर्थेषु नाम्नो माधवठः स्यात् । अक्षैर्जितमिति उपलक्षणं, तेन अक्षै र्दीव्यतीत्याद्यपि बोध्यम् ।

---

बाल०—फल । फलस्य पाकेन शुट् शुष्कता यस्य तस्मान्नाम्नस्तद्विकारावयवरूपे फले वाच्ये मयड्वेत्युक्तप्रत्ययस्य स्मरहरः स्यात् । यवानामित्यस्मात् परः विकारावयवभूतानीति प्रयोक्तव्यं ॥ ६०४ ॥

बाल०—पुष्प । तस्य विकारावयवभूतेषु पुष्पफलमूलेषु वाच्येषु नाम्नः पूर्वोक्तप्रत्ययस्य बहुलं यथा स्यात्तथा स्मरहरः स्यात् । हरीतक्यादिषु तल्लिङ्गस्यैवेत्यनेन मल्लिकादिषु त्रिषु तत्तल्लिङ्गस्यैव प्रत्यावृत्तिः । पुष्पमिति त्रयाणां विशेष्यं । एवं क्रमुक इत्यादिद्वयेऽपि । पूर्वोक्तहरीतक्यादीनतिदेशेन स्मारयति एवमिति । बहुलस्य प्रयोजनं दर्शयितं हेतुमाह बाहुल्यादिति । सूत्रस्य वैकल्प्यात् पाटलादिषु केशवणः स्यादिति भावः । उक्तमिति विकारावयवयोरुदाहरणमुक्तं । प्राग्दीव्यतीयाश्च समापिताः मयेत्यन्वयः ॥६०५॥

बाल०—तद्व । तद्वहतीत्यतोऽर्थात् प्रागर्थे नाम्नो माधवठो भवति । स्वजातीयविजातीयानेकाधिकारव्यापित्वादयं विभुनामेत्यर्थः ॥ ६०६ ॥

## ६०८. तदाहेति माशब्दादिभ्यः ।

माशब्दिकः । एवं नैत्यशब्दिकः । प्रभूतात् प्राभूतिकः पर्याप्तात् पार्याप्तिकः ।

## ६०९. सुस्नातादिकं पृच्छति ।

सौस्नातिकः सौखरात्रिकः ।

## ६१०. परदारादिकं गच्छति ।

पारदारिकः गौरुतल्पिकः ।

---

**अमृता०**—६०८. तदिति । तदाहेत्यर्थे माशब्दादिभ्यो माधव ठः स्यात् । माशब्दमाह माशब्दिकः । अत्र माशब्देति कर्मपदसद्भावात् तेनेति नानुवर्तते । प्रभूतं प्रचुरं, तदाह प्राभूतिकः, एवं पर्याप्तं समाप्तमिति ।

**अमृता०**—६०९. सुस्नातेति । स्पष्टम् । सुस्नातं पृच्छति सौस्नातिकः । एवं सुखरात्रं सुख सुप्तमित्यादि च ।

**अमृता०**—६१०. परेति । स्फुटार्थम् । परदारान् गच्छति पारदारिकः । गुरु तल्पं गच्छति गोरुतल्पिकः । गुरुतल्पशब्देन गुरुपत्नी लक्ष्यते इति केचित् ।

---

**बाल०**—तेन । इक्स्तिपौ धातुनिर्देशे इत्यनेनात्र दिवादित्रिभ्यः स्तिप् दीव्यतीति क्रीडनं व्यवहरणञ्च खनतीत्यवदारणं जयतीति सर्वोत्कर्षाविष्करणं जितमित्यतिक्रमणं वशीकरणञ्चेत्येतेष्वर्थेषु तेनेतिकरणार्थतत्पदनिर्दिष्टान्नाम्नो माधवठो भवति । यावच्छब्दोऽत्र इयत्तार्थ इति हेतोरोजःपर्यन्तं यत्रान्यत् प्रथमविष्णुभक्तिनिर्दिष्टं नाम नास्ति, तत्र तेनेत्यनुवर्तत इति परिभाषामाह तेनेति । सूत्रे सङ्ख्यालिङ्गयोरनियम इत्यक्षैर्जितमित्याद्युपन्यस्तं । एवं कालानियमोऽपि ज्ञेयः । तेनाक्षैरदीव्यदिति वाक्येऽपि आक्षिक इति । करणादन्यत्रतु वैष्णवेन द्युत इत्यादौ ठो न स्यात् ॥ ६०७ ॥

**बाल०**—तदा । तदाहेत्यर्थे माशब्द आदिर्येषां तेभ्यो माधवठः स्यात् । अत्र तदिति कर्मपदमस्तीति तेनेति नानुवर्तते । एवमुत्तरत्रापि । विभुरित्यधिकारात् कर्मनिर्दिष्टादपि माधवठ इति न दोषाय, माशब्दमाह माशब्दिक इत्यादि । प्रभूतादिति प्रभुतं लक्षीकृत्य उदाह्रियत इति । प्रभूतः समर्थः । पर्याप्तः समाप्तः ॥ ६०८ ॥

**बाल०**—सुस्ना । सुस्नातादिकं पृच्छतीत्यर्थे सुस्नातादिकान्माधवठः स्यात् । सुस्नातं पृच्छति सौस्नातिक इत्यादि । सुस्नात सुखरात्र सुखसुप्त मुखशय्येति ॥ ६०९ ॥

**बाल०**—पर । परदारादिकं गच्छतीत्यर्थे परदारादिकान्माधवठो भवति । परदारान् गच्छति पारदारिक इत्यादि । गुरुतल्पं गुरुशय्या । गुरुतल्पशब्देन गुरुपत्नी लक्ष्यते इति कश्चित्, तत्त नास्माकमभीष्टं परदारसमानार्थत्वात् ॥ ६१० ॥

**६११. संस्कृतम् ।**

दध्ना संस्कृतं दाधिकम् ।

**६१२. कुलत्थ-करामोद्भवाभ्यां केशवण: ।**

कौलत्थं तैन्तिडिकम् ।

**६१३. तरति ।**

तृणपुलेन तरति तार्णपुलिक: ।

**६१४. नौ-द्विसर्वेश्वराभ्यां ठराम: ।**

नाविक: घटिक: बाहुक: ।

**६१५. चरति ।**

चरति भक्षणे गतौ च । दाधिक: शाकटिक: ।

---

**अमृता०**—६११. संस्कृतमिति । तेन इत्यनुवर्त्तते इति वाक्येन दर्शयति—दध्ना संस्कृतमिति । एवं पयसा संस्कृतं पायसमित्यादि ।

**अमृता०**—६१२. कुलत्थेति । तेन संस्कृतमित्यर्थे कुलत्थशब्दात् तथा करामोद्भव शब्दाच्च केशव ण: स्यात्, माधवठस्यापवाद: । कुलत्थेन संस्कृतं कौलत्थं । तिन्तिडिकं अम्लफलविशेष: ।

**अमृता०**—६१३. तरतीति । तेन तरतीत्यर्थे नाम्नो माधवठ: स्यात् । एवं पोतेन तरति पौतिक: ।

**अमृता०**—६१४. नाविति । तेन तरतीत्यर्थे नौशब्दात् द्वि सर्वेश्वराच्चोत्तरे केवल-ठराम: स्यात् । नावा तरति नाविक: । घटेन तरति घटिक: । बाहुभ्यां तरत्ति बाहुक इति चतुर्व्यूहान्तात् ठस्य क: ।

**अमृता०**—६१५. चरतीति । तेन चरतीत्यर्थे नाम्नो माधवठ: स्यात् । धातूनामने-

---

**बाल०**—संस्कृ । अत्रान्यविष्णुभक्तिनिर्दिष्टनाम्नोऽभावात् पूर्वोक्ततेनेत्यनुवर्तते इत्यत:, तेन संस्कृतमित्यर्थे संस्करणद्रव्यवाचकान्माधवठ: स्यात् । एवं सर्पिषा संस्कृतं सार्पिष्कं ।। ६११ ।।

**बाल०**—कुल । तेन संस्कृतमित्यर्थे कुलत्थात् करामोद्भवाच्च केशवण: स्यात् । माधवठरामापवादोऽयं । तिन्तिडीकञ्च चुक्रञ्च वृक्षाम्ल इत्यमर: ।। ६१२ ।।

**बाल०**—तर । तेन तरतीत्यर्थे तरणवाचकान्माधवठ: स्यात् । एवं पोतेन तरति पौतिक इत्यादि ।। ६१३ ।।

**बाल०**—नौ । तेन तरतीति नौशब्दात् द्विसर्वेश्वराच्च ठरामो भवति । नावा तरति नाविक इत्यादि ।। ६१४ ।।

### ६१६. आकर्षादेः केशवठः ।

आकर्षिकः पर्पिकः रथिकः आश्विकः आकर्षिकी ।

### ६१७. श्वगणात् केशव-माधव ठौ ।

श्वगणिकी श्वागणिकी । चरतीति निवृत्तम् ।

### ६१८. वेतनादिना जीवति ।

वैतनिकः जालिकः भारिकः वार्तिकः ।

---

कार्थत्वेन चरधातोरर्थद्वयं दर्शयति—भक्षणे गतौ चेति । तेन दध्ना चरति भुङ्क्ते दाधिकः । शकटेत चरति गच्छति शाकटिक इत्यर्थः ।

**अमृता०**—६१६. आकर्षादेरिति । तेन चरतीत्यर्थे आकर्षादे रुत्तरे केशवठः स्यात् । आकर्षेण चरति आकर्षिक इत्यादि । आकर्षपर्प रथ अश्वत्थ जाल न्यास व्याल पादेति आकर्षादिः ।

**अमृता०**—६१७. श्वगणादिति । तेन चरतीत्यर्थे श्वगणशब्दात् केशवठः माधवठश्च भवतः । श्वगणेन चरति गच्छतीति श्वगणिकीति द्वयम् । उभयत्र चेप् भवतीति दर्शितम् ।

**अमृता०**—६१८. वेतनेति । वेतनादिना जीवति जीविकां निर्वाहयतीत्यर्थे वेतनादेरुत्तरे माधवठः स्यात् । वेतनेन जीवति वैतनिक इत्यादि । एवं धानुष्कः दाण्डिक इत्यादयश्च । वेतन जाल भार वृत्त धनु दण्ड वेष उपवेष सुख शय्या शक्ति उपस्थि उपनिषत् स्रक् पाद प्रेषण इति वेतनादि गण ।

---

**बाल०**—चर । यद्यपि चर गताविति धातुचन्द्रिकादौ तथापि धातूनामनेकार्थत्वात् स्वयमत्रार्थद्वयं दर्शयति चरतिरिति । तेन चरतीत्यर्थे व्यञ्जनवाचकाद्वाहनवाचकाच्च माधवठः स्यात् । दध्ना चरति भुनक्ति दाधिक इति, शकटेन चरति गच्छति शाकटिक इति ॥ ६१५ ॥

**बाल०**—आक । तेन चरतीत्यर्थे आकर्षादेः केशवठः स्यात् । तद्वहतीत्यतः प्राक् सर्वे प्रत्यया माधवठापवादका इति यत्रान्यः प्रत्ययो नास्ति तत्र माधवठः स्यात् । आकर्षेण चरति आकर्षिक इत्यादि । आकर्ष पर्प रथ अश्व जाल व्यास व्याल इत्याकर्षादिः सप्त । आकर्षिकीति माधवठेनापि सिध्येत् पुनरत्र यं केशवठान्तं तत् न वृष्णीन्द्रहेतुतद्धितान्त-लक्ष्मीत्यनेन प्राप्तपुम्बद्भावनिषेधनिरासार्थं ॥ ६१६ ॥

**बाल०**—श्वग । तेन चरतीत्यर्थे श्वगणात् केशवठो माधवठश्च भवति । श्वगणेन चरतीति श्वगणिकीत्यादिद्वयं । द्वयोष्ठरामयोष्टित्वात् अणकेशवेत्यनेन ईप् । किञ्च, श्वागणिकीत्यत्र न श्वपूर्वस्येरामे इत्यनेन निषेधात् शौवादेशो न स्यात् । चरत्यर्थं समापयति चरतीति ॥ ६१७ ॥

**६१९. वस्न-क्रय-विक्रयेभ्यष्ठरामः ।**

वस्नेन जीवति वस्निकः, क्रयविक्रयिकः । विगृहीताच्च, क्रयको विक्रयिकः ।

**६२०. आयुधाच्छ-ठौ ।**

आयुधीयः आयुधिकः ।

**६२१. उत्सङ्गादिना हरति ।**

औत्सङ्गिकः औडुपिकः ।

**६२२. भस्त्रादेः केशव ठः; विविध-वीवधाभ्यां वा ।**

भस्त्रिकी विवधिकी ।

---

**अमृता०**—६१९. वस्नेति । तेन जीवतीत्यर्थे वस्न क्रय-विक्रयेभ्यः ठरामः स्यात् केवलः । वस्नं मूल्यं । विगृहीतादिति पृथक् कृतादित्यर्थः । एतत्तु सूत्रे बहुवचनप्रयोगेण हि लभ्यते, वचनस्य समस्य पदावयवसंख्यापेक्षत्वात् । समस्तादपीत्येवं वक्तव्यम् ।

**अमृता०**—६२०. आयुधादिति । तेन जीवतीत्यर्थे आयुधशब्दात् छ-ठरामौ भवतः । अत्रस्वरूपग्रहणमिष्टं नतु पर्यायग्रहणं, तेन नेह शस्त्रेण जीवति शास्त्रिकः ।

**अमृता०**—६२१. उदिति । उत्सङ्गादिना हरतीत्यर्थे उत्सङ्गादेरुत्तरे माधव ठः स्यात् । उत्सङ्गः अङ्कं, उडुपो भेला । आदिपदेन उत्पल पिटकौ ग्राह्यौ ।

**अमृता०**—६२२. भस्त्रादेरिति । तेन हरतीत्यर्थे भस्त्रादेरुत्तरे केशवठः स्यात्, तस्मिन्नेवार्थे विविध-वीबधाभ्यां केशव ठो वा भवति । भस्त्रेण हरति भस्त्रिकी, केशवत्वादीप् । एवं विवधिकी, पक्षे माधवठः—वैवधिकी । एवं वीवधकी वैवधिकीति च । विवधो धान्यादे सग्रह, सएवार्थः वीवधस्य ।

---

**बाल०**—वेत । वेतनादिना जीवतीत्यर्थे वेतनादेरुत्तरे माधवठो भवति । वेतनेन जीवति वैतनिक इत्यादि । वेतन जाल भार वृत्त वाह वेष उपदेश प्रेषण उपास्ति सुख शय्या शक्ति उपनिषद् स्थिग पाद उपस्थान धनुस् दण्ड इत्यष्टादश वेतनादिर्गणः । धनुर्दण्डमित्येकमित्यन्ये तेन धानुर्दण्डिक इत्यपि ॥ ६१८ ॥

**बाल०**—वस्न । तेन जीवतीत्यर्थे वस्नक्रयविक्रयेभ्यष्टरामः स्यात् । वस्नं मूल्यं : विग्रिति । विगृहीतात् विभक्ताच्च क्रयविक्रयात् ठः स्यात् । तेन क्रयेण जीवति क्रयिक इत्यादिद्वयमपि ॥ ६१९ ॥

**बाल०**—आयु । तेन जीवतीत्यर्थे आयुधाच्छठौ भवतः ॥ ६२० ॥

**बाल०**—उत् । उत्सङ्गादिना हरतीत्यर्थे उत्सङ्गादेर्माधवठः स्यात् । उत्सङ्गः क्रोडे । उडुपश्चन्द्रभेलयोः । उत्सङ्गादिनेत्यादिपदेनात्र उष्ट्र उत्पट पिटकेति त्रयाणामपि ग्रहणं ॥ ६२१ ॥

**६२३. कुटिलिकायाः केशवणः ।**

कुटिलिकया गत्या हरति कौटिलिकः ।

**६२४. अक्षद्यूतादिना निवृत्तम् ।**

आक्षद्यूतिकं वैरं, जाङ्घापातिकम् ।

**६२५. भावप्रत्ययात् प्राय इमः ।**

पाकेन निर्वृत्तं पाकिमं, कुट्टिमा भूमिः, सेकिमा तुलसी । एवं कारिमा पूर्णेन पूर्णिमा ।

---

**अमृता०**—६२३. कुटिलेति । तेन हरतीत्यर्थे कुटिलिकायाः केशव णः स्यात् कुटिलिका वक्रगतिः, कर्मकाराणां वक्राग्रा लोहमयी यष्टिश्चोच्यते । तेन कुटिलकया गत्या हरति व्याधमिति कौटिलको मृगः, तथा कुटिलिकया हरति अङ्गारान् कौटिलिकः कर्मकारः इति च ।

**अमृता०**—६२४. अक्षेति । अक्षद्युतादिना निर्वृत्तमित्यर्थे अक्षद्युतादिभ्यो माधव ठः स्यात् । अक्षद्युतेन निर्वृत्तं निपन्नं आक्षद्यूतिकं कुरुपाण्डवीयवैरम् । अक्षद्यूत जङ्घा-पात जानुप्रहृत पादस्वेदन कण्टकमर्दन गतागत अनुगत यातोपजात इति गणः ।

**अमृता०**—६२५. भावेति । तेननिवृत्तमित्यर्थे भावप्रत्ययान्तशब्दात् प्रायो बहुलं इम प्रत्ययः स्यात् । पाकिम इति–डुपचष धातो र्भावे घण् पाकः, तेन पाकेन निर्वृत्तमित्यर्थे इमः । कुट्टमेति कुट्ट धातो र्भावघणन्तात् इमः । स्त्रियामाप् । एवं सेकेन निर्वृत्ता सेकिमा, कारेण निर्वृत्ता कारिमा, पूर्णेन निर्वृत्ता पूर्णिमा इति ।

---

**बाल०**—भस्त्रा । तेन हरतीत्यर्थे भस्त्रादेरुत्तरः केशवठो भवति । विव । तेन हरतीत्यर्थे विवधवीवधाभ्यां केशवठो वा भवति, पक्षे माधवठश्च । भस्त्रया हरति भस्त्रिकीत्यादि । भस्त्रिकीत्यादि । भस्त्रा वरट भरण शीर्षभार शीर्षेभार अंशभार अंशेभार इति भस्त्रादिः सप्त । विवधेन हरति विवधिकी [illegible]धिकीच । एवं वीवधिकी वैवधिकीच । प्रत्याहारश्च मार्गश्च विवधवीवधौ च तावित्यमरः। पथि आहरणीये तण्डुलादावेताविर्त्येके ।।

**बाल०**—कुटि । तेन हरतीत्यर्थे कुटिलिकायाः केशवणः स्यात् । कुटिलिकाशब्देन कुटिला गतिः अग्रे वक्रा लोहादिमयी यष्टिरप्युच्यते, इति कौटिलिको मृगः । कुटिलिकया अङ्गाराणि हरति कौटिलिकः कर्मकारश्च ।। ६२३ ।।

**बाल०**—अक्ष । अक्षद्युतादिना निर्वृत्तं निष्पन्नमित्यर्थे अक्षद्युतादेर्माधवठो भवति। अक्षद्युत जङ्घापात जायाप्रकृत पादश्वेद कण्टकमर्दन गतागत गमागम यातोपयातेत्यष्टाक्षद्यूतादिः ।। ६२४ ।।

**बाल०**—भाव । तेन निर्वृत्तमित्यर्थे भावप्रत्ययान्तात् प्रायो बहुलं यथा स्यात्तथा इमः स्यात् । पाकिममिति डुपचष् पाके भावे घण् तत इमः। कुट्टिमेति। कुट्ट

## ६२६. अपमित्येत्यस्मात् नृसिंहकः ।

अपमित्येन निर्वृत्तं आपमित्यकं कम्बलम् ।

## ६२७. याचितात् करामः ।

याचितकम् ।

## ६२८. संसृष्टम् ।

दध्ना संसृष्टमेकीकृतं दाधिकम् ।

---

अमृता०—६२६. अपेति । तेननिर्वृत्तमित्यर्थे अपमित्य शब्दात् नृसिंहकः स्यात् । आपमित्यकमिति—अप-मिङ् प्रणिदाणे क्त्वो यप्, वामनात्तुक् अपमित्य, तेन निर्वृत्तं । अत्र शब्दानुकरण तृतीया प्रयुक्ता, अन्यथास्य अव्ययत्वेन स्वादिमहाहरो भवेत् ।

अमृता०—३२७. याचितादिति । उक्तार्थे याचितशब्दात् करामोभवति ।

अमृता०—६२८. संसृष्टमिति । तेन संसृष्टमित्यर्थे नाम्नो माधवठः स्यात् । संसृष्ट-मित्यस्यार्थमाह—एकीकृतमिति, मिश्रीकृतमिति यावत् । एवं मारिचिकं पैप्पलिकं कार्पूरिकमित्यादि ।

---

छेदनकुत्सनयोरित्यस्मादपि भावघणन्तादिमः । सेकिमेति सिचिर् क्षरणे घण् चजोः कगाविति कः गोविन्दः पश्चादिमः । कारिमेति डु कृञ् करणे घण् वृष्णीन्द्रः तत इमः । पूर्णिमेति पुरी आप्यायने भावे क्तः । आ ईरामानुबन्धादितीडभावः । रदाभ्यां विष्णु-निष्ठेत्यनेन क्तस्य नः धातोरवेति त्रिविक्रमः पश्चादिमः । एषां लक्ष्मीवाच्यत्वात् कृष्णादावित्यनेनाप् ॥ ६२५ ॥

बाल०—अप । तेन निर्वृत्तमित्यर्थेऽपमित्येत्यस्माच्छब्दान्नृसिंहको भवति । अपमित्येति शिङ् प्राणदाने इत्यस्मात् क्त्वा क्त्वो यवनञ्पूर्वसमास इति यप् । उपेन्द्रोर्या-दीत्यनेनोपेन्द्रसमासः वामनात्तुगिति तुक् । अपमित्येनेति शब्दानुकरणं कृत्वा तृतीयान्तं दर्शितम् । अन्यथा क्त्वामान्तश्च कृदव्ययमित्यव्ययविधानात् अव्ययात् स्वादेर्महाहर इत्यनेन तृतीयाया महाहरः स्यात् ॥ ६२६ ॥

बाल०—याचि । तेन निर्वृत्तमित्यर्थे याचितशब्दात् करामः स्यात् ॥ ६२७ ॥

बाल०—संसृ । तेन संसृष्टमित्यर्थे करणार्थान्नाम्नो माधवठः स्यात् । एकीकृतं द्रव्यान्तरं मिश्रीकृतमित्यर्थः । सतः कृतोत्कर्षं हि संस्कृतं संसृष्टन्तु अनुत्कर्षेऽपि मिश्रमात्रमिति संस्कृतेन सहास्य भेदः । नच येन यत् संस्कृतं भवति तदवश्यं तेन सह मिश्रमिति नियतमस्ति यतो विद्यया संस्कृतो वैदिक इत्यत्रामूर्तया विद्यया संस्कारोऽस्त्येव नतु मिश्रत्वं अमूर्तया मिश्रत्वासम्भवात् ॥ ६२८ ॥

### ६२९. चूर्णादिनिः ।

चूर्णिनो पूपाः ।

### ६३०. मुद्गात् केशवणः ।

मौद्गः सूपः ।

### ६३१. लवणान्महाहरः ।

लवणा यवागूः ।

### ६३२. व्यञ्जनेनोपसिक्तम् ।

दाधिकं सार्पिष्कम् ।

---

अमृता०—६२९. चूर्णादिति । तेन संसृष्टमित्यर्थे चूर्णशब्दात् इनिः स्यात्, माधवठस्यापवादः ।

अमृता०—६३०. मुद्गादिति । स्पष्टम् । पूर्ववद्माधवठस्यापवादः ।

अमृता०—६३१. लवणादिति । तेन संसृष्टमित्यर्थे लवणशब्दात् प्राप्त माधवठस्य महाहरः स्यात् । लवणेन संसृष्टा लवणा ।

अमृता०—६३२. व्यञ्जनेनेति । व्यञ्जनेन उपसिक्तमित्यर्थे व्यञ्जन वाचक शब्दात् माधवठः स्यात् । व्यञ्जनशब्दः सर्पिरादौरूढी, तेन संसृष्टमित्यनेन सिद्धेऽपि उपसिक्तमिति व्यञ्जनस्यैव प्रसिद्धे विशेषविधानम् । तेन उद्केन उपसिक्त ओदन इति मा भूत् । सर्पिष्कमिति ठस्य कः ।

---

बाल०—चूर्णा । तेन संसृष्टमित्यर्थे चूर्णशब्दादिनिर्भवति । ननु यत् चूर्णन संसृष्टं तस्मिन् चूर्णमप्यस्ति, अतस्तदस्यास्त्यस्मिन् वा मतुरिति मत्वर्थे णिना चूर्णिन इति सेत्स्यति स्यात् तद्बाधनार्थमिदम् ॥ ६२९ ॥

बाल०—मुद्गा । तेन संसृष्टमित्यर्थे मुद्गशब्दात् केशवणः स्यात् ॥ ६३० ॥

बाल०—लव । तेन संसृष्टमित्यर्थे लवणशब्दात् सामान्यतः प्राप्तमाधवठस्य महाहरः स्यात् । लवणेन संसृष्टा लवणेति ॥ ६३१ ॥

बाल०—व्यञ्ज । व्यञ्जनेन उपसिक्तमित्यर्थे व्यञ्जनवाचकात् माधवठः स्यात् । व्यञ्जनमिह दध्यादौ रूढं गृह्यते, तेन ससृष्टमित्यनेन सिद्धेऽपि उपसिक्तविधानस्यैतत् प्रयोजनम् । उपसिक्तार्थे व्यञ्जनादेव यथा प्रत्ययः स्यात्, तथा उदकेनोपसिक्त ओदन इह मा भूदिति । किञ्च, नह्युपसिक्ते नियमेन गुणोत्कर्षः सम्भवति अपकर्षस्यापि सम्भवात् अतोऽस्यापि सम्भवात् अतोऽस्यापि संस्कृतात् पृथक्त्वम् । सार्पिष्कमिति इसन्तादुसन्तादित्यनेन ठस्य कः ॥ ६३२ ॥

**६३३. ओज आदिना वर्तते ।**

औजसिकः साहसिकः आम्भसिकः। तेनेति निवृत्तम्।

**६३४, द्विगुणार्थं प्रयच्छति गर्हा चेत् ।**

द्विगुणार्थं प्रयच्छति द्वैगुणिकः । अत्रालपकालत्वं तेन गर्ह्यत्वञ्च गम्यम् । वृद्धये प्रयच्छति वार्द्धुषिकः साधुः ।

**६३५, कुसीदं प्रयच्छति कुसीदिकः, एकादशार्थं दश प्रयच्छति दशैकादशिकश्च गर्हायाम् ।**

---

**अमृता०**—६३३. ओज इति। ओज आदिना वर्त्तते इत्यर्थे ओज आदिभ्यो माधव ठः स्यात्। ओजसा वर्त्तते चेष्टते ओजसिकः शूरः। सहसा साहसेन वर्त्तते साहसिकः चौरः। आम्भसिको मत्स्यः।

**अमृता०**—६३४. द्विगुणेति। द्विगुणाय इदं द्विगुणार्थम्। गर्हा निन्दा चेद्गम्यते तर्हि द्विगुणार्थं प्रयच्छतींत्यर्थे नाम्नो माधवठः स्यात्। सा च गर्हा अल्पकालत्वे सत्येव गम्यत इत्याह—अत्रेति। किञ्च ब्राह्मण जाते रीदृश उद्यमश्चे ति तदैव गर्हा मन्तव्या नतु वणिजां, तेषान्तु कुसीदादिवृत्ति प्रसिद्धे र्न खलु निन्दत्वम्। वृद्धये प्रयच्छतीत्यर्थे माधव ठे कृते वृद्धि शब्दस्य वृधुषादेशेन वार्द्धुषिक इति साधुर्भवति।

**अमृता०**—६३५. कुसीदमिति। कुसीदं वृद्धिः, तदर्थं धान्य-सुवर्णादिकं द्रव्यमपि

---

**बाल०**—ओज। ओज आदि यस्य स ओज आदिस्तेन वर्तते इत्यर्थे ओज आदेर्माधवठो भवति। वर्तत इति चेष्टते ईहते इति यावत्। ओजसा वर्तते औजसिक इत्यादिः। ओजो यावदित्युक्तत्वात् तेनेत्यनुवर्तनं निवर्त्तयति तेनेति ॥ ६३३ ॥

**बाल०**—द्विगु। द्विगुणाय इदं द्विगुणार्थम्। गर्हा शास्त्रोक्तव्यवहारविरोधिका व्यवहृतिः। एकस्मिन् द्रव्ये द्विगुणार्थमित्यनेन लक्षितस्तादर्थ्यविशिष्टो द्विगुणशब्दोऽत्र वर्तते इत्याक्षेपाल्लभ्यते। अतएव द्विगुणार्थं प्रयच्छतीत्यर्थे गर्हा चेत्तदा द्विगुणशब्दान्माधवठो भवति। गर्हा चात्रालपकालत्वेन गम्येत्याह अत्रेति। तथाहि, यदा उत्तमर्ण एकमेव द्रव्यमलपकालत्वे द्विगुणार्थं द्विगुणं कृत्वा प्रयच्छति पश्चात् पुनः प्रौढिवादेन तदेव वर्द्धयति तदैव कुत्सा। यदा त्वेकगुणं प्रयच्छति पश्चाद्द्विगुणं गृह्णाति तदा न गर्हा शास्त्रोक्तव्यवहारत्वात्। अत्रापि वृद्धय इति निमित्तार्थे चतुर्थ्यन्तेनाजहत्स्वार्थलक्षणया वृद्ध्यर्थे वृद्धिशब्दस्य प्रवृत्तिरिति प्रतिपाद्यते। गर्हा चेदित्यप्यत्रानुवर्तनीयं गर्हागम्यत्वन्तु पूर्वोक्तालपकालत्वेनैव। वृद्धये प्रयच्छतीत्यर्थे वृद्धिशब्दाद्विहितमाधवठेन सह तस्य वृधुषादेशेनच वार्द्धुषिकः साधुः स्यात्। अत्र वृधुषादेशे कृते पश्चादादिसर्वेश्वरस्येत्यनेन वृष्णीन्द्रः। वार्द्धुषिक इत्युत्तमर्णः, मुख्यतयावृत्त्या शब्दप्रयोगेऽधमर्णो वाच्यः स्यात्, अतोऽसावेव वृद्धि प्रयच्छतीति जुमरटीकाकृत् ॥ ६३४ ॥

केशवठरामेण साधू ।

६३६. शब्द-दर्दुरौ करोति ।

शाब्दिको वेणुः, दार्दुरिकः शिल्पी ।

६३७. पक्षि-मत्स्य-मृगान् हन्ति ।

स्वरूपस्य पर्य्यायस्य तद्विशेषाणाञ्चेहेष्यते । पाक्षिकः शाकुनिकः मायूरिकः । मात्सिकः मैनिकः माद्गुरिकः । मार्गिकः हारिणिकः सारङ्गिकः ।

---

कुसीदं, तत् प्रयच्छति गर्हा चेत्तदा कुसीद शब्दस्य केशवठेन सह कुसीदिक इति साधुः स्यात्, तथा गर्हायां एकादशार्थं दश प्रयच्छति चेत् केशवठेन दशैकादशिक इति साधु र्भवति । केशवठान्त निपातनात् लक्ष्म्यां कुसीदिकी दशैकादशिकी च ।

अमृता०—६३६. शब्देति । शब्दं करोति तथा दर्दुरं करोति इत्यर्थयोः शब्ददर्दुराभ्यां माधव ठः स्यात् । शब्दं करोति शाब्दिक इत्यादि ।

अमृता०—६३७. पक्षीति । पक्ष्यादिकं हन्तीत्यर्थे पक्षिमत्स्य-मृगेभ्यो माधवठः स्यात् । विशेष प्रतिपत्तये स्वयं व्याचष्टे-स्वरूपस्येत्यादि । पक्षिणं हन्ति पाक्षिको व्याध इति स्वरूपदृष्टान्तः । शकुनिः पक्षिपर्यातः । मयूरस्तु पक्षिण एव भेदः । एवमन्ये च ज्ञेयाः ।

---

बाल०—कुसी । कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं पूर्ववदत्रापि गर्हा गम्येति । वृत्तिमाह केशवेति । गर्हायां गम्यमानायां कुसीदं प्रयच्छतीत्यर्थे केशवठेन सह कुसीदस्य कुसीदिकः साधुः स्यात् । तथैकादशार्थं दश प्रयच्छतीत्यर्थे तेन सार्द्धं दशैकादशेत्यस्य दशैकादशिकः साधुः । दशच एकादश चेति रामकृष्ण समासे उक्तमिति संख्यायामल्पीयसश्चेत्यनेन दशशब्दस्य पूर्वं निपातः । केशवठान्तनिपातनादत्र कुसीदिकी दशैकादशिकीच ।। ६३५ ।।

बाल०—शब्द । शब्ददर्दुरौ करोतीत्यर्थे शब्ददर्दुराभ्यां माधवठः स्यात् । शाब्दिक इत्यस्य वाच्यपदं वेणुरिति दत्तं । अन्येनतु लोकप्रसिद्धात् शाब्दिको वैयाकरणच्छात्रादिरित्युक्तम् । शिल्पीति सामान्येनोक्तम् । दर्दुरो वाद्यभ्याण्डविशेषः । भाण्डसंस्कारकाले दर्दुरं शब्दविशेषं करोतीति रक्षितेनतु दार्दुरिकः कुम्भकारे रूढो मन्यते ।। ६३६ ।।

बाल०—पक्षि । पक्षिमत्स्यमृगान् हन्तीत्यर्थे पक्ष्यादेर्माधवठो भवति । स्वरूपेति तदात्मरूपस्य तत्तुल्यार्थस्य तद्भेदानाञ्च ग्रहणमिहेष्यते इत्यर्थः । क्रमेणोदाहरति पाक्षिक इत्यादिः । अजिक्षान् हन्ति अनिमेषान् हन्तीत्यत्र न स्यात् तत्तत्स्वरूपपर्यायविशेषाणामभावात् साधारणादनभिधानाच्च ।। ६३७ ।।

### ६३८. परिपन्थञ्च तिष्ठति ।

परिपन्थशब्दोऽव्ययीभावः, अतएव निपातनात् साधुः । तत्तिष्ठति चकारान्निहन्ति वा पारिपन्थिकश्चौरः ।

### ६३९. माथोत्तरपदं पदवीमनुपदमाक्रन्दञ्च धावति ।

माथः पन्थाः । दात्तमाथिकः, पादविकः, अनुपदिकः, आक्रन्दिकः ।

### ६४०. पदोत्तरपदं प्रतिकण्ठमात्मानं ललामञ्च गृह्णाति ।

पौर्वपदिकः औत्तरपदिकः प्रातिपदिका प्रातिकण्ठिको वल्लभः । आत्मिकः लालामिकः ।

---

**अमृता०**—६३८. परीति । परिपन्थं तिष्ठति: चकारात् तद्धन्तीत्यर्थद्वये परिपन्थ शब्दात् माधवठो भवति । परिपन्थशब्दः पूर्वं साधितः, अतोऽत्रैव साधनपथमुपदिशति—अव्ययीभाव इति । परिपन्थं तिष्ठति इति—परिशब्देन वर्जनार्थेऽव्ययीभावो दृश्यते, तदर्थस्येहानुपयोगान्निपातनात् साधुरित्युक्तम् । तेन पथि इति सप्तम्यर्थे योग्यत्वात् पथि तिष्ठति, पथि हन्ति वा पारिपन्थिक इति सुवचम् ।

**अमृता०**—६३९. माथेति । माथोत्तरपदं धावति, पदवीं धावति, अनुपदं धावति, आक्रान्द्रं धावति चेत्यर्थचतुष्टये माधव ठो भवति । माथ उत्तरपदं यस्य स माथोत्तरपदः । दत्तमाथं धावति दात्तमाथिक इत्यादि । पदस्य अनु पश्चादिति अनुपदं अव्ययीभावः । अक्रन्द्रत्यस्मिन्निति अक्रन्द्रो देशस्तं धावति आक्रन्द्रिकः ।

**अमृता०**—६४०. पदेति । पदोत्तरपदादिशब्देभ्य स्तद्गृह्णातीत्यर्थे माधव ठः स्यात् । पदमित्युत्तरपदं यस्य स पदोत्तरपदः । पूर्वञ्च तत् पदञ्चेति पूर्वपदं, तद्गृह्णाति आदिसर्वेश्वरवृष्णीन्द्रः—पौर्वपदिक इत्यादयः । कण्ठं कण्ठं प्रति प्रतिकण्ठमित्यव्ययीभाव-सिद्धः । ललामो भूषणविशेषः ।

---

**बाल०**—परि । परिपन्थः तिष्ठति चकारात् तद्धन्ति चेत्यर्थद्वये परिपन्थशब्दान्मा-धवठः स्यात् । परिपन्थशब्दः सर्वेषां मतेऽव्ययीभावसिद्धः स्वमताव्ययी भावसूत्रैस्तु न न सिध्येत् । अतोऽत्रैव निपातनात् साधयन्नाह परीत्यादि । तदित्यस्याव्ययविशेषणत्वात् तस्मिन्नित्यर्थः ॥ ६३८ ॥

**बाल०**—माथो । माथोत्तरपदं पदवीमनुपदमाक्रन्दञ्च धावतीत्यर्थे माथोत्तरपदा-देर्माधवठो भवति । माथ शब्दस्य दुष्पष्टार्थत्वात् स्वयमर्थमाह पन्था इति । माथ इत्युत्तरपदं यस्य स माथोत्तरपदस्तं धावतीति माथोत्तरपदिक इत्यादि । पदवी वर्त्म । पदस्य पश्चादनुपदमिति पश्चाद्योग्ययोरित्यनेनाव्ययीभाव सिद्धं । समवायाद्यर्थोऽनुरिह न गृह्यतेऽनभिधानात् । आक्रन्दन्त्यत्राक्रन्दो देशः ॥ ६३९ ॥

**६४१. धर्ममधर्मञ्च चरति ।**

धार्मिकः अधार्मिक; ।

**६४२. प्रतिपथमेति ठरामश्च ।**

प्रतिपथिकः प्रातिपथिकः ।

**६४३. समवायादीन् समवैति ।**

सामवायिकः सामूहिकः सामुदायिकः ।

**६४४. परिषदः समवैति ण्यः, सेनाया वा ।**

पारिषद्यः सैन्यः सैनिकः ।

---

अमृता०—६४१. धर्मेति । चरतीत्यर्थे धर्माधर्मशब्दाभ्यां माधवठः स्यात् । धर्मं चरति धार्मिक इत्यादि ।

अमृता०—६४२. प्रतीति । पन्थानं प्रति प्रतिपथमित्यव्ययीभावः । प्रतिपदमेति गच्छतीत्यर्थे प्रतिपथशब्दात् ठरामः चकारात् माधव ठश्च भवति ।

अमृता०—६४३. समेति । समवैति इत्यर्थे समवायादिशब्देभ्यो माधवठः स्यात् । समवायं मेलनं समवैति प्राप्नोति सामवायिक इत्यादि ।

अमृता०—६४४. परीति । समवैतीत्यर्थे परिषद उत्तरे ण्यरामः स्यात् तस्मिन्नर्थे सेनाया ण्यरामो वाभवतिः पक्षे माधव ठ इत्यर्थः । परिषदं समवैति पारिषद्यः ।

---

बाल०—पदो । पदोत्तरपदं प्रतिकण्ठं आत्मानं ललामञ्च गृह्णातीत्यर्थे पदोत्तरपदादेर्माधवठः स्यात् । पूर्वञ्च तत् पदञ्चेति पूर्वपदं तद्गृह्णाति पौर्वपदिक इत्यादि त्रयं । कण्ठं प्रति प्रतिकण्ठमिति अभिप्रती लक्षणेनेत्यनेनाभिमुख्येऽव्ययीभावनिष्पन्नं । ललामं भूषणविशेषः ।। ६४० ।।

बाल०—धर्म । अत्र चरतीति सेवनार्थं धातूनामनेकार्थत्वात् । धर्ममधर्मञ्च चरतीत्यर्थे धर्माधर्माभ्यां माधवठः स्यात् ।। ६४१ ।।

बाल०—प्रति । प्रतिपथमिति पूर्ववदाभिमुख्येऽव्ययीभावसिद्धमत्प्रत्ययान्तञ्च । प्रतिपथमेति गच्छतीत्यर्थे प्रतिपथशब्दात् ठरामः स्यात्, चशब्दान्माधवठश्च ।। ६४२ ।।

बाल०—सम । समवायो मिलनं स आदिर्येषां ते समवायादयस्तान् समवैतीत्यर्थे समवायादिभ्यो माधवठो भवति । समवायं समवैति इहागत्य तदेकदेशीभवति, समवायिक इत्यादि ।। ६४३ ।।

बाल०—परि । परिषदः समवैतीत्यर्थे परिषच्छब्दात् ण्यरामः स्यात् । परिषत् सभा अस्याः समवायार्थान्माधवठे प्राप्ते विधानं । सेना । सेनां समवैतीत्यर्थे सेनाया ण्यो वा स्यात् समूहार्थत्वात् पक्षे माधवठश्च ।। ६४४ ।।

**६४५. यः प्रभो र्ललाटमात्रं पश्यति नतु कार्ये व्याप्रियते स लालाटिकः, यस्त्वविक्षिप्तदृष्टिः कुक्कुटीपातयोग्यमल्पदेशं पश्यन् गच्छति स कौक्कुटिकः।**

द्वौ च साधू।

**६४६. प्रतीपादिकं वर्त्तते।**

प्रतीपं यथा स्यात्तथा वर्त्तते प्रातीपिकं। एवमान्वीपिकः प्रातिलोमिकः आनुलोमिकः। तां प्रातिकूलिकीं मत्वा इति भट्टिः। पारिमुखिकः पारिपार्श्विकः।

---

अमृता०—६४५. य इति। ललाटमात्रमित्यनेन दूरेऽवस्थानं बोध्यते, दूरे स्थितस्य हि जनस्य ललाटमात्रदर्शनविषयत्वात्। नतु कार्ये व्याप्रियत इत्यनेन कार्येऽनुपयुक्त इत्यायाति। तेन लालाटिकः प्रभोर्दृष्टिपथमगच्छन् कार्याक्षमो भृत्य इति तात्-पर्यार्थः। कौक्कुटिको भिक्षु रित्यर्थः। सन्यासी खलु पादविक्षेपयोग्यदेशमात्रे चक्षुः संयम्य गच्छतीति भावः।

अमृता०—६४६. प्रतीपेति। प्रतीपादिक यथा स्यात्तथा वर्त्तते इत्यर्थं प्रतीपादि शब्देभ्यो माधवठो भवति। प्रतीपं प्रतिकूलमित्यर्थः, तत् आदि यस्य स प्रतीपादिक इति पीताम्बरे क प्रत्ययः क्रियाविशेषणत्वं वाक्ये स्फुटितं—प्रतीपं यथा स्यादिति। अन्वीपं अनुकूलं, प्रतिलोम व्यतिक्रमः, अनुलोम क्रमश इत्यर्थः। प्रतिकूलादीनामिह ग्रहणं शिष्ट सम्मतमिति भट्टि प्रयोगेण समर्थयते—तामित्यादिना।

---

बाल०—यः। ललाटमात्रदर्शनं दूरस्थस्य भवतीत्यतः प्रभोरित्यनेनानुपश्लेषः सूचितः नतु कार्ये व्याप्रियत इति तस्य कार्ये व्यापारयुक्तो न भवतीत्यर्थः। पृधातुरत्र वैवादिकः। य एवम्भूतः स लालाटिक इत्यन्वयः। यस्त्व। अविक्षिप्तदृष्टिरित्यनेन नियतेन्द्रियत्वं सूचितं। कुक्कुटीपातयोग्यमल्पदेशमित्यनेनतु स्वपादमूलसमीपचतुर्हस्त-प्रमाणभूमिदर्शित्वं सूचितं यः स इत्यनयोरत्रापि पूर्ववदन्वयः। एवमेवम्भूतेऽर्थे माधवठेन सह ललाटकुक्कुटशब्दयोर्लालाटिककौक्कुटिकाविति द्वौ साधू भवत इत्येकत्रैव वृत्तिमाह द्वौ चेति। लालाटिकः कार्याक्षमो भृत्यः। कौक्कुटिकश्चतुर्थाश्रमी भिक्षुरिति प्रसिद्धं॥६४५

बाल०—प्रती। प्रतीपं प्रतिकूलं आदि यस्य तत् प्रतीपादिकमितिपीताम्बर-समासीय-कप्रत्ययान्तं क्रियाविशेषणमेतदिति वाक्ये स्पष्टं दर्शितं। तेन प्रतीपादिकं यथा स्यात्तथा वर्त्तत इत्यर्थे प्रतीपादिकान्माधवठो भवति। अन्वीपमनुकूलं प्रतीलोम व्यतिक्रमः अनुलोम क्रमः। प्रतिकूलशब्दस्याप्यत्र ग्रहणमिति सूचयन् भट्टिमतेनैवोदाहरति तामिति (५। ८४)। तथा परिमुखादिद्वयस्यापि॥ ६४६॥

६४७. तदुञ्छति ।

पौष्पिकः ।

६४८. तद्रक्षति ।

सामाजिकः ।

६४९. तस्य धर्म्यम् ।

शुल्कस्य धर्म्यमाचारः शौल्किकः । एवमापणिकः ।

६५०. महिष्यादेः केशवण: ।

महिष्या धर्म्यं मूल्यं माहिषं । तथा पौरोहितं कर्म । एवं प्राजापतम् ।

६५१. ऋरामात् केशवण: ।

होतु धर्म्यं हौत्रम् ।

---

अमृता०—६४७. तदिति । तदुञ्छति उच्चिनोतीत्यर्थे नाम्नो माधव ठः स्यात् । पुष्पमुञ्छति पौष्पिकः ।

अमृता०—६४८. तदिति । तद्रक्षतीत्यर्थे नाम्नो माधवठः स्यात् ।

अमृता०—६४९. तस्येति । तस्य धर्म्यमित्यर्थे नाम्नो माधवठः स्यात् । धर्मादनपेतं धर्म्यम् । शुल्कं मूल्यं, आचारो रीति रित्यर्थः ।

अमृता०—६५०. महिष्यादेरिति । तस्यधर्म्यमित्यर्थे महिष्यादेरुत्तरे केशवणः स्यात्, माधवठस्यापवादः । धर्म्यशब्दस्य यथासम्भवार्थो ग्राह्य इति वाक्ये दर्शयति—धर्म्यं मूल्यमिति । पुरोहितस्य धर्म्यं कर्म । महिषी पुरोहित प्रजापति प्रलेपिका विलेपिका अनुलेपिका मणिपाली अनुचारक यजमानेति महिष्यादि गणः ।

अमृता०—६५१. ऋरामादिति । तस्य धर्म्यमित्यर्थे ऋरामान्ताच्छब्दात् केशवणः स्यात्, माधवठस्यापवादः । एवमुद्गातुर्धर्म्यं औद्गात्रम् ।

---

बाल०—तदु । तदुञ्छति उच्चिनोतीत्यर्थे नाम्नो माधवठो भवति ।। ६४७ ।।

बाल०—तद्र । तद्रक्षति पालयतीत्यर्थे नाम्नो माधवठः स्यात् ।। ६४८ ।।

बाल०—तस्य । तस्य धर्ममित्यर्थे तच्छब्दनिर्देशान्नाम्नो माधवठः स्यात् । शुल्कस्य मूल्यस्य धर्म्यमाचारो न्यायप्राप्त इति यावत् ।। ६४९ ।।

बाल०—महि । तस्य धर्म्यमित्यर्थे महिष्यादेरुत्तरः केशवणः स्यात् । पूर्वेण माधवठे प्राप्ते तद्बाधनार्थमिदं । आचार इत्यस्य यथासम्भवत्वादत्र धर्म्यं मूल्यमिति दर्शितं । कर्मेति वाच्यपदेन पुरोहितस्य धर्म्यं कर्मेति सूचितं । महिषी पुरोहित प्रजापति प्रजावती प्रलेपिका अनुलेपिका विलेपिका अनुचारक यजमान मणिपाणीति महिष्यादिर्दश ।। ६५० ।।

## ६५२. विशसितु वैशस्त्रं, विभाजयितु वैभाजित्रम् ।

इण्णिलोपाभ्यां साधुनी ।

## ६५३. तस्यावक्रयः ।

शुल्कस्यावक्रयः परिभाषितं मूल्यं शौल्किकः पशुः । एवमापणिकः ।

## ६५४. तदस्य पण्यम् ।

मोदकाः पण्यमस्य मौदकिकः लावणिकः ।

---

अमृता०—६५२. विशसितुरिति । विशसितु र्धर्म्यमित्यर्थे केशवणेन सह इटोहरेण वैशस्त्रमिति साधु स्यात् । विपूर्वं शसु हिंसायां तृन् विशसितृ यथा पूर्वोक्तार्थे ण्यन्तभजे स्तृनन्तस्य केशवणेन समं णि लोपेन वैभाजित्रमिति साधु स्यात् । पूर्वत्र इटोलोपः, उत्तरत्र णि लोप इत्यर्थः ।

अमृता०—६५३. तस्येति । यस्यावक्रयइत्यर्थे नाम्नो माधवठः स्यात् । राजग्राह्यः करः अवक्रय उच्यते । तदेव स्पष्टयति परिभाषितं मूल्यमिति । शौल्किकोदत्तराजकरः पशु रित्यर्थः । नच वाच्यं—तस्य धर्म्यमित्यर्थेन एकार्थत्वमिति, लोकपीडयापि धर्मातिक्रमेणापि राजकर ग्रहणात् भिद्यते एवायमर्थः ।

अमृता०—६५४. तदिति । तदस्य पण्यं विक्रय्यमित्यर्थे नाम्नो माधवठः स्यात् ।

---

बाल०—ऋरा । तस्य धर्म्यमित्यर्थे ऋरामान्तान्नाम्नः केशवणः स्यात् । हु वह्नौ दाने इत्यस्य तृणन्तस्य होतुरिति ज्ञेयं । एवमौद्गात्रमित्यादि ।। ६५१ ।।

बाल०—विश । विशसितुर्धर्म्यमित्यर्थे विपूर्व-शसु हिंसायामित्यस्य तृनन्तस्य केशवणेन सार्द्धमिड्लोपेन वैशस्त्रं साधु स्यात् । विभा । तस्य धर्म्यमित्यर्थे विपूर्व-भज सेवायां ण्यन्त इत्यस्य तृनन्तस्य केशवणेन साकमिण्णिलोपेन वैभाक्त स्यात् । ऋरामादित्यनेन केशवणे प्राप्तेऽपीण्णिलोपाय वचनमिति स्पष्टयितुं वृत्तिमाह इण्णीति । इट्च णिश्च इण्णी, लोपश्च लोपश्च लोपौ इण्ण्योर्लोपौ इण्णिलोपौ ताभ्यां । द्वन्द्वात् परः पूर्वो वेत्युक्तदिशा इण्णिलोपेनेति कृतेऽपि कार्यसिद्धौ यत् इण्णिलोपाभ्यामिति कृतं, तेन पूर्वत्र इड्लोपेन परत्र इण्णिलोपेनेति ज्ञापितं । किन्तु वैभाजित्रमित्युदाहरणार्थं जुमरस्त केवलं णिलोपं करोति ।। ६५२ ।।

बाल०—तस्य । तस्यावक्रय इत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो माधवठः स्यात् । अवक्रयः परिभाषितं मूल्यमित्युक्तं, तच्च नैकान्तं धर्म्यं भवति, लोकपीडयापि परिभाषितमूल्यग्रहणात् अतस्तस्य धर्म्यमित्यतो भिद्यते ।। ६५३ ।।

बाल०—तदस्य । तदस्य विक्रय्यमित्यर्थे तच्छनिदशाच्छब्दान्माधवठः स्यात् ।।६५४

**६५५. किशरादेः केशवठः ।**

किशरादि गन्धद्रव्यं तदस्य पण्यं किशरिकः उशीरिकः ।

**६५६. तदस्य शिल्पम् ।**

मृदङ्गवाद्यं शिल्पमस्य मार्दङ्गिकः । एवं वैणविकः ।

**६५७. मड्डुक-झर्झराभ्यां केशवणश्च ।**

माड्डुकिकः माड्डुकिकः ।

**६५८. तदस्य प्रहरणम् ।**

चाक्रिकः ।

---

**अमृता०**—६५५. किशरादेरिति । तदस्यपण्यमित्यर्थे किशरादेरुत्तरे केशव ठो भवति, माधवठस्यापवादः । किशर उशीर सुमङ्गल तगर गुग्गुल नलद हरिद्रा हरिद्रपर्णीति किशरादि गणः ।

**अमृता०**—६५६. तदस्येति । तदस्य शिल्पमित्यर्थे तच्छब्दवच्यान्नाम्नो माधवठः स्यात् । शिल्पं कौशलविशेषः । मार्दङ्गिक इमि—अत्र मृदङ्ग शब्देन हि लक्षणया मृदङ्गवादनमुच्यते, अत एव मृदङ्ग शब्दादेव प्रत्ययोत्पत्तिः । एवमन्यत्रापि ज्ञेयम् । वेणुवाद्यं शिल्पमस्य वैणविकः । एवं वैणिकः ।

**अमृता०**—६५७. मड्डुकेति । तदस्य शिल्पमित्यर्थे मड्डुक-झर्भराभ्यां केशवणः स्यात् माधवठरामश्च भवति । वाद्ययन्त्रविशेण.वेतौ ।

**अमृता०**—६५८. तदिति । तदस्य प्रहरणमित्यर्थे नाम्नो माधवठः स्यात् । प्रह्रियतेऽनेनेति प्रहरणं आयुधम् । चक्रं प्रहरणमस्येति चाक्रिकः । एवं खाङ्गिकः पारश्वधिकः धानुष्क इत्यादयः ।

---

**बाल०**—किश । किशरादेस्तदस्य पण्यमित्यर्थे केशवठो भवति । किशर उशीर वदर स्थगर तरग गुग्गुल हरिद्रा हरिद्रुपनीति किशरादिराकृतिगणः ॥ ६५५ ॥

**बाल०**—तद । तदस्य शिल्पमित्यर्थे तच्छब्दवाच्यान्नाम्नो माधवठो भवति । शिल्पं कौशलं क्रियाभ्यासपूर्वकं ज्ञानविशेष इति यावत् । ननु मृदङ्गवाद्यं शिल्पमस्येति वाक्यमुपन्यस्तमित्यतो मृदङ्गवाद्यशब्दादेव प्रत्ययेन भवितव्यं तत् कथं मृदङ्गशब्दात् प्रत्यय इति चेत् केनाप्युच्यते तदेवं वाच्यं । यथा मञ्चाः क्रोशन्तीत्यनेन मञ्चस्था जना उच्यन्ते, तद्वद्वाद्यस्य मृदङ्गस्थत्वाल्लक्षणया मृदङ्गशब्देन मृदङ्गवाद्यमुच्यते इति मृदङ्गादेव प्रत्ययः । एवमित्यतिदेशात् वेणुवाद्यशिल्पमस्येति यथायथमन्यदप्यूहम् ॥ ६५६ ॥

**बाल०**—मड्डु । तदस्य शिल्पमित्यर्थे मड्डुकझर्झराभ्यां केशवणः चकारात् पक्षे माधवठोऽपि । मड्डुकझर्झरौ वाद्यद्रव्यविशेषौ । पूर्ववदत्रापि मड्डुकझर्झरयोस्तत्तद्वाद्ये प्रवृत्तिः । मड्डुकवाद्यशिल्पमस्य माड्डुक इत्यादिद्वयं एवं झार्झरः झार्झरिकश्च ॥ ६५७ ॥

### ६५६. शक्ति-यष्टिभ्यां ठी माधवः ।

शक्तीकः ।

### ६६०. अस्ति-नास्ति-दिष्टं मतिरस्य ।

अस्तीति मतिरस्य आस्तिकः । एवं नास्तिकः । दिष्टं प्रमाणं दैष्टिकः ।

### ६६१. तदस्य शीलम् ।

अपूपभक्षणं शीलमस्य आपूपिकः । परुषं शीलमस्य पारुषिकः । एवमाक्रोशिकः कारुणिकः ।

---

अमृता०—६५६. शक्तीति । तदस्य प्रहरणमित्यर्थे शक्तियष्टिभ्यां माधवठो स्यात् । ठ।ईकः । शक्तिः प्रहरणमस्य शाक्तीकः । एवं याष्टीकः ।

अमृता०—६६०. अस्तीति । अस्ति मतिरस्य, नास्ति मतिरस्य, दिष्टं मतिरस्य इत्यर्थत्रये अस्त्यादि शब्देभ्यो माधवठः स्यात् । अस्ति नास्ति शब्दो तिङन्तप्रतिरूपकाव्ययौ । दिष्टं प्रमाणमिति जयादित्यमतमुक्तम् । केचित्तु दिष्टं दैवमित्याहुः । अस्तीति मतिरस्य इत्युदाहरण वाक्ये अस्ति विद्यते भगवानिति शेषः, इत्थम्भूता मति र्ज्ञानं यस्य स आस्तिकः । तद्‌विपरीतो नास्तिक इति भावः ।

अमृता०—६६१. तदिति । तदस्य शीलमित्यर्थे तच्छब्दनिर्देशान्नाम्नो माधवठः स्यात् । शीलं स्वभावः । अपूपशब्दश्चेह अपूपभक्षणं लक्षयति ।

---

बाल०—तद । प्रह्रियतेऽनेनेति प्रहरणं करणद्रव्यं । तदस्य प्रहरणमित्यर्थे यत्तच्छब्दनिर्देश्यं तस्मान्माधवठः स्यात् । चाक्रिक इति चक्रं प्रहरणमस्येत्यर्थः । एवं खाड्गिक। पारश्वधिक इत्यादि ॥ ६५८ ॥

बाल०—शक्ति । तदस्य प्रहणमित्यर्थे शक्तियष्टीत्येताभ्यां माधवठीभवति । पूर्वेण माधवठे प्राप्ते तद्बाधनार्थमिदं । शाक्तीक इति शक्तिः प्रहरणमस्येत्यर्थः । एवं याष्टीक इति ॥ ६५६ ॥

बाल०—अस्ति । अस्तीति नास्तीति दिष्टमितिच मतिर्ज्ञानमस्येत्यर्थे अस्त्यादिभ्यस्त्रिभ्यो माधवठो भवति । एवं नास्तिक इति नास्तीति मतिरस्येत्यर्थः । अस्ति नास्तिशब्दौ तिङन्तप्रतिरूपकाव्ययौ । केचित्तु लक्षणसामर्थ्यात्तिङन्तादेवायं प्रत्यय इति वदन्तीति ज्ञेयं । दिष्टं प्रमाणमित्यस्मात् परं मतिरस्येति योज्यं । ग्रन्थकृता दिष्टपदमत्र प्रमाणपरमिति भङ्‌ग्या यदुक्तं तत्तु जयादित्यादीनामपि मतं । क्रमदीश्वरेणतु दिष्टपदं दैवपरमपि मत्वा माधकाव्य मुत्थापितं । तद्यथा । नालम्बते दैष्टिकत्यं न निषीदति पौरुषे इति (२।८६) माघपद्यन्तूभयथैव सङ्गत्यर्थं भवतीति तट्टीकाकृच्चाह ॥ ६६० ॥

बाल०—तद । तदस्य शीलमित्यर्थे तच्छब्दनिर्देशान्नाम्नो माधवठः स्यात । शीलं फलनिरपेक्ष्यसेवा । मृदङ्गशब्दो यथा लक्षणया मृदङ्गवाद्ये वर्तत इत्युक्तं । तद्वदिहाप्य-

## ६६२. छत्रादिभ्यः केशवणः ।

गुरुदोषाच्छादनाच्छत्रं शीलमस्य छात्रः । शैक्षः तापसः, चुरा चौरः ।

## ६६३. इदं भक्ष्यं हितमस्मै ।

आपूपिकः ।

## ६६४. कर्माध्ययने वृत्तमस्य ।

एकमन्यदध्ययनेऽपपाठलक्षणं कर्म वृत्तमस्य तद्धितार्थेति समासः—ऐकान्यिकः । एवं द्वैयन्यिकः ऐकरूपिकः ऐकग्रन्थिकः ।

---

अमृता०—६६२. छत्रेति । तदस्य शीलमित्यर्थे छत्रादिभ्यः केशवणः स्यात् । छद आवरणे इत्यस्मात् त्रप्रत्ययेन सिद्धः छत्रशब्दः सामान्यावरणार्थकः तत्र विशेषमाह—गुरुदोषाच्छादनादिति । एवं शिक्षा शीलमस्य शैक्षिक इत्यादि । छत्र शिक्षा तपः चुरा प्ररोह बुभुत्रा कृपि अपस्थान कर्मन् विश्वधा सत्य अनृतेति छदादि गणः ।

अमृता०—६६३. इदमिति । इदं भक्ष्यं हितमस्मै इत्यर्थे इदंवाच्यान्नाम्नो माधवठः स्यात् । भक्ष्यं भोज्यम् । औदनिकः पायसिकः ।

अमृता०—६६४. कर्मेति । अध्ययनविषये कर्मवृत्तमस्येत्यर्थे नाम्नो माधवठः स्यात् । वाक्येनार्थं स्पष्टयति—एकमित्यादि । ऐकान्यिक इति—एकमन्यदिति विग्रहे तद्धितार्थे त्रिरामी, ठ प्रत्ययः अध्ययने नियुक्तस्य यस्य परीक्षाकाले पठतोऽपपाठरूपमेकं स्खलनं वृत्तं स ऐकान्यिक उच्यते । एवं यस्य द्वे स्खलने जाते स द्वैयन्यिक इत्यादि । केचित्तु ऐकरूपिकादि द्वयस्यापपाठलक्षणं कर्म न मन्यन्ते ।

---

पूपशब्दोऽपूपभक्षणे वर्तत इति ज्ञेयं । परुषं निष्ठुरं तदेव शीलमिति गोस्वामिनोऽभिप्रेतं सामान्येन सर्वसिद्धेः । किञ्च, गङ्गातीरे लाक्षणिकगङ्गाशब्दवत् परुषशब्दः परुषवचने लाक्षणिक इत्यन्ये ॥ ६६१ ॥

बाल०—छत्रा । तदस्य शीलमित्यर्थे छत्रादिभ्यः केशवणः स्यात् । यथा छद अपवारण इत्यस्मात् छदादिभ्यश्चेत्यनेन त्रप्रत्ययसिद्धस्य छत्रशब्दस्यावरणं प्रवृत्तिनिमित्तं, तथात्र छत्रशब्दो गुरुदोषाच्छादनायां वर्तत इत्याह गुरुदोषेति । आच्छाद्यते इति ण्यन्तादासः अन्थादेश्चेत्यनेन भावे लक्ष्म्यामनप्रत्ययान्ता आच्छादना ततो गुरुदोषस्याच्छादनारूपं छत्रं शीलमस्येति छात्रो गुरुदोषावरणशीलः शिष्य इत्यर्थः । चुरेति चुरा शीलमस्येति योज्यं । चुर स्तेये नान्तो घटादिरित्यस्मात् विष्णुनिष्ठासेटकेत्यप्रत्ययान्ताच्चेत्यनेन ङाप् । छत्र शिक्षा तपः चुरा भिक्षा धुक्षा क्षुधा पुरो दर्श उदस्थात कृषि कर्मन् सत्य अनृतेति छत्रादिश्चतुर्दश ॥ ६६२ ॥

बाल०—इदं । इदं भक्ष्यं हितमस्मै इत्यर्थे इदंशब्दवाच्यान्नाम्नो माधवठः स्यात् । अस्मा इत्यत्र चतुर्थी हिताद्यर्थैरिति चतुर्थी । भक्षन्तु व्याख्यातमेव ॥ ६६३ ॥

**६६५. बहुसर्वेश्वरपूर्वपदात् ठरामः ।**

द्वादशान्यिकः त्रयोदशग्रन्थिकः ।

**६६६. तदस्मै दीयते नियुक्तम् ।**

नियुक्तं कल्पितमग्रभोजनमस्मै दीयते आग्रभोजनिकः एवं प्राथमकल्पिक।

**६६७. श्राणामांसौदनाभ्यां मांसादोदनाच्च केशव ठः ।**

श्राणिकः मांसौदनिकः ।

---

**अमृता०**—६६५. बह्विति । कर्माध्ययने वृत्तमस्येत्यर्थे, बहुसर्वेश्वरः पूर्वं पदं यस्य तादृशान्नाम्नस्तु ठरामः स्यात् । पूर्ववदपपाठलक्षणं कर्म वृत्तिमिति योज्यम् । माधवठरामापवादः । द्वादश अन्यरूपाणि अध्ययनेष्वपपाठ लक्षणानि कर्माणि वृत्तान्यस्येति पूर्ववत् समासे द्वादशान्तिकः । एवमन्ये च ।

**अमृता०**—६६६. तदिति । तदस्मै नियुक्तं दीयते इत्यर्थे नाम्नो माधवठः स्यात् । नियुक्तमित्यस्यार्थं विशदयति—कल्पितमिति । एवमिति—निपुक्तं प्रथमकल्पमस्मै दीयते इति प्राथमकल्पिकः ।

**अमृता०**—६६७. श्राणेति । तदस्मै दीयते नियुक्तमित्येर्थे श्राणामांसौदन इत्येताभ्यां

---

**बाल०**—कर्म । अध्ययनेऽध्यनविषये कर्म वृत्तमस्येत्यर्थे नाम्नो माधवठो भवति । वाक्येनैवार्थं स्पष्टयति एकमित्यादि । तद्धितार्थेति दिक्सङ्ख्यो तद्धितार्थेत्यनेन तद्धितार्थे एकान्ययोस्त्रिरात्री समास इत्यर्थः । ऐकान्यिक इति अध्ययनेषु नियुक्तस्य परीक्षाकाले पठतः स्खलितरूपमेकमन्यत् कर्म जातमित्यध्ययने ह्यन्यत्वमपपाठरूपं सम्भवति । एवमुत्तरत्रापि यथायोग्यं कल्प्यं । एवमिति एवमुक्तप्रकारेण द्वे अन्ये अध्ययनेष्वपपाठ लक्षणे कर्मणी वृत्ते अस्येति द्व्यन्ययोः समासे सन्धोच कृते पश्चात् वृष्णीन्द्रस्थानचतुःसनेत्यनेन ऐयादेशः स्यात् । विष्णुपदान्तस्थत्वाभावात्वरामस्यौवादेशस्तु न स्यात् । तथा एकं रूपमध्ययनेष्वषपाठलक्षणं कर्म वृत्तमस्येति पूर्ववत् समासः । एको ग्रन्थोऽध्ययनेष्वपपाठलक्षणं कर्म वृत्तमस्येत्यपि पूर्ववत् । न्यासकारेणाप्येवं व्याख्यातं । अन्येन तु ऐकरूपिकैकग्रन्थिकयोरपपाठलक्षणं नानुमन्यत इति बोद्धव्यम् ।। ६६४ ।।

**बाल०**—बहु कर्मध्यायने वृत्तमस्येत्यर्थे बहुसर्वेश्वरः पूर्वपदं यस्य तस्मान्नाम्नष्ठरामः स्यात् । अत्राप्यपपाठलक्षणरूपं कर्म वृत्तमिति स्मर्त्तव्वं । पूर्वसिद्धमाधवठरामापवादोऽयं । द्वादशान्यानि अध्ययनेष्वपपाठलक्षणानि कर्माणि वृत्तान्यस्येति पूर्ववत् समासः द्वादशान्यिकः । एवं त्रयोदशग्रन्थिकः चतुर्दशरूपिक इत्यादि यथायथमुह्यम् ।। ६६५ ।।

**बाल०**—तद । तदस्मै दीयते नियुक्तमित्यर्थे यत्तच्छनिर्देश्यं तस्मान्नाम्नो माधवठो भवति । वाक्येनैवार्थं विशदयति नियुक्तं कल्पितमिति । एवमिति नियुक्तं कल्पितं प्रथमकल्पमस्मै दीयते प्राथमिक इत्यादि ।। ६६६ ।।

## ६६८. भक्तात् केशव णो वा ।

भाक्तः भाक्तिकः ।

## ६६९. तत्र नियुक्तः ।

दौवारिकः सैनिकः ।

## ६७०. आगारान्तात् ठरामः ।

देवागारिकः ।

---

तथा योगविभागेन मांसात् ओदनाच्च केशव ठो भवति । नियुक्ता कल्पिता श्राणा पयोविकारः अस्मै दीयते इति श्राणिकः । मांसेनमिश्र ओदनः मांसौदन, स नियुक्तोऽस्मै दीयते इति मांसौदनिकः । एवं मांसिकः ओदनिकः, मांसिकीत्यादि । वृष्णीन्द्राभावेऽपि ठरामस्य सार्थक्यं ।

अमृता०—६६८. भक्तादिति । तदस्मै दीयते नियुक्तमित्यर्थे भक्तशब्दात् केशव णो वा स्यात्, पक्षे माधवठश्च । भक्तं अन्नामित्यर्थः ।

अमृता०—६६९. तत्रेति । तत्र नियुक्त इत्यर्थे अकले अधीत इत्यर्थे च नाम्नो माधवठः स्यात् । द्वारे नियुक्तः दौवारिकः । वृष्णीन्द्रस्थानेत्यादिना औवादेशः, द्वारादिस्थत्वात् । एवमापणिकः ग्रामिक इत्यादयश्च ।

अमृता०—६७०. आगारान्तादिति । तत्र नियुक्त इत्यर्थे आगारान्त शब्दात् ठरामः स्यात् । देवागारे नियुक्तो देवागारिकः ।

---

बाल०—श्राणा तदस्मै दीयते नियुक्त मित्यर्थे श्राणामांसौदन इत्यैताभ्यां तथा योगविभागेन मांस इत्यस्मात् ओदन इत्यस्माच्च केशवठः स्यात् । नियुक्ता कल्पिता श्राणा अस्मै दीयते श्राणिक इति । श्राणा पयोविकारविशेषः । मांसेन मिश्र ओदनो मांसौदनः । नियुक्तः सोऽस्मै दीयते मांसौदनिक इति । एवं मांसिकः ओदनिकः । श्राणामांसौदनमांसानां वृष्णीन्द्रे कृतेऽकृतेऽपि समरूपत्वात् माधवठेनापि प्रयोगसिद्धौ यत् केशवठविधानं, तत्-प्रयोजनन्तु न वृष्णीन्द्रहेतुतद्धितान्तलक्ष्मीरित्यनेन प्राप्तपुम्बद्भावनिषेधबाधनमिति ॥६६७

बाल०—भक्तात् । तदस्मै दीयते नियुक्तमित्यर्थे भक्तमन्नमित्यस्मात् केशवणो वा स्यात् पक्षे माधवठश्च । नियुक्तं भक्तमस्मै दीयते भाक्त इत्यादिद्वयं ॥ ६६८ ॥

बाल०—तत्र । तत्र नियुक्तो निरूपित इत्यर्थे तत्रेत्यनेन निर्देशादधिकरणार्थान्नाम्नो माधवठः स्यात् । द्वारे नियुक्त द्वौवारिक इत्यत्र वृष्णीन्द्रस्थानचतुःसनादेशेति सूत्रे द्वारादिस्थयोश्चेत्युक्तत्वाद्धरामस्यौवादेशः । सेनायां नियुक्तः सैनिक इत्यादि ॥ ६६९ ॥

बाल०—आगा । तत्र नियुक्त इत्यर्थे आगार इत्यन्ते यस्य तस्माच्छब्दात् ठरामः स्यात् । देवागारे नियुक्तः देवागारिक इति । एवं यज्ञागारिक इत्यादि ॥ ६७० ॥

## ६७१. अदेश कालयोरधीते ।

श्मशानेऽधीते श्माशानिकः । एवं चातुष्पथिकः तथा चातुर्दशिकः आष्टमिकः ।

## ६७२. कठिनान्त-प्रस्ताव-संस्थानेषु व्यवहरति ।

वंशकठिने व्यवहरति वांशकठिनिकः । एवं प्रास्ताविकः सांस्थानिकः ।

## ६७३. निकटे वसति ।

नैकटिकः ।

## ६७४. आवसथात् केशव ठः ।

आवसथिकः । निवृत्तो माधव ठः ।

## ६७५. प्राग् हिताद् यरामः ।

तस्मै हितमित्यतः प्रागर्थे यरामो वाच्यः ।

---

अमृता०—६७१. अदेशेति । अदेशे अधीतः, अदेशे अधीत इत्यर्थद्वये नाम्नो माधवठ. स्यात् । श्मशान चतुष्पथयोः पाठायोग्य स्थानत्वात् तथा चतुर्दश्यष्टम्योः पाठ॰ निषिद्धत्वाददेश–कालत्वं बोध्यम् ।

अमृता०—६७२. कठिनान्तेति । कठिनान्त–प्रस्ताव–संस्थानेषु व्यवहरतीत्यर्थे कठिनान्तादि शब्देभ्यो माधव ठो भवति ।

अमृता०—६७३. निकट इति । निकटे वसतीत्यर्थे निकटात् माधवठः स्यात् ।

अमृता०—६७४. आवसथादिति । आवसथे गृहे वसतीत्यर्थे आवसथ शब्दात् केशवठः स्यात् । केशवत्वादीप् आवसथिकी । समाप्तोऽयमधिकारो माधव ठस्य ।

अमृता०—६७५. प्रागिति । प्रत्ययाधिकार एषः । स्वयमेव विवृतः सूत्रार्थः ।

---

बाल०—अदे । अदेशकालयोरधीते इत्यर्थे अदेशवाचकादकालवाचकाच्च नाम्नो माधवठो भवति । श्माशानिकादिद्वयमदेशोदाहरणं, चातुर्दशिकादिद्वयन्त्वकालोदाहरणं । एवमन्यदपूह्यम् ॥ ६७१ ॥

बाल०—कठि । कठिनान्तप्रस्तावसंस्थानेषु व्यवहरतीत्यर्थे कठिनान्तादेर्माधवठः स्यात् ॥ ६७२ ॥

बाल०—निक । निकटे वसतीत्यर्थे निकटशब्दान्माधवठो भवति ॥ ६७३ ॥

बाल०—आव । आवसथे वसतीत्यर्थे आवसथशब्दात् केशवठः स्यात् । केशवस्य टित्वादावसथिकीतिच स्यात् समासे पुम्बच्च । माधवठं निवर्त्तयति निवृत्त इति ॥६७४॥

बाल०—प्राग् । पारिभाषिकोऽयं । स्वयमेव विवृणोति तस्मै हीति ॥ ६७५ ॥

६७६. तद्वहति ।

प्रभुरयम् ।

६७७. रथान्त-युग-प्रासङ्गेभ्यः ।

द्वौ रथौ वहति तद्धितार्थे त्रिरामी, द्विरथ्यः युग्यः प्रासङ्ग्यः ।

६७८. धुरो यराम-माधव ढौ ।

धुर्य्यो धौरेयः ।

६७९. सर्वधुरीणोत्तरधुरीणौ साधु, एकधुर, एकधुरीणश्च ।

---

अमृता०—६७६. तदिति । अर्थाधिकारोऽयम् । तद्वहतीत्यर्थे नाम्नो यरामः स्यात् ।

अमृता०—६७७. रथान्तेति । तद् वहतीत्यर्थे रथोऽन्तो यस्य तस्मात् तथा युग-प्रासङ्गाभ्याञ्च यरामः स्यात् । रथान्त इति तद्गुणसंविज्ञान पीताम्बरत्वात् केवलरथ-शब्दादपि यरामो भवति । रथं वहति रथ्यो घोटकः । वत्सानां दमनार्थं यद् दारुस्कन्धे बध्यते स प्रासङ्ग उच्यते ।

अमृता०—६७८. धुर इति । तद्वहतीत्यर्थे धुर् शब्दाद् यराम-माधव ढो भवतः । धुरं भारं वहतीति धुर्य्य इति द्वयम् ।

अमृता०—६७९. सर्वेति । तद् वहतीत्यर्थे सर्वधुरोत्तरधुरयोः खरामेण सर्वधुरी-णोत्तरधुरीणौ साधू भवतः । सर्वा चासौधूश्चेति विग्रहे अनक्षस्य धुर इति समासान्तो-ऽरामः, तत आप् सर्वधुरा । एकेति—तद्वसतीत्यर्थे एकधुरायाः खरामेण एकधुरः एकधुरी-णश्च साधू भवतः । एकधुरं वहतीत्यर्थे खप्रत्ययः एकधुरीणः, पक्षे निपात सामर्थ्यात् तस्य महाहरश्च । तत्र वहतीत्यर्थस्य प्रधान्याद् गोरीप अप इत्यादिना वामनः एकधुरः ।

---

बाल०—तद्व । तद्वहतीत्यर्थे यत्तच्छब्दनिर्दिष्टं तस्माच्छब्दाद्यरामः स्यात् । तदर्थं प्रत्ययश्चाधिकरोति प्रभुरिति ॥ ६७६ ॥

बाल०—रथा । तद्वहतीत्यर्थे रथ इत्यन्तो यस्य तस्मात् युगप्रासङ्गाभ्याञ्च यरामो भवति । प्रयोगसिद्धचर्थं वाक्येनैव समासप्रकारं दर्शयति द्वाविति । रथान्तेत्यस्य तद्गुण-सम्बिज्ञानपीताम्बरनिष्पन्नत्वात् केवलरथशब्दादपि प्रत्ययस्तेन रथं वहतीति रथ्य इत्यपि । वत्सानां दमनार्थं यत् दारु स्कन्धे दीयते तत् प्रासङ्गः ॥ ६७७ ॥

बाल०—धुरो । तद्वहतीत्यर्थे धुर इत्यस्माद्यराममाधवटो भवतः । धुरं भारं वहति धुर्य इत्यादिद्वयं ॥ ६७८ ॥

बाल०—सर्व । तद्वहतीत्यर्थे खेन सह सर्वधुरोत्तरधुरयोः सर्वधुरीणाविति द्वौ साधू भवतः । सर्वो चासो धूश्चेति श्यामरामसमासः । अनक्षस्य धुर इत्यनेन समासान्तारामप्रत्ययस्तत आप् सर्वधुरा । एवमुत्तरधुरा । अन्यतश्चेत्येके तेन दक्षिणधुरीण इत्यादिच ।

**६८०. शकटात् केशवण: ।**

शाकटः द्वैशकटः ।

**६८१. हल-सीराभ्यां माधवठः ।**

हालिकः द्वैहलिकः ।

**६८२. जन्या जामातु र्वयस्येषु जनीं वधूं वहन्तीत्यर्थे ।**

साधवः । तद् वहतीति निवृत्तम् ।

**६८३. तद्विध्यति न चेद्धनुषा, पादस्य पद्यः ।**

उरूविध्यति उरुयः । एवं पद्यः । नेह–दैत्यं विध्यति धनुषा ।

---

**अमृता०**—६८०. शकटादिति स्फुटम् । द्वैशकट इति तद्धितार्थे त्रिरामी ।

**अमृता०**—६८१. हलेति । तद्वहतीत्यर्थे हलसीराभ्यां माधव ठरामः स्यात् यरामापवादः । सीरा लाङ्गलपद्धतिः, इहतु लक्षणया सीरा लाङ्गल उच्यते—सैरिकः ।

**अमृता०**—६८२. जन्या इति । जनीं वधूं वहन्तीत्यर्थे जामातु र्वयस्येषु वाच्येषु जनी शब्दात् खप्रत्ययेन जन्याः साधवो भवन्ति ।

**अमृता०**—६८३. तदिति । चेत् यदि धनुषा वेधनं न स्यात् तदा तद्विध्यतीत्यर्थे नाम्नो यरामः स्यात्, तस्मिंश्च सति पादस्य पदादेशश्च भवति । तदिति कर्म पदम् । उरव्य इति—उद्वयस्य गोविन्द गोविन्दः । एवं पद्यः कण्टकः । नैहेति प्रत्ययाविषयत्वाद् वाक्यमात्रमिति भावः ।

---

एक । तद्वहतीत्यर्थे खेन सह पूर्ववदेक धुराया एकधुरः एकधुरीणश्चेति द्वौ साधू भवतः । एकधुर इत्यत्र निपातनात् खप्रत्ययं विधाय तस्य हरेच कृते वहत्यर्थस्य प्राधान्यात् गोरीप आप इत्यनेनापश्च वामन इति ॥ ६७९ ॥

**बाल०**—शक । तद्वहतीत्यर्थे शकटशब्दात् केशवणः स्यात् । द्वौ शकटौ वहतीति तद्धितार्थे त्रिरामी द्वैशकट इति ॥ ६८० ॥

**बाल०**—हल । तद्वहतीत्यर्थे हलसीराभ्यां माधवठः स्यात् । सीरा लाङ्गल पद्धतिस्तां वहति सैरिक इति ॥ ६८१ ॥

**बाल०**—जन्या । जनीं वधूं वहन्तीत्यर्थे जामातुर्वयस्येषु जामातुस्तुल्यवयस्केषु वाच्येषु जनीत्यस्या यप्रत्ययने साकं जन्या साधवो भवन्ति । तद्वहत्यर्थं समापयति । तद्वहेति ॥ ६८२ ॥

**बाल०**—तद्वि । तद्विध्यतीत्यर्थे चेद्यदि धनुषा वेधनं न स्यात्तदा तच्छब्द निर्देशान्नाम्नो यरामो भवति । पाद । तद्विध्यति न चेद्धनुषेत्यर्थे पादस्य सम्बन्धे यरामस्तस्य पदादेशश्च । न चेद्धनुषेत्यनेन करणं विनैव यदि स्वयं विध्यतीति सूचितं । एवमिति पादौ विध्यति पद्यः कण्टकः । नेहेति धनुः करणनिषेधात् ॥ ६८३ ॥

## ६८४. धनं गणं वा लब्धा ।

लब्धेति तृनन्तम् । धन्यो गण्यः ।

## ६८५. अन्नाण्णरामः ।

आन्नः ।

## ६८६. वशं गतः ।

वश्यः ।

## ६८७. पदमस्मिन् दृश्यम् ।

पद्यः साधुः । पद्यं स्थलं, पद्या भूमिः ।

## ६८८. मूलमेषां सुखोत्पाट्यम् ।

मूल्या मुद्गादयः ।

---

अमृता०—६८४. धनमिति । धनं लब्धा इत्यर्थे गणं लब्धेत्यर्थे च धन-गणाभ्यां यरामः स्यात् । लब्धेति तृलन्ते सति कृद्योगे कर्मणि षष्ठी प्राप्ता नतु द्वितीया, अत उपपत्तिमाह–लब्धेति तृनन्तमिति । तेन तद्योगे अच्युताभविष्णुनिष्ठेत्यादिना षष्ठी निषेधात् द्वितीयैव कर्मणि विहितेति धनं गणमिति कर्मपदं मन्तव्यमित्यर्थः ।

अमृता०—६८५. अन्नादिति । तल्लब्धेत्यर्थे अन्न शब्दात् णरामः स्यान्न तु यरामः ।

अमृता०—६८६. वशमिति । वशंगत इत्यर्थे वश शब्दात् यरामः स्यात् । वशमधीनमित्यर्थः ।

अमृता०—६८७. पदमिति । पदमस्मिन् दृश्यमित्यर्थे यरामेण सह पदस्य पद्य इति साधुः स्यात् । पदं दृश्यं द्रष्टुं शक्यं (दर्शन योग्यं) इत्यर्थे पद्यं स्थलमिति । अनेन कर्दमस्यावस्थाविशेष उच्यते—नातिद्रवो नातिशुष्क इति ।

अमृता०—६८८. मूलमिति । एषां मूलं सुखोत्पाठ्यमित्यर्थे मूलशब्दाद् यरामः

---

बाल०—धनं । धनं गणं वा लब्धेत्यर्थे धनगणाभ्यां यरामः स्यात् । लब्धेति बालकल्केस्तान्तमित्याशङ्कानिराशार्थमाह लब्धेति । डुलभष् प्राप्ताविति लभधातोस्तच्छीलादौ तृन् इत्यतः अच्युताभविष्णुनिष्ठाखलार्थेत्यनेन धनं गणमित्यनयोर्न षष्ठीति ॥६८४

बाल०—अन्ना । तल्लब्धेऽर्थेऽन्नाण्णरामः स्यात् ॥ ६८५ ॥

बाल०—वशं । वशं गत इत्यर्थे वशशब्दाद्यरामः स्यात् । वशमायत्तत्वं गतः प्राप्तः वश्य इति ॥ ६८६ ॥

बाल०—पद । पदमस्मिन् दृश्यमित्यर्थे यरामेण साकं पदस्य पद्यः साधुः स्यात् । पद्यं स्थलमिति । अस्मिन् पादचिह्नं दृश्यं द्रष्टुं शक्यं दर्शनयोग्यमित्यर्थः । एतेन कर्दमस्यावस्थोच्यते नातिद्रवो नातिशुष्क इति ॥ ६८७ ॥

**६८९. धेनुष्या गौ र्महिषी वा या दुग्धबन्धके स्थिता ।**

**६९०. गार्हपत्योऽग्निभेदे, नाव्यं नौतार्ये जले, वयस्यो वयसा तुल्ये, धर्म्यो धर्मप्राप्ये, विष्यो विषेण बध्ये, मूल्यं मूलेनाभिभाव्ये मूलेन समे च, सीत्यं सीतया सम्मिते, तुल्यं तुलया सम्मिते, रथ-सीता-हलेभ्यो यविधौ तदन्तविधिः ।**

---

स्यात् । मूल्या मुद्गादय इति—मूलोत्पाटनं विना ग्रहीतुमशक्याः, मध्यतो लूयमानेषु तेषु यदवस्थायां काशस्था अपि मुद्गाः पतेयुः तामवस्थां प्राप्ताः सुष्ठु पक्वाः सन्तः शुष्का इति भावः ।

अमृता०—६८९. धेनुष्येति । दग्धबन्धके ऋणशोधनाय दुग्धपरिवर्त्तनेनोत्तमार्णाय दत्तायां गवि महिष्यां वा वाच्यायां यप्रत्ययेन युगागमेन च सह धेनुष्या इति निपात्यते ।

---

अमृता०—६९०. गार्हेति । अग्नि भेदे वाच्ये नृसिंह यरामेण सह गृहपति शब्दस्य गार्हपत्यः साधुः स्यात् । नाव्यमिति—नावातार्यं तरणयोग्यं यज्जलं तस्मिन् वाच्ये नौ-शब्दस्य यरामेण नाव्यमिति साधु स्यात् । वयस्य इति—वयसा तुल्ये समाने वाच्ये यरामेण समं वयस् शब्दस्य वयस्य इति साधु स्यात् । धर्मेति—धर्मेण प्राप्ये पदार्थे वाच्ये यरामेण साकं धर्मस्य धर्म्यः साधु भवति । विष्य इति— विशेण बध्ये वाच्ये यरामेण विषस्य विष्यः साधु स्यात् । मूल्यमिति—मूलेनाभिभव्ये पराभव्ये वाच्ये तथा मूलेन तुल्ये च वाच्ये यरामेण साकं मूलस्य मूल्यं साधु स्यात् । सीत्यमिति—सीतया लाङ्गलपद्धत्या सम्मिते मिलितेऽर्थे यरामेण सह सीताशब्दस्य सीत्यं साधु स्यात् । सीत्यं क्षेत्रमित्यर्थः । तुल्यमिति—तुलया सम्मिते सदृशेऽर्थे यरामेण तुलाशब्दस्य तुल्यं साधु स्यात् । रथेति—रथ सीता हलेभ्यो यप्रत्ययप्रसङ्गे तदन्तविधिरिष्यते । तेन द्विरथ्यः एव सीत्यः त्रिहल्य इत्यादयश्च सिध्यन्तीति तात्पर्यम् ।

---

बाल०—मूल । एषां मूलं सुखेनोत्पाट्यमित्यर्थे मूलशब्दाद्यरामः स्यात् । फलाद्यर्थं येषां दात्रादिना गात्रं छेदनयोग्यं न भवति । मूल्या इत्यनेन ते मुद्गाद्योऽत्रोच्यन्ते । तत्समे चेति वक्तव्यं । तत्तुल्येच वाच्ये मूलशब्दाद्यरामः स्यादित्यर्थः । यथा मूल्यः पट इति । यावता हिरण्यादिना पटादेरुत्पत्तिर्भवति, तदेवात्र मूल्यं यावल्लग्नं तावदेव लभत इत्यर्थः ।। ६८८ ।।

बाल०—धेनु । मण्डुकप्लुतन्यायेनात्र साधुरित्यनुवर्त्तते । दुग्धार्थं बन्धके बन्धने या गौर्महिषी वा स्थिता तस्यां वाच्यायां यरामेण यरामागमेनच सह धेनुशब्दस्य धेनुष्या साधुः स्यात् । धेनुः स्यान्नवसूतिकेत्यमरोक्तत्वात् धेनुशब्दस्य सामान्यप्रवृत्त्या धेनुष्येत्यस्य दुग्धार्थबन्धनस्था गौर्महिषीच वाच्येति नायुक्तम् ।। ६८९ ।।

बाल०—गार्ह । तस्यायमित्यर्थेऽग्निभेदे वाच्ये नृसिंहयरामेण सार्द्धं गृहपतेः गार्हपत्यः साधु स्यात् । नाव्यं । नावा तार्यं नौतार्यं तस्मिन्नौतार्यं नावा तरणोपयुक्ते

## ६६१. धर्मपथ्यर्थन्यायेभ्योऽनपेते ।

धर्म्यं पथ्यम् ।

## ६६२. छन्दसा निर्मितं छन्दस्यम् ।

## ६६३. उरसः केशवणश्च ।

औरसः उरस्यः ।

---

अमृता०—६६१. धर्मेति । अनपेते अभ्रष्टेऽर्थे धर्मपथि अर्थ न्याय इत्येतेभ्यो यरामः स्यात् । निर्देशसामर्थ्यादेव वाक्ये एतेभ्यः पञ्चमी । धर्मादनपेतमभ्रष्टं धर्म्यं, धर्मे स्थितमित्यर्थः । एवं पथः अनपेतं पथ्यं, अर्थादनपेतं अर्थ्यं, न्यायादनपेतं न्याय्यमिति ।

अमृता०—६६२. छन्दसेति । छन्दसानिर्मितमित्यर्थे छन्दः शब्दात् यरामः स्यात् । इच्छापर्यायश्चच्छन्दः शब्द इह गृह्यत इति काशिका । तत्र निर्मितमुत्पादितमित्यर्थः ।

अमृता०—६६३. उरसइति । तेन निर्मितमित्यर्थे उरस् शब्दात् केशवणो यरामश्च भवति । उरसा निर्मित इति औरस इति द्वौ ।

---

जले वाच्ये यरामेण सह नौशब्दस्य नाव्यं साधु स्यात् । अर्थेऽस्मिन् यप्रत्यय एव निपातफलं । औद्वयस्यावावावित्यनेनावादेशस्तु सिध्यत्येव । वय । वयसा तुल्ये सुहृदि वाच्ये यरामेण सार्द्धं वयःशब्दस्य वयस्यः साधुः स्यात् धर्म्यो । धर्मेण प्राप्ये लभ्ये पदार्थे वाच्ये यरामेण सह धर्मस्य धर्म्यः साधुः स्यात् । विष्यो । विषेण बध्ये वाच्ये यरामेण सह विषस्य विष्यः साधु स्यात् । मूल्यं । मूलेनाभिभाव्ये पराभवे तथा मूलेन समे तुल्येच वाच्ये यरामेण साकं मूलशब्दस्य मूल्यं साधु स्यात् । सीत्यं । सीतायाः सम्मिते सङ्गतेऽर्थे यरामेण सह सीतायाः सीत्यं साधु स्यात् । सीता लाङ्गलपद्धतिः । सीत्यं । क्षेमं । तुल्यं । तुलया सम्मिते परिमिते वाच्ये यप्रत्ययेन साकं तुलाशब्दस्य तुल्यं साधु स्यात् । रथ । तेन सम्मितेऽर्थे रथसीताहलेभ्यो यविधौ विषये तदन्तविधिरिष्यत इत्यर्थः । तदन्तेभ्यः समासान्तेभ्यः विधिर्विधानमिति समासवाक्यं । द्वाभ्यां रथाभ्यां सम्मितो द्विरथ्य इति । एवमेकसीत्यः त्रिहल्य इति ॥ ६६० ॥

बाल०—धर्म । धर्मपथ्यर्थन्यायेभ्योऽनपेतेऽर्थे यरामो भवति । धर्मादनपेतं धर्म्यं तस्मादभ्रष्टमित्यर्थः । ग्रामादनागतमित्यादौ यथा ग्रामादेरपादानावागमननिषेधेऽपि पञ्चमी भवति तथेहापि । एवं पथोऽनपेतं पथ्यं न्यायादनपेतं न्याय्यमिति ॥ ६६१ ॥

बाल०—छन्द । छन्दसा निर्मितमित्यर्थे छन्दशब्दस्य यरामेण सह छन्दस्यं साधु स्यात् । इच्छापर्यायश्छन्दशब्द इह गृह्यत इति जयादित्यः ॥ ६६२ ॥

बाल०—उर । तेन निर्मितेऽर्थे उरस इत्यस्मात् केशवणः पक्षे यरामश्च । उरसा निर्मितः औरस इत्यादिद्वयं । पुरुषोत्तममतेनैव वाच्यं द्रढयन्नाह पुत्रे त्विति । अयं हृद्य इति वशीकरणायान्येसां बान्धवैः सह मन्त्रणे वशीकाराय शास्त्रोक्तमन्त्रविशेषेच वर्त्तत इत्यपि पुरुषोत्तममतं । अत्र पुत्र एव बाच्यः सर्वैर्मन्तव्य इति जयादित्यश्च ॥ ६६३ ॥

**६८४. हृदयात् प्रिये ।**

हृद्यः । पुत्रे त्वभिधानमिति पुरुषोत्तमः । वशीकरणमन्त्रे चायम् ।

**६८५. मत्यो मतस्य करणे, जन्यो जनस्य जल्पे, हल्यो हलस्य कर्षे ।**

**६८६. तत्र साधुः ।**

सामन्यो विप्रः । एवं ब्रह्मण्यः सभ्यः ।

**६८७. प्रतिजनादे नृंसिह खः ।**

प्रातिजनीनः सांयुगीनः ।

---

**अमृता०**—६८४. हृदयादिति । प्रिये वाच्ये हृदयात् यरामः स्यात् । हृदयस्यप्रियः हृद्यो देशः, हृद्यं वृन्दावनमिति । हृद्य शब्दस्य वाच्यसाधारणत्वेऽपि किञ्चिद् वैशिष्टचमाह प्राचीनमतोट्टङ्कनेन—पुत्रेत्वमिधानमिति । पुत्रेऽर्थेत्वयं भवतीति तन्मतम् । वशींकरण-मन्त्रे चायं हृदयशब्दो वर्त्तत इत्यर्थः ।

**अमृता०**—६८५. मत्य इति । मतस्य ज्ञानस्य करणे साधने वाच्ये यरामेण सह मतस्य मत्यः साधुः स्यात् । जनस्य जल्पे कथने वाच्ये यरामेण सह जनस्य जन्यः साधुः स्यात् । तथा हलस्य कर्षे कर्षणे वाच्ये यरामेण सह हलस्य हल्य इति साधुर्भवति। सर्वत्रार्थनियमो निपात फलं ज्ञेयः ।

**अमृता०**—६८६. तत्रेति । तत्र साधुरित्यर्थे सप्तम्यन्तान्नाम्नो यरामः स्यात् । सामनि वेदेविशेषे साधुः कुशल इति सामन्यः । एवं ब्रह्मणि वेद सामान्ये साधुः ब्रह्मण्यः, सभायां साधुः सभ्यः ।

**अमृता०**—६८७. प्रतीति । तत्र साधुरित्यर्थे प्रतिजनादेरुत्तरे नृंसिह खः स्यात् । जनं जनं प्रति प्रतिजनमित्यव्ययीभावः, तत्र साधुः प्रातिजनीनः । एवं संयुगे संग्रामे साधुः

---

**बाल०**—हृद । हृदयशब्दात्तस्य प्रिये वाच्ये यरामो भवति । हृदयस्य प्रियः हृद्य इति । हृदयस्यहृल्लेखनासयोर्याणोश्चेत्यनेनात्र हृदयस्य हृदादेशः ॥ ६८४ ॥

**बाल०**—मत्यो । क्रियतेऽनेनेति टनः करणाधिकरणयोरिति टनः । मतस्य ज्ञानस्य करणं साधनं तस्मिन् वाच्ये यरामेण सह मतस्य मत्यः साधुर्भवति । जन्यो । जनस्य जल्पेऽर्थे यरामेण साकं जनशब्दस्य जन्य इति साधुः स्यात् जनस्य जनने इत्येके । हल्यो । हलस्य कर्षे कर्षेण वाच्ये हलशब्दस्य यरामेण साकं हल्यः साधुः स्यात् ॥ ६८५ ॥

**बाल०**—तत्र । तत्र साधुरित्यर्थे तच्छब्दनिर्देशान्नाम्नो यरामः स्यात् । साधुः प्रवीणो योगसमर्थो वा सामवेदस्तस्मिन् साधुः सामान्य इति । ब्रह्म वेदैकदेशस्तस्मिन् साधुः ब्रह्मण्य इति । अनो येतु भावकर्मणोरेवेति नियमात् । नान्तस्य नत्वनीपोरित्यनेनात्र द्वये नरामस्य हरो न स्यात् । सभा परिषत् तस्यां साधुः सभ्य इति ॥ ६८६ ॥

## ६९८. भक्ताण्णः ।

भाक्तास्तण्डुलाः ।

## ६९९. परिषदो ण्य-केशवणौ ।

पारिषद्यः पारिषदः ।

## ७००. कथादे र्माधव ठः ।

काथिकः वैकथिकः वार्त्तिकः । एवं गौडिकः सांग्रामिकः ।

## ७०१. पथ्यतिथि-वसति-स्वपतिभ्यो माधवढः ।

पाथेयम् ।

---

सांयुगीनः । प्रतिजन संयुग इदंयुग समयुग परयुग परकुल अमुष्यकुल सर्वजन विश्वजन पञ्चजन महाजनेति प्रतिजनादि गंण ।

अमृता०—६९८. भक्तादिति । तत्र साधुरित्यर्थे भक्तशब्दात् णरामः स्यात् । भक्ते भोजने साधुरिति भाक्तस्तण्डुलः ।

अमृता०—६९९. परीति । तत्र साधुरित्यर्थे परिषत् शब्दात् ण्य केशवणौ भवतः । परिषदि पार्श्वदे (पार्षदे) साधुः पारिषद्य इति द्वयम् । केशवत्वात् पारिषदी ।

अमृता०—७००. कथादेकिति । उक्तार्थे कथादेरुत्तरे माधव ठः स्यात् । कथायां साधुः काथिको वक्ता । विकथा कुत्सितकथा, तत्र साधुर्वैकथिकः । वृत्तौ साधुः वार्त्तिक इत्यादि । कथा विकथा वृत्ति वितण्डा जनवाद कुष्टवाद संग्रह गुणगण आयुर्वेदगुड संग्राम कुल्माष सत्तु अपूप इक्षु मांसौदन वेणु संघात संक्राम प्रवास संवाह उपवास इति कथादिः ।

अमृता०—७०१. पथीति । तत्र साधुरित्यर्थे पथि-अतिथि वसति स्वपतीत्येतेभ्यो माधव ढः स्यात् । पथि साधु पाथेयं । एवमातिथेयं वासतेयं स्वापतेयमिति ।

---

बाल०—प्रति । तत्र साधुरित्यर्थे प्रतिजनादेरुत्तरो नृसिंहखः स्यात् । जनं प्रति प्रतिजनमित्यव्ययीभावसिद्धं, तत्र साधुः प्रातिजनीन इति । तथा संयुगं युद्धं तस्मिन् साधुः सांयुगीन इत्यादि । प्रतिजन संयुग इदयुग सत्ययुग परयुग परकुल अमुष्यकुल सर्वजन विश्वजन पञ्चजन महाजनेति प्रतिजनादि रेकादश । अदस आय न कुलिकादिष्विति निषेधादमुष्येत्यस्य षष्ठ्या महाहरो न स्यात् ।। ६९७ ।।

बाल०—भक्ता । तत्र साधुरित्यर्थे भक्तशब्दात् णरामः स्यात् ।। ६९८ ।।

बाल०—परि । तत्र साधुरित्यर्थे परिषच्छब्दाण्ण्यकेशवणौ भवतः ।। ६९९ ।।

बाल०—कथा । तत्र साधुरित्यर्थे कथादेरुत्तरो माधवठो भवति । कथायां साधुः काथिक इत्यादि । कथा विकत्था वृत्ति गुड संग्राम विकथा निसुधा वितण्डा कुष्णविद जनवाद संग्रह गुणगण आयुर्वेद कुल्माष शक्तु अपूप मांसौदन इक्षु वेणु बोध सङ्घात प्रवास निवास उपवासेति चतुर्विंशतिः कथादिः ।। ७०० ।।

**७०२. सतीर्थः समानगुरौ समानदर्शने च, समानोदर्यसोदर्यौ समानमातृके ।**

**७०३. सगर्भादौ भवः ।**

**सगर्भ्यं सयूथ्यं अग्र्यम् ।**

---

अमृता०—७०२. सतीर्थ इति । समान एको गुरुर्यस्य स समानगुरुः; समानं दर्शनं न्यायवेदान्तादि यस्य स समान दर्शनः; तत्र तत्र वाच्ये सतीर्थ इति यप्रत्ययेन साधुः स्यात् । समाना माता यस्य स समातृकः, तस्मिन्नर्थे यप्रत्ययेन समानोदर्यसोदर्यौ साधू भवतः । समानस्य सो निपात फलम् । सतीर्थः समानोपाध्यायः शिष्यः, समानदर्शनाध्यायी शिष्यश्चेत्यर्थः । सोदर्यः समानोदर्यश्च सहोदरभ्रातेत्यर्थः ।

अमृता०—७०३. सगर्भादाविति । सगर्भादौ भव इत्यर्थे सगर्भादिरुत्तरे यरामः स्यात् । समानो गर्भ्य इति वाक्ये विभाषा रूपगोत्रेत्यादिना समानस्य सादेशः—सगर्भः, तत्रभव इत्यर्थे यरामः,—सगर्भ्यं । यूथेन सह वर्त्तमानः सयूथः तत्रभवं सयूथ्यं, अग्रे भवं अग्र्यम् ।

---

बाल०—पथ्य । तत्र साधुरित्यर्थे पथ्यतिथिवसतिस्वपतिभ्यो माधवढः स्यात् । पथि साधु पाथेयमिति । एवमातिथेयं वासतेयं स्वापतेयं । स्वापतेयमिति धनस्याख्यानं हि धनपतेरुपकारकं स्वभावादेव क्लीवत्वमित्यन्ये ।। ७०१ ।।

बाल०—सती । समानो गुरुर्यस्य समानगुरुस्तस्मिन् समानं दर्शनं मीमांसादि यस्य स समानदर्शनस्तस्मिन् । समाने तीर्थे एकस्मिन् गुरौ साधु रित्यर्थे समानगुरौ समानदर्शनेच शिष्ये वाच्ये समानतीर्थस्य यरामेण सह सतीर्थ्यः साधुर्भवति । अस्मिन् वाच्ये यप्रत्ययः समानस्य सादेशश्च निपातफलं । समानतीर्थात्तत्र वासिनीति जुमरसूत्रं । एतदर्थस्त्वस्माकं ग्रन्थकृतां नाभीष्टः । सतीर्थः समानगुरुकुलवासिनीत्यनेन सिद्धसतीर्थेन सह सतीर्थ्य इत्यस्यार्थभेदात् । समा । समाना माता यस्य स समानमातृकस्तस्मिन् । समानोदरे साधुरित्यर्थे समानमातृके शिशौ वाच्ये यरामेण सार्द्धं समानोदरस्य समानोदर्य—सोदर्याविति द्वौ साधू भवतः । यप्रत्ययेनोदर्ये सिद्धे, विभाषा रूपगोत्रेत्यत्रोदर्यशब्दस्य ग्रहणात् समानस्य वैकल्पिकः सादेशः । तत्र शयितरि समानोदर्यसोदर्यावित्यन्ये ।। ७०२।।

बाल०—सग । सगर्भादौ भव इत्यर्थे सगर्भादेर्यरामः स्यात् । समानो गर्भ इति वाक्ये विभाषा रूपगोत्रेत्यत्र गर्भस्य ग्रहणात् तस्मिन् परे समानस्य सादेशः सगर्भ इति ततस्तत्र भव इति यरामः सगर्भ्यमिति । यूथेन सह वर्त्तमानः सयूथ इत्यत्रतु पीताम्बरे सह शब्दस्य यूथे परे सभावस्ततस्तत्र भव इति यरामः सयूथ्यमिति । क्रमदीश्वरेणतु सयूथसगर्भाभ्यां सहचार्यनुजयोरिति सूत्रं विधाय सयूथ्यः सगर्भ्य इत्युदाहृत्य छान्दसमिदमित्युक्तं । तट्टीकाकृताच समानो यूथ इति वाक्ये समानस्यात्र सविधानं छान्दसमित्यत आह छान्दसमिदमित्युक्त्वा कथं तर्हि भाषायामेतल्लक्षणं कृतमिति पूर्वपक्षीकृत्य क्वचिच्छान्दसा अपि भाषायां प्रयुज्यन्ते इति भावः इति समाधानामपि कृतमिति ज्ञेयं । अग्रे भवः अग्र्यमिति स्पष्टम् ।। ७०३ ।।

**७०४. अग्रीयाग्रियौ साधू ।**

**७०५. दूताद् भाग-कर्मणोः ।**

दूत्यम् ।

**७०६. अस्त्यर्थे मधु-माधवादय श्चैत्रादिषु ।**

साधवः । मध्वस्त्यत्र मधु श्चैत्रः, माधवो वैशाखः । नभांसि मेघाः सन्त्यत्र नभाः श्रावणः, नभस्यो भाद्रः । एवं सहा मार्गः, सहस्य पौषः, तपो माघः, तपस्यः फाल्गुनः ।

**७०७. इष प्रभृतयो मासि संज्ञाशब्दाः ।**

इषः ऊर्ज्जः शुचिः शुक्रः ।

---

अमृता०—७०४. अग्रीयेति । तत्र भव इत्यर्थे छ-यरामाभ्यां सह अग्रशब्दस्य अग्रीयाग्रियौ साधू भवतः ।

अमृता०—७०५. दूतादिति । भाग-कर्मणो र्वाच्ययोः दूतशब्दात् यरामः स्यात् । दूतस्यं भागोऽशः कर्मवा दूत्यम् । सूत्रत्रितयं छन्दोऽधिकारे पठितमपि क्वचिच्छान्दसा अपि भाषया उच प्रयुज्यन्त इत्युक्तेरस्मद्ग्रन्थकृतापि धृतम् ।

अमृता०—७०६. अस्त्यर्थं इति । अस्तीत्यर्थे चैत्रादि मासेषु वाच्येषु केशवणप्रभृतिप्रत्ययेन सह मधु प्रभृतीनां मधुमाधवादयः साधवो भवन्ति । मधुश्चैत्र इत्यत्र केशवणस्य हरो निपातफलम् । माधव इत्यत्र यरामापवादः केशव णो निपातफलम् । नभा इत्यादौ यरामहरो निपात फलम् । नभस्य इत्यादौ तु प्रयुक्त एव यरामः । सहांसि बलानि सन्त्यत्र सहाः ।

अमृता०—७०७. इषेति । अस्तर्थे मासि वाच्ये इष प्रभृतयः संज्ञाशब्दाः निपाइट् सूर्योऽस्त्यत्र इषः आश्विनः । उर्क् सूर्यः स अस्त्यस्मिन् ऊर्ज्जः कार्त्तिकः । शुगस्त्यत्र शुचिः आषाढ़ः । शुग्वास्त्यत्र शुक्रः ज्येष्ठः ।

---

बाल०—अग्री । तत्र भव इत्यर्थे छयरामाभ्यां साकमग्रशब्दस्याग्रीयाग्रियाविति द्वौच साधू भवतः ॥ ७०४ ॥

बाल०—दूता । भावकर्मणोर्वाच्ययोर्दूताद्यरामो भवति । दूतस्य भावः कर्म वा दूत्यमिति ॥ ७०५ ॥

बाल०—अस्त्य । अस्त्यर्थे चैत्रादिषु मासेषु वाच्येषु केशवणादिना सह मध्वादीनां मधुमाधवादयः प्रयोगाः साधवो भवन्ति । मधुरित्यत्रास्त्यर्थे केशवणहरो निपातफलं । माधव इत्यत्र केशवण एव निपातफलं । सहांसि बलानि सन्त्यत्र सहा इत्यादिद्वयं । तपांसि सन्त्यत्र तपा इत्यादिद्वयं । नभ आदिभ्यस्त्रिभ्यः क्रमेण श्रावणादिष वाच्येषु यरामहर यरामाविति निपातफलम् ॥ ७०६ ॥

**७०८. शिवताति प्रभृतयः शिवादिकरे ।**

आदिना यमतातिः विष्णुतातिः । षष्ठीकृष्णपुरुषेण साधवः । प्राग् हितादि निवृत्तम् ।

**७०९. प्राक् क्रीताच्छरामः, उद्वयगवादिभ्यो घरामः ।**

क्रीतात् प्राक् छो वाच्यः । उद्वयात् गवादेश्च पुनर्यराम इति ।

**७१०. गवादौ नाभेर्नभश्च, शुनः सङ्कर्षण स्तस्य त्रिविक्रमश्च वा, ऊधस ऊधनश्च ।**

नाभ्यर्था प्रकृतिः काष्ठम् नभ्यम्, शुने हितं शून्यं शुन्यम्, ऊधन्यम् ।

---

अमृता०—७०८. शिवेति । करोतीति करः । शिवादिकरेऽर्थे शिवताति प्रभृतयः साधवो भवन्ति । शिवस्यकरः कारीत्यर्थः, ताति प्रत्ययेन साधुः आदि पदं विवृणोति—आदिनेति । यमस्य करः यमताति—रित्यादौ । प्राग्घिताद् यराम इत्यधिकारः समाप्तः ।

अमृता०—७०९. प्रागिति प्रत्ययाधिकारः पुनरयम् । तेन क्रीत इत्यतः प्रागर्थेषु छरामः स्यात्, तत्र उद्वयान्ताद् गवादेस्तु घरामो भवति ।

अमृता०—७१०. गवादाविति । वक्ष्यमाणहितार्थे विशेषा उच्यन्ते एते । गवादौ वर्त्तमानस्य नाभेः यरामः स्यात् नतु घरामः, तस्मिन् सति तस्य नभश्चादेशो भवति । गवादौ वर्त्तमानस्य शुनो यरामः, तत्र च तस्य सङ्कर्षणः स्यात्, तत्र च तस्य त्रिविक्रमो वा भवति । तथा गवादौ वर्त्तमानस्य ऊधसो यरामः तत्र च तस्य ऊधनादेशो भवति । नाभ्यर्थेति—रथैकदेशो नाभि रुच्यते, तस्यै हितार्था प्रकृतिः (नतु विकृता) काष्ठमिति यावत्—नभ्यम् । शुन्यं मांसम् । ऊधसे पशुस्तनायहितं ऊधन्यम् ।

---

बाल०—इष । अस्त्यर्थे मासि वाच्ये इष प्रभृतयः संज्ञाशब्दा निपात्यन्त इत्यर्थः । इषादिः सूर्यनामभेद इति । इषोऽस्त्यत्र इष इति केशवणहरो निपातफलं । एवमूर्जाद-यस्त्रयः । इषादयश्चत्वारो यथासङ्ख्यं आश्विनकार्तिकाषाढज्यैष्ठेषु वर्तन्ते ।। ७०७ ।।

बाल०—शिव । शिवादीनां करे वाच्ये षष्ठीकृष्णपुरुषसमासेन शिवतातिप्रभृतयः शब्दा साधवो भवन्ति । शिवस्य कर इति तातिप्रत्ययेन करार्थतातिशब्देन वा सह शिवस्य समासानन्तरं अन्तरङ्गत्वादेरित्यनेन षष्ठ्या महाहरे शिवतातिरिति । प्रभृतिशब्दास्या-द्यर्थत्वात् उदाहरणान्तराणि दर्शयति आदिनेति । यमस्य करो यमतातिः, विष्णोः करः विष्णुतातिरिति । एवं सोमताति-सूर्यतात्यादयो ज्ञेयाः । हितात् प्रागर्थान् समापयति प्राग्घितेति ।। ७०८ ।।

बाल०—प्राक् । स्वयं विवृणोति क्रीतादिति । क्रीतात् प्रागर्थेषु नाम्नश्छरामो वाच्यः । उद्वयान्तात् गवादेश्च पुनर्यरामो वाच्य इत्यन्वयः । पारिभाषिकोऽयं विभु रिति गम्यं । गवादेः कार्यान्तरसाधनानि विधिसूत्राण्याह गवादावित्यादि ।। ७०९ ।।

## ७११. हविरपूपादयश्च गवादिषु वा।

हविष्यं हविषीयं, आमिक्ष्यं आमिक्षीयं दधि, पुरोडास्यं पुरोडाशीयम्।
अपूपादेः—अपूप्यं अपूपीयं, तण्डुल्यं तण्डुलीयं, स्वर्य्याः स्वरीयाः।

## ७१२. कम्बल्यमूर्णाहलशते साधु।

## ७१३. तस्मै सितम्।

---

अमृता०—७११. हविरिति। हविः अपूपादयश्च गवादिषु वा वर्त्तन्ते। ततो गवादित्वेन यराम स्तदभावपक्षे छरामो भवति एभ्य इत्यर्थः। हविषे हितं हविष्यमित्यादि द्वयम्। हविरादौ आमिक्ष-पुरोडाशौ च वर्त्तेत इत्युदाहरति—आमिक्ष्यमित्यादि। तथा पृथुक अभ्यूष अर्गल मुसल सूप कटक कर्णक इष्टक स्थूण पाप अश्व पत्र इत्येते च अपूपादौ गण्यन्ते।

अमृता०—७१२. कम्बल्यमिति। ऊर्णायाः पलशते वाच्ये तस्मै हितार्थे यरामेण सह कम्बलस्त कम्बल्यमिति साधु भवति।

अमृता०—७१३. तस्मायिति। अर्थाधिकारः। स्वयं विवृतिमाह—अत्रार्थ इति। कृष्णाय हितमिति छः—कृष्णीयं। विष्णवे हितमिति विष्णव्यम्, उरामान्तत्वाद् यरामः, उद्वयस्य गोविन्दः। गव्यं महिष्यमिति गवादित्वाद् यरामः। नाम्ना तु क्वचिदिति तदन्त-

---

बाल०—गवा। गवादावित्यस्य त्रिष्वन्वयः। गवादौ वर्तमानस्य नाभेर्यरामस्तस्मिन् परे तस्य नभश्च स्यात्। गुनः। गवादौ वर्तमानस्य गुणो यरामस्तस्मिन् परे तस्य सङ्कर्षणः स्यात्। पुनस्तस्य सङ्कर्षणस्य त्रिविक्रमो वा स्यात्। ऊध्र। गवादौ वर्तमानस्य ऊध्रसो यरामस्तस्मिन् परे तस्य ऊधनश्च स्यात्। रथैकदेशो नाभिस्तस्यै हितार्था प्रकृतिर्यत् काष्ठं तदेव नभ्यं। एतदप्राण्यङ्गे एव, प्राण्यङ्गे तु नाभ्यं तैलमिति। ऊध्रसे हितं ऊधन्यमिति ॥ ७१० ॥

बाल०—हवि। हरिरपूपावादी येषां ते हविरपूपादयः। हविरादयोऽपूपादयश्च गवादिषु वा वर्तन्ते, तेन गवादित्वादेभ्यो यरामस्तदभावपक्षेतु छरामः स्यादिति भावः। हविषे हितं हविष्यमित्यादिद्वयं। हविरादित्वादामिक्षायै हितं आमिक्ष्यं आमिक्षीयं। दध्यत्र वाच्यपदं। पुरोडाशाय हितं पुरोडाश्यमित्यादिद्वयं। काकाक्षिगोलकन्यायेनात्रापि दधीति। वाच्यपदं दुग्धं वा। अपूपादेरिति रूपं दर्शयत इति शेषः। अपूपाय हितं अपूप्यमित्यादि। यथा तण्डुलादिद्वयमपुपादि। तथा। पृथुक अखुष अबोध किल्व कण्टक इक्षुन स्थुणा यूप प्रदीप दीप अश्वपदेत्येकादशापि ॥ ७११ ॥

बाल०—कम्ब। उर्णायाः पलशते वाच्ये तस्मै हितमित्यर्थे यरामेण सह कम्बलस्य कम्बल्यमिति साधु स्यात्! ऊर्णा पलशतादन्यत्र कम्बलीया ऊर्णा इति छ एव ॥ ७१२ ॥

अत्रार्थे यथाविहितं स्यात् । कृष्णीयं विष्णव्यं गव्यं महिष्यं इत्यादि । अतिगव्यादिच ।

**७१४. शरीरावयवाद् यरामः ।**

दन्त्यं कर्ण्यं । राजदन्त्यादि च ।

**७१५. खल-यव-माष-तिल-वृष-रथ-ब्रह्मभ्यो यरामः ।**

खल्यम् ।

**७१६. अजाविभ्यां थ्यः ।**

अजथ्यं अविथ्यम् ।

---

विधिरिहत्विष्यत इत्याह—अतिगव्यादि चेति । गामतिक्रान्तः अतिगुः तस्मै हितं अतिगव्यं, एवमतिमहिष्यमित्यादि च ।

**अमृता०**—७१४. शरीरेति । तस्मै हित मित्यर्थे शरीरावयववाचिनो नाम्नो यरामः स्यात्, छरामस्यापवादः । दन्तेभ्यो हितं दन्त्यं दन्तकाष्ठम् । कर्णाभ्यां हितं कर्ण्यं शलाकादि । एवं पाद्यं नस्यं नाभ्यमित्यादीनि । दन्तानां राजा राजदन्तः; तस्मै हितं राजदन्त्यमित्यादि च तदन्तविधिना स्यादेवेत्यर्थः ।

**अमृता०**—७१५. खलेति । तस्मै हितमित्यर्थे खलप्रभृति सप्तभ्यो यरामः स्यात् छरामापवादः । खलायहितं खल्यं । एवं यव्यं मास्यं तिल्यं वृष्यं रथ्यं ब्रह्मण्यम् । ब्रह्मण्यमित्यत्र तु न संसारहरा, भावकर्मणोरेव तत्र तद् विधानात् ।

**अमृता०**—७१६. अजेति । तस्मै हितमित्यर्थे अज शब्दात् अविशब्दाच्चथ्य प्रत्ययः स्यात् । अजाय हितं अजथ्यं, अवये हितं अबिथ्म् ।

---

**बाल०**—तस्मै । विवरणमत्रेति । अत्रार्थे इत्यस्मात् परं नाम्न इति प्रयोक्तव्यं, विहितमित्यस्मात् परं प्रत्यय इतिच । कृष्णाया हितं कृष्णीयमित्यत्रौत्सर्गिकश्छः । विष्णवे हितं विष्णव्यमित्यत्रतु उद्वयेत्यनेन यः पश्चात् उद्वयस्य गोविन्द इति गोविन्दः, ओद्वयस्याबावावित्यव । गवे हितं गव्यं महिषाय हितं महिष्यमितिद्वयेतु गवादित्वात् यः इत्यादीत्यादिपदेन मृगाय हितं मृग्यमित्यादि यथायथमुह्यं । नाम्नातु क्वचिदिति न्यायमङ्गीकृत्याह अतीति । गामतिक्रान्तः अतिगुस्तस्मै हितं अतिगव्यमित्यादिच ॥७१३॥

**बाल०**—शरी । तस्मै हितमित्यर्थे शरीरावयववाचकान्नाम्नो यरामः स्यात् । दन्तेभ्यो हितं दन्त्यं मार्जनद्रव्यादि । कर्णाभ्यां हितं कर्ण्यं शलाकादि । एवं पाद्यं नाभ्यमित्यादि । दन्तानां राजा राजदन्तः, तस्मै हितं राजदन्त्य मित्यादिच पूर्वोक्तातिगव्यादिवत् ॥ ७१४ ॥

**बाल०**—खल । तस्मै हितमित्यर्थे खलादिभ्यो यरामो भवति । खलाय हितं खल्यं । एवं यव्यं माष्यं तिल्यं वृष्यं रथ्यं । ब्रह्मण्यमित्यत्रतु भावकर्मणोरेवेति नियमात् संसारहरो न स्यात् ॥ ७१५ ॥

## ७१७. विश्वजनात्मभोगोत्तरपदेभ्यः खरामः ।

**विश्वजनीनः आत्मनीनः स्वभोगीनः मातृभोगीनः । क्षुभ्नादिरयं । भोगः शरीरमिति स्मृतिः ।**

## ७१८. पञ्चजनाच्च ।

**गायन-वादक-नर्त्तक-दासी-भण्डरतः खलु पञ्चजनीनः ।**

---

अमृता०—७१७. विश्वेति । भोग उत्तरपदं यस्य स भोगोत्तरपदः । तस्मै हित-मित्यर्थे विश्वजनात् आत्मनः भोगोत्तरपदाच्च खरामः स्यात् । विश्वजनाय हितः, खईनः—दिश्वजनीनः । एव आत्मने हितः अत्मनीनः, संसारहरस्तु न, आत्माध्वनोरखरामे इति निषेधात् । स्वस्य भोगः स्वभोगः स्ववपुः, तस्मै हितः स्वभोगीनः । क्षुभ्नादित्वन्नणत्व-मित्यर्थः ।

अमृता०—७१८. पञ्चेति । तस्मै हितमित्यर्थे पञ्चजनाच्च खरामः स्यात् । ननु कस्तावत् पञ्चजन इत्यपेक्षायामाह—गायनेत्यादि । संज्ञाशब्दोऽयम् । पञ्चजनाय हितः पञ्चजनीनः ।

---

बाल०—अजा । तस्मै हितमित्यर्थे अजाविभ्यामुत्तरः थ्यो भवति । अजाविभ्या-मित्यत्र सन्धिकरनेन गृन्थकृता अज अजा इति भेदराहित्यं सूचितं । तेन अजाय अजायै वा हितं अजथ्यमिति । अवये हितं अविथ्यम् ॥ ७१६ ॥

बाल०—विश्व । विश्वजनश्च आत्माच भोगश्च इत्युत्तरं पदं येषां ते विश्वजनात्म-भोगोत्तरपदास्तेभ्यः । तस्मै हितमित्यर्थे विश्वजनात् आत्मनो भोगोत्तरपदाच्च खरामः स्यात् । विश्वजनाय हितः विश्वजनीनः एवमुत्तरत्रापि यथायोग्यं वाक्यं कल्यम् । आत्मनीन इत्यत्र आत्माध्वनोरथराम इत्यनेन खरामादन्यत्र संसारहरविधानात्,संसारहरो न स्यात् । स्वस्य भोगः स्वभोगस्तस्मै हितः स्वभोगीनः । मातृभोगीन इत्यस्य क्षुभ्नादित्वमस्तीत्याह क्षुभ्नादिरिति । मातृभोगीन इत्यस्मात् परः आचार्यभोगीन इति क्वचित् क्वचित् पुस्तके दृश्यते, तस्य क्षुभ्नादित्वस्त्वाख्यातपादे उक्तमेवेत्यतोऽत्रावश्यका-भावः । भोगशब्दस्य शरीरवाचित्वं प्रसिद्धमित्याह भोग इति । भोगान्तेति कर्तव्ये भोगोत्तरपदेति यत् कृतं तत् बहुपूर्वनिरासार्थं तेन बहुभोगीय इति ॥ ७१७ ॥

बाल०—पञ्च । तस्मै हितमित्यर्थे पञ्चजनाच्च खरामः स्यात् । पञ्चजननिरूपण-पूर्वकं पञ्चजनीन इत्यस्य वाच्यतां दर्शयति गायनेति । गायनादिभण्डान्तेषु पञ्चसु यो रतस्तत्परः स एव पञ्चजनीन इत्यर्थः । एतेन गायनवादकनर्तकदासीभण्डरूपेभ्यः पञ्चभ्यो जनेभ्यो रतो हित इति वाक्यं सूचितं । विश्वजनादेरिति वक्ष्यमाणरीत्या तद्धितार्थ-विराम्या अस्याः श्यामरामान्तःपातिता स्वीकार्या: ॥ ७१८ ॥

### ७१९. सर्वजनान्माधवठश्च ।

सार्वजनिकः सर्वजनीनः ।

### ७२०. महाजनान्माधव ठः ।

माहाजनिकः । विश्वजनादेः श्यामरामेऽभिधानम् ।

### ७२१. सर्वात णरामो वा ।

सार्वः सर्वीयः ।

---

**अमृता०**—७१९. सर्वेति । तस्मै हितमित्यर्थे सर्वजनशब्दात् खरामो माधवठश्च भवतः । सर्वश्चासौ जनश्चेति सर्वजन स्तस्मै हित इति श्यामरामः, सार्वजनिक इति द्वौ ।

**अमृता०**—७२०. महेति । उक्तार्थे महाजनशब्दात् माधवठः स्यात् । पूर्ववत् श्यामरामे महाजनः, तस्मैं हितो माहाजनिकः । एतदन्तविश्वजनादेः श्यामराम समासे एव तत्तत् प्रत्ययाभिधानं भवति, तत्र भोगोत्तरपदं वर्जयित्वेति बोध्यं, तस्य पीताम्बरेऽभिधानात्, श्यामरामासङ्गतेश्च । तस्मात् विश्वस्यजन इति षष्ठी कृष्णपुरुषेविवक्षिते तु छराम एव—विश्वजनीय इत्यादि ।

**अमृता०**—७२१. सर्वादिति । उक्तार्थे सर्वशब्दात् णरामो वा भवति, पक्षे प्राप्त छराम एव ।

---

**बाल०**—सर्व । तस्मै हितमित्यर्थे सर्वजनान्माधवठः स्यात्, चकारात् खरामोऽपि । सर्वश्चासौ जनश्चेति सर्वजनस्तस्मै हितं सार्वजनिक इत्यादिद्वयम् ॥ ७१९ ॥

**बाल०**—महा । तस्मै हितमित्यर्थे महाजनान्माधवठः स्यात् । महांश्चासौ जनश्चेति महतः संसारस्याराम इत्यनेन महाजन इत्यस्मै हितः महाजनिक इति । एतदन्त विश्वजनादेः श्यामरामसमास एव हितार्थे प्रत्ययस्याभिधानं कथनमित्याह विश्वेति । यद्यपि सामान्येन विष्णुजनादेरित्युक्तं, तथापि जनान्तसाहचर्यात् भोगोत्तरपदं वर्जयित्वा पञ्चजनादीनां त्रयाणां ग्रहणं, भोगोत्तरपदस्य श्यामरामासङ्गतेश्च । एतेभ्यो जनान्तेभ्यः कर्मधारयसमासे हितार्थे प्रत्ययोत्पत्त्यभिधानं चन्द्र-जयादित्य-वर्द्धमानानां मतं । समानाधिकरण इति भाष्योक्तं बहुव्रीहावपि भवतीति सूचनार्थं यतो बहुव्रीहिर्नाम समानाधिकरणानां भवतीति । अतएव विश्वस्य जन इति षष्ठीकृष्णपुरुषनिष्पन्नात् विश्वजनात् हितार्थे ऊत्सर्गिकछरामेण विश्वजनीय इति । एवं पञ्चजनीय इत्यादिच ॥ ७२० ॥

**बाल०**—सर्वा । तस्मै हितमित्यर्थे सर्वशब्दात् णरामो वा स्यात् पक्षे सामान्यतश्छरामश्च ॥ ७२१ ॥

## ७२२. पुरुषात् बधविकारसमूहेषु तेन कृते च माधव ढः ।

पौरुषेयो बधादिः ।

## ७२३. मानव-चरकाभ्यां नृसिंहखः ।

मानवीनं चारकीणम् । हितं निवृत्तम् ।

## ७२४. विकृते स्तदर्थायां प्रकृतौ ।

यथाविहितं स्यात् । धूपाय इदं धूपीयमगुरु । एवं यूपीयं दारु, शङ्कव्यं काष्ठम् ।

---

**अमृता०**—७२२. पुरुषादिति । तस्मै हितमित्यर्थे बध-विकार-समूहेषु वाच्येषु तेन कृते च वाच्ये पुरुषशब्दान्माधव ढः स्यात् । छरामस्य केशवणस्य चापवादः । पुरुषाय हितः, हितरूपो बध इत्यर्थः पौरुषेयः । एवं पुरुषाय हितः—हितरूपो विकारः, हितरूपः समूहः, तथा पुरुषेण कृतः पौरुषेयो ग्रन्थ इति ।

**अमृता०**—७२३. मानवति । तस्मै हितमित्यर्थे मानव-चरकाभ्यां नृसिंहखः स्यात् । मानवाय हितं मानवीनमित्यादि । निवृत्तोऽयमर्थाधिकारः ।

**अमृता०**—७२४. विकृतेरिति । तदर्थायां विकृतिनिमित्तायां प्रकृतो वाच्यायां विकृतिरूपान्नाम्नो यथा विहितं प्रत्ययः स्यात् । प्रकृतिः उपादानं, विकृतिः स्वरूपादन्यथाभावः । धूपाय इदमिति तादर्थ्ये चतुर्थी । अत्र अगुरुः प्रकृतिः, धूपो विकृतिः । प्राक् क्रीताच्छराम इति छ प्रत्ययः । शङ्कव्यमिति—उद्वयगवादिभ्य इत्यनेन शङ्कु शब्दाद् यरामः, उद्वयस्येति गोविन्दः ।

---

**बाल०**—पुरु । तस्मै हितमित्यर्थे वधविकारसमूहेषु वाच्येष तेन पुरुषेण कृतेच वाच्ये पुरुषशब्दान्माधवढः स्यात् । तस्मै हिते ऊत्सर्गिकछे बधादिषु तस्येदमित्यनेन केशवणे, तेन कृते इत्यर्थे तेन कृत; ग्रन्थ इत्यनेन केशवणे प्राप्ते विधानं । पुरुषाय हितरूपबधादिरिति निर्गलितार्थः ॥ ७२२ ॥

**बाल०**—मान । तस्मै हितमित्यर्थे मानवचरकाभ्यां नृसिंहखो भवति । हितं समापयति हितमिति ॥ ७२३ ॥

**बाल०**—विकृ । तदर्थायां विकृतिनिमित्तायां प्रकृतौ वाच्यायां विकृतिरूपान्नाम्नो यथाविहितं प्रत्ययः स्यात् । स्वरूपतोऽन्यथाभावो विकृतिः । प्रकृतिरत्रोपादानकारणं, तच्च समानजातीयमभिन्नसन्तानवृत्तिकारणं । धूपाय इदमिति यदर्थमन्यत्तस्माच्चतुर्थीति चतुर्थी धूपोऽत्र विकारवाची तस्योपादानकारणमगुरु तस्य तदर्थाच गम्यत इति । एवमुत्तरत्रापि । धूपीयमित्यादिद्वये प्राक् क्रीतात् छराम इति छः । शङ्कव्यमित्यत्र उद्वयेति यः । अतदर्थायान्तु धानानां यवा इति धानशब्दो विकारवाचको भवत्येव तदुपादानकारणमपि यवा भवन्तिः किन्तु कारणेन संबन्धमात्रमत्र विवक्षितं न तादर्थ्यमितीह प्रत्ययो न स्यात् ।

**७२५. छदि-र्वलिभ्यां माधव ढः ।**

छादिषेयाणि तृणानि, वालेया स्तण्डुलाः । औपधेयन्तु स्वार्थ एव ।

**७२६. ऋषभोपानद्भ्यां ण्यः ।**

आर्षभ्यो वत्सः, औपानह्यं मुञ्जादि ।

**७२७. चर्मविकृतेः केशव णः ।**

बाध्रं वारत्रं चर्म । विकृतेरिति निवृत्तम् ।

**७२८. तदस्य तस्मिन् वा स्यादिति ।**

अत्रार्थद्वये यथोक्तं स्यात् । प्रकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः । प्रसादोऽस्यां भूमौ स्यात् प्रासादीया भूमिः ।

---

**अमृता०**—७२५. छदिरिति । तदर्थायां प्रकृतौ वाच्यायां विकृतिरूपात् छदिस् शब्दात् बलिशब्दाच्च माधव ढः स्यात्, छरामापवादः । छदिस् शब्द उणादिनिष्पन्नः । छदिषे इमानि छादिषेयाणि । बलये इमे बालेयाः । उपधीयत इत्युपधिः रथाङ्गं दास, तदेवेति स्वार्थे औपधेयंदारु ।

**अमृता०**—७२६. ऋषभेति । तदर्थायां विकृतौ वाच्यायां विकृति रूपाभ्यां ऋषभो-पानद्भ्यां ण्यरामः स्यात् । ऋषभः षण्ड, तस्मै अयं आर्षभेयो गोवत्सः । एवमौपानह्यम् ।

**अमृता०**—७२७. चर्मेति । तदर्थायां विकृतौ वाच्यायां चर्मरूप विकृतेः केशवणः स्यात् । वध्रिश्चर्मकोषः, तस्मै इदं वाध्रम् । वरत्रा चर्मपेटिका तस्यै इदं वारत्रम् । विकाराधिकारो निवृत्तः ।

**अमृता०**—७२८. तदिति । तदस्य स्यात्, तदस्मिन् स्यात् इत्यर्थद्वये नाम्नो यथा-विहितं प्रत्ययः स्यात् । प्राकारः प्राचीर इत्यर्थः । प्राकारीया इत्यादि द्वये प्राक् क्रीताच्छ इति छः ।

---

**बाल०**—छदि । तदर्थायाः प्रकृतो वाच्यायां विकृतिरूपात् छदिस्शब्दात् बलिशब्दाच्च माधवढो भवति । छद अपवारण इत्यस्माण्यन्तादौणादिक इस्णेर्हरोऽनि-डादौ रामधातुक इति णेर्हरः । उणादेर्बाहुल्याच्छाद इत्यस्य वामनश्च । छदिषे इमानि छादिषेयाणीति ईश्वरहरिमित्रकङेभ्यः प्रत्ययेत्यनेन इसः यत्वं । उप । स्वार्थे स्वस्मिन्नर्थे एव माधवढेन सह उपधाया औपधेयं पुनः साधु स्यात् ॥ ७२५ ॥

**बाल०**—ऋष। तदर्थायां विकृतौ वाच्यायां विकृतिरूपात् ऋषभशब्दादुपानहशब्दाच्च णारामः स्यात् । आर्षभ्यो वत्स इति ऋषभाय यो वत्सः पुष्यते स एवोच्यते इति प्रकृतिविकृतित्वं । एवमुपानह्यम् ॥ ७२६ ॥

**बाल०**—चर्म । तदर्थायां प्रकृतौ वाच्यायां चर्मरूपविकृतेः केशवणः स्यात् । बध्रिश्चर्मकोषस्तस्मै इदं बाध्रमिति वरत्रा चर्मपेटिका तस्यै इदं वारत्रमिति । विकृतिं समापयन्नाह विकृतेरिति ॥ ७२७ ॥

**७२९. परिखाया माधव ढः ।**

पारिखेयी भूमिः ।

**७३०. छश्च पूर्णावधिः, प्राग्वते माधवठः ।**

वति प्रत्ययात् प्रागर्थे माधवठो वाच्यः । गोपुच्छेन क्रीतं गौपुच्छिकं, पारायणं वर्त्तयति पारायणिकः ।

**७३१. तत्रार्हीयाः ।**

तेषु प्राग्वतीयेषु तदर्हतीति व्याप्य ये प्रत्यया येचार्थास्ते आर्हीया उच्यन्ते इत्यर्थः ।

**७३२. अथार्हीयेषु ।**

इतः परं तेनक्रीतमित्यादिषु तदर्हतीति पर्यन्तेष्वर्थेषु प्रत्यया वाच्या इत्यर्थः ।

**७३३. शताट् ठराम-यरामावशतात्मके ।**

अस्मादार्हीयेष्वेतौ स्याताम् । शतेन क्रीतादिः शतिकः शत्यः । अशता-

---

अमृता०—७२९. परिखाया इति । परिखा अस्यां स्यादिति पारिखेयी ।

अमृता०—७३०. प्रागितिप्रत्ययाधिकारः ।

अमृता०—७३१. तत्रेति परिभाषा सूत्रमिदम् । स्वयमेव विवृत्तम् ।

अमृता०—७३२. अथेति च परिभाषा अधिकारोऽपि । मूले विवृत्तम् ।

अमृता०—७३३. शतादिति । नशतं अशतं तदेवात्मा स्वरूपं यस्य सोऽशतात्मकः । शतात्मकाभिन्ने वाच्ये शतशब्दात् आर्हीयेष्वर्थेषु ठराम—यरामौ भवतः । तेषु एकतरमर्थं दर्शयति—शतेन क्रीतादिरिति । आदिपदेन—शतस्य निमित्तं संयोगोत् पातौ, शतस्य ईश्वर इत्याद्यार्हीयार्थेषु ठायरामावेव । प्रत्युदाहरति—शतमध्याया इत्यादि । निदानं

---

बाल०—तद । अत्रेति वृत्तौ यथोक्तमित्यस्मात् परं नाम्न इति प्रयोक्तव्यं । प्रभुर्विधिश्चायं । वाक्योदाहरणे स्पष्टे । प्राक् क्रीतात् छराम इत्यनेनात्र छः ।। ७२८ ।।

बाल०—परि । तदस्य तदस्मिन् वेत्यर्थे परिखाया माधवढो भवति । परिखा अस्यां वेति पारिखेयीति । प्राकारो ब्राह्मणस्येत्यत्रतु न स्यादनभिधानात् ।। ७२९ ।।

बाल०—छश्च । पूर्णावधिः पूर्णपर्यन्तः छश्चेत्यनुवर्त्तते । प्राग्व । स्वयं विवृणोति वतीति । प्रागर्थेष्वित्यस्मात् परं नाम्न इति योज्यं । पारिभाषिकाविमौ विभु चेति ।।७३०

बाल०—तत्रा । वृत्तिमाह तेष्विति ।। ७३१ ।।

बाल०—अथा । इदमपि स्वयं विवृणोति इत इति ।। ७३२ ।।

स्मके किं,—शतमध्यायाः परिमाणस्य शतकं निदानम् । एवं शतश्लोक परिमाणं शतकं काव्यम् । इतः पूर्वं तदन्तविधिरिष्यते । गव्यं अतिगव्यं, दन्त्यं राजदन्त्यं । तदर्हतीत्यत उत्तरन्तु संख्यापूर्वपदानामलुकीति स्मृतिः । पारायणिकः द्वैपारायणिकः । अत्रार्हीया इत्यधिकृत्य ।

---

वैद्यशास्त्रम् । शतकमिति—संख्याया अतिशदन्ताया इति कप्रत्ययो वक्ष्यते । तदन्तविधिरिष्यत इति तत्र तत्रोक्तमेव । तदर्हतीत्यत उत्तर मुत्तरस्मिन्नर्थे अलुकि तद्धितालुकि विषये एव संख्यापूर्वपदानां सम्बन्धे तदन्तविधिरिष्यत इति स्मृतिः स्मर्त्तव्यमित्यर्थः । तद्धित लुकि तु सनेष्यते । तदेवोदाहरति—पारायणिक इति द्वयम् । पारायणं वर्तयतीति वाक्यं दर्श्यते । अधिकारमाचष्टे—अत्रार्हीया इति । प्रत्यया दर्श्यन्त इति शेषः ।

---

बाल०—शता । न शतं अशतं तदेवात्मा स्वरूपं यस्य सोऽशतात्मकस्तस्मिन् । शतात्मकाद्भिन्ने वाच्येऽस्मात् शतशब्दादार्हीयेष्वर्थेषु एतौ ठराम-यरामौ भवतः । तत्र प्रथमार्थं दर्शयति शतेनेति । व्यावृत्त्युदाहरणद्वयमाहाशतेति । अशतात्मक इति किं किमर्थं शतात्मकं यर्हि स्यात्तर्हि न स्यादित्यर्थः । निदानं वैद्यशास्त्रं । एवमिति । शतं श्लोकाः परिमाणमस्येति वाक्यं योज्यं । एतेनैतल्लभ्यते यत्र प्रकृत्युक्तायाः सङ्ख्यायाः प्रत्ययवाच्यस्य सङ्ख्येयत्वं न भवति तत्रायं प्रवर्त्तते । यत्र पुनः प्रकृत्युक्तायाः सङ्ख्यायाः प्रत्ययवाच्यस्य सङ्ख्येयत्वं भवति, तत्रायं न प्रवर्त्तते इति दिक् । तथाच शतिक इत्यादिद्वयस्य वाच्यः पटादिरेवेति प्रत्ययवाच्यस्य पटादेः स्वसम्बन्धसङ्ख्येयत्वं शतशब्देन नोच्यते । किंच, तेन क्रीतस्य पटादेरेव । शतकं निदानमित्यत्र प्रकृत्या शतशब्देन उक्तायाः सङ्ख्यायाः प्रत्ययवाच्यस्य निदानस्य सङ्ख्येयत्वं । एवं शतकं काव्यमित्यत्रापि । तत्र द्वये सङ्ख्याया अतिशदन्ताया इत्यनेन कप्रत्ययः । इदानी छात्राणां सुखप्रतिपत्त्या आर्हीयेभ्यः पूर्वापरप्रकरणपरिज्ञानाय क्रमेण पारिभाषिकविधिवाक्यद्वयमाह इत इति । तदेवान्तं यस्य तत् तदन्तं तदन्तादपि विधिस्तदन्तविधिः । इतस्तेन क्रीतादिरित्यस्मात् पूर्वं पूर्वस्मिन्नथ वर्णे विधौ तदन्तस्य कार्यं स्यान्नाम्नातु क्वचिदिति न्यायेन यस्मान्नाम्नो यो विधिः कृतस्तन्नामान्तादपि स विधिरिष्यत इत्यर्थः । इष्यत इति वर्त्तमानप्रयोगेण इतः पूर्वं यथा यस्मान्नाम्नो यो विधिर्विहितस्तन्नामान्तादपि स इष्टस्तद्वत्तेन कृतादावपीष्यत इति केषाञ्चिन्मतं । उद्वयगवादिभ्य इत्यनेन यप्रत्ययान्तं गव्यमित्यादिकमुक्तं । तेन कृतादावपि चेत् साधनं तदा गोद्विसर्वेश्वराभ्यामिति वक्ष्यमाणेन यरामान्तं ज्ञेयं । तदर्हेति । संख्या पूर्वपदं येषां ते संख्यापूर्वपदास्तेषां । इष्यत इति पूर्वतोऽनुसज्यते । तदर्हतीत्यत उत्तरमुत्तरस्मिन्नर्थेऽलुकीति तद्धितालुकि विषये संख्यापूर्वपदानां सम्बन्धे यस्मान्नाम्नो यो विधिर्वक्ष्यते, तन्नामान्तादपि स इष्यत इति स्मृतिश्चिन्तनीयेत्यर्थः । पारायणं वर्त्तयतीति प्राग्वतेर्माधवठ इति ठः । पारायणिकः । एवं द्वे पारायणे वर्त्तयति द्वैपारायणिक इति आदिसर्वेश्वरस्येति वृष्णीन्द्रः । अत्रेति, अत्र प्रकरणे आर्हीया इत्यधिकृत्य अधिकारं कृत्वा प्रत्यया दर्श्यन्त इति शेषः ॥ ७३३ ॥

## ७३४. संख्याया अतिशदन्तायाः करामः ।

आर्हीयेषु—पञ्चकः । कति-गण-बहु-तावदादीनामपि संख्यायात्वात् गणकः । अतिशदन्तायाः किम्—साप्ततिकः पाञ्चाशतकः ।

## ७३५. कत्यादेरप्रतिषेधः ।

कतिकः ।

## ७३६. तावदादेरिको वा ।

तावतिकः तावत्कः ।

---

अमृता०—७३४. संख्याया इति । नविद्यते तिः शतौ अन्ते यस्याः सा अतिशदन्ता, तथाभूतायाः संख्याया आर्हीयार्थेषु करामो भवति, ठरामापवादः । पञ्चभिः क्रीतः पञ्चकः । कत्यादीनामपि संख्यात्वेनगणनात् कतिभिः क्रीतः कतिक इति । एवं गणकः बहुकः तावत्क इत्यादयः । साप्ततिक इति—सप्तत्या क्रीतादिरिति प्राग्वते र्माधवठः, अइद्वयस्येति इरामहरः । पञ्चाशत्क इति तान्तत्वेन ठस्य कः ।

अमृता०—७३५. कत्यादेरिति । आर्हीयार्थेषु कत्यादेरुत्तरे कप्रत्ययस्य प्रतिषेधो न भवति । ति अन्तत्वादतिशदन्ताया इत्यनेन निषेधे प्राप्ते विधानम् । एवं यातिकः ततिक इति ।

अमृता०—७३६. तावदादेरिति । आर्हीयार्थेषु तावत् प्रभृतिभ्य उत्तरे इको वा भवति, पक्षे विहितः करामः । एवं यावतिकः यावत्कः ।

---

बाल०—सङ्ख्या न विद्यते तीतिशदितिच अन्ते यस्याः सा अतिशदन्ता तस्याः । वृत्तिमाह आर्हीति । त्यन्तशदन्तवर्जितायाः सङ्ख्याया उत्तर आर्हीयेषु तेन क्रीतादिष्वर्थेषु करामः स्यात् । पञ्चभिः क्रीतादिः पञ्चक इति । लोके कत्यादीनां सङ्ख्यात्वप्रतीतेरभावात् हेतुमुखेन सङ्ख्यात्वं प्रतिपादयन्नाह कतीति । कत्यादीनामपि सङ्ख्याकत्वादनेन करामः स्यादिति भावः । तेन गणेन क्रीतादिः गणकः । एवं बहुकः । अतिशदन्तायाः किं किमर्थं तिशदन्ता यहि स्यात्तर्हि न स्यात् । सप्ततिभिः क्रीतादिरिति प्राग्वतेर्माधवठ इति ठः । अ-इद्वयस्येति इरामहरः साप्ततिकः । पञ्चाशद्भिः क्रीतादिरिति पूर्ववन्माधवठः । पञ्चादि-सन्तादुसन्तादित्यत्र तान्तादिति ठस्य कः पाञ्चाशत्क इति । अत्र पाञ्चाशतिक इति क्वचित् पुस्तके दृश्यते, सोऽपि शश्वदादिगणकल्पनाद्भवितुमर्हति ॥ ७३४ ॥

बाल०—कत्या । आर्हीयेष्वर्थेषु कत्यादेरुत्तरस्मिन् कप्रत्ययस्याप्रतिषेधो भवति । त्यन्तत्वात् प्रतिषेधे प्राप्ते तस्य पुनर्निषेधोऽयं । कतिभिः क्रीतादिः कतिक इति । एवं यतिकः ततिक इत्यादि ॥ ७३५ ॥

बाल०—ताव । आर्हीयेष्वर्थेषु तावदादेरुत्तर इको वा भवति पक्षे कश्च । तावदादेः सङ्ख्यात्वात् पूर्वेण नित्ये के प्राप्ते विकल्पार्थं वचनं । तावद्भिः क्रीतादिः तावतिकः पक्षे तावत्क इति । एवं यतिकः यावत्क इति ॥ ७३६ ॥

**७३७. शतमान-विंशतिक:-सहस्र-वसनात् केशव णः ।**

शातमानं वासनम् ।

**७३८. विंशतिक-विंशक-त्रिंशतिक-त्रिंशकाः ।**

साधवः ।

**७३९. कंसार्द्धाभ्यां केशव ठः ।**

कंसः परिमाणभेदः । कंसिकः कंसिकी, आर्द्धिकः आर्द्धिकी ।

**७४०. कार्षापणस्य कार्षापणिक-प्रतिकौ साधू ।**

---

**अमृता०**—७३७. शतेति । शतमानञ्च विंशतिकञ्च सहस्रञ्च वसनञ्चेति तथा, सर्वेऽपि रामकृष्णा विभाषयैकवद् भवन्तीति वचनादेकत्वम् । एभ्य आर्हीयार्थेषु केशवणः स्यात् करामापवादः । एवं वैंशतिकं साहस्रमिति ।

**अमृता०**—७३८. विंशतिकेति । आर्हीयार्थेषु क-कच् प्रत्ययाभ्यां सह विंशति त्रिंशतो विंशतिकादयश्चत्वारः साधवो भवन्ति । विंशतिकः त्रिंशतिक इत्यत्र अतिशदन्ताया इति निषेधेन करामेऽप्राप्ते निपात विधानम् । कच् पक्षे असंज्ञायामेव निपातफलं तथा त्रिंशतः संसारहरं बाधित्वा केवल तरामहरच । विंशक इति तु विंशते स्तिहरचितीति सिद्धएव ।

**अमृता०**—७३९. कंसेति । आर्हीयार्थेषु कंसार्द्धाभ्यां केशवठः स्याद । कंसः परि-माणभेद इति—चतुः षष्टि पलपरिमित इति यावत् ।

**अमृता०**—७४०. कार्षेति । कार्षापणेन क्रीत इत्याद्यर्थे केशव ठेन सह कार्षापणिक इति तथा तस्य प्रत्यादेशेन प्रतिक इति च द्वौ साधू भवतः ।

---

**बाल०**—शत । शतमानञ्च विंशतिकञ्च सहस्रञ्च वसनञ्चेति विग्रहे सर्वेऽपि रामकृष्णा विभाषयैकवद्भवन्तीति स्मरणादेकवदत्र शतमानविंशतिकसहस्रवसनमिति । शतमानादिकादार्हीयेष्वर्थेषु केशवणः स्यात् । करामापवादोऽयं । शतमानेन सुवर्णेन क्रीतादि शातमानमिति । एवं वैंशतिकं साहस्रं वासनं ॥ ७३७ ॥

**बाल०**—विंश । आर्हीयेष्वर्थेषु क-कच्प्रत्ययाभ्यां सह विंशतित्रिंशतोर्विंशतिका-दयश्चत्वारः साधवो भवन्ति । अत्र प्रकृतिद्वये क-कच्प्रत्ययविधानं कचि ति-तकारयोर्हरश्च निपातफलं । विंशतेस्तिहरश्चितीत्यनेन विंशतिक इति सिद्धेऽपि, संसारस्य हरश्चितीत्यने-नतु त्रिंशतोऽद्भागस्य हरे प्राप्ते निपातनात् सर्वमविरुद्धं । विंशत्या क्रीतादिरिति वाक्यञ्च पूर्ववत् कल्प्यं ॥ ७३८ ॥

**बाल०**—कंस । आर्हीयेष्वर्थेषु कंसार्द्धाभ्यां केशवठः स्यात् । यद्यपि सामान्यतः परिमाणभेद इत्युक्तं, तथापि चतूःषष्ट्या पलैः कंस इति ज्ञेयः कंसेन क्रीतादिः कंसिक इत्यादि ॥ ७३९ ॥

## ७४१. शूर्पात् केशवणो वा

शौर्पं शौर्पिकम् ।

## ७४२. अध्यर्द्धपूर्वात् त्रिराभ्याश्चार्हीयस्य महाहरोऽसंज्ञायाम् ।

अध्यर्द्धशतेन क्रीतं अध्यर्द्धशतं । त्रिराम्याः—द्विशतं त्रिशतं । असंज्ञायां किम्—पाञ्चकपालिकः पटः ।

## ७४३. कार्षापण-सहस्र-सुवर्ण-शतमानेभ्यो वा ।

---

**अमृता०**—७४१. शूर्पादिति । आर्हीयार्थेषु शूर्प शब्दात् केशवणो वा स्यात्, पक्षे अधिकारलब्धो माधव ढः । शूर्पेण क्रीतमित्यादि वाक्यम् ।

**अमृता०**—७४२. अध्यर्द्धेति । असंज्ञायां सत्यां आर्हीयार्थेषु अध्यर्द्धं पूर्वं यस्य तादृशात् शब्दात् तथा त्रिराम्योश्चोत्तरस्यार्हीयप्रत्ययस्य महाहरो भवति । शतस्यार्द्धं अर्द्धशतं, तधिकृत्य अध्यर्द्धशतं, तेन क्रीतमित्यर्थः । द्विशतमिति—द्वाम्यां शताभ्यां क्रीतमिति तद्धितार्थे त्रिरामी । प्रत्युदाहरति—पाञ्चकपालिक इति । पञ्चभिः कपालैः क्रीत इत्याद्यर्थे प्राग्वते माधव ठः ।

**अमृता०**—७४३. कार्षेति । असंज्ञायामार्हीयार्थेषु अध्यर्द्धपूर्वेभ्य स्तथा त्रिरामीभूतेभ्यश्च कार्षापणादिभ्य श्चतुर्भ्यः केशव ठादे र्महाहरो वा स्याद् । अध्यर्द्धं कार्षापणमित्यादि द्वये कार्षापणस्येत्यादिना प्राङ्निपातित केशव ठस्य मपाहरः, पक्षे स्थितिश्च । द्वाभ्यां कार्षापणाभ्यां क्रीतमिति द्विकार्षापणिकमिति द्वयम् । अध्यर्द्धं सहस्रमिति द्वये

---

**बाल०**—कार्षा । कार्षापणेन क्रीतादिरित्यर्थे केशवठेन सार्द्धं कार्षापण शब्दस्य कार्षापणिकः पक्षे तस्य प्रत्यादेशेन प्रतिकश्चेति द्वौ साधू भवतः ॥ ७४० ॥

**बाल०**—शूर्पा । आर्हीयेष्वर्थेषु शूर्पशब्दात् केशवणो वा स्यात् पक्षे प्राग्वतेरित्यनेन माधवठश्च । द्व्याढकन्तुभवेद्द्रोणो द्विद्रोणं शूर्पमेवच । शूर्पेण क्रीतादिरिति वाक्यन्तु पूर्ववत् ॥ ७४१ ॥

**बाल०**—अध्य । असंज्ञायां गम्यमानायां आर्हीयेष्वर्थेषु अध्यर्द्धं पूर्वं यस्य तस्मात् त्रिराम्याश्चोत्तरस्यार्हीयप्रत्ययस्य महाहरो भवति । शतस्य अर्द्धमर्द्धशतं तदधिकृत्य अध्यर्द्धशतं तेन । शतात् ठयरामावित्यनेनात्र ठयरामयोर्महाहरः । त्रिराम्या इति रूपं दर्श्यत इति शेषः । द्वाभ्यां शताभ्यां क्रीतादीति तद्धितार्थे त्रिरामी । पूर्ववदत्रापि ठयरामयोर्महाहरः । असंज्ञायां किं किमर्थं संज्ञा यर्हि स्यात्तर्हि न स्यात् । पञ्चभिः कपालैः क्रीतादिरिति प्राग्वतेर्माधवठ इति ठः ॥ ७४२ ॥

**बाल०**—कार्षा । असंज्ञायां गम्यमानाया मार्हीयेष्वर्थेषु अध्यर्द्धपूर्वेभ्यः कार्षापणादिभ्य आर्हीयस्य केशवठादेर्महाहरः स्यात् । अध्यर्द्धकार्षापणेन क्रीतादिरिति । अध्यर्द्धकार्षापणमित्यादिद्वये कार्षापणस्येत्यनेन निपातसिद्धकेशवठस्य महाहरः पक्षे

आर्हीयस्य महाहरः। अध्यर्द्धकार्षापणं अध्यर्द्धकार्षापणिकं, द्विकार्षापणं द्विकार्षापणिकं, अध्यर्द्धसहस्रं अध्यर्द्धसाहस्रमित्यादि।

## ७४४. द्वित्रि पूर्वान्निष्काद्विस्ताच्च वा।

द्विनिष्कं द्विनैष्किकम्। एष्वत्तरपदवृष्णीन्द्रः। अथ महाहर विषये प्रत्ययविशेषाः,—

## ७४५. विंशतिकात् खरामः।

अध्यर्द्ध विंशतिकीनः।

---

शतमानविंशतिकेत्यादिना विहित केशवणस्य महाहरः, पक्षे तस्य स्थितिश्च। इत्यादि पदेन द्विसहस्रं द्विसाहस्रं, अध्यर्द्धसुवर्णं अध्यर्द्धसौवर्णं, अध्यर्द्धशातमानं, द्विशातमान-मित्यादि। संख्यायाः परिमाणस्येत्युत्तरपदवृद्धिः।

अमृता०—७४४. द्वित्रीति। असंज्ञायामार्हीयार्थेषु द्वित्रिपूर्वात् निष्कात् तथा द्वि-त्रिपूर्वात् विस्ताच्च माधवठस्य महाहरो वा भवति। द्वाभ्यां निष्काभ्यां क्रीतादि द्विनि-ष्कमिति द्वयम्। संख्यायाः परिमाणस्येत्युत्तरपद वृष्णीन्द्रः। एवं त्रिनिकं त्रिनैष्किकं, द्विविस्तं द्विवैस्तिकं, त्रिविस्तं त्रिवैस्तिकमिति।

पारिभाषिकविधानमुपदिशति—अथेति।

अमृता०—७४५. विंशतिकादिति। आर्हीयार्थेषु महाहर विषये अध्यर्द्धपूर्वात् त्रिरामीभूताच्च विंशतिकात् खरामः स्यात्, विधानसामर्थ्यादेव महाहरस्तु न भवति। अध्यर्द्धविंशतिकीनः। एवं द्विविंशतिकीन इत्यादि च।

---

स्थितिश्च। द्वाभ्यां कार्षापणाभ्यां क्रीतादिरिति द्विकार्षापणिकमित्यादिद्वयेतु ठस्य स्थितिः, पक्षे महाहरश्च। अध्यर्द्धसहस्रेण क्रीतादि अध्यर्द्धसहस्रमित्यादिद्वये शतमानविंशतिकेत्यनेन विहितकेशवणस्य पक्षे स्थितिश्च। इत्यादीत्यादिपदेन द्विसहस्रं। अध्यर्द्धशतमानं अध्यर्द्धशातमानं। द्विशतमानं द्विशातमानं। सुवर्णस्यतु प्राग्वतेरित्यनेन विहितमाधवठस्य महाहरः पक्षे स्थितिश्च, तेन अध्यर्द्धसुवर्णं अध्यर्द्धसौवर्णिकं। द्विसुवर्णं द्विसौवर्णिकं ॥७४३॥

बाल०—द्वित्रि। असंज्ञायमार्हीयेष्वर्थेषु द्वित्री यूर्वौ यस्मात्तथाभुतान्निष्कात् विस्ताच्च आर्हीयस्य महाहरो वा स्यात्। द्वाभ्यां निष्काभ्यां क्रीतादि द्विनिष्कमित्यादिद्वयं। अत्रापि प्राग्वतेर्माधवठस्य महाहरः पक्षे स्थितिश्च। एवं त्रिनिष्कं त्रिनैष्किकं, द्विविस्तं द्विवैस्तिकं, त्रिविस्तं त्रिवैस्तिकं। भङ्ग्यात्रोत्तरपदस्य वृष्णीन्द्रं स्मारयति एष्विति। एषु अध्यर्द्धसाहस्रमित्यादिषु उत्तरपदवृष्णीन्द्रः स्यात्। संख्यायाः परिमाणस्याशाणस्येत्या-दिनेति शेषः। पारिभाषिकविधिवाक्यमाह अथेति। प्रत्ययविशेषा इत्यस्मात् दर्श्यन्त इति शेषः॥ ७४४॥

### ७४६. खारी काककीभ्यामीकः ।

अध्यर्द्धखारीकं द्विकाकिनीकम् ।

### ७४७. केवलाभ्यश्च ।

खारीकं काकिनीकम् ।

### ७४८. पण-पाद-माष-शतेभ्यो यरामः ।

अध्यर्द्धपण्यम् ।

---

**अमृता०**—७४६. खारीत। अध्यर्द्धं पूर्वाभ्यां त्रिरामीनिष्पन्नाभ्याञ्च खारीकाकिनीभ्या मार्हीयार्थेषु महाहरविषये ईक प्रत्ययः स्यात्, माधवठस्य महाहर विषयेऽयमीको विहितः।

**अमृता०**—७४७. केवलाभ्यामिति। आर्हीयार्थेषु केवलाभ्याञ्च खारीकाकिनीभ्यामीकः स्यात्। खर्य्या क्रीतं खारीकमित्यादि, पूर्ववत् माधवठस्य महाहर बिषये हि विधिरयम्।

**अमृता०**—७४८. पणेति। अध्यर्द्धपूर्वेभ्यः त्रिरामीभूतेभ्यश्च पणादि चतुर्भ्यः आर्हीयार्थेषु महाहर विषये यरामः स्यात्। पणादयः सर्वेपरिमाण वाचकाः। एवं द्विपण्यं अध्यर्द्धपाद्यं द्विपाद्यं अध्यर्द्धमाष्यं द्विमाष्यं अध्यर्द्धं शत्यं द्विशत्यमित्यादि।

---

**बाल०**—विंश। आर्हीयेष्वर्थेषु महाहरविषये अध्यर्द्धं पूर्वात् त्रिरामीनिष्पन्नाच्च विंशतिकात् खरामः स्यात्। अध्यर्द्धं विंशतिकीन इति अध्यर्द्धं विंशतिकेन क्रीतादिरित्यर्थः। एवं द्विविंशतिकीन अध्यर्द्धपूर्वादित्यनेन केशवणस्य महाहरविषयेऽत्र खरामः ॥ ७४५ ॥

**बाल०**—खारी। आर्हीयेष्वर्थेषु महाहरविषये अध्यर्द्धं पूर्वाभ्यां त्रिरामीनिष्पन्नाभ्याञ्च। खारीकाकिनीत्येताभ्यामीको भवति। अध्यर्द्धखार्या क्रीतादि अध्यर्द्धं खारीकमित्यादिद्वयं। एवं अध्यर्द्धं काकिनीकं द्विकाकिनीकं। अत्रापि प्राग्वतेर्माधवठस्य महाहरविषये ईकः स्यात् ॥ ७४६ ॥

**बाल०**—केव। आर्हीयेष्वर्थेषु केवलाभ्याञ्च खारीकाकिनीभ्यामीको भवति। महाहरप्रकरणपाठान्महाहरविषयेऽत्र ईकः स्यात्। खार्या क्रीतादि खारीकमित्यादिद्वयं। खारीकाकिन्यो परिमाणविशेषौ ॥ ७४७ ॥

**बाल०**—पण। अध्यर्द्धपूर्वेभ्यस्त्रिरामीसिद्धेभ्यश्च पणपादमाषशतेभ्य आर्हीयेष्वर्थेषु महाहरविषये यरामो भवति। विंशतिगण्डात्मकः पणः। अध्यर्द्धं पणेन क्रीतादि अध्यर्द्धं पण्यं। तथा द्विपण्यं। पणादिभिः परिमाणवचनैः साहचर्यात् परिमाणवाचकस्य पणपादशब्दस्यात्र ग्रहणं नतु प्राण्यङ्गवाचकस्य तेनाध्यर्द्धं पाद्यं द्विपाद्यमित्यत्र पादस्य गादिष्वित्यनेन ये परे पदादेशो न स्यात्। एवमध्यर्द्धं माष्यं द्विमाष्यं अध्यर्द्धं शत्यं द्विशत्यं। एषु सर्वत्रैव पूर्ववट्ठरामस्य महाहरविषये यरामविधानं ॥ ७४८ ॥

### ७४९. शाण-शताभ्यां वा ।

अध्यर्द्धशाण्यं अध्यर्द्धशाणम् ।

### ७५०. द्वित्रिपूर्वाभ्यां केशवणश्च वा ।

द्विशाण्यं द्विशाणं द्वैशाणम् । महाहर विषया निवृत्ताः ।

### ७५१. तेन क्रीतम् ।

अत्रार्थे प्राग्वतीया माधवठादयो ज्ञेयाः । सप्तत्या क्रीतं साप्ततिकं, नैष्किकं, मौद्गिकं, शत्यं शतिकं, द्विकं त्रिकम् ।

---

अमृता०—७४९. शाणेति । अध्यर्द्धपूर्वाभ्यां त्रिरामीसिद्धाभ्याञ्च शाणशताभ्यां आर्हीयार्थेषु महाहर विषये यरामो वा भयति । तस्य महाहरश्च । शाणः परिमाणविशेषः । एवं द्विशाण्यं द्विशाणं, अध्यर्द्धशत्यं अध्यर्द्धशतं, द्विशत्यं द्विशतमिति ।

अमृता०—७५०. द्वित्रीति । आर्हीयार्थेषु महाहरविशये द्वित्रीपूर्वाभ्यां शाण–शताभ्यां केशवणश्च वा स्यात्, पक्षे यरामो प्रत्ययमहाहरश्च ।

अमृता०—७५१. तेनेति । आर्हीयार्थेषु तेन क्रीतमित्यर्थे नाम्नो यथास्वं माधव-ठादयः प्रत्ययाः स्युः । साप्ततिकमित्यादौ प्राग्वते माधवठः । शत्यमित्यादौ शतात् ठ-यरामौ, द्विकमित्यादौ संख्याया अतिशदन्ताया इति कः ।

---

बाल०—शाण । आर्हीयेष्वर्थेषु महाहरविषये अध्यर्द्धपूर्वाभ्यां त्रिरामीनिष्पन्नाभ्याञ्च शाणशताभ्यां यरामो वा स्यात् पक्षे तस्य महाहरश्च । शाणः परिमाणभेदः । अध्यर्द्धशाण्यमित्यादये वाक्यं पूर्ववत् । एवं द्विशाण्यं द्विशाणं । शतशब्दस्योदाहरणन्तु पूर्ववज्ज्ञेयं ।। ७४९ ।।

बाल०—द्वित्रि । आर्हीयेष्वर्थेषु महाहरविषये द्वित्री पूर्वौ याभ्यां ताभ्यां शाणशताभ्यां केशवणो वा भवति, चशब्दात् पक्षे तस्य महाहरोऽपि । द्वाभ्यां शाणाभ्यां क्रीतादि द्विशाण्यमित्याद्युदाहरणं त्रयं । इदानीं महाहरविषयान् प्रत्ययान् समापयन् क्रमेणार्हीयार्थान् आर्हीयप्रत्ययांश्च दर्शयितुमाह महाहरेति ।। ७५० ।।

बाल०—तेन । वृत्तिमाह अत्रेति । अत्रार्थे इत्यस्मात् परं यथायोग्यमिति योज्यं । तथाहि, तेन क्रीतमित्यर्थे करणभूततच्छब्दनिर्दिष्टान्नाम्नो यथायोग्यं प्राग्वतेर्माधवठादयो भवन्ति । ननु येन यत् क्रीतं तत्तस्य मूल्यं भवतीति मूल्येनास्याभेदात् मूल्येन क्रीतमिति कृतेऽप्यत्र प्राग्वतेर्माधवठादयः सिध्यन्त्येव कथं तेनेति सामान्यनिर्देशः, मैवं, उच्यते । यद्यपि वास्तवोऽर्थभेदा नास्ति, तथापि विवक्षा विद्यत एव अथवा अर्थभेदोऽपि विद्यत एव यतो यत् सप्तत्यादिना क्रीतं तत्र क्रायकस्य स्वीकारः प्रतीयते, यस्यतु सप्तत्यादि मूल्यं तत्र व्यवस्थामात्रं प्रतीयते नतु क्रायकस्य स्वीकारः, विशेषतस्तु मूल्येन क्रीतमिति यदि कृतं

## ७५२. तस्य निमित्तं संयोगोत्पातौ ।

अत्र चार्थे माधवठादयो ज्ञेयाः । शतस्य निमित्तमध-मर्णेन संयोगः शत्यः शतिकः । शुभाशुभसूचक- चेष्टादिरुत्पातः । तत्र यथा—सहस्रस्य निमित्तमक्षि-स्पन्दनं साहस्रम् ।

## ७५३. गो-द्विसर्वेश्वराभ्यां यरामो नतु संख्यापरिमाणाश्वादेः ।

**गो निमित्तं संयोग उत्पातो वा गव्यः । एवं धन्यः स्वर्ग्यः यशस्यः आयुष्यः । संख्यादेस्तु पञ्चानां निमित्तं पञ्चकः प्रास्थिकः । अश्वादेः— आश्विकः हास्तिकः ।**

---

**अमृता०**—७५२. तस्येति । तस्य निमित्तं संयोगोत्पातौ इत्यर्थे नाम्नो यथा योग्यं माधवठादयो भवन्ति । संयोगस्योदाहरणमाह—शतस्येति । उत्पातं व्याख्याति—शुभा॰ शुभेति । तत्रोदाहरति—सहस्रस्येति सहस्रस्य प्राप्तये क्षयाय वाक्षिनिष्पन्दनमित्यर्थः ।

**अमृता०**—७५३. गविति । तस्य निमित्तं संयोगोत्पातावित्यर्थे गो शब्दात्, द्वि- सर्वेश्वर युक्ताच्च नाम्नो यरामः स्यात्, संख्यातः परिणामतः तथा अश्वादे स्तु यरामो न भवति । गव्य इति उद्वयस्येति गोविन्दः । धनस्य निमित्तं संयोग उत्पातो वा धन्यः । एवं स्वर्ग्यं प्रभृतयश्च । प्रत्युदाहरति—पञ्चानामित्यादि । अश्व हस्तिन् अश्मन् रथ गण ऊर्णा उमा वसु वर्षं भङ्ग हि अश्वादिः ।

---

तदा मूल्यादन्यत्र लवेन क्रीतं हस्तेन क्रीतमित्यादौ न भवेयुर्मुल्यस्याप्रतीतेः । साम्प्रतिक- मित्यादित्रिके प्राग्वतेर्माधवठ इति ठः । शतामित्यादिद्वयेतु शताद् ठयरामाविति यठरामौ । द्विकमित्यादिद्वये पुनः संख्याया अतिशदन्ताया इति कः ॥ ७५१ ॥

**बाल०**—तस्य । विवरणेमत्रेति । अत्र चार्थे इत्यस्मात् परं नाम्नो यथायोग्यं प्राग्वतेरिति पूरणीयं । संयोगोऽत्र योगसम्बन्धः । उत्पातं निरूपयति शुभेति । एवम्भूत- चेष्टादिरुत्पातः स चात्रवाह्वक्षादिष्पन्दनरूपः । तत्र यथेति उदाह्रियत इति शेषः ॥७५२॥

**बाल०**—गो । संख्याच परिमाणञ्च अश्व आदिर्यस्य सच सर्वेऽपि रामकृष्णा इत्यनेनैकवत्वात् संख्यापरिमाणाश्वादिस्तस्मात् । तस्य निमित्तं संयोगोत्पातावित्यर्थे गोशब्दात् द्विसर्वेश्वराच्च यरामः स्यात्, संख्यापरिमाणाश्वादेस्तु न स्यात् । धन्य इति धनस्य निमित्तमित्यादिः पूर्ववत् । संख्यादेस्त्वित्यत्रादिपदेन परिमाणस्य ग्रहणं । निमित्तमित्यस्मात् संयोगोत्पाताविति योज्यं । पञ्चक इति संख्याया अतिशदन्ताया इति कः । प्रास्थिक इति प्रस्थशब्दात् प्राग्वतेर्माधवठ इति ठः । एवमाश्विक इत्यादिषु । अश्व हस्तिन् अश्मन् रथ गण ऊर्णा उमा भट्ट वर्षा बभ्विति दश अश्वादिः ॥ ७५३ ॥

**७५४. पुत्राच्छ-यरामौ ।**

पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयः पुत्र्यः ।

**७५५. सर्वभूमि-पृथिवीभ्यां केशवणः ।**

सर्वभूमेर्निमित्तमित्यादि सार्वभौमः । अनुशतादि–रयं । पार्थिवः ।

**७५६. ईश्वर इत्यर्थे च ।**

सार्वभौमः पार्थिवः ।

**७५७. लोक-सर्वलोकाभ्यां माधवठो विदिते ।**

लोकिकः सार्वलौकिकः । अनुशतादिरयम् ।

---

**अमृता०**—७५४. पुत्रादिति । तस्यनिमित्तं संयोगोत्पातावित्यर्थे पुत्र शब्दात् छरामो यरामश्च भवतः ।

**अमृता०**—७५५. सर्वेति । उक्तार्थे सर्वभूमि—पृथिवीभ्यां केशवणः स्यात् । सार्वभौम इत्यत्र उभयोः पदयो वृष्णीन्द्रे हेतुमाह—अनुशतादिरिति ।

**अमृता०**—७५६. ईश्वर इति । सर्वभूमि–पृथिवीभ्यां तस्येश्वर इत्यर्थे च केशवणः स्यात् । सर्वभूमेरीश्वरः सार्वभौमः । एवं पार्थिवो राजा ।

**अमृता०**—७५७. लोकेति । तत्र विदिते ज्ञाते इत्यर्थे लोक-सर्वलोक शब्दाभ्यां माधवठः स्यात् । लोके विदितः प्रकाशितो लौकिकः । एवं सार्वलौकिक इति । उत्तरत्र अनुशतादित्यादुभयपद वृष्णीन्द्रः ।

---

**बाल०**—पुत्रा । तस्य निमित्तं संयोगोत्पातावित्यर्थे पुत्रशब्दाच्छरामयरामौ भवतः ॥ ७५४ ॥

**बाल०**—सर्वे । तस्य निमित्तं संयोगोत्पातावित्यर्थे सर्वभूमिपृथिवीभ्यामुत्तरः केशवणो भवति । सार्वभौम इत्यत्रानुशतादित्वादुभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्र इत्याह अन्विति । पार्थिव इति पृथिव्या निमित्तं संयोगोत्पातावित्यर्थः ॥ ७५५ ॥

**बाल०**—ईश्व । तस्येश्वर इत्यर्थे सर्वभूमिपृथिवीभ्यां केशवणः स्यात् । सर्वभूमेरीश्वरः सार्वभौम इति । एवं पार्थिव इतिच ॥ ७५६ ॥

**बाल०**—लोक । विदिते ख्याते वाच्ये लोक सर्वलोक इत्येताभ्यां माधवठो भवति । लोके विदितः लौकिकः । सार्वलौकिक इत्यत्रानुशतादित्वादुभयपदयोर्वृष्णीन्द्र इत्याह अन्विति ॥ ७५७ ॥

**७५८. वात-पित्त-श्लेष्म-सन्निपातेभ्यः शमन-कोपनयोः ।**

वातस्य शमनं कोपनं वा वातिकम् ।

**७५९. तस्य वापः ।**

अत्रार्थे यथा विहितं स्यात् । उप्यतेऽस्मिन्निति वापः । प्रस्थस्य वापः क्षेत्रं प्रास्थिकं । एवं द्रौणिकम् ।

**७६०. पात्रात् केशवठः ।**

पात्रिकं क्षेत्रं, पात्रिकी भूः ।

**७६१. तदस्मिन् वृद्धि रायो लाभः शुल्क उपदा वा दीयते ।**

---

**अमृता०**—७५८. वातेति । शमन-कोपनयोरर्थयो र्वातादिभ्य श्चतुर्भ्यो माधवठः स्यात् । एवं पैत्तिकं श्लैष्मिकं सान्निपातकमिति ।

**अमृता०**—७५९. तस्येति । स्वयमेव वृत्तिमाह—अत्रार्थ इति । वाप शब्दं व्युत्पादयति—उप्यत इति । डुवप वीजतन्तु सन्ताने इति धातोः—कर्तृवर्जितकारके चे त्यनेनाधिकरणे घण्, क्षेत्रमिति फलितार्थः । प्रस्थस्येति प्रस्थपरिमित वीजं लक्ष्यते, अन्यथा परिणामस्य प्रस्थस्य वपना सम्भवात् । एवं द्रौणिक मित्यादौ च बोध्यम् ।

**अमृता०**—७६०. पात्रादिदि । तस्य वाप इत्यर्थे पात्र शब्दात् केशवठः स्यात्, माधवठापवादः । यद्यपि माधवठेन स एवं पात्रिक शब्दो निष्पद्यते तथापि न वृष्णीन्द्रहेतु तद्धित लक्ष्मीरित्यादिन प्राप्त पुंवद्भावनिषेधस्य खण्डनमत्र फलवैशिष्ट्यं ज्ञेयं, केशवठस्य वृष्णीन्द्रहेतुत्वाभावादिति ।

**अमृता०**—७६१. तदिति । तदिति सामान्येन नपुंसकम् वृद्धियादिकमभिधत्ते, तथा

---

**बाल०**—वात । शमनकोपनयोर्वातादिभ्यो प्राग्वतेर्माधवठो भवति । यथा वातिकमिति तथा पैत्तिकं श्लैष्मिकं सान्निपातिकं ॥ ७५८ ॥

**बाल०**—तस्य । अत्रार्थे तच्छब्दनिर्दिष्टान्नाम्नो विहितमनतिक्रम्य प्राग्वतेर्माधवठादिः स्यादित्यर्थः । उप्यतेऽस्मिन्निति वाक्ये डु वप वीजतन्तुसन्ताने इत्यस्मात् कर्तृवर्जितकारके चेत्यनेन अधिकरणे घण् । एतेन तच्छब्दनिर्दिष्टात् प्रत्ययो भवन्नपि वापशब्दनिर्देशस्य वाचकः । अतएव वाप इत्यस्य वाच्यं क्षेत्रमिति दत्तं । प्रस्थस्येति प्रस्थपरिमाणवीजस्येत्युपचाराज्ज्ञेयं, प्रस्थस्य वपनासम्भवात् । एवं द्रौणिकमाढकिकमित्यादयो यथायथं ॥ ७५९ ॥

**बाल०**—पात्रा । तस्य वाप इत्यर्थे पात्रशब्दात् केशवठः स्यात् । पात्रं परिमाणविशेष इत्यस्मात् प्राग्वतेर्माधवठेऽपि कृते पात्रिकमित्यादिद्वयं सिध्यत्येव, तथापि केशवठविधानं यत्, तत् न वृष्णीन्द्रहेत्वित्यनेन प्राप्तपुम्वद्भावनिषेधखण्डनार्थं ॥ ७६० ॥

अत्रार्थे यथास्वं । तत्र वृद्धिरधमर्णादधिकादानं, आयोग्रामादिषु स्वामि-भागः, लाभो वाणिज्ययाधिकप्राप्तिः, शुल्को रक्षानिमित्तो राजभागः, उपदा तूत्कोच इति । पञ्चास्मिन् वृद्ध्यादीनामेकतरं दीयते पञ्चकः । एवं विंशतिकः ।

**७६२. चतुर्थ्यर्थे च ।**

**शतमस्मै वृद्ध्यादिकं दीयते शत्यो विप्रः ।**

**७६३. पूरणादर्द्धाच्च ठरामः ।**

**द्वितीयकः पञ्चमिकः अर्द्धिकः ।**

---

अस्मिन्निति च सम्प्रदानाविवक्षयाधिकरणम् । तद्वृद्धिरस्मिन्दीयते, तल्लाभो वा तदुपादा वेत्यर्थे तच्छब्द निर्दिष्टान्नाम्नो यथास्वं माधव ठादयो भवन्ति । प्रत्येक मर्थान् विवृणोति-वृद्धिरित्यादिना । उपदा तूत्कोच इति स्वकार्य साधनार्थं राजकर्मचारिभ्यो गोपने यदर्थ-दानं स उत्कोचः कथ्यते । पञ्चक इति—संख्याया अतिशदन्ताया इति कः ।

**अमृता०**—७६२. चतुर्थ्यर्थ इति । पूर्वोक्तस्यैव प्रपञ्चोऽयम् । तत्राधिकरणविवक्षया अस्मिन्नित्युक्तं, इह तु सम्प्रदानं विवक्षितमितिभेदः । तेन तद्वृद्धि रस्मै दीयते यल्लाभो वेत्यादिष्वर्थेषु शतात् ठ यरामौ । अत्र विप्र इति वाच्यप्रदाणेन पूर्वत्र त्वब्राह्मणो वाच्य इति ज्ञापितम्, अतएव तत्राधिकरण विवक्षेति विवेच्यम् ।

**अमृता०**—७६३. पूरणादिति । तदस्मिन् अस्मै वा दीयत इत्यर्थे पूरणप्रत्ययान्तात् अर्द्धशब्दाच्च ठरामः स्यात् माधवठापवादः । द्वयोः पूरणो द्वितीयः, सोऽस्मिन् अस्मै वा दीयते द्वितीयकः । एवं पञ्चानां पूरणः पञ्चम् इत्यादि ज्ञेयम् ।

---

**बाल०**—तद दीयत इत्यनेनात्र सम्प्रदानमपेक्ष्यते तेन तदस्मिन् वृद्ध्यादि दीयते तस्मैच वा दीयत इत्यर्थे तच्छब्दनिर्देशान्नाम्नो यथायोग्यं प्राग्वतेर्माधवठादयो भवन्ति । प्रत्येकमर्थान् स्वयं विवृणोति तत्रेत्यादिना । तत्र वृद्ध्यादिषु मध्ये वृद्धिस्तावदधमर्णात् खातकात् सकाशादुत्तमर्णस्य मूलधनादधिकग्रहणं । स्वामिभागः स्वामिग्राह्यो भागः । वाणिज्यया पटादीनां क्रयविक्रयेण सूत्रादिमूल्यादधिकप्राप्तिः । रक्षेति । वणिजादीनां रक्षानिमित्तो घट्टादौ राज्ञो दण्डरूपो भागः । उत्कोचो राजमन्त्र्यादिभ्यः स्वकार्यसाधनार्थं वेतनदानं । पञ्चेति वृद्ध्यादीनां मध्ये पञ्च एकतरमस्मिन् दीयतेऽस्मै वा दीयत इति पञ्चक इत्यत्र संख्याया अतीत्यनेन कः । शतिक इत्यत्र शताट्ठयरामाविति ठः ॥ ७६१ ॥

**बाल०**—चतु । पूर्वस्यैव प्रपञ्चोऽयं न पृथक् तेन दीयत इत्यनेन यदपेक्षितसम्प्रदानं तदेव चतुर्थ्यर्थे चेत्यनेन प्रपञ्चितं, तथाच सतिद्वृद्ध्याद्यस्मिन् दीयतेऽस्मैच वा दीयत इति तच्छब्दनिर्देशान्नाम्नो यथाविहितं प्राग्वतेर्माधवठादिः स्यादिति पूर्वेण तुल्यं । तदस्मिन् दीयत इति पूर्वं दर्शितमिति । तदस्मै दीयत इति वाक्यमत्राह शतेति ॥ ७६२ ॥

## ७६४. भागाद् यरामश्च ।

भाग्यं भागिकम् ।

## ७६५. तं हरति वहत्युत्पादयति वंशादिपूर्वाद्भारान्माधवठः ।

वांशभारिकः वाल्वजभारिकः ।

## ७६६. वस्न-द्रव्याभ्यां ठ-करामौ ।

वस्निकः द्रव्यकः ।

## ७६७. सम्भवत्यवहरति पठति ।

एष्वर्थेषु च यथास्वं । प्रस्थं सम्भवतीत्यादौ प्रास्थिकः कटाहः, खारिकः । प्रमाणानतिरेकः सम्भवः, अवहारः संहरणम् ।

---

अमृता०—७६४. भागादिति । पूर्वोक्तार्थे भागशब्दात् यरामः ठरामश्च भवतः ।

अमृता०—७६५. तमिति । वंशादिपूर्वाद् भारात् माधव ठो भवति—तद् हरति, तद् वहति, तदुत्पातयतीति त्रिष्वर्थेषु । वंशस्य भारः वंशभारः, तं हरति वहति उत्-पादयति वांशभारिको जनः । वल्लजः तृणभेद स्तस्य भारं वहतीत्यादि । एवं कौटज भारिक इति च । वंशादि पूर्वात् किम्—व्रीहिभारं हरतीत्यत्रतु न ।

अमृता०—७६६. वस्नेति । तद्हरतीत्याद्यर्थेषु वस्न-द्रव्याभ्यां यथाक्रमं ठ-करामौ भवतः । वस्नं मूल्यं हरति वहति उत्पादयति वेति वस्निकः । एवं द्रव्यकः ।

अमृता०—७६७. सम्भवतीति । सम्भवति अवहरति पचति वेत्यर्थे नाम्नो यथास्वं माधवठादयो भवन्ति । कटाहः पाकार्थं लोह पात्रम् । अवहारः उपसंहार इत्यर्थः ।

---

बाल०—पूर । तदस्मिन् अस्मै वा दीयत इत्यर्थे पूरणप्रत्ययान्तादर्द्धशब्दाच्च ठरामः स्यात् । द्वयोः पूरणः द्वितीयः सोऽस्मिन्नस्मै वा दीयते द्वितीयिक इत्यादि ॥ ७६३ ॥

बाल०—भागा । तदस्मिन्नस्मै वा दीयत इत्यर्थे भागाद्यरामः स्याच्चकारात् ठरामोऽपि ॥ ७६४ ॥

बाल०—तं । उत्पादयति आहरति गृह्णातीत्यर्थः । तं हरतीत्याद्यर्थत्रये वंशादिः पूर्वः यस्य तथाभुतात् भारात् स्यात् । वंशादिपूर्वाद्भारादिति सूत्रैकदेशस्थाने वंशादेर्भारभूतादित्येके पठन्ति । तन्मते भारभूतं वंशं हरतीत्याद्यर्थे वांशिक इति स्यात् । वंशस्य भारः वंशभारस्तं हरतीत्यादि योज्यं वल्वजः वावइरिति लोकप्रसिद्धं (काशतृणं वीरणतृणञ्चेति अमरटीका) । एवमादिपदात् कूटज मूल स्थूला अक्ष इक्षु अश्वन् खट्वेति गृह्यते ॥ ७६५ ॥

बाल०—वस्न । तं हरत्याद्यर्थे वस्नद्रव्याभ्यां यथासंख्यं ठकरामौ भवतः ॥७६६॥

**७६८. पचतौ द्रोणात् केशवणश्च ।**

द्रौणी द्रौणिकी स्थाली ।

**७६९. आढकाचितपात्रेभ्यः खरामो वा ।**

सम्भवत्यादिषु आढ़कीना आढ़किकी ।

**७७०. त्रिराम्याः केशवठः खरामश्च वा ।**

सम्भवतीत्यादिषु—द्व्याढ़कीना द्व्याढ़किकी । पक्षे अध्यर्द्ध पूर्वादिति माधमठस्य महाहरः—द्व्याढ़को ।

**७७१. कुलिजान्महाहर-खरामौ वा माधवठश्च ।**

---

**अमृता०**—७६८. पचताविति । पचतौ अर्थे द्रोणशब्दात् केशवणो माधवठश्च भवतः । द्रौणं पचति द्रौणीत्यादि द्वयम् ।

**अमृता०**—७६९. आढ़केति । सम्भवतीत्याद्यर्थत्रये आढ़क-आचित-यात्रेभ्यः खरामो वा भवति, पक्षे माधवठश्च । आढ़कीना इत्यत्र केशवत्वाभावान्नईप् किन्तु आप् । एवं आचितीना आचितिकी पात्रिणा पात्रिकीति ।

**अमृता०**—७७०. त्रिराम्या इति । सम्भवतीत्याद्यर्थेषु त्रिरामी निष्पन्नान्नाम्नः केशव ठो वा स्यात् । पक्षे प्राप्तमाधव ठस्य महाहर इत्याह—अध्यर्द्धेति । केशवठ-खराम-योस्तु न महाहरः, विधान सामर्थ्यादेवेति ज्ञेयम् ।

**अमृता०**—७७१. कुलिजादिति । त्रिराम्या इत्यनुवर्त्तते । सम्भवतीत्याद्यर्थेषु त्रिरामी निष्पन्नात् कुलिजशब्दात् महाहर-खरामौ वा भवतः, पक्षे माधवठश्च वा । द्वौ

---

**बाल०**—सम्भ । विवरणं एष्विति । एष्वर्थेषु सम्भवत्याद्यर्थेषु नाम्नो यथास्वं प्राग्ववतेर्माधवठादिः स्यात् । खारिक इत्यस्मात् पूर्वमेवमिति योज्यं । सम्भवत्येव हरतीत्यर्थद्वयं स्पष्टयति प्रमाणेति । प्रमाणात् पूर्वमाधेयस्येति पूरणीयं । सम्भवतिः सम्भवपूर्वधारणार्थ इत्यन्ये ॥ ७६७ ॥

**बाल०**—पच । पचतावर्थे द्रोणशब्दात् केशवणः स्यात्, चकारान्माधवठोऽपि । सम्भवत्यादिष पचतीति लब्धेऽपि यत् पचताविति कृतं तन्नियमार्थं ॥ ७६८ ॥

**बाल०**—आढ । पचतावित्यस्यानुवृत्तिशङ्कानिरासार्थं वृत्तिमाह सम्भवतीति । सम्भवतीत्याद्यर्थेषु आढकादिभ्यः खरामो वा स्यात् पक्षे प्राग्वतेर्माधवठः । यथा आढकीनेत्यादिद्वयं । एवमाचितीना आचितिकी पात्रीणा पात्रिकीत ॥ ७६९ ॥

**बाल०**—त्रिरा । सम्भवत्याद्यर्थेषु त्रिरामीनिष्पन्नान्नाम्नः केशवठो वा स्यात् खरामश्च । पक्षे, माधवठस्य महाहर इत्याह अध्यर्द्धेति । केशवठखरामयोस्तु महाहरो न स्यादत्र विधानसामर्थ्यात् । त्रिरामी चात्र तद्धितार्थेति ॥ ७७० ॥

सम्भवतीत्यादिषु । द्विकुलिजी द्विकुलिजीना द्विकुलिजिकी । पक्षे माधवठस्य स्थितिरेव । द्वैकुलिजिकी ।

**७७२. सोऽस्यांश-वस्न-भृतयः ।**

अत्रार्थे च यथास्वं । पञ्च अंशा वस्ना भृतयो वा अस्य पञ्चकः शत्यः शतिकः । अंशो भागः, वस्नो मूल्यं, भृति र्भरणम् ।

**७७३. तदस्य परिमाणम् ।**

अत्र च यथास्वं । प्रास्थिको राशिः । द्रौणिकः खरिकः शत्यः शतिकः । वार्षंतिको योगः । षष्टि र्जीवितपरिमाणस्य षाष्टिकः । इह द्वे षष्टी

---

कुलिजो सम्भवतः अवहरतः पचतो वेति अध्यर्द्धेत्यादिना विहित केशवठस्य महाहरः—द्विकुलिजी, तस्य स्थिति पक्षे द्विकुलिजिको । ख-माधवठ पक्षयोश्च रूपे दर्शिते ।

**अमृता०**—७७२. स इति । सोऽस्य अंशः बस्नः भृति रित्यर्थ त्रिके नाम्नो यथास्वं प्रत्ययः स्यात् । पञ्चक इति—संख्याया अतिशदन्ताया इति कः । शत्यइति—शताट् ठ-यरामौ इति । अंशादीनामर्थान् स्वयं विवृणोति—अंशो भाग इत्यादिना ।

**अमृता०**—७७३. तदस्येति । तदस्य परिमाणमित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो माधवठादयो भवन्ति । प्रस्थं परिमाणमस्य राशेरिति प्रास्थिकः । एवं द्रौणिक प्रभृतयः । संख्याया अपि परिमाणवाचित्वमस्तीति चोदाहरणं दर्शयति—वार्षशतिकः इत्यादि । वर्षशतं जीवितपरिमाणमस्येति वाक्यम् । महाहरस्य पश्चात् केशवठस्य प्राप्तिप्रकारं घटयति—इहेत्यादिभिः । इह प्रकरणे-द्वे षष्टी जीवितपरिमाणमस्येति वाक्ये तद्धितार्थे त्रिराम्या मध्यर्द्धेति प्राग्वते माधव ठस्य महाहरः, ततः सोऽस्यांश-वस्न-भृतय इत्यर्थे

---

**बाल०**—कुलि । त्रिराम्यत्रानुवर्तते । सम्भवत्याद्यर्थेषु त्रिरामीनिष्पन्नात् कुलिजशब्दान्महाहरखरामौ वा भवतः पक्षे माधवठश्च वा भवति । द्वौ कुलिजौ सम्भवतः अवहरतः पठत इति द्विकुलिजीत्यत्र अध्यर्द्धेत्यनेन विहितकेशवठस्य महाहरो वा । स्थितिरेवेति विधानसामर्थ्यादिति शेषः ॥ ७७१ ॥

**बाल०**—सोऽस्य । अत्रार्थे सोऽस्यांशेत्याद्यर्थे तच्छब्दवाच्यान्नाम्नो यथास्वं प्राग्वतेर्माधवठादिः स्यात् । पञ्चक इत्यत्र संख्याया अतीत्यनेन कः । शत्य इत्यादिद्वयेतु शताट्ठयरामाविति यठरामौ । अंशाद्यर्थान् स्वयं विवृणोति अंश इति ॥ ७७२ ॥

**बाल०**—तद । अत्रार्थे तच्छब्दनिर्दिष्टान्नाम्नो यथायोग्यं प्राग्वतेर्माधवठादिर्भवति । प्रस्थं परिमाणमस्य राशेरिति वाक्ये प्रास्थिक इति । एवं द्रौणिकप्रभृतयो यथास्वं प्रत्ययान्ताः । परिमीयते परिच्छिद्यतेऽनेनेति व्युत्पत्त्या संख्याया अपि परिमाणवाचित्व-मस्तीति संख्याया उदाहरणान्याह वार्षेत्यादिना । वर्षशतं जीवितपरिमाणमस्येति वार्षशतिक इत्यस्यादिसर्वेश्वरस्येत्यनेन वृष्णीन्द्रः । अस्येत्यस्मादिति पदं योज्यं । महाहरस्य पश्चात् केशवठप्राप्तिप्रकारं दर्शयति इहेति । इह प्रकरणे द्वे षष्टी

जीवितपरिमाणस्य माधवठस्य अध्यर्द्धेति सोऽस्येति वर्त्तमाने तदस्येत्यर्थ निर्देश सामर्थ्यात् पुनः केशवठः—द्विषष्टिकः। तस्य विधानसामर्थ्याद-लुगिति जयादित्यः। संख्यात इत्युत्तरपदवृद्धिः—द्विषाष्टिकः त्रिसाप्ततिकः।

**७७४. संख्यायाः संघ-सूत्राध्ययनेषु, संज्ञायान्तु स्वार्थे।**

**संख्यावाचिनः परिमाणार्थे यथास्वम्। पञ्चपरिमाणमस्य पञ्चकः सङ्घः। अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनीय सूत्रम्। पञ्चावृत्तयः परिमाणमस्य पञ्चकमध्ययनम्। संज्ञायां पञ्चैव पञ्चकाः।**

**७७५. पङ्क्ति-विंशत्यादयः।**

**साधवः। द्वौ पञ्चतौ परिमाणमस्य पङ्क्तिः। द्वौ दशतौ विंशतिरित्यादि।**

---

सद्भावेऽपि पुन स्तदस्य परिमाणमित्यर्थनिर्देशबलात् पुन स्त्रिराम्या इत्यनेन केशवठः स्यादिति द्विषष्टिकः। संज्ञायान्तु महाहराभावपक्षे माधवठस्यैव स्थिति वृष्णीन्द्रश्च।

**अमृता०**—७७४. संख्याया इति। स्वयं वृत्तिमाह—संख्यावाचिन इत्यादि। तदस्य परिमाणमित्यर्थे सङ्घ-सूत्राध्ययनेषु वाच्येषु संख्या वाचिनो नाम्नो माधवठादि र्भवति, संज्ञायां गम्यमानायान्तु स्वार्थे हि माधवठादि र्भवति नतु कथितार्थे। पञ्चक इति सर्वत्र संख्याया एति कः एते त्वसंज्ञायायां दर्शिताः। संज्ञायां स्वार्थे दर्शयति—पञ्चक इति।

**अमृता०**—७७५. पङ्क्तीति। तदस्य परिमाणमित्यर्थे पङ्क्ति विंशत्यादयः साधवो भवन्ति। पङ्क्तिरिति इप्रत्ययेन सह द्विशब्दस्य लोपेन च निपातः। विंशतिरिति पूर्ववदिप्रत्ययेन द्विशब्दस्याप्रयोगेण विमागमेन च साधुः। इत्यादिपदेन त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टी सप्तति अशीति नवतीत्यादयो ज्ञेयाः।

---

जीवितपरिमाणमस्येति वाक्ये तद्धितार्थे त्रिरामीसमासे प्राग्वतेर्माधवठस्य अर्द्धेति सूत्रेण महाहरस्तस्मिश्च सति, सोऽस्येति सोऽस्यांशवस्नभृतय इत्यर्थे वर्त्तमानेऽपि तदस्येति तदस्य परिमाणमित्यर्थनिर्देशसामर्थ्यात् पुनस्त्रिराम्या इत्यनेन केशवठः स्यादिति द्विषष्टिकः। अध्यर्द्धेत्यनेन केशवठस्यापि महाहर सम्भवात् परमतेन तदभावं सूचयन्नाह तस्येति। तस्य केशवठस्येति। अध्यर्द्धपूर्वात् त्रिराम्याश्चेत्यत्रासंज्ञायामित्युक्तात् संज्ञायान्तु माधवठस्य स्थितिरित्यादिसर्वेश्वरस्य वृष्णीन्द्रे प्राप्ते स उत्तरपदे स्यादिति स्मारयति संख्येति। संख्यातः सम्वत्सरसंख्ययोरित्यनेनोत्तरपदस्य वृद्धिः। द्विषष्टिक इत्यत्र वाक्यं पूर्ववत्। वाच्यपदन्तु पटादिकमूह्यं। त्रिसाप्ततिक इति त्रयः सप्ततयः परिमाणमस्येत्यर्थः॥ ७७३॥

**बाल०**—संख्या। वृत्तिमाह संख्येति। तदस्य परिमाणमित्यर्थे संघसूत्राध्ययनेष वाच्येषु संख्यावाचिनः शब्दाद्यथास्वं प्राग्वतेर्माधवठादिः स्यात्। संज्ञायान्तु गम्यमानायां स्वार्थेऽर्थे तस्माद्यथास्वं माधवठादिः स्यात्। सर्वत्रैवात्र संख्याया इत्यनेन कः। स्वार्थे संज्ञायामुदाहरणात् पूर्वत्रासंज्ञायामिति गम्यते॥ ७७४॥

**७७६. पञ्चत-दशतौ वर्गे वा ।**

पञ्च परिमाणमस्य पञ्चतो वर्गः, पक्षे पञ्चकः । एवं दशतः दशकः ।

**७७७. तदर्हति ।**

अत्र च यथास्वम् । छत्रमर्हति छात्रिकः शत्यः शतिकः ।

**७७८. छेदादिभ्यो नित्यत्वम् ।**

छेदं नित्यमर्हति छैदिकः । एवं भैदिकः ।

**७७९. शीर्षच्छेदाद् यरामश्च ।**

शीर्षच्छेद्यः शैर्ष्यच्छेदिकः ।

---

**अमृता०**—७७६. पञ्चतेति । तदस्य परिमाणमित्यर्थे पञ्च-दश इत्यनयो स्त प्रत्ययेन सह पञ्चत दशतौ साधू वा भवतो वर्गे वाच्येः पक्षे करामश्च ।

**अमृता०**—७७७. तदिति । तदर्हतीत्यर्थे च तच्छब्दनिर्दिष्ट नाम्नो यथास्वं माधवठादयो भवन्ति ।

**अमृता०**—७७८. छेदेति । तदर्हतीत्यर्थे छेदादिभ्यो नित्यं माधव ठादयः स्युः ।

**अमृता०**—७७९. शीर्षेति । शीर्षच्छेद शब्दात् पूर्वोक्तार्थे यरामश्च स्यात् चकारात् माधवठरामोऽपि ।

---

**बाल०**—पङ्क्ति । तदस्य परिमाणमित्यर्थे पङ्क्तिविंशत्यादयः साधवो भवन्ति । यद्यत् सूत्रेणानुत्पन्नं तत्सर्वं निपातनात् साध्विति पाणिण्युक्तात् । वर्णागमो वर्णविपर्ययश्चेति पूर्वोक्ताच्च यथेष्टसिद्धमत्र विवक्षणीयं । तस्मान्निपातनत एव इप्रत्ययेन सह पञ्चतस्य ठरामस्यारामलोपेन द्विशब्दस्याप्रयोगेणच पञ्चतशब्दस्य पङ्क्तिरितीष्टसिद्धं । पूर्ववदिप्रत्ययेन द्विशब्दस्याप्रयोगेण दरामस्य विमादेशेनच सह दशतस्य विंशतिरिति साधु । इत्यादीत्यादिपदेन त्रयोदशताः प्रमाणमस्येति त्रिशब्दान्मुमागमेन दशतस्यादि-दरामस्य तरामसम्बन्ध्यरामस्यच हरेणच सह दशतशब्दस्य त्रिंशदिति साधु । एवं चत्वारिंशत् पञ्चाशत् षष्टि सप्तति अशीति नवति शतेत्यादिषु यथास्वं प्रत्ययवर्णविपर्ययहरागमादेशाः परिकल्पनीयाः ।। ७७५ ।।

**बाल०**—पञ्च । तदस्य परिमाणमित्यर्थे पञ्च दश इत्यनयोस्तप्रत्ययेन साकं वर्गे वाच्ये पञ्चत-दशतौ वा साधू भवतः । पक्षे, कश्च स्यात् ।। ७७६ ।।

**बाल०**—तद । अत्र चार्थे तच्छब्दवाच्यान्नाम्नो यथायोग्यं प्राग्वतेर्माधवठादिः स्यात् ।। ७७७ ।।

**बाल०**—छेदो । तदर्हतीत्यर्थे नित्यत्वे सति छेदादिभ्यो यथास्वं प्रत्ययः स्यात् । छैदिकादिद्वयेऽत्र विधानान्तराभावात् प्राग्वतेर्माधवठ एव । एवमादिपदात्, द्रोह नर्त्त कर्ष सम्प्रयोग सम्प्रेषण सम्प्रश्नेभ्यश्च ।। ७७८ ।।

## ७८०. दण्डादिभ्यो यरामः ।

दण्ड्यः बध्यः कश्यः युग्यः मुषल्यः मधुपर्क्यः अर्घ्यः मेध्यः धन्यः ।

## ७८१. पात्राद् घरामश्च ।

पात्रियः पात्र्यः ।

## ७८२. दक्षिणा-कडङ्गराभ्यां छरामश्च ।

दक्षिणीयः दक्षिण्यो विप्रः, कडङ्गरीयः कडङ्गर्यो गौः ।

## ७८३. स्थालीविलाच्छरामः ।

स्थालीविलीया स्तण्डुलाः पाकयोग्याः ।

---

अमृता०—७८०. दण्डेति । तदर्हतीत्यर्थे दण्डादिशब्देभ्यो यराम एव भवति नतु माधवठः । कश्य इति–कशा अश्वादे स्ताडनी, तदर्हतीति अश्व इत्यर्थः । मेधामर्हति मेध्यः । एवं मेघ सुवर्ण उदक गुहा भाग भंग इत्येभ्यश्च ।

अमृता०—७८१. पात्रादिति । पूर्वोक्तार्थे पात्र शब्दाद्यरामौ घरामश्च स्यात् । पात्रं भोजनभाजनं परिमाणञ्च तदर्हतीति पात्र्यमितिद्वयम् ।

अमृता०—७८२. दक्षिणेति । तदर्हतीत्यर्थे दक्षिणा-कड़ङ्गराभ्यां छरामश्च स्यात् चकारात् यरामश्च । कड़ङ्गर स्तृणविशेषः ( वु षः ) माषादेः वृक्षभागश्च, तमर्हति यः स कड़ङ्गर्यः वलीवर्द इत्यर्थः ।

अमृता०—७८३. स्थालीति तदर्हतीत्यर्थे स्थालीविलशब्दात् छरामो भवति स्थालीपालपात्रं, तस्या विलमाकाशदेश स्तमर्हन्तीति स्थालीविलीयाः ।

---

बाल०—शीष । तदर्हतीत्यर्थे सति शीर्षच्छेदशब्दाद्यरामः स्यात् चकारात् पूर्वोक्तमाधवठोऽपि ।। ७७६ ।।

बाल०—दण्डा । तदर्हतीत्यथ दण्डादिभ्यो यरामः स्यात् । कश्य इति, अश्वादेस्ताडनी कशा इत्यस्य रूपं। मेघ उदक वंश इति त्रयमपि दण्डादौ कश्चित् पठति ।। ७८० ।।

बाल०—पात्रा । तदर्हतीत्यर्थे पात्रशब्दात् यरामः स्यात् चकाराद्घोऽपि । पात्रं भोजनभाजनं परिमाणञ्च तत्पात्रमर्हति यः स पात्रीयः पात्र्यश्च येन भुङ्क्ते पाकेन विनैव पात्रं शुध्यति यच्च तण्डुलादेः पाकस्य परिमाणमर्हति तदेवोच्यते ।। ७८१ ।।

बाल०—दक्षि । तदर्हतीत्यर्थे दक्षिणा कडङ्गराभ्यां छरामः स्यात् यश्च । कडङ्गरस्तृणविशेषः ( वूषः ) माषादेः काष्ठभागो वा दीप्ताग्नित्वात् निर्गुणत्वाद्वा यो गौस्तमर्हति स एव कडङ्गरीयादिद्वयशब्दवाच्य इति । (नीवारपाकादिकडङ्गरीयैरामृश्यते जानपदैर्न कच्चित् । इति रघुवंशे । ५ । ९ ) ।। ७८२ ।।

**७८४. यज्ञाद् घरामः ।**

यज्ञियं द्रव्यम् ।

**७८५. ऋत्विजो नृसिंह खः ।**

आर्त्विजीनो यजमानः ।

**७८६. तत् कर्मार्हतीत्यत्रापि ।**

यज्ञियो देशः, आर्त्विजीनं विप्रकुलम् । आर्हीयाः पूर्णाः । प्राग्वतीयो ऽनुवर्त्तते ।

**७८७. पारायणोत्तरायण-चान्द्रायणं वर्त्तयति ।**

पारायणं वर्त्तयति अधीते पारायणिकः । एवं द्वैपारायणिकः ।

---

अमृता०—७८४. यज्ञादिति स्पष्टमेव ।

अमृता०—७८५. ऋत्विज इति । तदर्हतीत्यर्थे ऋत्विक् शब्दात्नृसिंहखरामः स्यात् । कृतसंस्कारो द्विज ऋत्विक् तमर्हति आर्त्विजीनः ।

अमृता०—७८६. तदिति । तयो र्यज्ञ-ऋत्विजयोः कर्म तत् कर्म । तत्कर्मा र्हतीत्यर्थेऽपि यज्ञर्त्विग्भ्यां घ-नृसिंह खौ भवतः । यज्ञियो देश इति–कृष्णसारमृगाधिष्ठितो देश इत्यर्थः । तस्यैव यज्ञकमार्हत्वं शास्त्रसम्मतम् । आर्हीयार्थाधिकारः समाप्तः । प्राग्वतीयोऽनुवर्त्तत इति–तेन माधवठादयश्चानुवर्त्तन्त इत्यभिप्रायः ।

अमृता०—७८७. पारायणेति । वर्त्तयतीत्यर्थे पारायाणादिभ्यस्त्रिभ्यः प्राग् वतीयो माधवठः स्यात् । पारायणं शास्त्रस्यान्त पर्यन्तमध्ययनम् । अतश्चार्थमाह—अधीत इति । उत्तरायणं यज्ञविशेषः, सूर्यस्य गतिभेदश्चा चान्द्रायणो व्रत विशेषः । अनयो वर्त्तनंसम्पादनमित्यर्थः । तदर्हतीत्यतः परन्तु संख्यापूर्वपदानामलुकीति यदुक्त तदुदाहरणमाहएवमिति । तथा च द्वैयुत्तरायणिकः द्वैचान्द्रायणिक इति ।

---

बाल०—स्थाली । तदर्हतीत्यर्थे स्थालीविलशब्दाच्छरामो भवति । स्थाल्या विलमाकाशदेशो ये तमर्हन्ति ते स्थालीविलीया इति ॥ ७८३ ॥

बाल०—यज्ञ । तदर्हतीत्यर्थे यज्ञशब्दात् घरामः स्यात् ॥ ७८४ ॥

बाल०—ऋत्वि । तदर्हतीत्यर्थे ऋत्विक्शब्दान्नृसिंहखः स्यात् । ऋत्विक् कृतसंस्कारो द्विजस्तमर्हति आर्त्विजीन इति ॥ ७८५ ॥

बाल०—तत् । तयोर्यज्ञर्त्विजोः कर्म तत्कर्म । तत्कर्मार्हतीत्यर्थेऽपि यज्ञर्त्विग्भ्यां घनृसिहखौ भवतः । देश इति कृष्णसाराधिष्ठितो यः स एवात्र ज्ञेयस्तस्यैव यज्ञकर्मार्हत्वात् । यज्ञर्त्विग्भ्यामत्र लक्षणया तत्तत्कर्मोच्यते । तेन यज्ञकर्मार्हतीति वाक्यं योज्यं । इदानीमार्हीयान् समापयति आर्हीति ।

प्राग्वतेर्माधवठादीनां प्राप्त्यर्थं प्राग्वतीयानुवर्तनं स्मारयति प्राग्वतीति ॥ ७८६ ॥

**७८८. संशयमापन्नः ।**

सांशयिकः ।

**७८९. योजनं गच्छति ।**

यौजनिकः । क्रौशशतिक-यौजनशतिकावुपसंख्यानात् ।

**७९०. पथः केशवठः ।**

पथिकः पथिकी । पान्थः साधुः । स्त्रियां पान्थी ।

**७९१. उत्तरपथेनाहृतञ्च ।**

औत्तरपथिकं हरिचन्दनं । चकारात्तेन गच्छतीत्यत्र च ।

---

**अमृता०**—७८८. संशयमिति । संशयमापन्नइत्यर्थे संशयशब्दात् माधवठः स्यात् ।

**अमृता०**—७८९. योजनमिति । योजनं गच्छतीत्यर्थे योजनाद्माधवठः स्यात् । वार्त्तिकमाह—क्रौशेति । उपसंख्यानात्–वृत्ति कृता गृहीतादित्यर्थः । क्रोशशत–योजनशत शब्दाभ्यां तद् गच्छतीत्यर्थे माधव ठः स्यात् । तथा ततोऽभिगमनमर्हतीत्यर्थे च ताभ्यां माधव ठः स्यादिति च वार्त्तिकः ।

**अमृता०**—७९०. पथ इति । तद् गच्छतीत्यर्थे पथिन् शब्दात् केशव ठः स्यात् । तत्रैवार्थे केशवणेन सह नुमागमेन च पान्थ इति साधुः स्यात्, केशवत्वादीप् ।

**अमृता०**—७९१. उत्तरेति । उत्तर पक्षेनाहृतञ्चेत्यर्थे उत्तरपथात् माधवठः स्यात् । चकारसार्थक्यमाह—तेनगच्छतीत्यर्थे चेति ।

---

**बाल०**—पारा । पारायणोत्तरायणचान्द्रायणं वर्तयतीत्यर्थे पारायणादिभ्यः प्राग्वतीयो माधवठः स्यात् । पारायणं वेदस्य शास्त्रस्य वा समस्ताध्ययनं कर्म । उत्तरायणं यज्ञविशेषः चान्द्रायणो व्रतविशेषः । वर्तयति अधीते समापयतीति यावत् एवमौत्तरायणिकः चान्द्रायणिक इति । तदर्हतीत्यत उत्तरन्तु सङ्ख्यापूर्वपदानामलुकीति यदुक्तं तदुदाहरणं दर्शयति एवमिति । तथा द्वैयुत्तरायणिकः द्वैचान्द्रायणिक इति ॥ ७८७ ॥

**बाल०**—संश । संशयमापन्न इत्यर्थे संशयात् पूर्वोक्तमाधवठः स्यात् ॥ ७८८ ॥

**बाल०**—योज । योजनं गच्छतीत्यर्थे योजनात् पूर्ववन्माधवठो भवति । क्रौश । उपसंख्यानाद्धेतोस्तद्गच्छतीत्यर्थे माधवठेन सह क्रोशशतयोजनशततोः क्रौशशतिकयोजनशतिकाविति द्वौ साधू भवतः ततोऽभिगममर्हति सदा तं याति चेत्यर्थे क्रोशशतयोजनशताभ्यां टिकणित्येके ॥ ७८९ ॥

**बाल०**—पथः । पन्थानं गच्छतीत्यर्थे पथिशब्दात् केशवठः स्यात् । पथिकीति अणकेशवगौरादिभ्य इत्यनेन ईप् । पन्थानं गच्छतीत्यर्थे केशवणेन सह नुमागमपूर्वकं पथिशब्दस्य पान्थः साधुः । पान्थीति पूर्ववदीप् ॥ ७९० ॥

**७८२. वारि-जङ्गल-स्थल-कान्तार-संकुलाजपूर्वाच्च ।**

वारिपथेनाहृतं गच्छति वा वारिपथिकः ।

**७८३. स्थल-वारिभ्यां पथो मधुक-मरिचयोः केशवणः ।**

स्थालपथं मधुकं मरिचं वा ।

**७८४. कालात् ।**

कालवाचिभ्यः प्रत्ययो वाच्यः, व्युष्टादिभ्यः केशवण इति यावत् ।

**७८५. तेन निर्वृत्तः ।**

अत्रार्थे कालान्माधवठः । आह्निकं द्विसाम्वत्सरिकं । संख्यातः सम्वत्-सरस्येत्युत्तरपद वृष्णीन्द्रः ।

---

**अमृता०**—७८२. वारीति । तेनाहृतं गच्छति वेत्यर्थे वारिप्रभृति पूर्वाच्च पथात् प्राग्वतीयो माधव ठः स्यात् । एवं जाङ्गल पथिकः स्थालपाथिकः कान्तार पाथिकः सांकुलपथिकः आजपथिक इति ।

**अमृता०**—७८३. स्थलेति । तेनाहृतं गच्छति वेत्यर्थे मधुक-मरिचयोर्वाच्ययोः स्थल-वारिभ्यां परस्मात् पथः केशवणः स्यात् । एवं वारिपथम् ।

**अमृता०**—७८४. कालादिति । स्वयंवृत्तिमाह—कालवाचिभ्य इत्यादि । व्युष्टा-दिभ्य इति यावत् कालादिभ्यो यथास्वं प्रत्ययो वाच्यः इत्यर्थः । प्रभुनामाधिकारोऽयम् ।

**अमृता०**—७८५. तेनेति । तेन निर्वृत्त इत्यर्थे कालात् प्राग्वतीयमाधवठः स्यात् । अह्ना निर्वृतं निष्पन्नं आह्निकम् । द्वाभ्यां सम्वत्सराभ्यां निर्वृत्तं द्विसाम्वत्सरिकम् ।

---

**बाल०**—उत्त । उत्तरपथेनाहृतश्चेत्यर्थे उत्तरपथात् पूर्वोक्तमाधवठः स्यात् । सूत्रस्थ-चशब्दार्थं स्वयं विवृणोति चकारेति । इत्यत्र चेति ज्ञेयं ॥ ७८१ ॥

**बाल०**—वारि । तेनाहृतं तेन गच्छति वेत्यर्थे वार्यादिपूर्वाच्च पथः प्राग्वतीयमाधवठः स्यात् । यथा वारिपथिकमिति । जाङ्गलपथिकं स्थालपथिकं कान्तारपथिकं सांकुलपथिकं आजपथिकमिति ॥ ७८२ ॥

**बाल०**—स्थल । तेनाहृतं तेन गच्छति वेत्यर्थे मधुक-मरिचयोर्वाच्ययोः स्थलवारिभ्यामुत्तरस्मात् पथः केशवणः स्यात् ॥ ७८३ ॥

**बाल०**—काला । स्वयं वृत्तिमाह कालेति । व्युष्टादिभ्यः केशवण इति यावद्वक्ष्यते तावत् कालवाचिभ्यो यथास्वं प्रत्ययो वक्तव्य इत्यन्वयः । प्रभुरयमिति गम्यं ॥ ७८४ ॥

**बाल०**—तेन । निर्वृत्तो निष्पन्नः । प्राग्वतेरनुवर्तनान्माधवठ इति प्राग्वतेर्माधवठ इति । अह्ना निर्वृत्तं आह्निकमित्यत्र व-मसतसङ्गस्येनेनारामहरः : तदहर्तीत्यत उत्तरन्तु संख्यापूर्वपदानामलुकीत्युक्तत्वात् । द्वाभ्यां सम्वत्सराभ्यां निर्वृत्तं द्विसाम्वत्सरिकमित्यत्रो-त्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रं सूचयति संख्यात इति ॥ ७८५ ॥

**७८६. तमधीष्टो भृतो भूतो भावी वा ।**

अत्यन्तव्याप्तौ द्वितीया । मासमधीष्टः सत्कृत्य व्यापारितः, भृतः वेतनेन क्रीतः, भूतः स्वसत्तया व्याप्तकालः, तादृश एवानागतो भावी, सच सच मासिकः । एवं साम्वत्सरिकः ।

**७८७. मासाद्वयसि यराम-नृसिंहखौ ।**

मासमधीष्ट इत्यादौ मास्यो मासीनो दारकः । वयसि किं—मासिकः कर्मकरः ।

**७८८. त्रिराम्या यरामः ।**

द्विमास्यः त्रिमास्यः ।

---

अमृता०—७८६. तमिति । तमधीष्ट इत्याद्यर्थ चतुष्टये कालवाचिनाम्नो माधवठः स्यात् । तमिति द्वितीय प्राप्त्यनुशासनं स्मारयति—अत्यन्तव्याप्ताविति । अधीष्टादीनां प्रत्येक मर्थानाहसत्कृत्यादि । अध्येषणं सत्कारपूर्वक व्यापारणम् । भृतं वेतनेन क्रीतम् । भूतः स्वसत्तया व्याप्तकालः । भावी स्वसत्तयानागतकाल इति ।

अमृता०—७८७. मासादिति । तमधीष्टादावर्थे वयसि गम्यमाने मासात् यरामः-नृसिंह खौ भवतः । वयोऽन्यत्र माधवठ एव भवतीत्याहमासिकः कर्मकार इति । मासं यावत् वेतनेन क्रीत इत्यर्थः ।

अमृता०—७८८. त्रिराम्या इति । तमधीष्टादावर्थे वयसि गम्यमाने त्रिरामी समासान्तात् कालवाचिनो यरामः स्यात् । द्विमास्य इति—द्वौमासावधीष्टः भृतः भूतः भावी वेति तद्धितार्थे त्रिरामी ।

---

बाल०—तम । तमित्यत्र द्वितीयाप्राप्तिविधानं स्मारयति अत्यन्तेति । अत्यन्तेत्यस्मात् पूर्वं कालाध्वनोरिति योज्यं । तमधीष्टादावर्थे तच्छब्दनिर्देशात् कालवाचकान्माधवठः स्यात् । वाक्यप्रदर्शनमुखेन अधीष्टाद्यर्थान् विवृणोति मासमिति । तादृश एव स्वसत्तया व्याप्तकाल एव अनागतः सन् भावीति । अधिपूर्व इषु ङु भृञ् धारणपोषणयोरित्याभ्यां कर्मणि क्तः । इत्यतः मासमधीष्ट इत्यादौ अध्येषणादेर्यदपेक्षितं पुरुषादि कर्म तदपि क्तेनोक्तं न चात्रान्यक्रियास्ति यस्या मासादि कर्म स्यात् तस्मात् कालाध्वनोरत्यन्तव्याप्तावित्यनेन द्वितीया स्यात् ग्रन्थकृता सूचितमेतत् । नन्वध्येषणभरणे मुहूर्तं क्रियेते ताभ्यां कथं मासो व्याप्यते । उच्यते । यदर्थं हि ते क्रियेते तत्फलभूतयाध्ययनादिक्रियया मासो व्याप्यते इति । सच सचेति वीप्सया । अधीष्ट भृत भूत भावी इत्येतेषां वाच्यार्थो दर्शितः ।। ७८६ ।।

बाल०—मासा । तमधीष्टादावर्थे वयसि गम्यमाने मासशब्दात् यरामनृसिंहखौ भवतः । दारको वालः । कर्मकरो भृत्यः । वयोऽत्र न गम्यते तस्मादौत्सर्गिकमाधवठः ।।७८७

**७९९. षण्मासाण्ण्य-यरामौ ।**

षाण्मास्यः षण्मास्यः षाण्मासिकः ।

**८००. अवयसि ठ-ण्यरामौ ।**

षाण्मासिकः षाण्मास्यो धर्मः ।

**८०१. निर्वृत्ताद्यर्थपञ्चके ।**

प्रभुरयम् ।

**८०२. समायाः खरामः, त्रिराम्यान्तु वा, रात्र्यहः सम्वत्-सरेभ्यश्च ।**

समीनः, द्विसमीनः द्वैसमिकः, द्विरात्रीणः द्वैरात्रिकः, द्व्यहीनः द्वैयह्निकः,

---

अमृता०—७९९. षडिति । पूर्वोक्तार्थे वयसि च गम्ये ण्य-यरामौ भवतो वा, पक्षे माधवठश्च । षण्णां मासानां समाहारः षण्मासं, तदधीष्ट इत्याद्यर्थेषु षाण्मास्यादि त्रयम् ।

अमृता०—८००. अवयसीति । पूर्वोक्तार्थेऽवयसि गम्यमाने तु षण्मास शब्दात् ठराम-ण्यरामौ भवतः ।

अमृता०—८०१. निर्वृत्तेति । पूर्वोक्ते निर्वर्त्याद्यर्थ पञ्चके यथास्वं प्रत्ययो भवतीत्यधिकारः । तेन निर्वृत्तः तमधीष्टः तं भृतः तं भूतः तं भावीत्यर्थ पञ्चकः ।

अमृता०—८०२. समाया इति । निर्वृत्ताद्यर्थ पञ्चके समाशब्दात् खरामः स्यात्, त्रिरामान्तु खरामो वा स्यात्, पक्षे माधवठः, त्रिराम्या रात्रि अहः सम्वत्सरेभ्यश्च खराम-ठरामौ भवतः । समीन इति—समया निर्वृत्तः, द्वे समे अधीष्ट इत्यादि द्वैसमीनादि द्वयम् । एवं द्विरात्रीण इति द्वयम् । ननु द्व्यहीन इत्यत्र राजाहः सखिभ्य इति सामाजान्तः केशव-

---

बाल०—त्रिरा । तमधीष्टादावर्थे वयसि गम्ये त्रिराम्या इति त्रिरामीसमासान्तात् कालाद्यरामः स्यात् । द्वौ मासावधीष्टादिरिति तद्धितार्थे त्रिरामी द्विमास्य इति । एवं त्रिमास्यः ॥ ७९८ ॥

बाल०—षण्मा । षण्णां मासानां समाहारः षण्मासमित्यस्माद्वयसि गम्ये तमधीष्टादावर्थे ण्यरामौ वा भवतः । द्वाभ्यां त्यक्तपक्षे उत्सर्गिकमाधवठश्च स्यात् । षण्मासमधीष्टादिरिति क्रमेण षाण्मास्यादित्रयं ॥ ७९९ ॥

बाल०—अव । तमधीष्टादावर्थे वयसि गम्ये षण्मासात् ठ-ण्यरामौ भवतः ॥८००॥

बाल०—निर्वृत्ताद्यर्थपञ्चके नाम्नो यथास्वं प्रत्ययः स्यात् । अयं प्रभुनामाधिकार इत्याह प्रभुरिति ॥ ८०१ ॥

बाल०—समा । निर्वृत्ताद्यर्थपञ्चके समायाः खरामः स्यात् । त्रिराम्यान्तु सत्यां समायाः खरामो वा स्यात् पक्षे प्राग्वतीयमाधवठश्च । त्रिराम्यां सत्यां रात्र्यहःसंवत्सरेभ्यश्च

द्विसम्वत्सरीणः द्विसाम्वत्सरिकः। इह द्व्यहीन इत्यत्र समासान्तविधे-रनित्यत्वान्न केशवारामः, ततो नाह्लादेशश्च, तस्य तत्रैव विधानात्।

**८०३. वर्षात् ख-माधवठौ, तयो र्महाहरश्च वा त्रिराम्याम्।**

द्विवर्षीणो हरिप्रासादः। द्विवार्षिकः द्विवर्षः। संख्याया वर्षस्येत्युत्तर-पदवृष्णीन्द्रः।

**८०४. प्राणिनि तु नित्यम्।**

द्विवर्षो गोपालः। पूर्णं निर्वृत्तादि।

**८०५. तेन परिजय्यं लभ्यं कार्यं सुकरं वा।**

अत्रार्थे कालान्माधवठः। मासिकं साम्वत्सरिकम्।

---

रामः कथं न स्यात्? तत्र समादधाति—समासान्त विधेरिति। नाह्लादेशश्चेति–सर्वाव्य-याभ्यमेकवर्जं संख्या संख्यातैकदेशेभ्यश्चाहः शब्दस्याह्नः समाहार वर्जं टे इत्यनेन तत्र ठप्रत्यय एव तदादेश बिधानादित्यर्थः।

अमृता०—८०३. वर्षादिति। त्रिराम्यां सत्यां निर्वृत्ताद्यर्थं पञ्चके वर्षशब्दात् ख-माधवठौ भवतः, तत्र तयो ख-माधव ठयो र्महाहरश्च वा भवति। द्विवर्षीण इति–द्वाभ्यां वर्षाभ्यां निर्वृत्तः, तथा द्वौ वर्षावधीष्ट इत्यादि वाक्यम्। माधवठपक्षे द्विवार्षिक इत्यत्रो-त्तरपद वृष्णीन्द्रं स्मारयति—संख्याया इति। महाहर पक्षे द्विवर्ष इति।

अमृता०—८०४. प्राणिनीति। निर्वृत्ताद्यर्थपञ्चके त्रिराम्यां सत्यां प्राणिनिवाच्ये ख-माधवठयो र्महाहरस्तु नित्यं भवति। अर्थपञ्चकाधिकारः समाप्तः।

अमृता०—८०५. तेनेति। तेन परि सर्वतोभावेन जय्यं जेतुं शक्यं, तेन लभ्यं लब्धव्यं, तेन कार्यं करणीयं, सुकरं वेत्यर्थेषु यथास्वं माधव ठादयः स्युः। मासिकमिति—मासेन परिजय्यमित्यादि वाक्यं कल्पनीयम्। अत्रापवर्गे तृतीया ज्ञेया।

---

पूर्ववत् खराममाधवठौ भवतः। समया निर्वृत्तः समामधीष्टो भृतो भूतो भावो वेतिच समानः। द्वाभ्यां समाभ्यां निर्वृत्तः, द्वे समे अधीष्टादिश्च द्विसमीन इत्यादिद्वयं। एवं द्विरात्रीण इत्यादि। किञ्च, द्व्यहीन इत्यत्र अह्लष्ट-खरामयोरेवेत्यनेन संसारहरः। राजाहःसखिभ्य इत्यनेन समासान्तकेशवारामः कस्मान्न स्यादित्यत्र समादधाति इहेति ॥८०२

बाल०—वर्षा। त्रिराम्यां सत्यां निर्वृत्ताद्यर्थपञ्चके वर्षशब्दात् खमाधवठौ भवतः। तयोः खमाधवठयोर्महाहरश्च वा स्यात्। द्वाभ्यां वर्षाभ्यां निर्वृत्तः। द्वौ वर्षौ अधीष्टादि-रितिच द्विवर्षीण इत्यादि। माधवठपक्षे उत्तरपदवृष्णीन्द्र लक्षणं स्मारयति संख्येति ॥८०३

बाल०—प्राणि। निर्वृत्ताद्यर्थपञ्चके त्रिराम्यां सत्यां प्राणिनि वाच्ये खमाधवठयो-र्महाहरस्तु नित्यं स्यात्। निर्वृत्ताद्यर्थपञ्चकं समापयति पूर्णमिति ॥ ८०४ ॥

**८०६. तत्र दीयते कार्यं वा भववत् प्रत्ययाः स्युः ।**

मासे दीयते मासे कार्य्यं मासिकं, प्रावृषेण्यं, हैमनम् ।

**८०७. तदस्य ब्रह्मचर्यम् ।**

अत्र कालान्माधवठः । मासं व्याप्य ब्रह्मचर्यमस्य मासिकश्छात्रः ।
मासो यस्य ब्रह्मचर्यस्य तन्मासिकं ब्रह्मचर्यमित्येके ।

**८०८. अष्टाचत्वारिंशकाष्टाचत्वारिंशिनौ तावद्वर्षव्रतचारिणि साधू ।**

---

**अमृता०**—८०६. तत्रेति । तत्र दीयते कार्यं वेत्यर्थे नाम्नो यथास्वं भवार्थवत् प्रत्यया भवन्ति । भवार्थे कालान्माधवठ उक्तः, अत इह च मासशब्दात् माधव ठः । एवञ्च प्रावृष् शब्दात्भवार्थे एण्य प्रत्ययो विहितः, स एवात्रोक्तः । एवं हिमस्य अरामणन्तौ—हैमन हैमन्तौ साधू इति विहि[illegible]द्वदिह च ।

**अमृता०**—८०७. तदस्येति । तदिति अत्यन्तव्याप्तौ द्वितीया; अतएवाह—मासं व्याप्येति । मतान्तरमाचष्टे—मास इति । तन्मते प्रथमान्तात् प्रत्ययः ।

**अमृता०**—८०८. अष्टेति । तावद्वर्षव्रतचारिणि वाच्ये अष्टाचत्वारिंशच्छब्दस्य अकच्—इनिभ्यां सह अष्टाचत्वारिंशकाष्टाचत्वारिंशिनौ साधू भवतः । अष्टाचत्वारिंशद् वर्षाणि व्रतं चरति यः सोऽष्टाचत्वारिंशकः, एवमष्टाचत्वारिंशी च ।

---

**बाल०**—तेन । परिजय्यं परिजेतुं शक्यं । परि सर्वतोभावेन लब्धं लब्धव्यं, कार्यं करणीयं, सुकरं सुखसम्पादनीयं । वाशब्दोऽत्र व्यवस्थार्थः । अत्रार्थ इति तेन परिजय्याद्यर्थे इत्यर्थः । मासेन परिजय्यादि मासिक मित्यादि ॥ ८०५ ॥

**बाल०**—तत्र । तत्र दीयते कार्यं वेत्यर्थे नाम्नो यथास्वं भवार्थवत् प्रत्ययाः स्युः । भवार्थस्य जाताद्यन्तर्भावात् जातादौ यस्माद्यस्मान्नाम्नो यो यः प्रत्ययोऽभूत् अनेनातिदेशेन स सोऽत्र ज्ञेयः । अतएव मासिकमित्यत्र कालान्माधवठ इति ठः । तत्र यथा एण्यप्रत्ययेन प्रावृषः प्रावृषेण्यः साधुस्तद्वदत्रापि । एवं तत्र यथा अरामणन्तौ हिमस्य हैमनहैमन्तौ साधू तद्वदिहापि ॥ ८०६ ॥

**बाल०**—तद । तदित्यत्र कालाध्वनोरत्यन्तव्याप्तावित्यनेन द्वितीया । तद्व्याप्यास्य ब्रह्मचर्यमित्यर्थे तच्छब्दनिर्दिष्टात् कालवाचकान्माधवठः स्यात् । किंवा तदिति प्रथमान्तमिति सूचनार्थं मासोऽस्येत्येकेषां मतमुपन्यस्तं ॥ ८०७ ॥

**बाल०**—अष्टा । अष्टाचत्वारिंशच्छब्दोऽत्र तत्सहचरिते व्रते वर्तते साहचर्यात् । तावद्वर्षव्रतचारिणि वाच्येऽष्टाचत्वारिंशच्छब्दस्य अकट्-इनिभ्यां सहाष्टाचत्वारिंशकाष्टाचत्वारिंशिनौ साधू भवतः । तावद्वर्षेत्यष्टाचत्वारिंशद्वर्षसहचरितं व्रतं चरतीति निर्गलितार्थं । किञ्च, अष्टाचत्वारिंशकादिद्वाभ्यां यश्चतुर्वेदेषु प्रतिवेदं द्वादश वर्षाणि व्रतं चरति स उच्यते ॥ ८०८ ॥

**८०९. चातुर्मासक-चातुर्मासिनौ च तथा इनिभ्यां साधू ।**

**८१०. चातुर्मास्यस्तद्भवयज्ञे ।**

साधुः । कालाधिकारः पूर्णः ।

**८११. तच्चरति महानाम्न्यादिभ्यः ।**

माहानाम्निकः, आवान्तरव्रतिकः ।

**८१२. अवान्तरदीक्षि-देवव्रतिनौ तच्चारिणि ।**

साधू ।

---

**अमृता०**—८०९. चातुरिति । तावन्मासव्रतचारिणि वाच्ये चतुर्मासशब्दात् वु-इनिभ्यां चातुर्मासक-चातुर्मासिनौ च साधू भवतः । इह तु निपातादादिसर्वेश्वरस्य वृष्णीन्द्रः ।

**अमृता०**—८१०. चातुर्मास्य इति । तद्भवयज्ञे वाच्ये ण्यरामेण सह चतुर्मास शब्दस्य चातुर्मास्य इति साधुः स्यात् । चतुर्षु मासेषु भवः चातुर्मास्यो यज्ञः । समाप्तः कालाधिकारः ।

**अमृता०**—८११. तदिति । तत्चरतीत्यर्थे महानाम्नीप्रभृतिभ्यः प्राग्वतीयमाधव ठः स्यात् । महानाम्नी ऋक्, तत् सह चरितं व्रतं चरतीत्यर्थः महानाम्निकः । एवमवान्तरव्रतिक इति च ।

**अमृता०**—८१२. अवान्तरदीक्षीति । तच्चारिणि वाच्ये इन् प्रत्ययेन सह अवान्तर दीक्षि-देवव्रतिनौ साधू स्याताम् ।

---

**बाल०**—चातुर्मा । तथेत्यनेन तावन्माससहचरितव्रतचारिणीत्यानीतं । तेन तथा पूर्वोक्तप्रकारेण चतुर्माससहचरितव्रतचारिणि वाच्ये वु इनिभ्यां सह चतुर्मासशब्दस्य चातुर्मासकचातुर्मासिनौच साधू भवतः । अत्र निपातसामर्थ्यादनयोरादिसर्वेश्वरस्य वृष्णीन्द्रः । अथो वा वु-इनिभ्यामित्यत्र नृसिंहवु-इनिभ्यामिति ज्ञेयम् ।। ८०९ ।।

**बाल०**—चातु । तद्भवयज्ञे वाच्ये ण्यरामेण सह चतुर्मासशब्दस्य चातुर्मास्यः साधुः स्यात् । चतुर्षु मासेषु भवश्चातुर्मास्यो यागः । कालाधिकारं निवर्तयति कालेति ।। ८१० ।।

**बाल०**—तच्च । तच्चरत्यर्थे महानाम्न्या नाम ऋचः तत्सहचरितव्रतमपि महानाम्नीत्युच्यते उपचारात् । यतस्तस्यैव चरणं सम्भवतीति महानाम्नीश्चरति माहानाम्निक इति । एवमावान्तरव्रतिकः गौदानिक इत्यादिः ।। ८११ ।।

**बाल०**—अवा । तच्चारिणि वाच्ये इना महावान्तरदीक्षा देवव्रतयोरवान्तरदीक्षि-देवव्रतिनौ साधू भवतः ।। ८१२ ।।

**८१३. आग्निष्टोमिकी प्रभृतयो यज्ञदक्षिणायां साधवः ।**

**८१४. तत्र दीयते कार्यं वेति व्युष्टादिभ्यः केशवणः ।**

व्युष्टे दीयते कार्यं वा वैयुष्टं नैत्यम् ।

**८१५. तेन दीयते कार्यं वा यथाकथाच-हस्ताभ्यां ण-यरामौ ।**

यथाकथाचेत्यव्ययसमुदायोऽनादरार्थः । यथाकथाच दीयते कार्यं वा याथाकथाचं । एवं हस्तेन–हस्त्यम् ।

**८१६. सम्पादिनि ।**

अत्र च माधव ठः । चन्दनेन सम्पादि शोभि चान्दनिकं हरेर्वपुः । एवंकार्णवेष्टनिकं मुखमिति भट्टिः (४।२५) ।

---

**अमृता०**—८१३. आग्नीति । यज्ञदक्षिणायां वाच्यायां तच्चरतीत्यर्थे माधवठेन ईपा च सह अग्निष्टोमादीनां आग्निष्टोमिकीत्यादयः साधवः स्युः । आदिशब्देन राजसूयिकी वाजपेयिकी प्रभृतयो ज्ञेयाः ।

**अमृता०**—८१४. तत्रेति । तत्र दीयते कार्यं वेत्यर्थे व्युष्टादिभ्य उत्तरे केशवणः स्यात् । व्युष्टमत्र प्रभातं । आदि पदेन—नित्य-तीर्थ-संग्राम प्रवास-निष्क्रम-प्रवेशन-उपवास-अग्निपद-पीलूमूलेति नवानां ग्रहणं सम्मतम् ।

**अमृता०**—८१५. तेनेति । तेन दीयते कार्यं वेत्यर्थे यथा कथा च-हस्त शब्दाभ्यां यथा संख्यं ण-यरामौ भवतः । प्रथम शब्दस्यार्थं स्पष्टयति—अनादरार्थं इति । एवं हस्तेन दीयते कार्यं वा हास्त्यमिति ।

**अमृता०**—८१६. सम्पादिति । तेनेत्यनुवर्त्तते । तेन सम्पादिनीत्यर्थे नाम्नो माधव ठः स्यात् । सम्पादीत्यस्य फलितार्थः शोभीति ।

---

**बाल०**—आग्नि । यज्ञदक्षिणायां वाच्यायां तच्चरित्यर्थे माधवठेन साकमीपाच अग्निष्ठोमादीनां यज्ञवाचिनामग्निष्टोमिकीप्रभृतयः प्रयोगाः साधवो भवन्ति । प्रभृतिशब्दस्याद्यर्थत्वात् राजसूयिकी वाजपेयिक्यादयोऽप्यूह्याः ॥ ८१३ ॥

**बाल०**—तत्र । सुगमं । उच्छी विवासे इत्यस्य विपूर्वस्य क्ते कृते व्युष्टं वासातिक्रान्तं प्रभातं समाप्तञ्चेति । भरण्यां व्युष्टायां युवतिर्जनयामास तनयमिति शास्त्रान्तरात् । व्युष्टेत्यस्य साहचर्यात् नित्यशब्दोऽप्यत्र कालवाचको गृह्यते नाकाशादि-वचनः । वैयुष्टमित्यत्र वृष्णीन्द्रस्थानचतुःसनादेशेत्यनेन ऐयादेशः । नित्ये सर्वकाले दीयते कार्यं वा नैत्यमिति । व्युष्ट नित्य निष्क्रम प्रवेशन तीर्थ संग्राम संघात प्रवास उपवास अग्निपद पीलुथूलेति व्युष्टादिरेकादश ॥ ८१४ ॥

**बाल०**—तेन । इदमपि सुगमं । णयरामाविति यथासङ्ख्यं ज्ञेयं न प्रत्येकं । शब्दार्थं स्वयं स्पष्टयति यथेति । वाक्ये यथाकथाचेत्यस्मात् परमनादरेणेति योज्यं । हस्तेनेत्यस्मात् परं दीयते कार्यं वेति योज्यम् ॥ ८१५ ॥

**८१७. कर्म-वेशाभ्यां यरामः ।**

**कर्मण्यं शरीरं, वेश्य वपुः ।**

**८१८. तस्मै प्रभवति सन्तापादिभ्यः ।**

**सन्तापाय प्रभवति सान्तापिकं । एवं सांयुगिकं सांग्रामिकम् ।**

**८१९. योगाद् यरामश्च ।**

**योगाय प्रभवति योग्यं यौगिकम् ।**

**८२०. कार्मुकं धनुषि साधु, सामयिकं प्राप्तसमये साधु ।**

---

अमृता०—८१७. कर्मेति । तेन सम्पादिनीत्यर्थे कर्म-वेशाभ्यां यरामः स्यात् । कर्मणा सम्पादि शोभि कर्मण्यम् । एवं वेशेन सम्पादि वेश्यम् ।

अमृता०—८१८. तस्मा इति । तस्मै प्रभवतीत्यर्थे सन्तापदिभ्यो माधवठः स्यात् । संयुगाय प्रभवति सांयुगिकं, एवं सांग्रामिकम् । किञ्च सन्नाह सम्पराय सम्वास सम्वेशन निष्पेष सर्ग निसर्ग उपसर्ग विसर्ग प्रवास उपवास संघात सम्मोदन शक्तु मांस ओदनेति सन्तापादिः ।

अमृता०—८१९. योगादिति । तस्मै प्रभवतीत्तथे योगाद् यराभश्च स्यात्, चकारात् माधवठश्च ।

अमृता०—८२०. कार्मकमिति । तस्मै प्रभवतीस्यर्थे धनुषि वाच्ये कर्म शब्दस्य उकण् प्रत्ययेन सह कार्मुकमिति साधु स्यात् । उक्तार्थे प्राप्त समये वाच्ये समयशब्दस्य माधवठेन सह सामयिकमिति साधु भवति । अत्र विशेषार्थे निपातः ।

---

बाल०—सम्पा । तेनेति पूर्वसूत्रादनुवर्तते । सम्पादिनीति शीलार्थे णिनिः । तेन सम्पादिनीत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो माधवठो भवति । सम्पादीत्यस्य तात्पर्यार्थं दर्शयति शोभीति । (वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखं । इति भट्टिकाव्ये ४ । २५) ॥८१६॥

बाल०—कर्म । तेन सम्पादिन्यर्थे कर्मवेशाभ्यां यरामः स्यात् । कर्मणा सम्पादि शोभि कर्मण्यमिति । वेशेन भूषणेन सम्पादि शोभि वेश्यमिति ॥ ८१७ ॥

बाल०—तस्मै । तस्मै प्रभवतीत्यर्थे सन्तापादिभ्यो माधवठः स्यात् । प्राग्वतेर्माधवठस्यानुवर्तनादत्र प्रत्ययो नोक्तः सन्ताप संयुग संग्राम संयोग सन्नाह सम्पराय सम्वेश निष्पेष सम्पेष निसर्ग उपसर्ग विसर्ग प्रकस उपवास सघात सम्पादन शक्तुमांस ओदन शक्तु मांसौदनेति विंशतिः सन्तापादिः ॥ ८१८ ॥

बाल०—योगा । तस्मै प्रभतीत्यर्थे योगाद्यरामः स्यात् चकारान्माधवठोऽपि ॥८१९

बाल०—कार्मु । तस्मै प्रभवतीत्यर्थे धनुषि वाच्ये उकणा सह कर्मशब्दस्य कार्मुकमिति साधु स्यात् । साम । तस्मै प्रभवतीत्यर्थे प्राप्तः समयो येन तस्मिन् वाच्ये माधवठेन सह समयस्य सामयिकमिति साधु स्यात् ॥ ८२० ॥

**८२१. आर्त्तवं प्राप्तर्त्तौ ।**

अणा । साधु ।

**८२२. कल्यं प्रातःकाले साधु ।**

**८२३. कालिकं प्राप्तप्रकृष्टदीर्घकाले ।**

साधु । कालिकमृणं, कालिकी हरिभक्तिः ।

**८२४. तदस्य प्रयोजनम् ।**

अत्रार्थे माधवठः । वैष्णुमहिकं तत्कीर्तनम् ।

**८२५. चूडादेः केशवणः ।**

चूड़ा प्रयोजनमस्य चौड़ं श्राद्धम् ।

---

अमृता०—८२१. आर्त्तवमिति । प्राप्त ऋतुर्येन स प्राप्तर्त्तुः, तस्मिन् वाच्ये तस्मै प्रभवतीत्यर्थे ऋतोः आर्त्तवमिति साधु स्यात् । पूर्ववदिहापि विशेषार्थे निपातः ।

अमृता०—८२२. कल्यमिति । प्रातः कालेऽर्थे कालशब्दस्य यरामेण कल्प–मिति साधु स्यात् । अधिकारार्थस्यापवादो निपात फलम् ।

अमृता०—८२३. कालिकमिति । प्राप्तप्रकृष्टदीर्घकाले वाच्ये कालस्य माधवठेन कालिकमिति साधु स्यात् । इह चार्थवैशिष्ट्यं निपातकार्यम् ।

अमृता०—८२४. तदिति । तदस्य प्रयोजनमित्यर्थे नाम्नो माधवठः स्यात् । विष्णोर्महः पूजेति विष्णु महः, सोऽस्य प्रयोजनं वैष्णुमहिकम् ।

अमृता०—८२५. चूड़ादेरिति । तदस्य प्रयोजनमित्यर्थे चूड़ादेः केशवणः स्यात्, माधवठस्यापवादः । श्रद्धा प्रयोजनमस्य श्राद्धम्, श्रद्धया यदन्नादेर्दानं तत् श्राद्धमिति स्मार्त्ताः । चूड़ादिराकृतिगणः ।

---

बाल०—आर्त्त । तस्मै प्रभवतीत्यर्थे प्राप्त ऋतुर्येन तस्मिन् वाच्येऽणा सह ऋतोरार्तवं साधु स्यात् । अस्मिन्नर्थेऽणा साकमुपवस्तृप्रसित्रोरौपवस्त्रप्रासित्रे साधुनी भवत इत्यन्ये ॥ ८२१ ॥

बाल०—कल्यं । तस्मै प्रभवतीत्यर्थे प्रातःकाले वाच्ये यरामेण सह कालस्य कल्यं साधु स्यात् । अत्र यप्रत्ययः कालस्य कलादेशश्च निपातफलं ॥ ८२२ ॥

बाल०—कालि । तस्मै प्रभवतीत्यर्थे प्राप्तः प्रकृष्टदीर्घकालो येन तस्मिन् वाच्ये माधवठेन सह कालस्य कालिकं साधु स्यात् ॥ ८२३ ॥

बाल०—तद । अत्रार्थे यस्तच्छब्दनिर्दिष्टस्तस्मान्नाम्नो माधवठः स्यात् । विष्णोर्महः पूजा विष्णुमहः सोऽस्य प्रयोजनं वैष्णुमहिकमिति तत्कीर्तनं विष्णुकीर्तनं ॥ ८२४ ॥

**८२६. अनुप्रवचनादिभ्यश्छरामः ।**

अनुप्रवचनीयं उत्थापनीयम् ।

**८२७. विशि - पूरि - पदि - रुहि - प्रकृतेरनन्तात् सपूर्वपदात् समापनाच्च ।**

गेहानुप्रवेशनीयं प्रपापूरणीयं मङ्गलोत्पादनीयं मठारोहणीयं कर्मसमापनीयं वैष्णवसत्रम् ।

**८२८. स्वर्गादिभ्यो यरामः ।**

स्वर्ग्यं यशस्यं आयुष्यं धन्यम् ।

---

अमृता०—८२६. अन्विति । तदस्य प्रयोजनमित्यर्थे अनुप्रवचनादिभ्यः छरामः स्यात् । अनुप्रवचन उपस्थापन उत्थापन संवेशन प्रवेशन अनुवचन अनुवासन अन्वारोहन आरम्भण आरोहनेति अनुप्रवचनादिः ।

अमृता०—८२७. विशीति । पूर्वपदेन सह वर्त्तमाना ये अनप्रत्ययान्ताः विशि-पूरि-पदि-रुहय स्तेभ्य स्तथा समापन शब्दाच्च छरामो भवति । गेहानुप्रवेशनं प्रयोजनमस्य गेहानुप्रवेशनीयमित्यादि ।

अमृता०—८२८. स्वर्गेति । तदस्य प्रयोजनमित्यर्थे स्वर्गादिभ्यो यरामो भवति । स्वर्गः प्रयोजनमस्य स्वर्ग्यंत्यादि ।

---

बाल०—चूडा । तदस्य प्रयोजनमित्यर्थे चूडादेः केशवणः स्यात् । श्राद्ध मिति वाच्यपदं श्रद्धाप्रयोजनमस्येति श्राद्धमिति प्रथक् पदमित्यन्ये । श्रद्धया यदन्नादेर्दानं तत् श्राद्धमिति स्मार्तः । चूडादिराकृतिगणः ।। ८२५ ।।

बाल०—अनु । तदस्य प्रयोजनमित्यार्थेऽनुप्रवचनादिभ्यश्छरामो भवति । अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयमित्यादि । अनुप्रवचन उत्थापन उपस्थान दीर्घजीवित सम्प्रेषण अनुवासन आभरण अनुवादेत्यष्टसंख्यकोऽनुप्रवचनादिः ।। ८२६ ।।

बाल०—विशि । अनमित्यन्ते यस्य सोऽनन्तस्तस्मात् पूर्वपदेन सह वर्तमानः सपूर्वपदस्तस्मात् । विश प्रवेशने पूरी आप्यायने पद गतौ रुह जन्मनि प्रादुर्भावे । तदस्य प्रयोजनमित्यर्थे विशादिप्रकृतिभूतात् अनप्रत्ययान्तात् सपूर्वपदात् तथा संपूर्व आप्लृ व्याप्तावित्यस्मादनन्तात् सपूर्वपदाच्च छरामो भवति । गेहानुप्रवेशनं प्रयोजनमस्य गेहानुप्रवेशनीयमित्यादि ।। ८२७ ।।

बाल०—स्वर्गा । तदस्य प्रयोजनमित्यर्थे स्वर्गादिभ्यो यरामः स्यात् । स्वर्गं प्रयोजनमस्य स्वर्ग्यमित्यादि । अत्र धर्मोऽपि ज्ञेयः ।। ८२८ ।।

**८२९. पुण्याहवाचनादिभ्यो महाहरः ।**

पुण्याहवाचनं स्वस्तिवचनं कर्म ।

**८३०. वैशाखो मन्थे, आषाढो दण्डे, ऐकागारिकश्चौरे, आकालिक उत्पत्तिमात्राद् विनाशिनि ।**

साधवः । आकालिकीं वीक्ष्य मधुप्रवृत्तिमिति कुमारसम्भवे ।३।३४। प्राग्वते र्माधवठ उक्तः ।

**८३१. उपमानक्रियाद्वति स्तत्क्रियातुल्यक्रियत्वे ।**

उपमीयते येन तदुपमानं । उपमानरूपा क्रिया यस्य तस्माद् वतिः स्यात्, उपमानभूतया क्रियया यद्युपमेयायाः क्रियाया स्तुल्यत्वं वाच्यं स्यात् ।

---

अमृता०—८२९. पुण्याहेति । पूर्वोक्तार्थे पुण्याहवचनादिभ्यो भाधवठस्य महाहरः स्यात् ।

अमृता०—८३०. वैशाख इति । तदस्य प्रयोजनमित्यर्थे मन्थे वाच्ये विशाखा शब्दस्य केशवणेन सह वैशाखः स्यात् । तस्मिन्नर्थे दण्डे वाच्ये आषाढ़स्य केशवणेन आषाढः साधुः स्यात् । उक्ते—ऽर्थे चौरे वाच्ये एकागारस्य माधवठेन ऐकागारिकः साधुर्भवति । तथा उत्पत्तिमात्र विनाशिनि वाच्ये अकालशब्दस्य माधवठेन आकालिकः साधुर्भवति । माधवठाधिकार समाप्तं गतः ।

अमृता०—८३१. उपमानेति । स्वयं सूत्रार्थं विशदयति—उपमीयत इत्यादिभिः । वतेरिराम इत् ।

---

बाल०—पुण्या । तदस्य प्रयोजनमित्यर्थे पुण्याहवाचनादिभ्यो माधवठस्य महाहरः स्यात् ॥ ८२९ ॥

बाल०—वैशा । तदस्य प्रयोजनमित्यर्थे मन्थदण्डयोर्वाच्ययोर्यथासंख्यं केशवणेन साकं विशाखाषाढयोर्वैशाखाषाढौ साधू भवतः । ऐका । तदस्य प्रयोजनमित्यर्थे चौरे वाच्ये माधवठेन सह एकागारस्य ऐकागारिकः साधुः स्यात् । एकमसहायं गृहं मोषार्थिनश्चौरस्य प्रयोजनं भवतीति । चौरेहविधानात् एकागारं प्रयोजनमस्य भिक्षोरित्यत्र न स्यात् । आका । तदस्य प्रयोजनमित्यर्थे उत्पत्तिमात्राद्विनाशिनि वाच्ये केशवठेन सह आकालशब्दस्याकालिकः साधुः स्यात् । आकालशब्दोऽयं समानकालसमानार्थः । यद्यपि एकस्य समानकालौ जन्मविनाशौ न सम्भवतस्तथापि जन्मविनाशयोरत्यन्तसान्निध्यमनेन द्योत्यते । अत्र कृष्णपुरुषोऽव्ययीभावो वा समासो ज्ञेयः । आवृत्तः काल आकाल इति कुप्रादयो मध्यपदलोपश्चेत्यनेन कृष्णपुरुषः । आङस्तु मर्यादाभिविध्योरित्यनेनाव्ययीभावश्च । लक्ष्म्यामीप् स्यादिति शिष्टोदाहरणं दर्शयति आकालिकीमिति । अधिकृतं प्राग्वतेर्माधवठः समापयति प्राग्वतेरिति ॥ ८३० ॥

वैष्णववद् विष्णुं यजते, यथा वैष्णवकर्तृकयजनं तथैव यजते इत्यर्थः। प्रत्ययशक्त्या वैष्णवशब्दोऽत्र वैष्णवकर्तृक यजनक्रियापर्यवसानः। पुत्रं मित्रवदाचरेत् इत्यत्र च यथा मित्रमाचरति तत्प्रति व्यवहरति तथा पुत्रमाचरेदित्यर्थः। पूर्वधातुवत् सन इत्यत्र पूर्वधातोर्यथा परपदादि भवति तथा सनन्तादपि भवतीत्यर्थः। एवं गुरुवद् गुरुपुत्रेषु प्रवर्त्तितव्यं, यथा गुरौ प्रवृत्यते तथा तत्पुत्रेषु प्रवर्तनीयमित्यर्थः।

## ८३२. तत्रेव तस्येव वा।

अत्रार्थे वतिः स्यात्। मथुरायामिव मथुरावत् द्वारकायां प्राचीराः। कृष्णस्येव कृष्णवत् प्रद्युम्नस्य रूपम्।

## ८३३. तदर्हम्।

अत्रार्थे च वतिः। वैष्णवमर्हति वैष्णववद्वृत्तम्। कृष्णवच्चरित्रं। अत्रापीवार्थ एव, वैष्णवस्य वृत्तमिव वृत्तमिति। नेह,—वैष्णवमर्हति दधि।

---

अमृता०—८३२. तत्रेवेति। वाक्योदाहरणे स्पष्टे।

अमृता०—८३३. तदिति। तदर्हमित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो वतिः स्यात्। अर्हं योग्यमित्यर्थः। वृत्तं स्वभावोऽध्ययनं वा। अर्थोऽयमिवार्थे पर्यवस्यतीत्याह—अत्रापीति।

---

बाल०—उप। उपमानशब्दं व्युत्पादयति उपेति। एवमुपमीयते यः स उपमेयः। समासघटकीभूतवाक्यप्रदर्शनपूर्वकं सूत्रं विवृणोति उपमानेति। क्रियाशब्दस्य विशेषणत्वादुपमानात् रूपेति दर्शितं। यद्युपमानभूतया क्रियया सह उपमेयायाः क्रियायास्तुल्यत्वं स्यात्तदा उपमानरूपा क्रिया यस्य उपमानक्रियाविशिष्टस्य वैष्णवादेस्तस्माद्वैष्णवादेर्वतिः स्यादित्यन्वयः। उपमानक्रियत्वं नाम स्वाश्रयनिष्ठपरतानिरूपितपूर्वतासम्बन्धेन धात्वर्थविशिष्टत्वं। सिद्धोपदेशे विरिञ्चौच सविष्णुचापसर्वेश्वर इदिति वतेरिराम इत्। स्वरादीत्यादौ वदादिस्तद्धित इत्युक्तत्वात् वैष्णववदित्यस्मादव्ययत्वेन सोर्महाहरः। यजत इत्यस्मात् परं कोऽपीति योज्यं। वैष्णवकर्तृकमित्यस्य लक्षणावीजत्वेन घटकमाह प्रत्ययेति। प्रत्ययस्य वत्प्रत्ययस्य शक्त्यासमर्थेन। पुत्रमित्याद्युदाहरणत्रयमर्थश्च स्पष्टम्॥ ८३१॥

बाल०—तत्रे। अत्रार्थ इत्यस्मान्नाम्न इति योज्यं। वाक्योदाहरणे स्पष्टे॥ ८३२॥

बाल०—तद। अत्रार्थेच तच्छब्दनिर्दिष्टान्नाम्नो वतिः स्यात्। अर्हं योग्यं। वृत्तमध्ययनं पद्यं वा। यद्यपि सूत्रे अर्हमित्येवमात्रमुक्तं, तथाप्यत्र इवार्थे गम्य एव नाम्नो वतिः स्यादिति स्वाभिप्रेतमाह अत्रेति। गम्यमानार्थप्रतीत्यर्थं वाक्ये वृत्तमित्यस्माद्वाच्यपदादिवेति। दर्शितं। तेनात्र न स्यादित्याह नेहेति॥ ८३३॥

**८३४. तस्य भावस्त्व-तापौ ब्रह्म-लक्ष्म्योः ।**

तस्य भाव इति विभुक्ष्व । भवतोऽस्मादभिधान प्रत्ययाविति भावः । शब्दप्रवृत्ति निमित्तं जात्यादि वस्तु धर्मः । तस्य भाव इत्यर्थे त्व–तापौ स्याताम् । जातौ-गोत्वं गोता । गुणे–शुक्लत्वं शुक्लता, रूपत्वं रूपता, रसत्वं रसता । क्रियायां-क्रियात्वं क्रियाता । समास कृत्तद्धितेषु सम्बन्ध एव प्रवृत्तिनिमित्तम् । कृष्णपुरुषत्वं पूजकत्वं अनुग्राह्यत्वं यादवत्वं भागवतत्वम् ।

---

**अमृता०**—८३४. यस्येति । तस्य भाव इत्यर्थे यथाक्रमं ब्रह्मलक्ष्म्योः त्व-तापौ प्रत्ययौ भवतः । तापः पइत् । भाव शब्दस्य विशेषार्थं व्युत्पादयति—भवत इत्यादिना । तत्राभिदानं संज्ञा, प्रत्ययस्तु प्रतीतिरित्यर्थः । तदेव विशयति—शब्देति । यमर्थमुपादाय यत् यस्मिन् प्रवर्तते तत्तस्य शब्दस्य प्रवृति निमित्तम् । जात्यादीति—जातिगुण क्रिया वाचिनां वस्तूनां धर्म इत्यर्थः । गो र्भावो गोत्वं, यत्र तद् वर्त्तते तत्रैव गोशब्दः प्रयुज्यते, तदेव गोशब्दस्य प्रवृत्ते र्निमित्तमिति भावः ।

समासेति—समासकृत्तद्धितै र्निष्पन्नेषु शब्देषु सम्बन्ध एव प्रवृत्तिनिमित्तम्, ससम्बन्ध एव भावः । यथा समासे कृष्णपुरुषस्य सम्बन्धरूपो भावः कृष्णपुरुषत्वम् । कृति पूजयतीति पूजकः, कत्तरि णकः, अत्र पूजन कर्त्तृत्वसम्बन्धो भावः । एव मनुग्राह्यस्य भावः अनुग्राह्यत्वमिति । तद्धिते यदोरपत्यं पुमान् यादवः, तस्य जन्यजनक रूपः सम्बन्धो भावो यादवत्वमिति । भगवता प्रोक्तं, भगवत इदमिति वा भागवतम्; अत्र कार्यकारण सम्बन्धरूपो भावो भागववत्वमिति । पक्षे कृष्ण पुरुषता पूजकता अनुग्राह्यता यादवता भागवततेति च ।

---

**बाल०**—तस्य । तस्य भाव इत्यर्थमधिकरोति तस्येति । चशब्दाद्विधिश्च । भावार्थं स्पष्टयति भवेति । अभिधानं कथनं प्रत्ययः प्रतीतिविषयः, अस्माद्धर्मादभिधान प्रत्ययौ भवत इति भावः । पुनस्तमेव विशदयति शब्देति । सच शब्दप्रवृत्तिनिमित्तं जात्यादिरूपो वस्तूनां धर्मविशेष इत्यर्थः । यमर्थमुपादाय यद्यस्मिन् प्रवर्तते तत्तस्य शब्दस्य प्रवृत्तेर्निमित्तं तत्प्रतीतिकारणत् । सूत्रं विवृणोति तस्येति । तस्य भाव इत्यर्थे नाम्नस्त्वतापौ भवन्तौ यथासंख्यं ब्रह्मलक्ष्म्योर्वर्तेते इत्यर्थः । तत्र प्रथमतो जातिरूपे वस्तुधर्मे उदाहरन्नाह जाताविति । गोर्भावो गोत्वं यत्र गोत्वं वर्तते तत्रैव गोशब्दप्रयोगः क्रियते इति भवति । गोत्वं गोशब्दस्य प्रवृत्तिनिमित्तं । जात्यादीत्यत्रादिपदेन गुणक्रिययोर्ग्रहणमिति तयोरुदाहरणं दर्शयति गुण इति । शुक्लस्य भावः शुक्लत्वमिति शुक्लशब्दस्य प्रवृत्तिनिमित्तं । एवमुत्तरत्रापि योज्यं । यथा रूपत्वमित्यादीनि चत्वारि, तथा शब्दत्वं शब्दता, स्पर्शत्वं स्पर्शता, गन्धत्वं गन्धतेति ज्ञेयं । क्रियात्वमित्यादिद्वये गुणवचनो त्वतापोरित्यनेन पुरुषोत्तमवत्त्वं न स्यात्, क्रियाशब्दस्य गुणकल्पनेऽपि वाच्यलिङ्गत्वाभावात् ।

**८३५. यद्दृच्छाशब्दात् स्वरूपमात्रेऽभिधानम् ।**

**डित्थत्वं डवित्थत्वं । एवं कवर्ग एव कुत्वम् ।**

**८३६. पक्षे त्व-तापौ ।**

**प्रभुरयम् ।**

**८३७. नृसिंह-न-स्नयोश्च ।**

**पक्षे त्व-तापौ स्याताम् । स्त्रैणं स्त्रीत्वं स्त्रीता, पौंस्नं पुंस्त्वं पुंस्ता ।**

---

**अमृता०**—८३५. यद्दृच्छेति । यद्दृच्छाशब्दात् स्वरूपमात्रार्थे त्वतापो रभिधानं भवति । व्यवहारार्थं येनकेनापि कथमपि प्रयोक्तव्यः संज्ञाशब्दो यद्दृच्छाशब्दः । डित्थ एव डित्थत्वं । एवमन्यत्र च ज्ञेयम् ।

**अमृता०**—८३६. पक्ष इत्यधिकारो विभाषायाः ।

**अमृता०**—८३७. नृसिंहेति । स्त्री-पुंसाभ्यां नृसिंह नस्नौ भावे चेति विहितयोः न-स्नयोः स्थाने पक्षे पुनःत्व-तापौ च स्याताम् । स्त्रियाभावः स्त्रैणमित्यादि । एवं पुंसो भावः । पौंस्नं पुंत्वादी च ।

---

सम्बन्धस्यापि प्रकारान्तरेण भावार्थता प्रतिपादयति समासेति । समासकृत्तद्धितेषु समासादिसिद्धेषु शब्देषु सम्बन्ध एव प्रवृत्तिनिमित्तमिति सम्बन्ध एव भावः । अन्यथा एभ्यस्त्वतापौ न स्यातां । कृष्णस्य पुरुषः कृष्णपुरुष इत्यत्र षष्ठ्या निरूपितो य उभयसम्बन्धः स एव प्रवृत्तिनिमित्तं सत् भाव इति कृष्णपुरुषत्वं । पूजयतीति कर्तरि णकः पूजक इत्यत्र पूजनकर्तृत्वसम्बन्धः प्रवृत्तिनिमित्तमिति स एव भाव इत्यतः पूजकस्य भावः पूजकत्वमिति । एवं ण्यत्प्रत्ययान्तस्यानुग्राह्यस्य भावः । अनुग्राह्यत्वमिति । यदोरपत्यं पुमान् यादव इत्यत्रापि पूर्ववत् षष्ठ्या निरूपित उभयसम्बन्ध एव भावस्तेन यादवस्य जनकजन्यसम्बन्धरूपो भावः यादवत्वमिति । एवं भगवता प्रोक्तं भगवतोऽयमिति वा भागवतं भागवतश्चेत्युभयत्रापि षष्ठ्या निरूपितः कारणकार्यादिसम्बन्धः भाव इति भागवतस्य कारणादिसम्बन्धरूपो भावो भागवतत्वमिति । एवं पक्षे कृष्णपुरुषता पूजकता अनुग्राह्यता यादवता भागवततेति ।। ८३४ ।।

**बाल०**—यद्द । यद्दृच्छाशब्दात् स्वरूपमात्रेऽर्थे त्वतापोरभिधानं स्यात् । व्यवहारार्थो येन केनापि कथञ्चिद्रूपेण प्रयोक्तव्यः शब्दो यद्दृच्छाशब्दः । डित्थ एव डित्थत्वं । एवं डित्थता डवित्थतेति । डित्थः घर्ममयो हस्ती डवित्थः घर्ममयो मृग इति कश्चित् ( चर्ममयः, काष्ठमयः इतिच ? ) । वस्तुधर्माभावादत्र स्वरूपेऽभिधानमिति । पुनरप्युदाहरणान्तरं ददाति एवमिति ।। ८३५ ।।

**बाल०**—पक्षे । तस्य भाव इत्यर्थे नाम्नः पक्षे त्वतापौ भवतः । प्रभुनामायमधिकार इत्याह प्रभुरिति । अत्र विभु चेमाविति क्वचित् पुस्तके दृश्यते, तदपि नासङ्गतं तदवान्तरसजातीयविजातीयानेकाधिक, रव्यापित्वसम्भवात् ।। ८३६ ।।

**८३८. न नञ्कृष्णपुरुषाद्वक्ष्यमाणाः, अचतुरादिवर्जम् ।**

अपतित्वमपतिता । अत्र पत्यन्तेति न नृसिहयः । अत्र तु स्यात् आचतुर्यं आसङ्गत्वं आलवण्यं आवह्यं आबुध्यं आकत्वं आवश्यं आलस्यम् ।

**८३९. पृथ्वादिभ्य इमनिर्वा ।**

वा करणं केशवणादेः समावेशार्थम् । यथा प्रथिमा पृथुत्वं पृथुता, पाटवं पटुत्वं पटुता ।

---

**अमृता०**—८३८. नेति । अचतुरादीन् वर्जयित्वा तस्य भाव इत्यर्थे नञ् कृष्णपुरुष-समासान्तान्नाम्नो वक्ष्यमाणा इमन्यादयः प्रत्यया न भवन्ति किन्तु केवलं त्वतापौ भवतः । अचतुरादिभ्यस्तु वक्ष्यमाणा भवन्ति पक्षे त्वतापौ च । अपतेर्भावः अपतित्वं अपतिता च । अत्र नञ् समासे इमन्यादे निषाधात् केवलौ त्वतापौ । वक्ष्यमाणविधानसूत्रं स्मारयति—पत्यन्तेति पत्यन्तात् परस्मात् हितादेश्च नृसिह यः इति वक्ष्यमाणेन विहितो नृसिह य इह न भवतीति भावः । अचतुरादेस्तु निषेधेवर्जनात् सर्वं स्यादित्याह—अत्र तु स्यादिति । अचतुरोभावः इत्यर्थे नृसिह यः–आचतुर्यं, पक्षे त्वतापौ·अचतुरत्वं अचतुरता । एवं पक्षे असङ्गतित्वमित्यादि ज्ञेयम् ।

**अमृता०**—८३९. पृथ्वादिभ्य इति । तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनि र्वा स्यात् । इमनेनिराम इत् । ननु पक्षे त्वतापौ इत्यधिकारात् त्वत एवमनेर्विभाषा प्राप्तिरस्ति किमत्र पुन र्वा करणेनेति चेत् ? तत्र तदुद्देश्यमाह—केशवणादेः समावेशार्थमिति । अन्यथार्थैतद्विशेष विधानेन सामान्यः केशवणं वाधित्वा हि त्वतापौ भवेतामिति भावः ।

---

**बाल०**—नृसि । स्त्रीपुम्भ्यां नृसिहनस्नौ भावेच वेति विहितयोर्नृसिहनस्नयोः स्थाने पक्षे पुनस्त्वतापौ स्यातां । यथेति उदाह्रियत इति शेषः । पृथोर्भाव इति पृथ्वादिभ्य इमनिर्वेति वक्ष्यमाणेन इमन् अनेकसर्वेश्वरस्य संसारहरः पृथुमृद्वादेर्ऋ रामस्य रश्चेति प्रथिमन् सुनान्तेति त्रिविक्रमः सुनरामयोर्हरः प्रथिमेत्यादि । पटोर्भाव इति वा करणं केशवणादेरिति वक्ष्यमाणरीत्यौत्सर्गिककेशवणः उद्वयस्येति गोविन्दः पाटवमित्यादि । स्त्रियो भावः स्त्रैणमित्यादि । पुंसी भावः पौंस्नमित्यादि ॥ ८३७ ॥

**बाल०**—न नञ् । तस्य भाव इत्यर्थेऽचतुरादीन् वर्जयित्वा न नञ्कृष्णपुरुषसमा-सान्तान्नाम्नो वक्ष्यमाणाः प्रत्यया न भवन्ति । अचतुरादिभ्यस्तु वक्ष्यमाणा भवन्ति पक्षे त्वतापौच । अपतेर्भावः अपतित्वमपतितेत्यत्र वक्ष्यमाणानां प्रतिषेधात् त्वतापौ स्यातां । वक्ष्यमाणप्रत्ययविधानसूत्रं स्मारयति अत्रेति । अस्मिन् पत्यन्तादित्यनेन नृसिहयौ न स्यात् । नञ्कृष्णपुरुषादिति किं न पटवः सन्त्यस्य अपटुस्तस्य भाव आपटवमित्यत्र सामान्यतः केशवणः नञ् इति किं वार्हस्पत्य इत्यत्र पत्यन्तादिति नृसिहयः स्यात् । अचतुरादिभ्योऽनेन वक्ष्यमाणयः स्यादित्याह अत्र त्विति । अचतुर्णां भाव आचतुर्यमित्यादि, पक्षे अचतुरत्वमचतुरतेत्यादि । अत्रारुच्यमपि कश्चित् पठति ॥ ८३८ ॥

## ८४०. इमनिः पुंसि ।

पृथु मृदु पटु महत् तनु लघु बहु साधु आखु उरु गुरु दक्ष खण्ड बहुल चण्ड अकिञ्चन स्वादु ह्रस्व दीर्घ ऋजु क्षिप्र क्षुद्र प्रियादिः पृथ्वादिः । प्रथिमा म्रदिमा पटिमा महिमा तनिमा लघिमा भूमा साधिमा आखिमा वरिमा गरिमा दक्षिमा खण्डिमा बंहिमा चण्डिमा अकिञ्चनिमा स्वादिमा ह्रसिमा द्राघिमा ऋजिमा क्षेपिमा क्षोदिमा प्रेमा । पक्षे पार्थवमित्यादीनि च ।

---

**अमृता०**—८४०. इमनरिति । पृथ्वादिगणं दर्शयति—पृथुमृद्वित्यादिना । क्रमेणोदाहरणान्याह—प्रथिमेत्यादीनि । अनेक सर्वेश्वरस्य संसारहरः, पृथुमृद्वादे ऋ रामस्य रञ्च, तथा क्षिप्रस्य क्षेप इत्याद्यादेशाश्च । पृथुं मृदुं भृशश्चैवेत्यादिना षण्णामेव रविधिस्मर्त्तव्यः । पक्षे केशवणञ्च दर्शयति—पक्षे पार्थिवमित्यादीनि चेति । पक्षे त्वतापौ—पृथुत्वंपृथुता इत्यादीनि च ।

---

**बाल०**—पृथ्वा । तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनिर्वा स्यात् । विकल्पार्थे वाशब्दप्रयोगस्य फलं दर्शयति वा-करणमिति ॥ ८३९ ॥

**बाल०**—इम । इमनिः पुंसि वर्तते इत्यर्थः । सिद्धोपदेश इत्यनेनान्त्य इराम इत् । पृथ्वादिगणं दर्शयति पृथ्विति । पृथ्वादिः प्रियान्त आदिर्यस्य स पृथ्वादिः स्यादित्यर्थः । प्रियादिरित्यादिपदेन बाल होड पाक वत्स मन्द आशु इत्येतेषां ग्रहणं । पृथ्वादीनां क्रमेणोदाहरणान्याह प्रथिमेति । अनेकसर्वेश्वरस्य संसारहरः । पृथुमृद्वादेर्ऋ रामस्य रश्च । क्षिप्रस्य क्षेपः, दीर्घस्य द्राघः, बहुलस्य बंहः, ह्रसः, क्षुद्रस्य क्षोदः, गुरोर्गरः, उरोर्वरः, प्रियस्य प्रः, बहोर्भूः णीष्ठेमेयःस्वित्यनेन पृथ्वादीन्याख्यातोक्तानि कार्याण्यत्र यथास्वं स्युः । पृथुं मृदुं भृशञ्चैव कृशञ्च दृढमेवच । परिपूर्वं दृढञ्चैव षडिमान् रविधौ स्मरेदिति रविधानञ्चात्र स्मर्तव्यं । किञ्च, भूमेत्यत्र शिष्टप्रयोगसाम्याय तद्धितबाहुल्यादिमनि वहोर्भूरिति कृते इम्न इरामहरः कार्यः । अत्र भूयिमेति क्वचित् पुस्तके दृश्यते तत्तु न साधीयं, भूतो युट् इत्युत्तरसूत्रे णीष्ठेयःस्वित्तत्र परनिमित्ते इम्नो ग्रहणाभावात् । अत्र बहिमेति कश्चित् पठति तदपि न समञ्जसं भूरित्यादेशस्यानिवार्यत्वात् । पक्षे. केशवण-त्वतापादयोऽपि भवन्तीत्याह पक्ष इति । पार्थवमित्यत्र ईशान्ताच्च लघुपूर्वादिति वक्ष्यमाणेन केशवणः । उद्वयस्य गोविन्द इति गोविन्दः । इत्यादीनीत्यादिशब्देन चशब्देनच एतज्ज्ञापितं । येऽत्र लघुपूर्वा ईशान्ताः पृथ्वादयस्तेभ्य ईशान्तादित्यनेन केशवणः, ये गुणवचनाः खण्डादयस्तेभ्यः पक्षे गुणवचनादित्यनेन नृसिंहयः, ये वयोवाचिनो बालादयस्तेभ्यः पक्षे वयोवचनादित्यनेन केशवणः स्यात् । त्वतापौतु पक्षे सर्वेभ्य एवेति । मलिनिमेत्यसाधुरित्यन्ये, तेन नायमाकृतिगणो येन अपठितेभ्योऽपि इमनादिर्विधेयः, भवतु तर्हि ब्रह्मणि प्रेमेति कथं, सत्यं नेदं इमनन्तरूपं किन्तु प्रीङ्धातोर्मनन्तरूपमिति ॥ ८४० ॥

 

## ८४१. वर्णाद्दृढादेश्च नृंसिहय इमनिश्च ।

वर्णात्—शौक्ल्यं शुक्लिमा, कार्ष्ण्यं कृष्णिमा । दृढ़ादेः—दार्ढ्यं द्रढ़िमा माधुर्यं मधुरिमा, वैमल्यं विमलिमा । त्वतापौ सर्वत्रोदाहार्यौ । इह गुणवचनत्वादेव नृंसिहये सिद्धे वर्णग्रहणमिमन्यर्थम् । वधिर कृश शीत उष्ण मधुरादीनां दृढ़ादौ पाठः । पक्षे इमनि यथा स्यात्, कर्मणि च नृंसिह यो मा भूत् ।

## ८४२. औचित्यादयः ।

ईवन्ता भावे, लक्ष्म्यां साधवः । औचिती आनुपूर्वी वैदग्धी चातुरी ।

---

अमृता०—८४१. वर्णादिति । तस्य भाव इत्यर्थे वर्णवाचकात् दृढ़ादेश्चोत्तरे नृंसिह यः स्यात् । तथा इमनिश्च स्यात् । वर्णादुदाहरति–शौक्ल्यमित्यादी । दृढ़ादेरुदाहरति—दार्ढ्यमित्यादीनि । आदि पदेन आढ्यं पाण्डित्यं मौर्ख्यं वैशारद्यं वैमनस्यमित्यादीनि च ज्ञेयानि । सूत्रे द्वयोरेव ग्रहणात् त्वतापो र्बाधशङ्का स्यादित्यत आह—त्व तापौ सर्वत्रोदाहार्याविति । तस्य भाव इत्यर्थे यथा इमनिः स्यात् तथा कर्मणि चेति विधास्यमानेन नृंसिह यो नभवतीत्यर्थः ।

अमृता०—८४२. औचित्येति । वृत्तिमाह—ईवन्ता इत्यादि । तस्य भाव इत्यर्थे लक्ष्म्यामुचितादीनां केशवणान्तेन औचित्यादय ईवन्ताः साधवो भवन्ति । एवंरौद्री मैत्री सामिग्रीत्यादयश्च ।

---

बाल०—वर्णा । तस्य भाव इत्यर्थे वर्णवाचकात् दृढादेश्च नृंसिहय इमनिश्च स्यात् । वर्णं लक्षीकृत्योदाहरणानि दर्शयति वर्णादिति । शुक्लस्य भावः शौक्ल्यं शुक्लिमेत्यादि । दृढादिमभिलक्ष्योदाहरणान्याह दृढादेरिति । दृढस्य भावः दार्ढ्यं द्रढिमेत्यादि । दृढ मधुरा विमल वृढ परिवृढ भृश अम्ल लवण उपेन्द्र जड मूक मूर्ख पण्डित वक्र वियति विलात विशारद विमति विमनस् सम्मति सम्मनस् इत्यादिर्दृढादिः । उत्तरत्र सर्वत्रैव पक्षे त्वतापौ भवत इत्याह त्वतापाविति । तेन शुक्लत्वं शुक्लतेत्यादि दृढत्वं दृढतेत्यादिचे । गुणवाचिनः शुक्लादेर्गुणवाचित्वादेव नृंसिहये प्राप्तेऽपि इह सूत्रे इमन्यर्थं वर्णोपादानमित्याह इहेति । दृढादौ बधिरादीनामपि पाठ इत्याह बधिरेति तरुणमप्यत्र केचित् पठन्तीति मधुरादीनामित्यत्रादिपदमुपन्यस्तं । स्वाभिप्रेतं पारिभाषिकवाक्यमाह पक्ष इति, अर्थाद्दृढादेः पक्षे । तस्य भाव इत्यर्थे यथा इमनिः स्यात् तथा कर्मणि चेत्यर्थे नृंसिहयो मा भूत । गणस्यास्य गुणविशेषवाचित्वेऽपि वर्णादिति पृथग्ग्रहणात् । माङ्योगे सर्वापवादीङ्भुतेश इत्युक्तात् मा भूत् न भविष्यतीत्यर्थः ॥ ८४१ ॥

बाल०—औचि । विवरणमाह ईवेति । तस्य भाव इत्यर्थे लक्ष्म्यां वाच्यायामुचितादीनां केशवणपूर्वकेवन्ता औचित्यादयः साधवो भवन्ति । यथा औचितीत्यादिचातुरीत्यन्ताश्चत्वारः । एवं मैत्री याथाकामी सामग्री रौद्रीत्यादिच ॥ ८४२ ॥

**८४३. कर्मणि च ।**

इतः परं भावे कर्मणि च ज्ञेयम् ।

**८४४. गुणवचनाद्ब्राह्मणादेश्च नृसिंह यः ।**

गुणवचनात्—जडस्य भावः कर्म वा जाड्यं । एवं मौढ्यं कार्श्यम् । ब्राह्मणादेराकृतिगणात्—ब्राह्मण्यं दौत्यम् । लिङ्ग विशिष्ट ग्रहणात्—दूतीनांभावादि दौत्यम् । ब्राह्मणदूत चौर मध्यस्थ कुशल चपल निपुण पिशुन राजन् दायाद कवि ।

**८४५. अर्हतो नुम् च ।**

आर्हन्त्यं । आर्हन्ती साधुः ।

---

अमृता०—८४३. कर्मणीति । वृत्तिमाह—इतः परमिति ।

अमृता०—८४४. गुणेति । तस्य भावः कर्म चेत्यर्थे गुणवचनशब्दात् ब्राह्मणादेश्चोत्तरे नृसिंह यः स्यात् । ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यमित्यादि । ब्राह्मणादि एकादश संख्यक इति निर्दिशति—ब्राह्मणेत्यादिना ।

अमृता०—८४५. अर्हतइति । तस्यभावः कर्म वेत्यर्थे अर्हत् शब्दात् नृसिंह यः स्यात्, तस्मिन् सति तस्य नुम् च भवति । अर्हतो भावः कर्म वा आर्हन्त्यम् । आर्हन्तीति त्वीवन्तेन साधु भवति । विष्णुजनान्तद्धितयस्येत्यादिना यरामहरः ।

---

बाल०—कर्म । वृत्तिमाह इत इति । इतः परं तस्य भावे कर्मणि चार्थे नाम्नो यथायोग्यं वक्ष्यमाणप्रत्ययः स्यादिति ज्ञेयं ॥ ८४३ ॥

बाल०—गुण । तस्य भावः कर्म वेत्यर्थे गुणवचनात् ब्राह्मणादेश्च उत्तरो नृसिंहयः स्यात् । गुणवचनं लक्षीकृत्योदाहरिष्यन्नाह गुणवचनादित्यादि । गुणवाचकस्यापरिमितत्वाद्यथायोग्यमन्यान्युदाहार्याणि । एवमाकृतिगणं ब्राह्मणादिमपि लक्षीकृत्योदाहरण्याह ब्राह्मणादेरित्यादि । ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यमिति । एवं दौत्यमिति । नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायं हेतुं विन्यस्याह लिङ्गेति । अतएव दूतीशब्दस्यापि दौत्यमिति । ब्राह्मणादेराकृतिगणादित्युक्त्वापि ब्राह्मणादिकव्यन्तानेकादश ब्राह्मणादीन् दर्शयति ब्राह्मणेति । एवं मानव वाडव धूर्त आराधय विराधय उपराधय परिराधय अपराधय द्विभाव एकभाव त्रिभाव अल्पभाव अक्षेत्रज्ञ सम्बादिन सम्वेशिन् बहुभाषिन् शीर्षघातिन समस्थ परमस्थ विषमस्थ अनीश्वर वालिश अलस दुष्पुरुष विशस्ति विषाय करि सहाय गडुल विज्ञातेत्यादिश्च ब्राह्मणादिः ॥ ८४४ ॥

बाल०—अर्ह । तस्य भावः कर्म वेत्यर्थेऽर्हच्छब्दान्नृसिंहयस्तस्मिंस्तस्य नुम्च स्यात् । आर्ह । तस्य भावः कर्म वेत्यर्थे अर्हन्तीच साधुः स्यात् । भावकर्मणोर्वाच्ययोर्विहित प्रत्ययस्य सामान्यतो ब्रह्मत्वे प्राप्ते लक्ष्मीलिङ्गार्थं वचनं तेन लक्ष्म्यां निपातनादीपि सति वष्णुजनात्तद्धित-यस्येत्यनेन यहरः ॥ ८४५ ॥

८४६. स्तेयं स्तैन्ये, कापेय-ज्ञातेय-वणिजाश्च साधवः ।

८४७. पत्यन्तात् पुरोहितादेश्च नृसिंह यः ।

व्राजपत्यं पौरहित्यं सैन्यम् ।

८४८. प्राणिजाते वयोवचनादुद्गात्रादेश्च केशवणः, ईशान्ताच्च लघुपूर्वात् ।

प्राणिजातेः—कार्ष्णसारं हारिणम् । वयोवचनात्—कौमारं यौवनं स्थाविरम् । उद्गात्रादेः—औदगात्रं औन्नेयं पौरुषं सौहृदं चापलं नैपुणं पैशुनं कौतूहलम् ।

---

अमृता०—८४६. स्तेयमिति । तस्य भावः कर्म वेत्यर्थे स्तैन्ये वाच्ये स्तेन शब्दस्य नस्य हरेण स्तेयमिति साधु स्यात् । स्तैन्यं चौर्यमित्यर्थः । तथा माधवढ़ेन सह कपि-ज्ञात्योः कापेय-ज्ञातेयौ, तथा नृसिंह येन साकं वणिजो वाणिज्यश्च साधवो भवन्ति ।

अमृता०—८४७. पत्यन्तादिति । तस्यभावः कर्म वेत्यर्थे पति शब्दान्तात् पुरोहितादेश्चोत्तरे नृसिंह यः स्यात्, इमन्यपवादः । व्रजपतेर्भावः कर्म वा व्राजपत्यमित्यादि । पक्षे व्रजपतित्वमित्यादि च । गणस्तु परिशिष्टे द्रष्टव्यः ।

अमृता०—८४८. प्राणीति । तस्यभावः कर्म वेत्यर्थे प्राणि जाते वयो वाचकाद् उद्गात्रादेश्च केशवणः स्यात् सर्वापवादः । तथा पूर्वोक्तार्थे हि लघुपूर्वान्तादीशान्ताच्च केशवणो भवति । उच्चैर्गायतीति उद्गाता, तस्य भावः कर्म वा औदगात्रम् । एवं होत्रं भात्रं प्राशास्त्रं राथं गाणकं सौष्ठवं आध्वर्यवमित्यादयश्च ।

---

बाल०—स्तेयं । तस्य भावः कर्म वेत्यर्थे स्तैन्ये वाच्ये यरामेण साकं स्तेनस्य नस्य हरेण स्तेयं साधु । स्तैन्यन्तु पुरोहितादित्वान्नृसिंहयान्तं । स्तैन्यं चौर्यं । तस्य भावः कर्म वेत्यर्थे माधवटेन सह कपिज्ञात्योः कापेयज्ञातेयौ नृसिंहयेन साकन्तु वणिजो वाणिज्यश्चेत्येते साधवो भवन्ति । दूतवणिज्भ्यां यश्चेति कस्यचिद्वक्तव्यं तेन दूत्यं वणिज्यमितिच ॥

बाल०—पत्य । तस्य भावः कर्म वेत्यर्थे पतिशब्दान्तात् पुरोहितादेश्च नृसिंहयः स्यात् । व्रजपतेर्भावः कर्म वा व्राजपत्यमिति । एवं गाणपत्यं आधिपत्यं गार्हपत्यमित्यादि । पुरोहितस्य भावः कर्म वा पौरोहित्यमित्यादि । पुरोहित सेना ग्रामिक खण्डिक दण्डिक कर्मिक चर्मिक धार्मिक शिलिक पूतिक परिषदिक प्रतिक सारथिक अञ्जलिक सारक्ष सूचकेत्यादिः पुरोहितादिः । पक्षे व्रजपतित्वं व्रजपतितेभ्यादिच ॥ ८४७ ॥

बाल०—प्राणि । तस्य भावः कर्म वेत्यर्थे प्राणिजातेर्वयोवाचकादुद्गादेश्च केशवणो भवति । ईशा । तस्य भावः कर्म वेत्यर्थे लघुपूर्वादीशान्ताच्च केशवणः स्यात् तत्र प्राणिजाते रूपं दर्शयत इत्याह प्राणीति । एवं वयोवचनादित्यादावपि रूपं दर्शयत इति

**८४९. श्रोत्रियस्य यलोपश्च ।**

श्रौत्रं । ईशान्तादिति—हारं लाघवं, हरीतक्या हारीतकं । ईशान्तात् किं—पटुकत्वं । लघुपूर्वात् किं—पाण्डुत्वम् । काव्यन्तु ब्राह्मणादित्वात् ।

**८५०. योद्धवाद्गुरूपोत्तमान्नृसिंह वुः, रामकृष्णान्मनोज्ञादेश्च ।**

रामणीयकं आचार्यकं साहायकम् । साहाय्यमिति जयादित्यः, नेति भागवृत्तिः । गुरूपोत्तमात् किं—क्षत्रियत्वम् ।

---

अमृता०—८४९. श्रोत्रियस्येति । तस्य भावः कर्म वेत्यर्थे श्रोत्रियस्य केशवणो यरामहरश्च भवति । श्रौत्रमिति—यरामहरे सति अइद्वयस्येति इरामहरः । श्रोत्रियशब्द उद्गात्रादौ पठ्यते, अतो यरामहरार्थमिदं सूत्रम् । पूर्वोक्तसूत्रस्यान्तिमोदाहरणानि दर्शयति—ईषान्तादिति । हरेर्भावः कर्म वा हारम् । ननु कविशब्दस्य लघुपूर्वेशान्तत्वात् केशवणेन भाव्यं, कथं काव्यमिति दृश्यते इति चेतत्राह—काव्यन्तु ब्राह्मणादित्वादिति । किञ्चकतिचिच्छाब्दा उभयगणधृतत्वाद् रूपद्वयं भजन्तीति दर्श्यन्ते ते, यथा—कौशल्यं, नैपुण्यं नैपुणं, पैशुन्यं, सौहार्दं सौहाद्यं, हृदादेशाभावपक्षे सौहृद्यञ्च इत्यादि ।

अमृता०—८५०. योद्धवादिति । तस्य भावः कर्म वेत्यर्थे यरामोद्धवाद् गुरूपोत्तमात् शब्दात् नृसिंह वुः स्यात्, तस्मिन्नेवार्थे रामकृष्णसमस्तशब्दात् तथा मनोज्ञादेश्चोत्तरे नृसिंह वु र्भवति । रमणीयस्य भावः कर्म च रामणीयकमित्यादि । प्रत्युदाहरनि—क्षत्रियत्वमिति । क्रमदीश्वरादिभिस्तु—अप्रख्यातादिति विशेषणं निवेशितं, तेन सौप्रख्यं सुप्रख्यत्वमिति च प्रत्युदाहृयम् । रामकृष्णसमासे तु लक्ष्म्यामेवाभिधानमिति विशिष्याह—

---

योज्यं । उच्चैर्गायति यः स उद्गाता तस्य भावः कर्म वा औद्गात्रमित्यादिर्यथा । एवमौन्नेत्रं प्राशास्त्रं हौत्रं स्रात्रं प्रातिहस्त्र राथं गाणकं सौष्ठवं दौष्ठवं आध्वर्यवमित्यादिश्च ॥ ८४८ ॥

बाल०—श्रोत्रि । तस्य भावः कर्म वेत्यर्थे श्रोत्रियस्य सम्बन्धे केशवणो यरामहरश्च स्यात् । यरामहरे सति अ-इद्वयस्येतीरामहरः श्रौत्रमिति । श्रोत्रियशब्दोऽयमुद्गात्रादिगणपठित इत्यस्मादत्र य हराय सूत्रमिदं । न चेत्तदा ईशान्ताच्चेत्यस्योदाहरणमदत्त्वा इदं करणमयुक्तं स्यात् । कवेर्भावः कर्म वेति ब्राह्मणादित्वेन नृसिंहयान्तं काव्यमित्याह काव्यन्त्विति । क्रमदीश्वरपद्मनाभादिभिस्तु ब्राह्मणादेः उद्गात्रादेश्च आकृतिगणत्वात् कौशल्यमित्याद्युदाहरणानि । मिश्रगणश्चात्र दर्शिता । यथा, कौशल्यं नैपुण्यं, पैशुन्यं, पैशुनं, सौहाद्यं सौहार्दं, हृदादेशाभावं मत्वा पक्षे सौहृद्यञ्चेत्यादि । कुशल निपुण पिशुन स्थविर सुहृद् कुतूहल सुभ्रातृ दुर्भ्रातृ होतृ यजमान भ्रातु कर्ण कुक्कुटाण्डक श्रमण कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय वृषन् परिव्राजक ब्रह्मचारिन् अनुशंस क्षेत्रज्ञेत्यादि ॥ ८४९ ॥

## ८५१. रामकृष्णात्तु लक्ष्म्याम् ।

शैष्योपाध्यायिका पैतापुत्रिका । मनोज्ञादेः—मनोज्ञकं प्रैयरूपकं आभिरूपकं आमुष्यपुत्रकं कौशलपुत्रकं आढ्यच्छात्रकम् ।

## ८५२. गोत्रचरणाभ्यां श्लाघाधिक्षेपतत्प्राप्तिविषये नृसिंह वु र्लक्ष्म्याम् ।

---

अमृता०—८५१. रामकृष्णादिति । शिष्यश्च उपाध्यायश्च शिष्योपाध्यायौ, तयो र्भावः कर्म वा शिष्योपाधायकः, कृष्णादाप् लक्ष्म्यामित्यात्, प्रत्ययस्तात् कादिति पूर्वा-रामस्येरामः—शिष्योपाधायिका । पैतापुत्रिकेत्यत्र—ऋरामस्याराम इति विशेषः । मनो-ज्ञादे रूपाणि दर्शतानि ।

अमृता०—८५२. गोत्रेति । श्लाघविषये अधिक्षेपविषये तत् प्राप्ति विषये च गौत्र-चरणाभ्यामुत्तरे लक्ष्म्यां नृसिंह वु र्भवति । अत्र अपत्य निमित्ता आख्या तथा प्रवराध्याय-

---

बाल०—योद्ध । तस्य भावः कर्म वेत्यर्थे यरामोद्धवाद् गुरुपोत्तमान्नाम्नो नृसिंहवुर्भवति । त्रिप्रभृतीनामन्त्यमुत्तमं तत्समीपमुपोत्तममित्युक्तमत्र स्मर्तव्यं ॥ ८५० ॥

बाल०—राम । तस्य भावः कर्म वेत्यर्थे रामकृष्णसमाससिद्धान्नाम्नो मनोज्ञादेश्च नृसिंहवुः स्यात् । रमणीयस्य भावः कर्म वेति रमणीयकमित्यादि । सहायशब्दादत्रार्थे नसिंहय इति जयादित्यमतं नेति भागवृत्तिमतमिति मतद्वयमुपन्यस्यति साहाय्यमिति । गुरुपोत्तमाभावेतु व्यावृत्तिरूपं दर्शयन्नाह गुरुपेति । क्षत्रियत्वमिति, एवं क्षत्रियतापि । योपान्तादप्रख्यादन्ताजद्वितीयगुर्वचोणक इति क्रमदीश्वरः तेन सुप्रख्यस्य सौप्रख्यं सुप्रख्यत्वमितिच । तथाच, योपान्ताद्गुरूपोत्तमान्तादसुप्रख्याद्वुञिति चन्द्रः । योपधाद्-गुर्वजुपधादकणसुप्रख्यादिति वर्द्धमानः । पाणिनीयास्त्वसिद्धत्वेन ख्याञो यकारस्य षकारत्वाद्योपान्तता नास्तीति वदन्ति, ख्यातेरयं प्रयोग एव नास्त्यनभिधानादिति तैरङ्गीकरणीयं, तेन दुष्प्रख्यादपि न भविष्यतीति तेषामभिप्रायो लक्ष्यते, इत्यस्माकं ग्रन्थकृता असुप्रख्यादिति विशेषणं न दत्तमिति । यद्यपि रामकृष्णादिति सामान्येनोक्तं, तथापि लक्ष्म्यामभिधानमिति स्वाभिप्रेतमाह रामेति । शिष्यश्च उपाध्यायश्च शिष्योपाध्यायौ तयोर्भावः कर्म वेति शैष्योपाध्यायक इत्यस्मात् कृष्णादाप् लक्ष्म्यामित्याप्, प्रत्ययस्थात् कादिति पूर्वारामस्येरामः शैष्योपाध्यायिकेति । एवं पैतापुत्रिका । किञ्च, ऋरामस्याराम ऋरामान्तपुत्रयोर्विद्यायोनिसम्बन्ध इत्यनेन पितुर्ऋ रामस्यारामः । मनोज्ञादेरिति रूपं दर्श्यत इति शेषः । मनोज्ञस्य भावः कर्म वा मानोज्ञकं इत्यादि । आमुष्यपुत्रकमिति प्रशस्तकुलजन्मा । अदस आय न कुलिकादिष्वित्यनेनात्रामुष्येत्यस्य षष्ठ्या महाहरनिषेधः । मनोज्ञ प्रियरुप अभिरुप अमुष्यपुत्र आढ्यच्छात्र कल्याण स्वरुप अमुष्यकुल छान्दस मेधाविन् आढ्यकुल पुत्र इन्द्र श्रोत्रिय चौर धूर्त युवन् विश्वदेव अवश्यम् ग्रामपुर परपुत्र ग्रामषण्ड ग्रामकुमार बहुल सहाय वृद्धेत्यादिर्मनोज्ञादिः ॥८५१॥

भावे कर्मणि चेत्यनुवर्तत एव । गोत्रात्—गार्गिकया श्लाघते, दाक्षिकया अत्याकुरुते अधिक्षिपतीत्यर्थः । वात्सिकां समवेतः प्राप्त इत्यर्थः । चरणात्—काठिकया श्लाघत इत्यादि । श्लाघादेरन्यत्रगार्ग्यत्वम् ।

**८५३. ऋत्विग्वाचकेभ्यश्छरामः ।**

आच्छावाकीयं मित्रावरुणीयं ब्राह्मणाच्छंसीयम् ।

**८५४. ब्रह्मण स्त्वः ।**

ऋत्विग्वचनाद्ब्रह्मणस्त्वः स्यात् । ब्रह्मत्वम् । भाव-कर्माधिकारः पूर्णः ।

---

पाठकाश्च गोत्रत्वेन प्रोच्यन्ते । अविद्यमानगुण सम्बन्ध इह श्लाघा कथ्यते । तच्छब्देन गोत्र चरणयोः सम्बन्धिकर्मबोद्धव्यम् । दाक्षिकया अत्याकुरुत इति अधिक्षिपतीति परान् चौरान् मन्यत इत्यर्थः वात्सिकामिति—गोत्र चरण सम्बन्धिनीं वत्सां प्राप्त इति भावः ।

अमृता०—८५३. ऋत्विगिति । तस्य भावः कर्म वेत्यर्थे ऋत्विग्वाचिभ्यः छरामः स्यात् । अच्छावाकस्य भावः कर्म वा अच्छावाकीय मित्यादि । एवमुद्गातृ होतृ प्रतिष्ठातृ स्तोतृ प्रतिहन्तृ उन्नेतृ गावस्तुत् अग्नीघ्र इत्येतेभ्यश्च ।

अमृता०—८५४. ब्रह्मणइति । उक्तार्थे ऋत्विग्वाचिनो ब्रह्मणस्तु त्व प्रत्ययो भवति नतु छरामः । अधिकारं समापयति—भावकर्माधिकारः पूर्ण इति ।

---

बाल०—गोत्र । पूर्वोक्तभावकर्मणोरनुवर्तनं सूचयति भाव इति । तेन तस्य भावः कर्म वेत्यर्थे श्लाघाधिक्षेपतत्प्राप्तिविषये गोत्रचरणाभ्यां नृसिंहवुर्भवन् लक्ष्म्यां वर्तते । या आख्या अपत्यनिमित्ता सा गोत्रशब्दवाच्या अथो वा ये प्रवराध्याये पठन्ति ते गोत्रशब्दवाच्याः यातु आख्या वेदाध्ययनप्रयुक्तान् पुरुषानाचष्टे सा चरणशब्दवाच्या । तच्छब्देन गोत्रचरणयोर्भावकर्मप्राप्तेर्विषये चेति । गार्ग्यस्य भावः कर्म वेति वुः । विष्णुजनात्तद्धितेति यमहाहरः । कृष्णादाविति आप् प्रत्ययस्थात् कादिति पूर्वारामस्येरामः गार्गिका तया श्लाघते आत्मनि वर्तमानं करोतीत्यर्थः । एवं दाक्षिकया अत्याकुरूत इति अधिक्षिपतीति परान् चौरं मन्यत इति निर्गलितोऽर्थः । वात्सिकामित्यादितु स्पष्टं । इत्यादीत्यादिपदेन काठिकया अत्याकुरूते काठिकां समवेत इति । यथा गार्ग्यत्वं । एवं गार्ग्यता । कठत्वं कठतेति ॥ ८५२ ॥

बाल०—ऋत्वि । तस्य भावः कर्म वेत्यर्थे ऋत्विग्वाचकेभ्यश्छरामः स्यात् । अच्छावाकस्य भावः कर्म वा सच्छावाकीयमित्यादि । एवमुद्गातृ होतृ अध्वर्यु प्रस्तोतृ प्रतिस्थातृ प्रतिप्रशातृ प्रोतृ प्रतिहन्तृ अग्नीध्र सुब्रह्मण्य ब्रह्मण्य ग्रावस्तु उन्नेतृ इत्येतेभ्यश्च ॥ ८५३ ॥

बाल०—ब्रह्म । ऋत्विग्वचनात् पूर्वं तस्य भावः कर्म वेत्यर्थं इति योज्यं । सामान्यतस्त्वे प्राप्तेऽपि यत् पुनर्विधानं तत् ता-निरासार्थं । वृत्तौ ऋत्विग्वचनादिति

**८५५. चातुर्वर्ण्यादयः स्वार्थे ।**

चातुर्वर्ण्यं औपम्यं सान्निध्यं यौगपद्यं चातुर्वैद्यं षाड्गुण्यं तादर्थ्यं त्रैलोक्यम् ।

**८५६. धान्यानां भवने क्षेत्रे नृसिंहखः ।**

भवन्त्यत्रेति भवनं । मुद्गानां भवनं मौद्गीनं । एवं कौद्रवीणं धान्यीनम् ।

**८५७. व्रीहि-शाल्यो र्माधवढः ।**

व्रैहेयं शालेयम् ।

**८५८. यव-यवक-षष्टिकाभ्यो यरामः ।**

यव्यं यवक्यम् ।

---

अमृता०—८५५. चातुरिति । स्वार्थे नृसियेनसह चतुर्वर्णादीनां चातुर्वर्ण्यादयः साधवो भवन्ति । चतुर्णां वर्णानां समाहारः चतुर्वर्णं, तदेव चातुर्वर्णादिराकृतिगणः ।

अमृता०—८५६. धान्यानामिति । धान्यशब्देनात्र धान्य (शस्य) सामान्यंगृह्यते, नतु धान्यविशेषः । भवनमुत्पत्तिस्थानमित्यर्थः । ख ईनः ।

अमृता०—८५७. ब्रीहीति । धान्यानां भवने क्षेत्रमित्यर्थे व्रीहि शाल्यो रुत्तरे माधवणः स्यात, खरामापवादः । व्रीहेर्भवनंक्षेत्रं व्रैहेयमित्यादि ।

अमृता०—८५८. यवेति । उक्तार्थे यव-यवक-षष्टिकाभ्यो यरामः स्यात् ख-रामापवादः । यवकं वोरधान्यं, षष्टिका तु षाटिधान्याख्या ।

---

विशेषणात् ब्राह्मणपर्यायस्य ब्रह्मणस्तु ब्रह्मत्वं ब्रह्मताच । भावकर्माधिकारं समापयति भावेति ।। ८५४ ।।

बाल०—चातु । स्वार्थेऽर्थे नृसिंहयेन सह चतुर्वर्णादीनां स्थाने चातुर्वर्ण्यादयः साधवो भवन्ति । चतुर्णां वर्णानां समाहारः चतुर्वर्णं तदेव चातुर्वर्ण्यं उपमैव उपम्यमित्यादि । सामान्यदत्र ब्रह्मत्वं । चतुर्वर्णादिराकृतिगणः ।। ८५५ ।।

बाल०—धान्या । धान्यानामित्यत्र बहुवचनमाद्यर्थं । तेन धान्यशब्देन धान्यमात्रस्य ग्रहणं । व्युत्पत्तिद्वारा भवनशब्दस्याधिकरणटनान्ततां प्रतिपादयन्नाह भवस्त्येति । अर्थात् धान्यानि भवन्ति यत्र तद्भवनं धान्यानामुत्पत्तिस्थानं । धान्यानां भवने क्षेत्रे वाच्ये धान्यादेरुत्तरो नृसिंहखो भवति । मुद्गानां भवनमित्यस्मात् क्षेत्रमिति योज्यं । यथा मौद्गीनमित्यादित्रयं । एव कौलत्थीनमित्याद्यपूह्यं । धान्यशब्दस्य तद्धित-यस्याभावात् विष्णुजनादित्यनेन य-महाहरो न स्यात् ।। ८५६ ।।

बाल०—व्रीहि । धान्यानां क्षेत्रमित्यर्थे व्रीहिशाल्योः सम्बन्धे माधवढो भवति । व्रैहेयमित्यादिद्वयस्य व्रीहेर्भवनं क्षेत्रं शाल्या भवनं क्षेत्रमित्यर्थः ।। ८५७ ।।

**८५९. तिलमाषोमाभङ्गाणुभ्यो यरामो वा ।**

तिल्यं तैलीनम् ।

**८६०. अधान्यानां शाकट-शाकिनौ ।**

इक्षुशाकटं इक्षुशाकिनम् ।

**८६१. तेन वित्त श्चुञ्चु-चनौ ।**

हरिभक्ति चुञ्चुः हरिभक्तिचनः, तया प्रतीत इत्यर्थः ।

**८६२. सर्वचर्मणावृतः ख-नृसिंहखौ ।**

सर्वचर्मीणः सार्वचार्मीणो रथः ।

---

**अमृता०**—८५९. तिलेति । धान्यानांभवनं क्षेत्रमित्यर्थे तिलादिभ्यः शस्येभ्यः पञ्चभ्यो यरामो वा स्यात्, पक्षेखरामश्च ।

**अमृता०**—८६०. अधान्यानामिति । धान्य व्यतिरिक्तानां (शस्यानां) भवनंक्षेत्र मित्यर्थे नाम्नः शकट शाकिनौ प्रत्ययौ भवतः । इक्षु क्षेत्रमिति भावः । एवं मूलानां भवनं क्षेत्रं मूलशाकिनमित्यादि ।

**अमृता०**—८६१. तेनेति । तेन वित्तः ज्ञात इत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नः चुञ्चु-चनौ प्रत्ययौ भवतः । वित्त इति विद्ज्ञाने इत्यस्मात् क्तः अतोऽर्थमाह—तया प्रतीत इति । तया हरिभक्त्येत्यर्थः ।

**अमृता०**—८६२. सर्वेति । सर्वचर्मणा आवृत इत्यर्थे सर्वचर्म शब्दात् खप्रत्ययः तथा नृसिंहखश्च भवतः । अनुशतादेराकृतिगणत्वेन नृसिंहख पक्षे उभय पदयो वृण्णीन्द्रः ।

---

**बाल०**—यव । धान्यानां भवनं क्षेत्रमित्यर्थे यव-यवक-षष्ठिकाभ्यो यरामः स्यात् । यवकः वारधान्ये रूढ षष्टिका कलासधान्ये (याटिधान) । यवस्य भवन क्षेत्रं यव्यमिति । एवं यवक्यं षष्टिक्यमितिच ॥ ८५८ ॥

**बाल०**—तिल । अधान्यानां भवनं क्षेत्रमित्यर्थे तिलादिभ्यो यरामो वा स्यात् पक्षे नृसिहखश्च । तिलस्य भवनं क्षेत्रं तिल्यं तैलीनश्चेत्यादि । (क) उमाभङ्गाणव इत्येते क्रमेण मसिना कार्पास चिनेत्येतेषु लोकप्रसिद्धचर्थेषु वर्तन्ते । अतसीमप्यत्र कश्चित् पठति । (तिलाणुमाषभङ्गोमातस्यः षट् स्युस्तिलादयः) ॥ ८५९ ॥

**बाल०**—अधा । अधान्यानां भवनं क्षेत्रमित्यर्थे धान्यवाचकव्यतिरिक्तेभ्यः शाकटशाकिनौ भवतः । इक्षूनां भवनं क्षेत्रं इक्षुशाकटं । मुलानां भवनं क्षेत्रं मुलशाकिनं । एवमिक्षुशाकिनं मूलशाकटमित्यादि ॥ ८६० ॥

**बाल०**—तेन । तेन वित्तो ज्ञात इत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नश्चुञ्चुचनौ भवतः । उदाहरणद्वयस्यार्थमाह तयेति । तया हरिभक्त्या । वित्तस्यार्थः प्रतीत इति ( ख्यातः इतिच ? ॥ ८६१ ॥

**८६३. यथामुखं सम्मुखं वा दृश्यतेऽस्मिन्निति खरामः ।**

खरामोऽयं प्रभुश्च । मुखस्य सादृश्यं यथामुखं, समं मुखं सम्मुखं । यथामुखीनः सम्मुखीनो दर्पणादिः ।

**८६४. सर्वपूर्वेभ्यः पथ्यङ्गकर्मपत्र-पात्रेभ्य स्तद् व्याप्नोतीति ।**

सर्वपथं व्याप्नोति सर्वपथीना हरिभक्तिः ।

**८६५. आप्रपदं व्याप्नोति ।**

आप्रपदीनः ।

**८६६. अनुपदं बद्धा ।**

अनुपदीना पादुका ।

---

अमृता०—८६३. यथेति । यथामुखं दृश्यतेऽस्मिन्नित्यर्थे, सम्मुखं दृश्यतेऽस्मिन् इत्यर्थे वा यथामुख-सम्मुख शब्दाभ्यां खरामः स्यात् । अधिकारश्चायंप्रत्यय इत्याह—प्रभुश्चेति । शब्दयोरेतयो सम्भाव्य-मानमर्थान्तरं व्यावर्त्य स्वाभीष्टार्थं व्याचष्टे—मुखस्य सादृश्य मित्यादिना ।

अमृता०—८६४. सर्वेति । तद् व्याप्नोतीत्यर्थे सर्व पूर्वेभ्यः पथि प्रभृतिपञ्चभ्यः खरामःस्यात् । एवं सर्वाङ्गीणा सर्वकर्मीणा बुद्धिः, सर्व पत्रीणः सर्वपात्रेणो महाप्रसादो हरे रिति ।

अमृता०—८६५. आप्रपदमिति । आप्रपदं पदाग्रपर्यन्तं व्याप्नोतीत्यर्थे आप्रपद शब्दात् खरामः स्यात् । आप्रपदीना बनमाला, श्रीराधा शाटी वा ।

अमृता०—८६६. अनुपदमिति । अनुरयं योग्यार्थे दैर्घ्यार्थे च । तेन पश्चाद्योग्ययो-रिति, अनुर्यस्य समीपमाह यस्य च दैर्घ्यमित्येताभ्यामव्ययीभावः । अनुपदीनेति पदानुरूपा पदवद्दीर्घा च पादुकेत्यर्थः ।

---

बाल०—सर्व । सर्वचर्मणा आवृत इत्यर्थे सर्वचर्मशब्दात् खनृसिंहखौ भवतः । अनुशतादीनामाकृतिगणत्वात् सार्वचार्मीण इत्यत्रोभयपदस्य वृष्णीन्द्रः ॥ ८६२ ॥

बाल०—यथा । यथामुखं सम्मुखं वा दृश्यतेऽस्मिन्नित्यर्थे यथामुखसम्मुखशब्दाभ्यां खरामः स्यात् । खराममधिकरोति खरामेति । शब्दद्वयस्याव्ययीभावसमासनिष्पन्नवाक्य-प्रदर्शनपूर्वकमुदाहरणद्वयमाह मुखस्येति ॥ ८६३ ॥

बाल०—सर्व । तद्व्याप्नोतीत्यर्थे सर्वपूर्वेभ्यः पथ्यङ्गकर्मपत्रपात्रेभ्यः खरामः स्यात् । यथा सर्वपथीनेति । एवं सर्वाङ्गीना सर्वकर्मीणा सर्वपत्रीणा सर्वपात्रीणेति ॥ ८६४ ॥

बाल०—आप्र । आप्रपदं व्याप्नोतीत्यर्थे आप्रपदशब्दात् खरामः स्यात् । आप्रपदं पादाग्रपर्यन्तं । आप्रपदीनः पटः ॥ ८६५ ॥

**८६७. सर्वान्नानि भक्षयति ।**

**सर्वान्नीनः ।**

**८६८. अयानयं नेयः ।**

**अयः प्रदक्षिणं, अनयः प्रसव्यं, तदुभयं नेयः । अयानयीनः शारिः ।**

**८६९. परोवरं परम्परं पुत्रपौत्रं वानुभवति ।**

**परांश्च अवरांश्च अनुभवति, निपातनादोत्वं-परोवरीणः । एवं परस्परीणः ।**

---

**अमृता०**—८६७. सर्वेति । सर्वाणि अन्नानिभक्षयतीत्यर्थे सर्वान्नशब्दात् खरामः स्यात् । सर्वान्नीन इति—सर्वेषां वर्णानामन्नानि, सर्व प्रकाराणि उष्णानि शीतलानि सरसानि नीरसानि वा यानि लभ्यन्ते तान्येवभक्षयतीति भिक्षुरिति तात्पर्यम् ।

**अमृता०**—८६८. अयानयमिति । उभयतो नेयो नेतव्य इत्यर्थे अयानयशब्दात् खरामः स्यात् । इममर्थमेवाह-अयः प्रदक्षिणमित्यादिभिः । प्रदक्षिणेन गमनमिति भावः । शारिः द्यूतशलाका ।

**अमृता०**—८६९. परोवरमिति । परोवरं परस्परं पुत्रपौत्रं वा अनुभवतीत्यर्थे परोवरादयः खरामेण निपात्यन्ते । परम्परीण इति—परांश्च परतरांश्चानुभवतीति वाक्ये प्रकृतेः परम्परभावो निपात्यते । परम्परा तु स्त्रीलिङ्गः पृथक्शब्दः, तस्मादेव स्वार्थे नृसिंह यरामेकृते पारम्पर्यमिति भवति । एवं पुत्रपौत्राननुभवति पुत्रपौत्रीण इति ।

---

**बाल०**—अनु । अनुपदं बद्धापदमिवायता कृतेत्यर्थेऽनुपदशब्दात् खरामः स्यात् ।।८६६

**बाल०**—सर्वा । सर्वान्नानि भक्षयतीत्यर्थे सर्वान्नशब्दात् खरामः स्यात् । सर्वान्नीनो भिक्षुः ।। ८६७ ।।

**बाल०**—अया । अयानयं नेय इत्यर्थेऽयानयशब्दात् खरामः स्यात् । नेय इति नीञ् प्रापणे इत्यस्मात् कृद्वाहुल्यसामर्थ्येन सर्वेश्वरान्ताद्धातोर्यदित्यनेन कर्तरि यत्प्रत्ययोऽत्र ज्ञेयः । अर्थनिरूपणपूर्वकं वाक्यं दर्शयति अय इति । तदुभयं नेयः, अयानयं नेतव्य इत्यर्थः । अयः प्रदक्षिणगमनं, अनयः प्रसव्यगमनमित्यन्ये ।। ८६८ ।।

**बाल०**—परो । परोवरं परस्परं पुत्रपौत्रं वानुभवतीत्यर्थे परोऽवरादेः खरामः स्यात् । इतरेतरेत्यनेनान्योन्य इत्यत्र यथा निपातनादोत्वं तद्वदिहापीत्याह परांश्चेति । परांश्चावरांश्यानुभवतीति वाक्ये रामकृष्णसमाससिद्धं परोवरमित्यत्र निपातनादोत्वं । ततः खरामः । परोवरीण इति । एवमिति परस्परमनुभवति परस्परीण इति । तथा पुत्रपौत्रमनुभवति पुत्रपौत्रीण इतिच ।। ८६९ ।।

**८७०. अवारं पारमत्यन्तमनुकामं वा गच्छति ।**

अवारीणः पारीणः अवारपारीणः पारावारीणः अत्यन्तीनः अनुकामीनः ।

**८७१. समांसमीना प्रत्यब्दप्रसवायां, अद्यश्वीनासन्नप्रसवायाम् ।**

अद्यश्वीनो वियोग इत्यपि जयादित्यः ।

**८७२. आगवीनः आगोप्रतिदानात् कर्मकारिणि, अनुगवीनो गोः पश्चादनुगामिनि, अध्वन्याध्वनीनावध्वानमलं गामिनि,**

---

**अमृता०**—८७०. अवारमिति । अवारं पारं अत्यन्तं अनुकामं वा गच्छतीत्यर्थे अवारादिभ्यः खरामः स्यात् । प्रथमद्वयस्य समस्तत्वेन विपर्यस्तत्वेन वा प्रयोग इष्ट इत्यपि सोदाहरणं दर्शितम् ।

**अमृता०**—८७१. समामिति । प्रत्यब्द प्रसवायां गवादौ समांसमाशब्दस्य समांसमीना इति खरामेण निपात्यते । तथा आसन्नप्रसवायां गवादौवाच्यायां अद्यश्व-शब्दस्य खरामेण अद्यश्वीना इति निपात्यते । तत्र च मतान्तर माह—अद्यश्वीनो वियोग इत्यपीति ।

**अमृता०**—८७२. अगवीन इति । गोप्रत्यर्पणपर्यन्तं यः कर्म करोति स आगवीन उच्यते, गोः पश्चात् पर्याप्तं गच्छति यः सोऽनुगवीनः । अध्वन्येति—अध्वानमलं गामिनि

---

**बाल०**—अवा । अवारं पारमत्यन्तमनुकामं वा गच्छतीत्यर्थेऽवारादेः खरामः स्यात् । क्रमेणोदाहरणान्याह अवारीण इत्यादि । अवारं पारमित्यनयोः क्रमेण व्युत्क्रमेणापि मिलनेच प्रयोगः स्यादिति स्वाभिप्रेतं दर्शयति अवारेत्यादिद्वयं ॥ ८७० ॥

**बाल०**—समां एते माधव इति समां समीनेत्यादीनां विवरणं स्वयमेकत्रैव वक्ष्यति, तेन साधुरिति सर्वत्र योज्यं । प्रत्यब्दप्रसवायां गवादौ वाच्ये खरामेण सह समांसमशब्दस्य समांसमीना साधुः स्यात् । समायां समायां प्रतिवर्षं प्रसूते इत्यर्थः । आभीक्ष्ण्यवीप्सयो-रित्यनेनात्र सम्वत्सरवाचकस्य समाशब्दस्य वीप्सायां द्विरुक्तिस्तस्यां सत्यां निपात-सामर्थ्यात् नरादुत्तरस्मिन् मुमागमश्च स्यात् । समांसमीना प्रत्यशब्दगर्भधारिण्या-मित्यन्ये । (संक्षिप्तसारकाः) । अद्य । आसन्नप्रसवायां गवादौ वाच्ये खरामेण सह अद्यश्व इत्यस्य अद्यश्वीणा साधुः स्यात् । अद्य श्वो वा सूते या सेत्यर्थः । अत्र संसारहरश्च निपातफलं । अत्र तत्र भव इत्यर्थेऽप्ययं प्रयोग इष्ट इति जयादित्यमतेन स्पष्टयति अद्येति । अद्य श्वो भवो वियोग इति अद्यश्वीन इत्यपि स्यादितिजयादित्य आहेत्यर्थः । अद्य श्वो वा भवति अद्यश्वीणं मरणमितितु जुमरः । (तद्धितपरिशिष्टे २४) ॥ ८७१ ॥

**बाल०**—आग । गां प्रति लक्षीकृत्य दानं गोप्रतिदानमित्यस्मात् आङ्युद्धान्मर्या-दाभिविध्योरित्याङ्योगेऽत्र पञ्चमी । गोप्रतिदानपर्यन्तकर्मकारिणि वाच्ये खरामेण साकं आङ्पूर्वस्य गोः आगवीनः साधुः स्यात् । गृहीतस्य सम्बन्धे गां प्रति समर्पणपर्यन्तं यः कर्म

**अभ्यमित्रियाभ्यमित्रीणाभ्यमित्रचा अभ्यमित्रमलं गामिनि, अश्वीनोऽश्वेनैकाहगम्ये ।**

**एते साधवः ।**

**अथ कृतवृष्णीन्द्रा दर्श्यन्ते,—**

**८७३. गौष्ठीनो भूतपूर्वगोष्ठप्रदेशे, शालीन-कौपीने अधृष्टाकार्ययो, व्रातीनो व्रातेन जीवति ।**

**ये शरीरमुपास्य जीवन्ति ते व्राताः, तत्कर्मापि व्रातम् ।**

---

वाच्ये अध्वन् शब्दात् यराम-खरमाभ्यां यथाक्रमं अध्वन्यः अध्वनीनश्च निपात्येते । अभ्यमित्र शब्दात् छराम-खराम-यरामै र्यथाक्रमं अभ्यमित्रियः अभ्यमित्रीणः अभ्यमित्र्य इत्येते साधवो भवन्ति । अश्वीनइति—अश्वेन (करणेन यानेन) एकाहगम्ये दिनैक गम्ये पथि वाच्ये अश्वशब्दात् खरामेण अश्वीन इति साधु र्भवति ।

अमृता०—८७३. गौष्ठीन इति । प्राग्विद्यमानगोष्ठप्रदेशे वाच्ये गोष्ठ शब्दस्य खरामेण सह कृतवृष्णीन्द्रो गौष्ठीन इति साधुः स्यात् । गोष्ठीनं भूतपूर्वकमित्यमरोक्तौ क्लीवत्वन्तु सामान्यनिर्वचनात् । अधृष्टाकार्ययो र्वाच्ययोः शाला कूपयोः खरामेण कृतवृष्णीन्द्रौ शालीन-कौपीनौ साधू भवतः । रूढ़िशब्दावेतौ, यथाकथञ्चिद् व्युत्पाद्येते,—शाला (गृह) प्रवेशमर्हति, प्रगल्भतारहितत्वदन्यत्र गन्तुमशक्तः शालीन इत्यर्थः । एवं कूपपतनमर्हति—कौपीनं पापम् । अकार्यमिति सामान्य वचनं, तस्मात् लज्जाहेतुत्वेनाद्रष्टव्यत्वात् पुरुषलिङ्गं कौपीनमिति केचित्; अस्पृश्यत्वात्तदाच्छादनमित्यपरे । व्रातीन इति—व्रतेन

---

करोति स आगवीन इत्यर्थः । अनु । गोः पश्चादनुगामिनि वाच्ये खरामेण सह अनुपूर्वस्य गोरनुगवीनः साधुः स्यात् । अलं गामिनि वाच्येऽयमित्यन्ये । गोः पश्चादलमतिशयं गन्तुंशीलो गोपोऽनुगवीव इति तद्वाक्योदाहरणे । अस्माकन्तु केवलं गोः पश्चादनुगन्तुंशीलमात्रोऽनुगवीन इति । अध्व । अध्वानमलं गामिनि वाच्ये य-खरामाभ्यां साकं अध्वशब्दस्य अध्वन्याध्वनीनौ साधू भवतः । निपातसामर्थ्यादत्र द्वये नान्तस्य नत्यनीपोरित्यनेन संसारहरो न स्यात् । अभ्य । अभ्यमित्रमलं गामिमि वाच्येऽभ्यमित्रमित्यस्य घरामेण खरामेण यरामेणच सहाभ्यमित्रियाभ्यमित्रीणाभ्यमित्र्याः भवन्ति । अमित्रः शत्रुस्तदभिलक्षीकृत्यालं गच्छतीति अभिप्रती लक्षणेनाभिमुख्ये इत्यनेनाव्ययीभावसिद्धादभ्यमित्रशब्दादत्र घरामादय इति । अश्वो । एकश्च तदहश्चेति राजाहःसखिभ्य इत्यनेनात्र समासान्त अत्प्रत्ययान्त एकाहः शब्दो ग्राह्यः । अन्यथा अह्नो विष्णुसर्गो विष्णुपदान्त इत्यनेन विष्णुसर्गे सति अह्नो विष्णुसर्गस्येत्यनेन रः स्यात् । अश्वेन एकाहं व्याप्य गम्ये देशादौ वाच्ये खरामेण महाश्वस्याश्वीनः साधुः स्यात् । सर्वेषां वृत्तिमाह एत इति ।

अथेति पारिभाषिकं वाक्यं । कृतो वृष्णीन्द्रो येषां ते कृतवृष्णीन्द्राः । अथानन्तरं कृतवृष्णीन्द्राः प्रयोगा दर्श्यन्त इत्यर्थः ।। ८७२ ।।

**८७४. साप्तपदीनं सख्ये, हैयङ्गवीनं ह्योगोदोहोद्भवघृते ।**

एते च साधवः । खरामो निवृत्तः ।

**८७५. पीलुकुणादयः पील्वादिपाके ।**

---

शारीरिकपरिश्रमेण (भारवाहनादिना) नतु बुद्धिप्रभावेण जीवतीत्यर्थे व्रातस्य खरामेण कृतवृष्णीन्द्रो व्रातीन इति निपात्यते। तेमवार्थं स्पष्टयति येशरीरमुपास्य जीवन्तीत्यादिना।

**अमृता०**—८७४. साप्तेति । तत् प्राप्यत इत्यर्थे सख्ये वाच्ये सप्तपदस्य खरामेण कृत वृष्णीन्द्र साप्तपदीन इति साधुः स्यात् । एष च रूढी पदमिह सम्भाषणं पादक्षेपो वा। सप्तभिः पादैरववाप्यत इति वाक्ये तद्धितार्थे त्रिरामी । हैयङ्गवीन इति—ह्यो गोदोहस्य हियङ्ग्रित्यादिश्यते, तस्य विकार इत्यर्थे खरामेण कृतवृस्णीन्द्रो हैयङ्गवीन इति निपात्यते । खरामाधिकारः समाप्तगतः ।

**अमृता०**—८७५. पील्यिति । पीलु प्रभृतीनां पाके वाच्ये कुण प्रत्यनेन सस पीलुकुण

---

**बाल०**—गोष्ठी । भूतः पूर्वः भूतपूर्व इति यद्दच्छादित्वेन निपातनात् श्यामरामसिद्धं । ततो भूतपूर्वश्चासौ गोष्ठप्रदेशश्चेति श्यामरामः । भूतपूर्वगोष्ठप्रदेशे प्राग्विद्यमानगोष्ठप्रदेशे वाच्ये खरामेण सह गोष्ठस्य कृतवृष्णीन्द्रो गोष्ठीनः साधुः स्यात् । गोष्ठेत्यादीनामपि वृत्तिरेकत्रैव वक्ष्यते एते चेति। गोष्ठीन इत्यत्र देशवाच्यत्वात् पुरुषोत्तमता। गोष्ठं गोस्थानकं तत्तु गोष्ठीनं भूतपूर्वकमित्यमरोक्तेतु सामान्यतो ब्रह्मतेति । शाली । अधृष्टाकार्ययोर्वाच्ययोः घरामेण साकं शालाकूपयोः स्थाने कृतवृष्णीन्द्रौ शालीनकोपीनौ साधू भवतः । अधृष्टशब्देनात्र जड उच्यते । एवमकार्यशब्देन असत् कर्म पापादि उच्यते, तथा नरसाहचर्याच्छरीरावयवविशेषस्तदाच्छादनवासश्चेति बोद्धव्यं । व्राती । व्रातेन जीवतीत्यर्थे खरामेण सह व्रातस्य कृतवृष्णीन्द्रो व्रातीनः साधु स्यात् । वृष्णीन्द्रं विनापि सिद्धे प्राकरणिकः कृतवृष्णीन्द्रोऽत्र ज्ञेयः । व्रातशब्दस्य द्वैविध्यार्थमाह य इति । तदित्यस्मात् पूर्वमुच्चारादिति योज्यं । तेषां व्रातानां कर्म शरीरोपासनमपि व्रातं स्यादिति शरीरोपासनेन (शरीरमायास्य इति जुमरः) यो जीवति स व्रातीन इत्यर्थः ॥ ८७३ ॥

**बाल०**—साप्त । तत्प्राप्ये वाच्ये खरामेण सह सप्तपदस्य कृतवृष्णीन्द्रं साप्तपदीनमिति साधु स्यात् । सख्युर्भावः सख्यं तदत्र तत्प्राप्यं ग्राह्यमिति सर्वैर्व्याख्यातं तेन सप्तभिः पदैः प्राप्यं सख्यमिति, तद्धितार्थे त्रिरामी साप्तपदीनमिति । उपचारादेतत् तद्वतिच वर्तते तेन साप्तपदीन इतिच। हैय। ह्योगोदोहोद्भवघृते वाच्ये खरामेण सह ह्योगोदोहस्य कृतवृष्णीन्द्रं हैयङ्गवीनं साधु स्यात् । ह्यो गतकल्यवचनं (क) तस्मिन् गोदोहो दुग्धं तत्र भवे घृते वाच्ये प्रकृतेरभावेन गत्यन्तराभावात् निपातसामर्थ्यमाश्रित्य ह्योगोदोहस्य हियङ्गुमादेशं कृत्वा हैयङ्गवीनं साधनीयं । ह्योगोदोहाद्धियङ्गुश्च तद्विकारे घृते इति जुमरः (तद्धितपरिशिष्टे दं) । घृतमाज्यं हरिः सर्पिर्नवनीतं नवोद्धृतं । तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमित्यमरः सर्वेषां वृत्तिमाह एत इति । एतेभ्यो नृसिंहखरामं न कृत्वा यत् कृतवृष्णीन्द्र इत्युक्तं तद्वैचित्र्यार्थं । खरामाधिकारं समापयति खराम इति ॥८७४॥

पीलूनां पाकः पीलुकुणः। पील्वाम्र-बदर-खदिराः पील्वादयः।

**८७६. कर्णजाहादयः कर्णादिमूले।**

कर्णजाहविलोचनेति तु कर्णमूलपर्यन्तविलोचनेत्यर्थः। कर्णाक्षि-नख-केश-पाद-मुख-गुल्फ-भ्रू-भृङ्ग-दन्त ओष्ठादयः कर्णादयः।

**८७७. पक्षतिः पक्षमूले।**

चन्द्रलेखेव पक्षतौ। चञ्चत्पक्षतिभिः खगैः।

**८७८. स्नेहे तैलः।**

इङ्गुदी तैलं शर्षपतैलम्।

---

प्रभृतयः साधवो भवन्ति। पील्वादयश्चत्वार इति दर्शितम्। केचित्तु कर्कन्धु शमी करीर अश्वत्थ कुवलेत्येते चात्र पठन्ति।

**अमृता०**—८७६. कर्णेति। कर्णादिमूले वाच्ये जाह प्रत्ययेन सह कर्णादि शब्दानां कर्णजाहादयः साधवो भवन्ति। उदाहरणत्वेन भट्टि प्रयोगमुत्थापयति—कर्णजाहविलोचनेति। एवमक्षिजाहेत्यादयो ज्ञेयाः। एकादशसंख्यक एव कर्णादिगणः।

**अमृता०**—८७७. पक्षतिरिति। पक्षमूले वाच्ये पक्ष शब्दात् ति प्रत्ययेन पक्षतिः साधुः स्यात्। पक्ष शब्देन मासार्द्धकालः (पञ्चदशतिथ्यात्मकः) विहगानां छदश्चोच्यत इत्युभयमेवोदाहरति शिष्टप्रयोगाभ्यां—चन्द्रलेखेत्यादिभ्याम्। पक्षतौ पक्षस्य मूले प्रतिपदि चन्द्रलेखेवेत्यर्थः। चञ्चन्ती लोला पक्षतिः पक्षमूलंछदो येषांतैः खगैरित्यर्थः।

**अमृता०**—८७८. स्नेहेति। स्नेहो द्रवभावस्तस्मिन् वाच्ये येभ्यः स्नेहो जायते

---

**बाल०**—पीलु। पील्वादीनां पाके वाच्ये कुण्प्रत्ययेन साकं पील्वादीनां पीलुकुणादयः साधवो भवन्ति। पील्वादिगणं दर्शयति पील्वेति। गणेऽत्र कर्कन्धु खदिर शमी करीर करवीर कुवल अश्वत्थेत्येतेच गृह्यन्ते कैश्चित्॥ ८७५॥

**बाल०**—कर्ण। कर्ण आदिर्येषां ते कर्णादयस्तेषां मूले वाच्ये जाह-प्रत्ययेन सह कर्णादीनां कर्णजाहादयः साधवो भवन्ति। शिष्टोक्तप्रयोगमेव स्वीयत्वेनोदाहरति कर्णेति (भट्टौ ४।१६) कर्णजाहे विलोचने यस्याः सा। अर्थं स्पष्टयति इति त्विति। कर्णादिगणं दर्शयति कर्णेति। कर्णाद्योष्ठान्ता एकादशसंख्यकाः कर्णादयः स्युः। पुच्छमप त्र कश्चित् पठति। (कर्णाक्षिकेशा मुखपादपुच्छभ्रू गुल्फशृङ्गोष्ठमुखानि दन्तः)॥ ८७६॥

**बाल०**—पक्ष। पक्षमूले वाच्ये तिप्रत्ययेन सह पक्षस्य पक्षतिः साधुः स्यात्। पक्षशब्दः पञ्चदशसख्यात्मकदिवसवाची तथा विहगानां छदवाची चेति द्वयोर्मूलेऽत्र तिप्रत्यय इत्यतः पक्षतेः पञ्चदशवासराणां मूलभूतप्रतिपद्वाचिता। एवं पक्षिणां मूलवाचिता चेति प्राचामुदाहरणाभ्यां स्पष्टयति चन्द्रेति। पक्षतौ प्रतिपदि चन्द्रलेखावत् सेत्यर्थः। (भट्टिः ४।१६)। चञ्चन्ती पक्षतिर्येषां तैः॥ ८७७॥

**८७९. गो-गोष्ठादयः पशुस्थाने ।**

गोगोष्ठं महिषीगोष्ठं उष्ट्रगोष्ठम् ।

**८८०. अविकटाविपटौ तत्संघात-विस्तारयोः ।**

**८८१. गोगोयुगादयः पशुद्वित्वे ।**

गोगोयुगं अश्वगोयुगम् ।

**८८२. गोषड्गवादयः पशुषट्के ।**

गोषड्गवं अश्वषड्गवम् ।

---

तेभ्य तैल प्रत्ययः स्यात् । इङ्गुदी तरुविशेष। तत् फलञ्च, तस्याः स्नेह इङ्गुदीतैलं । एवं नारिकेलतैलं तिलतैलमित्यादि च ।

अमृता०—८७९. गोगोष्ठेति । पशूनां स्थाने वाच्ये गोष्ठ प्रत्ययेन सह गवादिशब्दानां गोगोष्ठादयः साधवो भवन्ति । गवां स्थानं गोगोष्ठं, महिष्याः स्थानं महिषीगोष्ठम् । एव मन्यानि च वेदितव्यानि ।

**अमृता०**—८८०. अविकटेति । अविसंघाते अविविस्तारे च वाच्ये अविशब्दात् कट पटप्रत्ययाभ्यां अविकटाविपटौ साधू भवतः ।

**अमृता०**—८८१. गोगोयुगमिति । पशूनां द्वित्वे वाच्ये गवादीनां गोयुग प्रत्ययेन गोगोयुगादयः साधवो भवन्ति । गोर्द्वित्वं गोगोयुगम् । एवमश्वगोयुगमित्यादि ।

**अमृता०**—८८२. गोषडिति । पशूनां षट्के वाच्ये षड्गव प्रत्ययेन गवादीनां गोषड्गवाय: साधवः स्युः । गवां षट्कं गोषड्गवम् । एवमश्वषड्गवमित्यादि ।

---

**बाल०**—स्नेहे । द्रवकाठिन्यं स्नेहस्तस्मिन् वाच्ये येभ्यः स्नेहो जायते तेभ्यस्तैल-प्रत्ययः स्यात् । इङ्गुदीतापसतरुस्तस्याः स्नेह इङ्गुदीतैलमिति । एवं शर्षपस्य स्नेहः शर्षपतैलमित्यादि । (इङ्गुदीतैलमिति शाकुन्तलप्रयोगश्च) ॥ ८७८ ॥

**बाल०**—गो । एत इत्यनेन एकत्रैव एषां वृत्तिर्वक्ष्यते । पशूनां स्थाने वाच्ये गोष्ठप्रत्ययेन सह गवादीनां गोगोष्ठादयः साधवो भवन्ति । गवां स्थानं गोगोष्ठं । गोशब्दाद्गोष्ठप्रत्ययः इत्याशङ्कानिरासार्थं महीषीगोष्ठमित्यादिद्वयमुक्तं । एवमश्वगोष्ठं खरगोष्ठमित्यादयोऽपि ॥ ८७९ ॥

**बाल०**—अवि । तच्छब्देनात्राविः परामृष्यते तस्मात् । अविसंघातविस्तारयोर्वाच्ययोः कटपटप्रत्ययाभ्यां साकमविशब्दस्याविकटाविपटौ साधू भवतः ॥ ८८० ॥

**बाल०**—गोगोयु । पशूनां द्वित्वे वाच्ये गोयुगप्रत्ययेन सजूर्गवादीनां गोगोयुगादयः साधवो भवन्ति । गोर्द्वित्वं गोगोयुगं । आदिशब्दादश्वगोयुगमित्यादयोऽपि ॥ ८८१ ॥

**बाल०**—गोष । पशूनां षट्के वाच्ये षड्गवप्रत्यनेन सह गवादीनां गोषड्गवादयः साधवो भवन्ति । गवां षट्कं गोषड्गवं । एवमश्वषड्गवमित्यादयः ॥ ८८२ ॥

**८८३. अवटीटावनाटावभ्रटा नतनासिके, कर्मठः कर्मसुघटमाने ।**

एते साधवः ।

**८८४. अलावूतिलोमाभङ्गाणुभ्यो रजसि कटः ।**

अलावूनां रजः अलावूकटः ।

**८८५. उपाधिभ्यां त्यको लक्ष्म्यामासन्नाधिरूढयोः ।**

गिरेरुपत्यका वनराजिः । तदासन्नेत्यर्थः । अधित्यका गिरेः । तमधिरुढेत्यर्थः । उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका । इत्यमरः समुद्रोपत्यका हैमी पर्वताधित्यका पुरी । इतितु भट्टि (५ । ८८)

---

**अमृता०**—८८३, अवटीटेति । नता नम्रा नासिका यस्य तस्मिन् सने वाच्ये टीट–नाट–भ्रट प्रत्ययैः सह अव शब्दस्य अवटीटादयः साधवो भवन्ति । अवटीटः शिशुः, अवनाटः पुमान् अवभ्रटा नारी । कर्मसु घटमाने (कर्मनिपुणे) वाच्ये कर्मन् शब्दात् ठः प्रत्ययेन कर्मठः साधुः स्यात् ।

**अमृता०**—८८४. अलाव्विति । अलावू प्रभृतीनां रजसि वाच्ये अलावतिल उमा भङ्ग अणु इत्येतेभ्यः कट प्रत्ययः स्यात् । अलावूकटः, एवं तिलकटः उमाकट. भङ्गकटः अणुकट इति ।

**अमृता०**—८८५. उपेति । आसन्नाधिरूढ़यो र्वाच्ययोः उप-अधिइत्यव्ययशब्दाभ्यां त्यक प्रत्ययो भवतिलक्ष्म्यामेव । अमरमतेन समुद्रस्यैवासन्नाधिरूढ़त्वंमुपलभ्यत इति प्रदर्श्य तद् व्यभिचारं दर्शयति भट्टिप्रयोगेण—समुद्रोपत्यकेत्यादि ।

---

**बाल०**—अव । नता नम्रीभूता नासिका यस्य तस्मिन् वाच्ये टीट-नाट-भ्रट-प्रत्ययः सह अवेत्यस्य अवटीट अवनाट अवभ्रटाः साधवो भवन्ति । पुरुषोत्तमत्वमत्रातन्त्र, तेन अवटीटं कुलं अवटीटः पुमान् अवटीटा स्त्रीत्यादि । कर्म । कर्मसु घटमाने जने वाच्ये कर्मणष्ठप्रत्ययेन सह कर्मठः साधुः स्यात् । कर्मठः कर्मसु निपुण इत्यर्थः । विवरणमेते इति ॥ ८८३ ॥

**बाल०**—अला । अलाव्वादीनां रजसि वाच्ये अलावूतिलोमाभङ्गणुभ्यः कटः स्यात् । यथा अलावूकटः । एवं तिलकटः उमाकटः भङ्गकटः अनुकटः ॥ ८८४ ॥

**बाल०**—उपा । आसन्नाधिरूढयोर्वाच्ययोरुपाधिभ्यां त्यको भवन् लक्ष्म्यां वर्तते । उदाहरणे दर्शयति गिरेरिति । क कत्य इत्युभयोः प्रत्ययत्वात् प्रत्ययस्थात् कादित्यनेन त्यरामारामस्येरामो न स्यात् । अत्रासन्नाधिरूढयोर्यथासंख्यामुपाधिभ्यां त्यकः स्याधित्यमरमतेन स्पष्टयति उपत्येति । गिरेरेवासन्नाधिरूढयोरिति नियमं भट्टिमतेन व्यभिचारयति समुद्रेति ॥ ८८५ ॥

## ८८६. तदस्य सञ्जातं तारकादिभ्य इतः ।

तारका सञ्जातास्य तारकितं नभः, पुष्पितो वृक्षः । तारका पुष्प सुख दुःख फल मूल कुसुम स्तवक तन्द्रा बुभुक्षा पिपासा भर व्रण रोग व्याधि उत्कण्ठा गर्भोऽप्राणिनीति । तदस्येत्यनुवर्तते यातत्तदस्मिन् ।

## ८८७. द्वयस-दघ्नौ केशवावूर्ध्वप्रमाणे, मात्रट् प्रमाणमात्रे ।

---

अमृता०—८८६. तदस्येति । तदस्य सञ्जातमित्यर्थे तारकादिभ्य इत प्रत्ययः स्यात् । वाक्योदाहरणे स्पष्टे । तारकादे गणो दर्शितो गर्भ इत्यन्तेन । तत्र गभोऽप्राणिनीति—अप्राणिनि हि गर्भशब्दः तारकादौ गण्यत इत्यर्थः । तेन—गर्भितो हि नदीभागो दृश्यते शरदि स्फुटमिनि दृष्टान्तं मतम् । यथा हि—भाद्रकृष्ण चतुर्दश्यां यावदाक्रमते जलं, तावद् गर्भं विजानीयात् तदूर्द्धं तीर मुच्यते । इति प्रायश्चित्ततत्त्वम् । आकृति गण एषः । तथापि प्राचीननिर्देशानुरूपो दर्श्यते । यथा,—तारका पुष्प कल्लोल तरङ्ग शर पल्लवाः । ऋजीष कण्टकाङ्गार शृङ्गार ज्वर कन्दराः । विचार गर्व रोमाञ्च हर्षोत्कर्षकुतूहलाः । गर्भनिष्क्रमणोत्कण्ठा दोह द्रोहाभ्र चन्द्रिकाः । निद्रा कुवलय श्रद्धा वेग कोरक कुट्मलाः । कुसुमस्तवकोच्चार प्रवाल पुलक व्रणाः । कर्दम व्याधि सीमन्त सुख कञ्चुक हस्तकाः । पिपासा मञ्जरी पण्डा बुभुक्षा दःख कज्जले वेगः किसलय स्तन्त्रा मुद्रा तिलकशैवलाः । मूत्रं पुरीषमुकुले रोग सूत्रादयोऽपरे । प्रयोगदर्शनाज् ज्ञेया स्तारकादौ विचक्षणैः । इति ।

अमृता०—८८७. द्वयसेति । तदस्य ऊर्द्धप्रमाणमित्यर्थे नाम्नो द्वयस दघ्नौ प्रत्ययौ भवन्तौ केशवसंज्ञौ भवतः । तदस्यप्रमाणमिति प्रमाण सामान्यार्थे तु मात्रट् प्रत्ययो

---

बाल०—तद । तदस्य सञ्जातमित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात् । तदस्य सञ्जातमित्यर्थे तारकादिभ्य इतः स्यात् । वाक्योदाहरणे दर्शयति तारेति । तारकादि आप्राणिन्यन्तमूनविंशतिसंख्यकं । तारकादिगणमाह तारकेति । एते चान्येच तारकादयो भवन्ति । ते यथा । तारकापुष्प-कल्लोल-तरङ्ग शर-पल्लवाः । ऋजिषकण्टकाङ्गार शृङ्गार-ज्वर-कन्दराः । विचारगर्वरोमाञ्चहर्षोत्कर्षकुतूहलाः । गर्भनिष्क्रमणोत्कण्ठाद्रोमदोहार्द्र चन्द्रिकाः । निद्राकुवलयश्रद्धाकेशकोरककुटालाः । कुसुमस्तवकोच्चारप्रवालपुलकव्रणाः । कर्दमव्याधिसीमन्तसुखकञ्चुकहस्तकाः । पिपासामञ्जरीपण्डाबुभुक्षा दुष्खकज्जले । वेगः किशलयस्तन्त्रामुद्रातिलकशैवलाः । मूत्रं पुरीषमुकुले रोगसूत्रादयोऽपरे । प्रयोग्दर्शनाज्ज्ञेयास्तारकादौ विचक्षणैः गर्भादितोऽप्राणिनीत्यन्ये । तदस्य सञ्जातमित्यस्य सञ्जातभागं त्यक्त्वा परत्र तदस्येति भागमनुवर्तयन्नाह तदस्येति । यावत्तदस्मिस्तावत्तदस्येत्यनुवर्तत इत्यन्वयः ॥ ८८६ ॥

बाल०—द्वय तदस्येत्यर्थे ऊर्ध्वप्रमाणे वाच्ये नाम्नो द्वयस्य-दघ्नौ सन्तौ केशवसंज्ञौ भवतः । मात्र । तदस्येत्यर्थे प्रमाणमात्रे वाच्येतु नाम्नो मात्रट् स्यात् । उरुरूर्द्धंप्रमाणमस्य उरुद्वयसमिति । केशवत्वाल्लक्ष्म्यापीप् गजद्वयसीति । गज ऊर्ध्वप्रमाणमस्य इत्यर्थः ।

उरुद्वयसं जलं, गजद्वयसी नदी। एवमुरुदघ्नं तथा प्रस्थमात्रं घृतं, तन्मात्रं तावन्मात्रम्।

८८८. प्रमाणवाचिभ्यो महाहरश्च।

समं प्रमाणमस्य समः। एवं वितस्तिः, मुष्टिः।

८८९. त्रिराम्यास्तु नित्यम्।

द्विजानु जलम्।

८९०. टच् स्तोमे।

पञ्चदशः स्तोमः, एकविंशः स्तोमः।

---

भवति। उरु रूर्द्ध प्रमाणमस्य जलस्य उरु द्वयसमिति। केशवत्वाल्लक्ष्म्यामीप्-गजद्वयसी। एव मुरुरूर्द्ध प्रमाणमस्य तावन्मात्रमिति।

अमृता०—८८८. प्रमाणेति स्पष्टम्। महाहरश्चेति चकारात् मात्रट् च भवति, तेन वितस्तिः वितस्तिमात्रमिति च ज्ञेयम्।

अमृता०—८८९. त्रिराम्या इति। तदस्य प्रमाणमित्यर्थे प्रमाण वाचिन्याः त्रिराम्यास्तु नित्यमेव प्रमाण प्रत्ययानां महाहरो भवति। द्वे जानुनी प्रमाणमस्येति वाक्ये तद्धितार्थे त्रिरामी, ततो ब्रह्मत्वात् सो हरः।

अमृता०—८९०. टजिति। उक्तार्थे स्तोमे (बहुले) वाच्ये त्रिराम्याः टच् प्रत्ययः स्यात् चित् करणात् संसारहरः—पञ्चदश इत्यादि। एकविंशइति—विंशतेस्तिहरश्चितीति ति हरः।

---

एवमुरुदघ्नं गजदघ्नीत्यादिः। प्रस्थमात्रमिति प्रस्थमेव प्रमाणमस्येत्यर्थः। तदेव प्रमाणमस्य तन्मात्रं। तावदेव प्रमाणमस्य तावन्मात्रं। टित्वात् प्रस्थमात्री तुलसीत्यादिः॥ ८८७॥

बाल०—प्रमा। तदस्य प्रमाणमित्यर्थे प्रमाणमात्रे वाच्ये प्रमाणवाचिभ्यो द्वयसादयो भवन्ति तेषां महाहरश्च स्यात्। उदाहरणान्याह सममिति। पक्षे, समद्वयसं समदघ्नं सममात्रं, वितस्तिद्वयसं वितस्तिदघ्नं वितस्तिमात्रं, मुष्टिद्वयसं मुष्टिदघ्नं मुष्टिमात्रं। एवं समद्वयसीत्यादि॥ ८८८॥

बाल०—त्रिरा। तदस्य प्रमाणमित्यर्थे त्रिराम्यास्तु द्वयसादीनां महाहरो नित्यं। द्वे जानूनी प्रमाणमस्य द्विजानु इति तद्धितार्थे त्रिरामीत्वात् ब्रह्मत्वं तेन सोर्हरः॥ ८८९॥

बाल०—टच्। तदस्य प्रमाणमित्यर्थे स्तोमे वाच्ये त्रिराम्याष्टच् स्यात्। पञ्चदश प्रमाणमस्य स्तोमस्येति संसारस्य हरश्चितीत्यनेन संसारहरः पञ्चदश इति। एकविंशतिः प्रमाणमस्य एकविंश इति। विंशतेस्तिहरश्चितीत्यनेन तिहरः संसारहरश्च॥ ८९०॥

## ८९१. शन्नन्तशद् विंशतिभ्य इनिच् ।

पञ्चदश प्रमाणमेषां पञ्चदशिनोऽर्द्धमासाः । एवं त्रिंशिनो मासाः, विंशिनोऽङ्गिरसः ।

## ८९२. प्रमाणात् परिमाणात् संख्यायाश्च मात्रः संशये ।

प्रमाणात्—समं स्यान्न वेति सममात्रम् । एवं हस्तमात्रम् । परिमाणात्—प्रस्थमात्रम् । संख्यायाः-पञ्चमात्रं दशमात्रम् । अत्रापि महाहरमिच्छन्ति ।

## ८९३. वत्वन्तात् केशव-द्वयसमात्रौ स्वार्थे ।

तावदेव तावद्द्वयसम् । तावन्मात्रम् ।

---

अमृता०—८९१. शन्नन्तेति । शन् इत्यन्ते यस्य स सन्नन्तः, स च शत् च विंशतिश्च शन्नन्तशद् विंशतयः, ताभ्य इनिच् प्रत्ययः स्यात् पूर्वोक्तार्थे । वाक्योदाहरणे दर्शिते ।

अमृता०—८९२. प्रमाणादिति । संशये गम्यमाने प्रमाणवाचकात् परिमाण वाचकात् संख्यावाचकाच्च शब्दात् मात्र प्रत्ययः स्यात् । वाक्योदाहरणानि दर्शितान्येव । अत्रापीति संशयार्थेऽपि महाहरमिच्छन्ति केचित् पण्डिताः । तेन समं स्यान्नवेति सममित्यादि च ।

अमृता०—८९३. वत्विति । स्वार्थे वतु अन्तान्नाम्नो द्वयस-मात्रौ स्यातां, तौ च केशव संज्ञौ भवतः । सन्निकटे हि—यत्तदेतद्भ्य इत्यनेन य आवतुच् वक्ष्यतेतदन्त एव वत्वन्ततयात्र गृह्यते, तथाग्रे यो मतुर्वक्ष्यते तदन्तोऽपि । एवं यावद्द्वयसं यावन्मात्रमित्यादि । केशवत्वाल्लक्ष्म्यामीप् ।

---

बाल०—शन्न । शन् इति अन्तं यस्य स शन्नन्तः सच शच्च विंशतिश्च शन्नन्तशद्विंशतयस्ताभ्यः । तदस्य प्रमाणमित्यर्थे शन्नन्तशद्विंशतिभ्य इनिच भवति । वाक्योदाहरणे दर्शयति पञ्चेति ॥ ८९१ ॥

बाल०—प्रमा । संशयेऽर्थे प्रमाणवाचकात् परिमाणवाचकात् संख्यावाचकाच्च मात्रः स्यात् । प्रमाणादिति प्रमाणं लक्षीकृत्योदाह्रियत इति । एव मुत्तरत्रापि । प्रस्थमात्रमिति प्रस्थं स्यान्न वेत्यर्थः । पञ्चमात्रमिति पञ्च स्युर्न वेत्यर्थः । एवं दशमात्रं । अत्रेति अत्रार्थेऽपि महाहरमिच्छन्ति पण्डिता इति शेषः । तेन समं स्यान्न वेति सममित्यादिच ॥ ८९२ ॥

बाल०—वत्व । स्वार्थेऽर्थे वत्वन्तान्नाम्नः केशवौ द्वयसमात्रौ भवतः । अत्र यत्तदेतद्भ्य इत्यनेन य आवतुच् वक्ष्यते तदन्तो गृह्यते । तथा तदस्यास्त्यस्मिन्नित्यनेन यो मतुर्वक्ष्यते तस्य यदा अद्वयमाभ्यामित्यनेन वरामादेशस्तदा तदन्तोऽपि गृह्यते । वाक्येऽत्र स्वार्थबोधार्थं एवकारप्रयोगः । एवं यावद्द्वयसं यावन्मात्रमित्यादि । केशवत्वाल्लक्ष्म्यां तावद्द्वयसीत्यादिच ॥ ८९३ ॥

**८९४. पुरुषहस्तिभ्यां केशवणश्च तत्प्रमाणे ।**

पुरुषोऽस्य प्रमाणं पौरुषम् । एवं हास्तिनम् । चकारात् द्वयसादयश्च ।

**८९५. यत्तदेतद्भ्यस्ततपरिमाणे आवतुच् ।**

यत् परिमाणमस्य यावान् । एवं तावान् एतावान् ।

**८९६. किमिदमोः कियदियन्तौ साधू ।**

कियान् इयान्, कियती इयती ।

**८९७. का संख्यैषां कतिर्वा ।**

अत्रार्थेऽयं साधुर्वा । कति । पक्षे कियन्तः ।

---

**अमृता०**—८९४. पुरुषेति । तत् प्रमाणेऽर्थात् पुरुषहस्तिप्रमाणे वाच्ये पुरुषहस्तिभ्यां केशवणश्च स्यात्, चकारात् द्वयस-मात्रौ च ।

**अमृता०**—८९५. यत्तदिति । तदेव परिमाणं यस्य तत् तत्परिमाणं, तस्मिन् वाच्ये यत्तदेतद्भ्य आवतुच् प्रत्ययः स्यात् । चित् करणात् संसारहरः, अत्वसन्तोद्धवस्येति त्रिविक्रमः अचश्चतुर्भुजेतिनुम्, राधाविष्णुजनाभ्यामिति सोर्हरः, सत्सङ्गान्तस्येति तरामहरः—यावानिति । एवं तावान् एतावान् च बोध्यौ ।

**अमृता०**—८९६. किमिति । तदस्य परिमाणमित्यर्थे यतु प्रत्ययेन सह किमिदं शब्दयोः कियदियन्तौ साधू भवतः । किमः मरामहरः, तथा इदमः दराम-मरामयोर्हरश्च निपातफलम् । किं परिमाणमस्येत्यर्थे कियात्, इदं परिमाणमस्येति इयान् ।

**अमृता०**—८९७. केति । का संख्या एषामित्यर्थे अतिच् प्रत्ययेन् साकं किम् शब्दस्य कति रिति वा निपात्यते, पक्षे यत्वन्तः । प्रयोगकाले कते र्जस्शसो र्महाहर इति दर्शितं, ततएव कियन्त इत्यत्र च बहुत्वम् ।

---

**बाल०**—पुरु । तौ पुरुषहस्तिनौ प्रमाणे यस्य तत् । तत् प्रमाणं तस्मिन् वाच्ये पुरुषहस्तिभ्यां केशवणश्च स्यात् । उदाहरणद्वयेऽत्र वाच्यपदं जलमित्यध्याहार्यं । सूत्रस्थचशब्दोपादानफलं स्वयमाह चकारादिति, तेन हस्तिद्वयसं हस्तिमात्रमित्यादिच ॥ ८९४ ॥

**बाल०**—यत्त । तदेव परिमाणं यस्य तत् । तत् परिमाणं तस्मिन् वाच्ये यत्तदेतद्भ्य आवतुच् स्यात् । संसारस्य हरश्चितीति संसारहरः । अत्वसन्तोद्धवस्येत्यनेन त्रिविक्रमः । अचश्चतुर्भुजेत्यनेन नुम् । राधाविष्णुजनाभ्यामिति सोर्हरः । सत्सङ्गान्तस्येति तहरः यावानित्यादि ॥ ८९५ ॥

**बाल०**—किमि । तदस्य परिमाणमित्यर्थे यतुप्रत्ययेन सह किमिदमोः स्थाने कियदियन्तौ साधू भवतः । किमित्यस्य महरः इदम् इत्यस्य द म हरोऽत्र निपातफलं । किं परिमाणयस्य कियान् एवमियान् । चतुर्भुजानुबन्धादित्यनेनात्र लक्ष्म्यामीविति सूचयता कियति इयतीच दर्शितेति ॥ ८९६ ॥

**८९८. अवयववृत्तेः संख्यायाः केशवस्तयः, द्वित्रिभ्यामयश्च, उभादयः ।**

पञ्चावयवा अस्य वृत्तस्य पञ्चतयं पुराणं, चतुष्टयी श्रुतिः । द्वित्रिभ्यां–द्वयं द्वितयं, त्रयं त्रितयं, त्रितयी । तथा उभावयवावस्य उभयो नरसिंहः । उभये देव मनुष्याः उभयी सृष्टिः ।

**८९९. संख्याया मयट् भागेन मूल्येन क्रेयभागके ।**

यवानां द्वौ भागौ मूल्यं भागे यस्योदश्वितः तत् द्विमयं उदश्विद्

---

**अमृता०**—८९८. अवयवेति । अवयवे वृत्तिर्यस्याः सा अवयववृतिः । तदस्य प्रमाणमित्यर्थे अवयववृत्तेः संख्याया उत्तरे केशवः तयः स्यात् । तस्मिन्नेवार्थे अवयवत्र वृत्तिभ्यां द्वित्रि शब्दाभ्यां केशव अयः स्यात् । चकारात् केशवतयश्च भवति । तया तस्मिन्नर्थे अवयववृत्तेः उभशब्दात् केवलः अय प्रत्ययो भवति । पञ्चा अवयवा इत्यत्र प्रमाणमिति योज्यं, प्रकरणानुरोधात् । उभयस्य द्विवचनाभावं दर्शयितुमेकवचने बहुवचने चोदाहरति—उभयो नरसिंह इत्यादि । उभये इति कृष्णनाम-कृष्णतो जस्शसोः शिरित्यनेन शिः, अतो बहुत्वे ह्यु दाहरणमिदम् । केशवत्वाल्लक्ष्म्यामीप् ।

**अमृता०**—८९९. संख्याया इति । तदस्येत्यर्थे भागरूपेण मूल्येन क्रेयभागके वाच्ये संख्याया उत्तरे मयट् स्यात् । उदश्वित् तक्रमित्यर्थः । एवमिति—गुडस्य द्वौ भागौ मूल्यं भागे यस्या द्राक्षायाः सा द्विमयी द्राक्षा गुडस्य । सूत्रे क्रेयभागक इति पीताम्बरे क प्रत्यय

---

**बाल०**—का । वृत्तिमाह अत्रेति । अयं कतिरिति, सूत्रे कतिरिति शब्दानुकरणात् । अन्यथास्य बहुत्वात् सनान्तसंख्यातः कतेश्च जस्शसोरित्यनेन जसो महाहरः स्यात् । का संख्या परिमाणमेषामित्यर्थेऽतिच्प्रत्ययेन सह किम् शब्दस्य कतिर्वा स्यात् । पक्षे यत्वन्त इत्याह पक्ष इति ।। ८९७ ।।

**बाल०**—अव । अवयवे वृत्तिर्वर्तनं यस्याः सा अवयववृत्तिस्तस्याः । तदस्य प्रमाणमित्यर्थेऽवयववृत्तेः संख्याया उत्तरः केशवस्तयः स्यात् । द्वित्रि । तदस्य प्रमाणमित्यर्थेऽवयववृत्तिभ्यां द्वित्रिभ्यामयः स्यात्, चकारात् केशवस्तयोऽपि । उभा । तदस्य प्रमाणमित्यर्थेऽवयववृत्तेरुभशब्दात् केवलमयः स्यात् । वाक्येऽवयवा इत्यस्मात् परं प्रमाणमिति योज्यं प्रकरणात् । गम्ययवन्तादित्यनेन द्वित्रिभ्यामित्यत्र पञ्चमी । तेन द्वित्री लक्षीकृत्य उदाह्रियत इत्यर्थः । द्वे अवयवे प्रमाणमस्य द्वयं द्वितयमिति । त्रयोऽवयवाः प्रमाणमस्य त्रयं त्रितयञ्चेति । केशवत्वादन्यपदार्थत्वाद्वा लक्ष्म्यां त्रितयी । एवं द्वितयीच उभयस्य द्विवचनाभाव इत्युक्तत्वादेकवचनबहुवचने सम्भवत इतिसूचनपूर्वकं वाक्योदाहरणे दर्शयति तथेति । उभाववयवौ येषां ते उभये इति कृष्णनामत्वादस्य कृष्णनाम-कृष्णतो जस्शसोः शिरिति शिः ।। ८९८ ।।

यवानाम् । एवं द्विमयी द्राक्षा गुडस्य । क्रेयभागवतो वाच्यत्वात् सामानाधिकरण्यम् । तदस्येति निवृत्तम् ।

**९००. तदस्मिन्नधिकमिति दशान्ताच्च् शत-सहस्रयोः ।**

एकादशाधिका अस्मिन् एकादशं शतम् । एवं द्वादशं सहस्रम् ।

**९०१. शदन्तविंशतिभ्याञ्च ।**

त्रिंशं शतं, चत्वारिंशं सहस्रं, विंशं शतं, षष्ठं शतमिति तु मत्वर्थीयोऽच् ।

---

इत्यस्य फलितार्थं मतु प्रत्ययत्वेन विशेष्य–विशेषणयो रेकाधिकरण्यं घटयति–क्रेयभागवत इति । क्रेयभागोऽस्त्यस्मिन्निति क्रेयभागवान्, अस्यैव वाच्यत्वात्, अर्थात् द्विमयमित्यादीना मुदश्विदित्यादिभिः सह सामान्याधिकरण्यं स्यादिति ।

अमृता०—९००. तदिति । तदस्मिन् अधिकमित्यर्थे शत-सहस्रयो र्वाच्ययोः दशान्तान्नाम्नः अच् प्रत्ययः स्यात् । चित्वात् संसार हरः । एकादशमिति प्रत्ययबलादेकादशाधिक शतं बोध्यते । एवं द्वादशमित्यत्रापि बोध्यम् । वैपरीत्येऽपि यथा–एकादशाधिका अस्मिन् सहस्रे एकादशं सहस्रं, द्वादशं शतमिति ।

अमृता०—९०१. शदन्तेति । तदस्मिन्नधिकमित्यर्थे शतसहस्रयो र्वाच्ययोः शत् इति अन्तो यस्य तस्मात्, तथा विंशतिशब्दाच्चोत्तरे अच् प्रत्ययः स्यात् । त्रिंशदधिकम-

---

बाल०—संख्या । तदस्येत्यर्थे भागरूपेण मूल्येन क्रेयभागके वाच्ये संख्याया उत्तरो मयट् स्यात् । वाक्योदाहरणे दर्शयति यवेति तक्रन्तूदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलमित्यमरः । एवमिति गुडस्य द्वौ भागो मूल्यं भागे यस्य द्राक्षायाः सा द्विमयी द्राक्षा गुडस्येति । सूत्रे क्रेयभागके इत्यत्र पीताम्बरे कप्रत्यय इत्यस्य फलितार्थरूपं मतुप्रत्ययान्तत्वेन विशेषणविशेष्ययोः सामानाधिकरणं घटयन्नाह क्रेयेति । क्रेयभागोऽस्त्यस्मिन्निति क्रेयभागवानित्यस्यैव वाच्यत्वात् द्विमयमित्यादीनामुदश्विदित्यादिभिः सह सामानाधिकरण्यं स्यादित्यर्थः । मूल्यभागक्रेयभागयोर्विवक्षाधीनत्वेन नियमितत्वाभावात् । उदश्वितो द्वौ भागौ मूल्यं भागे येषां यवानां ते द्विमया यवा उदश्वित इत्यादिच । भाग इत्येव, नेह द्वौ व्रीहिमुद्गौ मूल्यमस्योदश्वित इति । मूल्यक्रेययोरिति किं, द्विगुणं घृतं पच्यते क्षीरेणेत्यत्रापि न स्यात् । तदस्येत्यनुवर्तनं निवर्तयति तदेति ॥ ८९९ ॥

बाल०—तद । तदस्मिन्नधिकमित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात् । प्रभुरयमिति गम्यं । दशा । तदस्मिन्नधिकमित्यर्थे दशान्तानाम्नः शतसहस्रयोर्वाच्ययोरच्प्रत्ययः स्यात् । एकादशमित्यस्य प्रत्ययमहिम्ना एकादशाधिकशतवाच्यं । एवमुत्तरत्रापि यथायोग्यं कल्प्यं । एवमिति द्वादशाधिका अस्मिन् द्वादशं सहस्रमिति । शतसहस्रयोरिति व्यस्तसमस्तयोरत्र ग्रहणं । तेन पूर्ववद्वाक्ये एकादशं सहस्रं द्वादशं शतमिति । एवं मिलितत्वेऽपि एकादशं शतसहस्रं, द्वादशं शतसहस्रं, एकादशं सहस्रशतं, द्वादशं सहस्रशतमितिच ॥ ९०० ॥

**९०२. तस्य पूरणे केशवाः ।**

प्रभुरयम् ।

**९०३. अच् ।**

एकादशानां पूरणः एकादशः स्कन्धः । एवं द्वादशः । एकादशी तिथिः ।

**९०४. नान्तादसंख्यादेरमचि ।**

दशमः स्कन्धः । नान्तात् किम्-विंशः त्रिंशः । असंख्यादेः किम्-एकादशः ।

---

स्मिन् त्रिंशंशतम् । एवमन्ये च ज्ञेयाः । षष्ठमित्यत्र व्यभिचारमाशङ्क्य समाधत्ते–मत्वर्थीय इति । षष्ठिरधिकमस्मिन्नस्तीति वाक्ये मत्वर्थीयस्य विवक्षया षष्ठमिति सिध्यति नतु केवलं तदस्मिन्नधिकमित्यर्थे इति भावः ।

अमृता०—९०२. तस्येति । तस्य पूरणेऽथ नाम्नो यथास्वं केशवसंज्ञकाः प्रत्यया भवन्तीत्यधिकार उक्तः ।

अमृता०—९०३. अचिति । तस्य पूरण इत्यर्थे नाम्नः केशवः अच् स्यात् । एकादशः स्कन्ध इत्यत्र श्रीभागवतस्येति शेषः । एवं द्वादश इत्यत्रापि । केशवसंज्ञायाः सार्थकतां दर्शयति—एकादशी तिथिरिति । एकादशानां तिथीनां पूरणी तिथिरित्यर्थः, केशवत्वान्दीविति भावः ।

अमृता०—९०४. नान्तादिति । नास्ति संख्या आदौ यस्य सोऽसंख्यादिः, तस्य पूरणे असंख्या पूर्वात् नान्तशब्दादच् प्रत्ययः स्यात्, तस्मिन् परे तस्मादमागमश्च भवति । प्रकृतेः संसारहरः । दशानां पूरणः दशम इति । एवं पञ्चमः सप्तमः अष्टमः नवम इत्यपि । प्रत्युदाहरति—विंश इत्यादि ।

---

**बाल०**—शद । तदस्मिन्नधिकमित्यर्थे शतसहस्रयोर्वाच्ययोः शदित्यन्तं यस्य तस्मात् विंशतेश्च परोऽच् स्यात् । त्रिंशदधिका अस्मिन् त्रिंशमिति । चत्वारिंशदधिका अस्मिन् चत्वारिंशं । एवं विंशतिरधिका अस्मिन् विंशमिति । त्रिंशं सहस्रमित्यादितु पूर्ववद्व्यस्तादिषु ज्ञेयं । ननु सूत्रेऽत्र विंशतिशब्दो गृहीतस्तर्हि कथं षष्ठं शतमिति स्यादित्याक्षेपे सिद्धान्तमाह । षष्ठं शतमितितु मत्वर्थीयः अच्, इति । यष्टिरधिका अस्मिन्नस्तीत्यस्त्यर्थस्य विवक्षणात् षष्ठं शतमिति स्यात्, नतु केवलं तदस्मिन्नधिकमित्यर्थे इति भावः ॥ ९०१ ॥

**बाल०**—तस्य । तस्य पूरणेऽर्थे नाम्नो यथास्वं केशवसंज्ञकाः प्रत्ययाः स्युः । केशवा इत्ययमधिक्रियते प्रभुरयमिति ॥ ९०२ ॥

**बाल०**—अच् । तस्य पूरणेऽर्थे नाम्नः केशवः अच् स्यात् । द्वादश इत्यत्र पूर्ववत् स्कन्ध इति प्रयोक्तव्यं, द्वादशानां पूरण इति वाक्यञ्च । केशवत्वस्य प्रयोजनं दर्शयति एकादशानां पूरणी तिथीत्यर्थः ॥ ९०३ ॥

**९०५. षट्-कति-कतिपय-चतुर्भ्यं स्थुगचि ।**

षष्ठः कतिथः कतिपयथः चतुर्थः । षष्ठी कतिपयथी ।

**९०६. चतुर्थे तुर्य-तुरीयौ ।**

साधू । अजादित्वात् तुर्या तुरीया ।

**९०७. बहु-पूग-गण-सङ्घेभ्य स्तिथः ।**

बहुतिथः बहुतिथी ।

---

अमृता०—९०५. षडिति । तस्य पूरणेऽथ षट्–कति–कतिपय–चतुर्भ्योऽच् स्यात्, तस्मिन्नचि परे एतेभ्यः युगागमश्च भवति । षण्णां पूरणः षष्ठ इत्यत्र किदागमस्य पूर्वसम्बन्धित्वात् संसारहरश्चितीत्यनेन युक उक्भागहरः, षात्परस्येति थस्य ठः । कतीनां पूरणः कतिथ इत्यादि । केशवत्वादीप् षष्ठीत्यादि ।

अमृता०—९०६. चतुर्थ इति । तस्य पूरणेऽर्थे यः चतुर्थशब्दो निष्पद्यते तदर्थे य-छरामाभ्यां चतुः शब्दस्य चरामहरेण तुर्य-तुरीयौ निपात्येते । इहकेशवाधिकाराल्लक्ष्म्यामीपि प्राप्ते तन्निवारयति—अजादित्वादिति । अजादेराकृति गणत्वेन तदन्तर्भावादाविति भावः ।

अमृता०—९०७. बह्विति । तस्य पूरण इत्यथ बहु-पूग-गण-संघ इत्येतेभ्यः केशवः तिथः स्यात् । बहूनां पूरणः बहुतिथः । लक्ष्म्यामीप्—बहुतिथी ।

---

बाल०—नान्ता । नास्ति संख्या आदौ यस्य सोऽसंख्यादिस्तस्मात् । तस्य पूरणेऽर्थेऽसंख्यापूर्वान्नाम्नोऽच् स्यात्, तस्मिन्नचि परे तस्मादमागमश्च । (अम्व+अच्= अमच्, तस्मिन् अमचि । इति पदच्छेदः ।) अमागमस्योभयभाक्त्वेऽप्यत्र परसम्बन्धित्वविवक्षणात् । संसारस्य हरश्चितीत्यनेन प्रकृतेरेव संसारहरः ः अन्यथा मागमोऽनर्थकः स्यात् । दशानां पूरणः दशम इति । एवं पञ्चमः सप्तमः अष्टमः नवम इत्यादि । नान्तादिति किं नान्तो यर्हि न स्यात्तर्हि न स्यादित्यर्थः । विंशतेः पूरणो विंशः, त्रिंशतः पूरणः त्रिंश इत्यत्र द्वये शदन्तविंशतिभ्याञ्चेत्यनेनाच् । असंख्यादेः किं किमर्थं संख्यादि यर्हि स्यात्तर्हि न स्यात् । एकादश इत्यत्र अजिति सामान्याच् ॥ ९०४ ॥

बाल०—षट् । तस्य पूरणेऽर्थे षट् कतिपयचतुर्भ्योऽच् तस्मिन्नचि थुकच स्यात् । षण्णां पूरणः षष्ठ इत्यत्र थुगागमस्य प्रकृतिभाक्त्वात् संसारहरश्चितीत्यनेन उग्घरः स्यात् । षात् परस्येति थस्य ठः । कतीनां पूरणः कतिथ इत्यादिषुच पूर्ववदुग्घरः । केशवाधिकारस्य फलं दर्शयति षष्ठीत्यादि ॥ ९०५ ॥

बाल०—चतु । तस्य पूरण इत्यर्थे चतुर्थे छरामाभ्यां सह चतुःशब्दस्य चरामहरेण तुर्यतुरीयौ साधू भवतः । प्रकरणेऽत्र केशवाधिकारात् लक्ष्म्यामीपि प्राप्तेऽजादेराकृतिगणत्वादाम्यामाप् स्यादित्याह अजादित्वादिति ॥ ९०६ ॥

## ६०८. वतोरिथः ।

तावतिथः यावतिथः ।

## ६०९. द्वितीय-तृतीयौ पूरणे साधू ।

अजादित्वात् द्वितीया तृतीया ।

## ६१०. विंशत्यादेस्तमो वा ।

विंशतितमः विंशः, त्रिंशत्तमः त्रिंशः । एकविंशतितमो एकविंशो ।

## ६११. नित्यं शतादे र्मासार्द्धमासात् सम्वत्सराच्च ।

---

**अमृता०**—६०८. वतोरिति । तस्य पूरणेऽर्थे वत्वन्तात्नाम्नः केशव इथ प्रत्ययः स्यात् । तावतः पूरणः तावतिथः, लक्ष्म्यां तावतिथीति ।

**अमृता०**—६०९. द्वितीयेति । तस्य पूरणेऽर्थे तीयप्रत्ययेन द्वित्रिशब्दयोः द्वितीय—तृतीयौ साधू भवतः । त्रिशब्दस्य तृभावश्चात्र निपातबलात् । अनयोरपि लक्ष्म्यामाप् स्यादित्याह—अजादित्वादिति ।

**अमृता०**—६१०. विंशतीति । तस्य पूरण इत्यर्थे विंशत्यादेरुत्तरे तम प्रत्ययो वा स्यात्, पक्षे अच् । विंशतेः पूरणः विंशतितमः, विंशश्च । एवं त्रिंशत्तमः त्रिंशः, चत्वारिंशः, पञ्चाशत्तमः पञ्चाशः । तथाकृतिगणत्वात् ऊनविंशतितमः ऊनविंशः, ऊनत्रिंशत्तमः ऊनत्रिंश इत्यादि च ।

**अमृता०**—६११. नित्यमिति । तस्य पूरणेऽर्थे शतादेः, मासार्द्धमासात सम्वत्सराच्च नित्यं तमप्रत्ययः स्यात् । शततम इत्यारभ्य सप्तलक्षतम पर्यन्तानि शतादेरुदाहरणानि ।

---

**बाल०**—बहु । तस्य पूरण इत्यर्थे बहुपूगगणसंघेभ्यः केशवतिथः स्यात् । बहूनां पूरणः, बहुतिथः, लक्ष्म्या बहुतिथी । एवं पूगतिथः गणतिथः सङ्घतिथ इति । तथा पूगतिथीत्यादि ॥ ६०७ ॥

**बाल०**—वतो । तस्य पूरण इत्यर्थे वत्वन्तान्नाम्न इथः स्यात् । तावतः पूरणः तावतिथ इति । एवं यावतिथ इत्यादि ॥ ६०८ ॥

**बाल०**—द्विती । तस्येत्यनुवर्तते । तेन तस्य पूरणेऽर्थे तीयप्रत्ययेन सह द्वि त्रि इत्येतयोर्द्वितीयतृतीयौ साधू भवतः । अत्र त्रिशब्दस्य तृभावश्च निपातफलं । अनयोरप्यजादित्वाल्लक्ष्म्यामाप् स्यादित्याह अजेति ॥ ६०९ ॥

**बाल०**—विंश । तस्य पूरणेऽर्थे विंशत्यादेरुत्तरस्तमो वा स्यात् पक्षे सामान्याच्च । विंशतेः पूरणः विंशतितमः विंशश्च । एवं त्रिंशत्तमस्त्रिंशश्च । अधिकारप्राप्तकेशवस्य सूचकमुदाहरणद्वयमाह एकेति । विंशत्यादेराकृतिगणत्वात् ऊनविंशतितमः ऊनविंशः, अष्टविंशतितमः अष्टविंशः, ऊनत्रिंशतमः ऊनत्रिंशः, अष्टापञ्चाशत्तमः अष्टापञ्चाशः, एकषष्टितमः एकषष्ट इत्यादिच ॥ ६१० ॥

शततमः सहस्रतमः लक्षतमः एकशततमः द्विशसहस्रतमः सप्तलक्षतमः।

मासतमो दिवसः, अर्द्धमासतमः सम्वत्सरतमः।

## ९१२. षष्टि सप्तत्यशीति नवतिभ्यश्चासंख्यापूर्वेभ्यः।

विंशत्यादे विकल्पस्य बाधा। षष्टितम इत्यादि। संख्या पूर्वेभ्यस्तु—

एकषष्टः एकषष्टितमः। उक्तं पूरणम्।

## ९१३. स एषां ग्रामणीरिति कः।

त्वं ग्रामणोरेषां त्वत्काः। एवं मत्काः, मत्कं मतं, देवदत्तकाः।

---

दिवस इति मासतमस्य विशेष्यपदम्। अर्द्धमासतमी पूर्णिमा अमावस्या वा। सम्वत्सरतमो वैशाखः।

अमृता०—९१२. षष्टीति। पूर्वोक्तार्थे असंख्यापूर्वेभ्यः षष्टिसप्तत्यशीति नवतिभ्यश्च नित्यं तमः स्यात्। विंशत्यादौ एषामपि गणनात् विहितविकल्पस्य बाधनार्थं सूत्रद्वयावतरणमित्याह—विंशत्यादेरिति। पूरणरूपोऽर्थाधिकारः समाप्तः।

अमृता०—९१३. स एषामिति। स एषां ग्रामणीरित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नः क प्रत्ययः स्यात्। त्वत्का इमे इति शेषः। एवमहं ग्रामणी रेषां मत्काः।

---

बाल०—नित्यं। तस्य पूरणेऽर्थे शतादेर्मासादर्द्धमासात् सम्वत्सराच्च नित्यं यथा स्यात्तथा तमो भवति। प्रथमं शतादेरुदाहरणान्युपन्यस्यति शततम इत्यादीनि सप्तलक्षतम इत्यन्तानि षट्। शतस्य पूरण इत्यादिवाक्यन्तु यथासम्भवं योज्यं। मासादेरुदाहरणानि क्रमेणाह मासतम इत्यादीनि। मासस्य पूरणो दिवस एव सम्भवतीति दिवस इति विशेष्यं दर्शितं। अर्द्धमासस्य पूरणन्तु पक्षान्तवासरो ज्ञेयः, सम्वत्सरस्य पूरणश्च वैशाखः ॥९११॥

बाल०—षष्टि। तस्य पूरणेऽर्थेऽसंख्यापूर्वेभ्यः षष्टिसप्तत्यशीतिनवतिभ्यश्च नित्यं तमः स्यात्। विंशत्यादेरन्तर्गतत्वात् शतादिभ्योऽपि तमो वा स्यादिति विकल्पबाधनाय सूत्रद्वये नित्योपादानमिति सूचयन्नाह विंशेति बाधेति, बाधकमित्यर्थः। षष्ट्याः पूरणः षष्टितमः। इत्यादीत्यादिपदेन सप्ततितमः अशीतितमः नवतितम इति। संख्यापूर्वाणान्तु रूपाणि दर्श्यन्त इत्याह संख्येति। एकषष्ठेः पूरण एकषष्ठ इत्यादिद्वयं। प्रथमे अजित्यच् द्वितीये विंशत्यादेरिति तमः। एवमशीत इत्यादिच। केशवाधिकारात् शततमो षष्टितमीत्याद्यपि। पूरणं समापयति उक्तमिति। पूरणार्थे केशवाधिकारात् सोऽपि निवर्तते ॥ ९१२ ॥

बाल०—स ए। स एषां ग्रामणीरित्यर्थे तच्छब्दनिर्दिष्टात् कः स्यात् वाच्यन्तु एतच्छब्दनिर्दिष्टं। ग्रामणीर्नापिते पुंसि त्रिषु श्रेष्ठेऽधिपेऽपि चेति नानार्थदृष्ट्या ग्रामणीशब्दस्य शक्तिग्रहो यथासम्भवं कर्तव्यः। ग्रामणीर्मुख्य इत्यन्ये। त्वत्का इति युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरेकत्व इति त्वदादेशः। एवमित्यतिदेशात् अहं ग्रामणीरेषां

**९१४. कोऽयं प्रभुश्च ।**

**९१५. सस्येन सम्पन्नः ।**

सस्यको मणिः, सस्यकः शालिः ।

**९१६. अंशं हारी ।**

अंशको दायादः ।

**९१७. स्वाङ्गात्तदासक्ते ।**

केशकः दन्तकः ।

**९१८. तेन ग्रहीतरि पूरणप्रत्ययात्तस्य हरश्च ।**

द्वितीयेन ग्रहीता द्विको मेधावी । एवं षट्कः ।

---

अमृता०—९१५. सस्येनेति । सस्यं तण्डुलादि, तेन सम्पन्न इत्यर्थे सस्य शब्दात् क प्रत्ययः स्यात् । सस स्वप्ने इत्यस्मात् यः—सस्यं, शसु हिंसायामित्यस्माच्च शस्यमित्यमर टीकायाम् ।

अमृता०—९१६. अंशमिति । अंशः पैतृकसम्पत्तिः, तं हर्त्तुमादातुं शीलमस्येत्यर्थे कः स्यात् । हारीति ताच्छील्ये णिनिः ।

अमृता०—९१७. स्वाङ्गादिति । तदासक्तेऽर्थे स्वाङ्गवाचकादुत्तरे कः स्यात् । आसक्त स्तत्परः । केशे आसक्तः केशकः, केशसंस्कारेऽभिनिविष्ट इति भावार्थः । एवं दन्तको दन्त संस्कारे सचेष्ट इत्यर्थः ।

अमृता०—९१८. तेनेति । तेन ग्रहीतरि इत्यर्थे करणभूतात् पूरणप्रत्ययान्ताद् कः स्यात्, तस्मिन् परे पूरण प्रत्ययस्य हरश्च भवति । द्वितीयेन द्विरावृत्येत्यर्थः । षटक इति—षष्ठेन ग्रहीतेत्यर्थः । एवञ्च तृतीयेन गृहीता त्रिकः, एवं चतुष्कः पञ्चक इत्यादीनि ।

---

मत्काः । लिङ्गवचनमत्रातन्त्रमिति सूचयन् मत्कं मतमितिच दर्शितं । केवलं युष्मदस्मदोरेवेत्याशङ्कानिरासार्थं देवदत्तो ग्रामणीरेषां देवदत्तका इत्यपि दर्शितं । एवं यथासम्भवमन्यानूह्यानि । ग्रामणीरिति किं, त्वं शत्रुरेषामित्यत्र न स्यात् ॥ ९१३ ॥

बाल०—कोऽ । कप्रत्ययमधिकरोति कोऽयमिति ॥ ९१४ ॥

बाल०—सस्येन । सस्यस्तण्डुलादिस्तेन सम्पन्न इत्यर्थे सस्यशब्दात् कः स्यात् ॥९१५

बाल०—अंशं । अंशः पैतृकधनादिस्तं हारीत्यर्थेऽंशात् कः स्यात् । हारीति हर्तुं शील इति कृत्रस्तच्छीलादौ णिनिः ॥ ९१६ ॥

बाल०—स्वाङ्गा । तदासक्तेऽर्थे स्वाङ्गवाचकात् कः स्यात् । प्राण्यङ्गं मूर्तिमदित्यनेन प्रतिपादितं स्वाङ्गमत्र ग्राह्यं । तदासक्तः स्वाङ्गासक्तस्तत्पर इति यावत् । केशे आसक्तः केशक इति । एवं दन्तकः पादक इत्यादि ॥ ९१७ ॥

## ९१९. ग्रहणे तु हेरो वा ।

द्वितीयेन रूपेण ग्रन्थग्रहणं द्विकं द्वितीयकं । एवं चतुर्थकं चतुष्कम् ।

## ९२०. काले सम्भवति द्रव्येण प्रयुक्ते च रोगे ।

दिवसे सम्भवति दिवसको ज्वरः । एवं मासकः । विषपुष्पेण प्रयुक्तो विषपुष्पकः ।

## ९२१. द्वितीयकादयश्च तद्भवरोगे, शीतकादश्च शीतादि कर्त्तृक

---

**अमृता०**—९१९. ग्रहण इति । तेनेत्यनुवर्त्तते, तेन ग्रहेणऽर्थे पूरण प्रत्ययान्तात् कः स्यात्, पूरण प्रत्ययस्य हरस्तु वा भवति । ग्रहण इति भाव निर्देशः, च स्पष्टीकृत उदाहरणवाक्येन—ग्रन्थग्रहणमिति ।

**अमृता०**—९२०. काल इति । रोगे वाच्ये काले सम्भवतीत्यर्थे काल वाचकात् तथा दव्येण प्रयुक्ते इत्यर्थे द्रव्यवाचकात् कप्रत्ययः स्यात् । एवं मासे सम्भवति मासकः, पक्षक इत्यादि । द्रव्यस्य फले च दृश्यते, यथाउष्णं कार्यमस्य उष्णको ज्वरः, एवं शिरः पीडक इत्यादि ।

**अमृता०**—९२१. द्वितीयकेति । तद्भव रोगे वाच्ये क प्रत्ययेन सह द्वितीयादीनां द्वितीयकादयः साधवो भवन्ति । द्वितीयेऽह्नि भवो द्वितीयको ज्वरः । शीतेति—शीतादि कर्त्तृके रोगे वाच्ये कप्रत्ययेन शीतादीनां शीतकादयः साधवः स्युः । शीतेन (जातः) रोगः

---

**बाल०**—तेन । तेन ग्रहीतरीत्यर्थे तच्छब्दनिर्दिष्टकरणभूतात् पूरणप्रत्ययात् कः स्यात् । के परे तस्य पूरणप्रत्ययस्य हरश्च स्यात् । द्वितीयेनेत्यावृत्त्यादिनेति योज्यं । न केवलं द्वितीयस्य हरोऽपितु पूरणप्रत्ययमात्रस्येति सूचयन्नाह एवमिति । षट्क इति षष्ठेन ग्रहीतेत्यर्थः । एवं तृतीयेन ग्रहीतेति पूरणप्रत्यये हरे सति निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायेन तृभावस्य निवृत्तेस्त्रिक इति, किंवा पूरणप्रत्ययस्य हरत्वेन स्थानिवत्त्वात् न न्यायस्य प्रवृत्तिस्तेम तृक इति वा । एवं चतुष्कः पञ्चक इत्यादि ॥ ९१८ ॥

**बाल०**—ग्रह । अव्यवहितत्वात्तेनेत्यनुवर्तते इत्यतः, तेन ग्रहणेऽर्थेतु पूरणप्रत्ययात् कः स्यात् तस्य हरश्च वा स्यात् । वाक्योदाहरणानि स्पष्टानि । ग्रहणमत्र ग्रन्थग्रहणमिति वाक्येन स्पष्टीकृतम् ॥ ९१९ ॥

**बाल०**—काले । काले सम्भवतीत्यर्थे कालवाचकात्, द्रव्येण प्रयुक्तेच रोगे इत्यर्थेतु द्रव्यवाचकात् कः स्यात् । एवं मासे सम्भवति मासकः । एवं पक्षकः सम्वत्सरक इत्यादि । द्रव्येणेत्यस्योदाहरणमाह विषेति ॥ ९२० ॥

**बाल०**—द्विती । तद्भवरोगे वाच्ये कप्रत्ययेन सह द्वितीयादीनां द्वितीयकादयः साधवो भवन्ति । द्वितीये भवो रोगः द्वितीयकः । एवं तृतीयक इत्यादि । शीत । शीतादि-कर्तृके रोगे वाच्ये कप्रत्ययेन सह शीतादीनां शीतकादयः साधवो भवन्ति । शीतेन रोगः

रोगे, गूडापूपिकादयः पौर्णमास्यादिषु, पणकादयः पथ्यादिकुशले ।

पथकः कथकः आकर्षिकः जातक इत्यादि ।

**६२२. धनक-हिरण्यकौ तयोः कामे ।**

देहेऽपि निष्पृहस्यास्य मुमुक्षो र्धनकः कुतः । एवं हिरण्यकः ।

**६२३. तन्त्रकौ नवकर्पटे, शीतकोऽलसे, उष्णको दक्षे, अनुकाभिकाभीकाः कमितरि; पार्श्वकः शठे, शृङ्खलकः करभे,**

---

शीतक इत्यादि । गुड़ेति—गुड़ेन युक्तोऽपूपोऽस्यां पौर्णमास्यामिति गुड़ापूपशब्दात् कः, लक्ष्म्यामाप्, पूर्वारामस्येरामः—गुडापूपिका पौर्णमासी । सा आदि येषां ते च क-प्रत्ययेन साधवो भवन्ति । आदि शब्देन—घृततण्डुलिकेत्यादयो ज्ञेयाः । पथकेति—पथ्यादि कुशले वाच्ये क-प्रत्ययेन सह पथ्यादीनां पथकादयः साधवो भवन्ति । पथि कुशलः पथकः, कथायां कुशलः कथक इत्यादि ।

**अमृता०**—६२२. धनकेति । धन-हिरण्ययोः कामे (इच्छायां) कप्रत्ययेन सह धन-हिरण्ययो र्धनक-हिरण्यकौ साधू भवतः । स्पष्टमुदाहरणम् ।

**अमृता०**—६२३. तन्त्रक इति । नवकर्पटेऽर्थात् नूतनकार्पासवस्त्रे वाच्ये क-प्रत्ययेन साकं तन्त्रस्य तन्त्रकः साधुः स्यात् । तन्त्रादचिरोद्धृतः इति फलितार्थः । अलसे वाच्ये शीतकः, दक्षे वाच्ये उष्णकश्च कप्रत्ययेन साधू भवतः । कमितरि कामुके वाच्ये क प्रत्ययेन

---

शीतकः । एवं भीलक इत्यादि । गुडा । पौर्णमास्यादिषु वाच्येषु कप्रत्ययेन सह गुडापूपादीनां गुडापूपिकादयः साधवो भवन्ति । गुणेन युक्तोऽपूपोऽस्यां पौर्णमास्यामिति गुडापूपात् कः लक्ष्म्यामजादित्वादाप् प्रत्ययस्थात् कादिति पूर्वारामस्येरामः गुडापूपिका पौर्णमासी । एवं घृततण्डुलिकेत्यादि । पथ । पथ्यादिकुशले वाच्ये कप्रत्ययेन साकं पथ्यादीनां पथकादयः साधवः स्युः । पथि कुशलः निपुणः पथक इत्यत्र पथिशब्दस्येरामस्यारामादेशश्च निपातफलं । कथायां कुशलः कथक इत्यत्र कथाया आरामस्य वामनश्च निपातफलं । आकर्षक इत्यादिद्वयं स्पष्टं । इत्यादीत्यादिपदेन पाठकः मन्त्रक इत्यादिच ॥

**बाल०**—धन । तयोर्धनहिरण्ययोः कामे इच्छायां कप्रत्ययेन सह धनहिरण्ययोर्धनकहिरण्यकौ साधू भवतः । शिष्टप्रयोगेण स्वमतं पुष्णाति देह इति । देहेऽपि स्पृहारहितस्यास्य मुक्तिमिच्छोर्धनकामः कस्मात् स्यादित्यर्थः । हिरण्यक इति हिरण्यस्य काम इत्यर्थः ॥ ६२२ ॥

**बाल०**—तन्त्र । नवकर्पटे नूतनकार्पाससम्बन्धिवाससि वाच्ये कप्रत्ययेन सजूस्तन्त्रस्य तन्त्रकः साधुः स्यात् । तन्त्रात् कोऽचिरोद्धृते इति कश्चित् । शीत । अलसे वाच्ये कप्रत्ययेन साकं शीतस्य शीतकः साधुः स्यात् । शीतेऽलसः शीतकः । उष्ण । दक्षे

उत्क उन्मनसि, अधिरूढस्याधिकः ।

ऐते साधवः । उक्तः कः ।

**६२४. उदरादाद्यूने, अयःशूलात्तैक्ष्ण्येन कारिणि, दण्डाजिनाद्दाम्भिके; माधवठः ।**

औदरिकः उदरमात्रभरण तत्पर इत्यर्थः । आयः शूलिकः, दाण्डाजिनिकः ।

---

सह अतुकः अभिकः अभीक इत्येते साधवो भवन्ति । शठे वाच्ये पार्श्वकः, करभे वाच्ये शृङ्खलकः, उन्मनसि वाच्ये उत्कः इत्येते च कप्रत्ययेन साधवो भवन्ति । तथा कप्रत्ययेन अधिरूढस्य अधिकः साधुः स्यात् । निपातात् कप्रत्ययेसति रूढस्य हरः । उत्क उत्कण्ठित इत्यर्थः । क प्रत्ययाधिकारः पूर्णतांगतः ।

**अमृता०**—६२४. उदरादिति । आद्यूने वाच्ये उदरशब्दात् माधवठः स्यात् । आदी अदनशीलः, ताच्छील्ये णिनिः, तस्मादपि ऊनो निकृष्ट इति आद्यूनः । तैक्ष्ण्येन कारिणि वाच्ये अयः शूलशब्दान्माधव ठः स्यात् । तथा दाम्भिके वाच्ये दण्डाजिनशब्दान्माधव ठो भवति । शब्दार्थं प्रकटयति–उदरमात्रभरणतत्पर इति । आयः शूलिकः तीक्ष्णोपायावलम्बीति भट्टो जी । दम्भेनयो दण्डाजिनं गृह्णाति सदण्डाजिनः कथ्यते । माधवठोऽयमत्र नविहितं किन्तु प्राग्वते माधवठ इत्यधिकारस्यैवानुवादः कृतः ।

---

कार्यनिपुणे कप्रत्ययेन सह उष्णस्य उष्णकः साधुः स्यात् । अनु । कमितरि कामुके वाच्ये कप्रत्ययेन सह अन्वभ्योरनुकाभिकाभीकाः साधवो भवन्ति । अनुक इत्यनुकामत इत्यर्थं । अभिक इत्यादिद्वये त्वभिकामत इत्यर्थः । किञ्च, अभीक इत्यत्राभेस्त्रिविक्रमश्च निपातनात् । पार्श्वं शठ इत्यर्थः । पार्श्वेनान्विच्छतीत्यन्ये । शृङ्ख । करभे वाच्ये कप्रत्ययेन सह शृङ्खलस्य शृङ्खलकः साधुः स्यात् । शृङ्खलं बन्धनमस्य शृङ्खलकः । करभः करिशावकः । उत् । उन्मनसि वाच्ये कप्रत्ययेन सार्द्धं उदित्यस्य उत्कः साधुः स्यात् । उत्क इत्युत्कण्ठित इत्यर्थः । अधि । केन सहाधिरूढस्याधिकः स्यात् । अत्र निपातनात् कप्रत्यये सति रूढस्य हरः स्यात् । अधिक इत्यधिरूढ इत्यर्थः । के सति अध्यारूढस्याधिरित्येके । द्वितीयकादीनामधिकान्तानामेकत्रैव वृत्तिमाह एत इति । कस्यायमश्वोऽश्वक इति कुत्सितोऽश्वोऽश्वक इतिच वक्तव्यं । कप्रत्ययं समापयति उक्त इति ।। ६२३ ।।

**बाल०**—उद । आद्यूने वाच्ये उदरान्माधवठः स्यात् । आदी अदनशीलस्तस्मादप्यूनः निकृष्टस्तस्मिन् । अयः । तैक्ष्ण्येन कारिणि वाच्येऽयःशूलान्माधवठः स्यात् । दण्डा । दाम्भिके वाच्ये दण्डासिनान्माधवठः स्यात् । माधवठ इतीदं नात्र विहितं किन्तु प्राग्वतेर्माधवठ इत्यस्यानुवर्तनादेवोक्तं । औदरिक इत्यस्यार्थं स्वयं स्पष्टयति उदरेति । आद्यूनः स्यादौदरिक इत्यमरः । अयःशूलं तीक्ष्णं करोति आयःशूलिक इति । तीक्ष्णस्य

**९२५. श्रोत्रीयश्छन्दोऽधीयाने, श्राद्धिक-श्राद्धिनौ श्राद्धभोक्तरि ।**

साधवः ।

**९२६. अनुपदादिनिरन्वेष्टरि ।**

मृगस्यानुपदी रामः ।

**९२७. क्षेत्रियो जन्मान्तरचिकित्स्ये ।**

साधुः । क्षेत्रं शरीरं तच्च जन्मान्तरगतं गृह्यते ।

**९२८. साक्षी साक्षाद्द्रष्टरि ।**

इन्नन्तः साधुः ।

---

**अमृता०**—९२५. श्रोत्रिय इति । छन्दोऽधीयाने वाच्ये छरामेण सह श्रोत्रस्य श्रोत्रीय इति साधुः स्यात् । श्राद्ध भोक्तरि वाच्ये माधवठ-णिनिभ्यां सह श्राद्धस्य श्राद्धिक श्राद्धिनौ साधू स्याताम् ।

**अमृता०**—९२६. अन्विति । अन्वेष्टरि अन्वेषण कारिणि वाच्ये अनुपद शब्दात् इनिः स्यात् । भट्टि प्रयोगेणोदाहरति—मृगस्येति ।

**अमृता०**—९२७. क्षेत्रिय इति । जन्मान्तरस्य चिकित्स्ये प्रतिकार्येऽर्थे घरामेण क्षेत्रशब्दस्य क्षेत्रिय इति साधुः स्यात् । अर्थमाह—क्षेत्रं शरीरमिति ।

**अमृता०**—९२८. साक्षीति । साक्षाद् द्रष्टरि वाच्ये इनि प्रत्ययेन साक्षाच्छब्दस्य साक्षीति साधुः स्यात् । उपद्रष्टेत्यर्थः ।

---

भावस्तैक्ष्णयमित्यतस्तैक्ष्णयेनेत्यत्रोपलक्षणे तृतीया इत्ययःशूलतीक्ष्णयोः सामानाधिकरण्यं । अयःशूलेन तीक्ष्णेनान्यत् साधु करोतीत्यन्ये । दाण्डाजिनिक इति दम्भेन दण्डाजिनं गृह्णातीत्यर्थः ॥ ९२४ ॥

**बाल०**—श्रोत्री । छन्दोऽधीयाने वाच्ये छरामेण सह श्रोत्रस्य श्रोत्रीयः साधुः स्यात् । श्रोत्रशब्दोऽत्र छन्दोवाचकस्तेन श्रोत्रं छन्दोऽधीते श्रोत्रीय इति । श्राद्ध । श्राद्धभोक्तरि वाच्ये माधवठ-णिनिभ्यां सह श्राद्धस्य श्राद्धिक श्राद्धिनौ साधू भवतः । श्राद्धे भुङ्क्ते इति श्राद्धिकेत्यादिद्वयं ॥ ९२५ ॥

**बाल०**—अनु । अन्वेष्टरि वाच्ये अनुपदादिनिः स्यात् । मृगेति । मृगस्यानुपदमन्विच्छतीत्यर्थः । ( अयं भट्टिप्रयोगः ५ । ५० ) ॥ ९२६ ॥

**बाल०**—क्षेत्रि । जन्मान्तरस्य चिकित्स्ये वाच्ये घरामेण सह क्षत्रस्य क्षत्रियः साधुः स्यात् । स्वाभिप्रेतार्थमाह क्षेत्रमिति । एवम्भूतस्य क्षेत्रस्य ग्रहणात् । क्षेत्रे जन्मान्तरगतवर्ष्मणि चिकित्स्येतु क्षेत्रिय इति । पूर्वजन्मगतशरीरे चिकित्स्यो व्याधिरिह जन्मन्यसाध्य इत्यर्थः ॥ ९२७ ॥

**६२९. इन्द्रियमिन्द्रलिङ्गमित्याद्यर्थे संज्ञायां साधु ।**

**६३०. पूर्वादिनिर्भूतपूर्वं कर्त्तरि ।**

**पूर्वमनेन स्थितं गृहीतं पीतं वा पूर्वी, पूर्विणौ ।**

**६३१. सपूर्वपदाच्च ।**

**कृतं पूर्वमनेन इति कृतपूर्वी सृष्टिं, भुक्तपूर्वी दधीनि ।**

---

**अमृता०**—६२९. इन्द्रियमिति । इन्द्र आत्मा लिंग्यते ज्ञायते येन तदिन्द्रलिङ्गम् । इन्द्रलिङ्गाद्यर्थे संज्ञायां घरामेण सह इन्द्रस्य इन्द्रियमिति साधु भवति । एकादश इन्द्रियाणि, यथा,—चक्षुःकर्णौ नासिका जिह्वा त्वक् चेति पञ्च ज्ञानेन्द्रियानि, हस्त पदशिरोलिङ्ग-गुह्येति पञ्च कर्मेन्द्रियाणि, मन एषां राजेति ।

**अमृता०**—६३०. पूर्वादिति । भूतपूर्वकर्त्तरि वाच्ये पूर्वशब्दात् इनिः स्यात् । भूतपूर्व इति पूर्व कालस्थ इत्यर्थः । यथा योग्यं क्रियाध्याहार्येति स्पष्टयति—पूर्वमनेन स्थितमित्यादिना ।

**अमृता०**—६३१. सपूर्वेति । भूत्तपूर्वकर्त्तरि वाच्ये पूर्वपदयुक्ताच्च पूर्वशब्दात् इनिः स्यात् । वाक्यादाहणे दर्शयति—वृतमित्यादि । कारक प्रकरणे मूलेधृतमिदं टीकायाच्च विशदीकृतम् । तत्र कृतमिति भावे क्तः, तथापि कर्त्तुरभीष्टतमत्वात् सृष्टेरिह कर्मत्वं, कर्त्तरिविहित-तद्धितेनि प्रत्ययस्यैव मुख्यत्वात् । तेन गुणीभूतक्रियासम्बन्धः क्तप्रत्ययश्च गौणः, तद्धितस्य कर्त्तरि, कृतश्च भावे विहितत्वात् सृष्टिकर्मणोऽनुक्तत्वमिति । कर्मण एकत्व नियमो नास्तीति दर्शयितुं दधीनीति बहुवचनमुपन्यस्तम् ।

---

**बाल०**—साक्षी । साक्षाद्द्रष्टरि वाच्ये साक्षाच्छब्दस्येना सजूः साक्षी साधुः स्यात् । साक्षात् प्रत्यक्षं पश्यतीति साक्षी ।। ६२८ ।।

**बाल०**—इन्द्रि । इन्द्र आत्मा लिङ्ग्यते ज्ञायते येन चक्षुरादिना तदिन्द्रलिङ्गम् । इन्द्रलिङ्गमित्याद्यर्थे संज्ञायां वाच्यायां घरामेण सह इन्द्रस्य इन्द्रियमिति साधु स्यात् । इत्याद्यर्थे इत्यादिपदग्रहणात् इन्द्रस्यात्मन इदमनुमापकमिन्द्रियमित्यादिच यथास्वमुह्यं ।।

**बाल०**—पूर्वा । भूतपूर्वकर्तरि पूर्वशब्दादिनिः स्यात् । भूतपूर्व इति पूर्वकालस्थ इत्यर्थः । सचासौ कर्ता चेति तस्मिन् । अत्र योग्यक्रियाध्याहार्यमिति स्पष्टयितुं वाक्यपुरः-सरोदाहरणमाह पूर्वमिति । पूर्विणाविति पूर्वमाभ्यां स्थितं गृहीतं पीतं वेत्यर्थः । यद्यप्यत्रानुक्तकर्तरि भावपदैर्वाक्यं दर्शितं । तथापि कर्तरि विहितेनाकर्तैवोक्तः । किञ्च, अत्राधिकरणमप्युह्यमित्यतः पूर्वमित्यधिकरणसूचकमुपन्यन्तं तस्मादेव प्रत्ययश्च सूत्रनिर्देशात् ।। ६३० ।।

**बाल०**—सपू । भूतपूर्वकर्तरि वाच्ये पूर्वपदेन सह वर्तमानात् पूर्वादिनिः स्यात् । वाक्योदाहरणे आह कृतमिति । अत्र कृतमिति भावे क्तः सृष्टेः कर्मत्वं कृतिक्रियासाध्यत्वात्

९३२. इष्टादिभ्यश्च ।

इष्टमनेन इष्टी हरियागे । अधीती श्रीभागवते । एवं निराकृती पठिती गृहीती कृती श्रुती ।

९३३. तदस्यास्त्यस्मिन् वा मतुः ।

अर्थोऽयं प्रभूश्च । गावोऽस्य सन्ति गोमान् व्रजनाथः । कृष्णोऽस्त्यस्मिन्, मतो र्मो वः, कृष्णवान् ।

---

अमृता०—९३२. इष्टेति । भूतपूर्वं कर्त्तरि वाच्ये इष्टादिभ्यश्च इनिः स्यात् । प्रश्नस्योत्तररूपेण प्रयुज्यतेऽयमिति बहूनां मतम् । तेन कुत्रेष्टीति प्रश्नेऽपेक्षिते कर्मपदं हरियाग इति प्रदत्तम् । क्तस्येनन्तस्त योगे कर्मणि सप्तमीति शासनात् कर्मणि सप्तमी । एवंच कुत्राधीति प्रश्नेऽपेक्षितोत्तरे कर्मपदं—श्रीभागवत इति । एवं निराकृतमनेन पठितं गृहीतं कृतं श्रुतमनेनेत्यादि वाक्यानि योज्यानि ।

अमृता०—९३३. तदिति । तदस्यति इत्यर्थे तदस्मिन्नस्ति इत्यर्थे वा मतु प्रत्ययः स्यात् । विधिसूत्रमधिकारसूत्रञ्चेमित्याह—अर्थोऽयं प्रभुश्चेति । द्वयोरर्थयो यथाक्रमं द्वे उदाहरणे दर्शिते । मतो र्मोवइति—अद्वयमाभ्यां तदुद्भवाभ्यां विष्णुदासाच्च मतो र्मो व इत्युक्तं तद्धित कार्यं । परिभाषामाह—भूमेत्यादि पद्येन । तत्र भूमा प्रचुरः, निन्दा गर्हा, प्रशंसा स्तुतिः, नित्ययोगोऽपरिहार्ययोगः, अतिशयनोऽतिशयः, संसर्गः सम्पर्कः, अस्ति-

---

कर्तुरीप्सिततमत्वादित्यन्ये । कर्मणोऽनुक्तत्वञ्च कर्तरि तद्धितस्य विहितत्वात्, कृतश्च भावे विहितत्वात् । प्रत्ययार्थगुणीभूतायाः क्रियायाः सम्बन्धस्यतु सर्वत्रार्थिकत्वादेव सृष्टेः कर्मत्वं । एवं सति कृत्प्रत्ययः क्तो गुणीभाव्यः कर्तरि विहितस्तद्धितेनिप्रत्यय एव मुख्यस्तस्मात् लीलायाः कर्ता कृष्ण इतिवदस्य कर्मणो योग इति विवेचनीयं, कारकपादे यद्ग्रन्थकृतोक्तं तदिहापि स्मर्तव्यं । भुक्तपूर्वीति । भुक्तं पूर्वमनेनेत्यर्थपूर्ववदत्रापि दधिशब्दस्य कर्मत्वादिकं विवेचनीयं । किञ्च, कर्मण एकत्वादिनियमाभावाद्दधीनीति बहुवचनान्तमुपन्यस्तं ॥ ९३१ ॥

बाल०—इष्टा । भूतपूर्वकर्तरि वाच्ये इष्टादिभ्यश्च इनिः स्यात् । प्रश्नपूर्वकमत्र प्रयोग इति सर्वेषां मतं । तेन कुत्रेष्टीति प्रश्नेऽपेक्षितमधिकरण हरियाग इति दर्शितं । कुत्रेष्टमनेन इष्टी हरियाग इत्यपि भवितुमर्हति । एवमुत्तरत्रापि यथासम्भवं योज्यं । अधीतमनेन अधीतीति । एवं कुत्राधीती श्रीभागवते इत्यादिकमपि । एवमित्यातिदेशिकानां क्रमेण निराकृतमनेन पठितमनेन गृहीतमनेन कृतमनेन श्रुतमनेनेत्यादीनि वाक्यानि ज्ञेयानि । निराकृति पापे, पठिती व्याकरणे, गृहीती धने, कृती कर्मणि, श्रुती वेदे, इत्येतानि यथायोग्यमधिकरणानिच । हरियाग इत्यादिषु सर्वेषु गुणीभूतक्रियासम्बन्धादधिकरणत्वं भावे क्तस्य विहितत्वात्, कर्तरि इनो विहितत्वादित्यादिपूर्ववद्योज्यं । किञ्च, इष्टादीनामपरिमितत्वादाकृतिगणत्वं ज्ञेयं ॥ ९३२ ॥

अत्रार्थे नियमश्च,—

भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति विवक्षायां मतुमुख्या भवन्ति ते ॥

क्रमेण यथा,–गोमान् श्रीनन्दः, दैत्यवान् कंसः । प्रशंसादौ–रूपवान् शार्ङ्गी दण्डी कृष्णः, अस्ति विवक्षायायान्तु–क्रियावान् । इन् वक्ष्यते ।

---

विवक्षा चेति सप्तस्वेव मतुमुख्याः प्रत्यया भवन्ति । मतु र्मुख्य आदि र्येषां ते मतुमुख्याः, वक्ष्यमाणाः—रः लः शः इन् इल इत्यादय इत्यर्थः । तेच पूर्वोक्तार्थद्वये हि भवन्तो भूमनिन्दादीनां कमप्यर्थं विशेषमभिव्यञ्जयन्तीति भावः ।

क्रमेणोदाहरति—गोमानित्यादिभिः । गावोऽस्य सन्ति गोमान् श्रीनन्दः । बहुवचनेन भूमत्वं गम्यते, व्रजे श्रीनन्दराजस्यैव गवाधिक्य प्रसिद्धेः । दैत्यशब्दस्य गर्ह्यत्वेन निन्दा गम्यते । प्रशंसादयस्तु यथार्थतः कृष्णे एव सङ्गच्छन्त इत्युदाहरति—रूदवानित्यादीनि । तस्यासमोर्द्ध्वरूपत्वात् प्रशंसा गम्यते । भगवानिति—ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञान वैराग्ययोश्चेति षण्णां भग इतीङ्गना ॥ इति शास्त्रोक्त्या षडैश्वर्यवाची भगशब्दः, सोऽस्यास्ति अस्मिन् वेति भगवान् कृष्णः । अत्रहि भगवच्छब्दस्य नित्ययोगः, स्वरूपानुबन्धित्वात् । शार्ङ्गीति—शृङ्गेन निर्मितं शार्ङ्गं धनुः, तदस्यास्मिन् वास्तीति । दण्डीति—दण्डस्यात्र सांसर्गिकत्वम् । इन् वक्ष्यत इति—अरामा—दिनि—ठरामौ इत्यनेनेति शेषः ।

---

बाल०—तद । तदस्यास्ति तस्मिन् वा अस्तीत्यर्थे नाम्नो मतुः स्यात् । अयमर्थः प्रभुनामाधिकारश्चकाराद्विधिरपीत्याह अर्थ इति । अर्थद्वयस्य क्रमेणोदाहरणद्वयमाह गाव इति । मतोरित्यस्मात् पूर्वं अद्वयमाभ्यां तदुद्भवाभ्यां विष्णुदासाच्चेति योज्यं । कृष्णवानित्यस्य गोवर्द्धन इति वाच्यपदं द्रष्टव्यं ।

अत्रा । परिभाषासूचकविधिवाक्यमाह अत्रेति । अत्रार्थे तदस्यास्त्यस्मिन् वेत्यर्थे नियमश्च वक्ष्यत इत्यर्थः । नियममेवाह भूमेति । भूमा प्रचुरः । अतिशायनोऽतिशयः स्पष्टमन्यत् । मतुर्मुख्य आदिर्येषां ते मतुमुख्याः । भूमादिष्वर्थेषु गम्यमानेषु तदस्यास्तस्मिन् वेत्यर्थे नाम्नस्ते प्रसिद्धा वक्ष्यमाणा मतुप्रभृतयो भवन्तीत्यर्थः । क्रम इति एष्वर्थेषु क्रमेण यथोदाह्रियते । गोमान् श्रीनन्द इत्यत्र गावोऽस्य सन्त्यस्मिन् वेति गोशब्दस्य बहुवचनान्तत्वेन भूमत्वं गम्यते । दैत्यवान् कंस इत्यत्र दैत्योऽस्यास्त्यस्मिन् वेति दैत्यशब्दस्य निन्द्यत्वेन निन्दा गम्यते । यथार्थतः प्रशंसादिः कृष्णे सङ्गच्छत इति तत्रैव प्रशंसादि गमयन्नुदाहरणान्याह प्रशंसादाविति । रूपवानित्यत्र रूपमस्यास्त्यस्मिन् वेति निरपेक्षरूपस्य प्रशंसात्वेन प्रशंसा गम्यते । भगवानिति । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चेति षण्णां भगमितीङ्गना । इत्यनेन भगशब्दः षडैश्वर्यवाची सोऽस्यास्त्यस्मिन् वेति भगशब्दस्यात्रैव नित्ययोगो गम्यतेऽन्यत्रतु कल्पितः । शार्ङ्गीति शृङ्गेण निर्मितं शार्ङ्गं धनुस्तदस्यास्त्यस्मिन् वेति शार्ङ्गस्यातिशायनत्वमत्रैव

**६३४. गुणवाचिभ्यो मत्वर्थस्य महाहरः।**

शुक्लः पटः। यदा तु स्वभावाद्गुणिनि गुने च शुक्लादयो वर्त्तन्ते इत्युपगम स्तदा गुणपक्षेऽपि शुक्लवानिति न स्यात्, इत्येव मत्वर्थो महाहरः।

**६३५. रसादिभ्यो मतुरेव प्रायशः।**

रस–रूप–गन्ध–स्पर्श–शब्देभ्यो मत्वर्थीयेषु प्रायशो मतुरेव स्यात्। रसवान्। प्रायशः किम्–रसिकः कृष्णः, रूपिण्यो गोप्यः, स्पर्शी वायुरित्यादि।

---

अमृता०—६३४. गुणेति। तदस्यास्त्यस्मिन् वेत्यर्थे गुणवाचिभ्यः शब्देभ्यो मत्वर्थस्य महाहरः स्यात्। महाहर प्रयोजनं प्रतिपादयति—यदेति। गुणे शुक्लादयः पुंसि गुणलिङ्गास्तु तद्वतीत्यमर वाक्यानुसारेण शुक्लादयः शब्दाः स्वत एव केवलगुणे गुणविशिष्टे द्रव्ये च वर्त्तन्ते इति प्रतीति स्तदा गुण पक्षे (अपिकारात् गुणान्वित द्रव्येपक्षे च) मत्वर्थ प्रत्ययेन शुक्लवान् नीलवान घट इत्येवं प्रयोगो मा भूदिति हेतो र्मत्वर्थप्रत्ययस्य महाहरो भवतीति समुदायार्थः।

अमृता०—६३५. रसादिभ्य इति। तदस्यास्त्यस्मिन् वेत्यर्थे रसादिभ्यो गुण वाचिभ्यस्तु प्रायशो बहुलं मतुरेव भवति। पूर्वेण महाहरे प्राप्तेऽयं पुनर्विधिः। विवृतिमाह—रसरूपेत्यादिना। तत्र मत्वर्थेष्विति निर्द्धारणे सप्तमी। प्रायशइति ग्रहणस्य फलमाह—रसिक इत्यादि। रसोऽस्यास्ति अस्मिन् वेति अरामादित्यनेन ठः, ठइकः–रसिकः। एवं रूपादिनिः—रूपिणी।

---

गम्यतेऽन्यत्रतु कादाचित्कं। दण्डीति दण्डमत्र लगुडस्तदस्यास्त्यस्मिन् वेति दण्डस्यात्र सांसर्गिकत्वं गम्यते। अस्तीति अस्ति विवक्षायान्त्वनियमत्वात् यस्य यस्मिन् वा क्रियास्ति स क्रियावानिति। शार्ङ्गी दण्डीत्यत्र अरामादिनि ठरामाविनत्यनेन इनिः स्यादित्याह इन्निति॥ ६३३॥

बाल०—गुण। तदस्यास्त्यस्मिन् वेत्यर्थे गुणवाचिभ्यः शब्देभ्यो मत्वर्थस्य महाहरो भवति। शुक्लोऽस्यास्त्यस्मिन् वेति मत्वर्थस्य मत्वादेर्महाहरः। शुक्ल इति। एवं नीलो घट इत्यादि। गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यमरोक्तानुसारेण स्वभावात् शुक्लादयः केवलगुणे गुणविशिष्टद्रव्येच वर्तमानगुणवाचिनः स्युरिति प्रतिपादनपूर्वकं सूत्रकरणस्य प्रयोजनमाह यदात्विति। तथाच, स्वभावत एव गुणिनि गुणेच शुक्लादयो पुनर्वर्तन्त इत्युपगमः प्रतीतिः स्यात्तदा मत्वर्थीयप्रत्ययेन शुक्लवानितीत्यादिर्न स्यादेवेति मत्वर्थप्रत्ययो महाहरः स्यादित्यर्थः। मत्वर्थग्रहणादेभ्य इनि-ठरामादीनां यथायोग्यं महाहरो ज्ञेयः॥ ६३४॥

बाल०—रसा। तदस्यास्त्यस्मिन् वेत्यर्थे रसादिभ्यो गुणवाचिभ्यः प्रायो बाहुल्यं यथा स्यात्तथा मतुरेव भवति। पूर्वत्र गुणवाचिभ्य इति सामान्यगुणवाचिग्रहणादेभ्योऽपि

## ९३६. प्राणिस्थादारामान्ताल्लो वा सिध्मादेश्च ।

चूडालः चूडावान् नेह—शिखावान् प्रदीपः । तथा सिध्मलो गडुलः ।

## ९३७. पार्ष्णि-धमन्यो स्त्रिविक्रमश्च ।

पार्ष्णीलः धमनीलः ।

## ९३८. जटा-घाटा-कालाभ्यः क्षेपे लः ।

जटालः घाटालः कालालः ।

---

**अमृता०**—९३६. प्राणिनीति । तदस्यास्त्यस्मिन् वेत्यर्थे प्राणिस्थादारामान्तान्नाम्नो लप्रत्ययो वा भवति, पक्षे मतुश्च । तथा सिध्मादेश्च लो वा स्यात् पक्षे मतुश्च । प्रत्युदाहरति नेहेति । शिखावानित्यत्र प्राणिस्थत्वात् लो न, किन्तु सामान्यतो मतुः ।

**अमृता०**—९३७. पार्ष्णीति । पूर्वोक्तार्थे पार्ष्णि-धमनि शब्दाभ्यां लो वा स्यात्, तस्मिन् सति तयोरिरामस्य त्रिविक्रमश्च भवति । पार्ष्णि र्गुल्फः, पक्षे पार्ष्णिमानित्यादि ।

**अमृता०**—९३८. जटेति । तदस्यास्त्यस्मिन् वेत्यर्थे क्षेपे निन्दायां जटा घाट । कालाभ्यो लो वा स्यात्, पक्षे मतुरेव ।

---

मत्वर्थस्य महाहरे प्राप्तेऽयं । रसादेरन्येभ्य कदाचिदपि मत्वर्थस्य स्थितिर्न स्यादित्येव-शब्दस्य प्रयोगः । रसादिगणप्रदर्शनपूर्वकं विवरणमाह रसेति । रसोऽस्यास्त्यस्मिन् वेति रसवानिति । प्रायोग्रहणफलं दर्शयति प्रायश इत्यादि । रसकादिषु आरामादित्यनेन ठरामेनी ज्ञेयौ ॥ ९३५ ॥

**बाल०**—प्राणि । तदस्यास्त्यस्मिन् वेत्यर्थे प्राणिस्थितादारामान्तालल्लो वा भवति पक्षे मतुश्च । सिध्मा । पूर्वोक्तेऽर्थे सिध्मादेश्च लो वा स्यात् पक्षे मतुश्च । चूडामस्यास्त्यस्मिन् वेति चूडाल इत्यादिद्वयं । नेहेति प्राणिस्थादिति विशेषणात् । उत्तरस्योदाहरणं दर्शयति तथेति । सिध्मन् शब्दो गात्रस्थरोगविशेषवाची सिउलीति नीचोक्तिः गडुर्गलस्थरोग-विशेषवाची गलगण्ड इति नीचोक्तिः । सिध्मालो गडुलश्च तत्तद्रोगयुक्तपुरुषवाचकः । एवं सिध्मवान् गडुमांश्चेत्यादि । सिध्मादिराकृतिगणः ॥ ९३६ ॥

**बाल०**—पार्ष्णि । तदस्यास्त्यस्मिन् वेत्यर्थे पार्ष्णिधमनिभ्यां लो वा स्यात्, तयोरिरामस्य त्रिविक्रमश्च । पार्ष्णिर्गुल्फः सोऽस्यास्त्यस्मिन् वेति पार्ष्णिलः । एवं धमनिर्गात्रशिरास्तद्वान् धमनीलः । पक्षे, पार्ष्णिमानित्यादि ॥ ९३७ ॥

**बाल०**—जटा । तदस्यास्त्यस्मिन् वेत्यर्थे क्षेपे वाच्ये जटाघाटाकालाभ्यो लो वा स्यात् । क्षेपो निन्द्यः । जटामिलितकेशः सास्त्यास्त्यस्मिन् वेति जटाल इत्यादिः । पक्षे जटावानित्यादिश्च ॥ ९३८ ॥

**९३९. क्षुद्रजन्तूपतापेभ्यश्च ।**

मूषिकालः यूकालः । उपतापात्—मूच्र्छालः विचर्चिकालः । विकल्पानुवृत्ति : सर्वत्र, सिध्मवान् । एवमुत्तरत्रापि ।

**९४०. वत्सलः कामवति, अंशलो बलवति ।**

साधू ।

**९४१. क्लिन्नेऽक्षिण तद्वति पुरुषे च अक्ष्णश्चुत्-चित्-पित्-लश्च ।**

चुल्लं चुल्ल इत्यादयः ।

---

**अमृता०**—९३९. क्षुद्रेति । पूर्वोक्तार्थे क्षुद्रजन्तुवाचिभ्य, उपतापवाचिभ्यश्चोत्तरे लो वा स्यात् । क्षुद्रजन्तुरनस्थिः स्यादित्याद्युक्त लक्षणं स्मर्त्तव्यम् । मूषिका अस्याति अस्मिन् वा मूषिकालः । एवं मूच्र्छाल इत्यादयश्च । पक्षे मूषिकावानित्यादय इत्याह—विकल्पानुवृत्तिः सर्वत्रेति ।

**अमृता०**—९४०. वत्सल इति । तदस्यास्त्यस्मिन् वेत्यर्थेकामवति वाच्ये लप्रत्ययेन साकं वत्सल इति साधुः स्यात्, तथाबलवति वाच्ये तेन सह अंशस्य अंशल इति साधुर्भवति ।

**अमृता०**—९४१. क्लिन्न इति । पूर्वोक्तार्थे क्लिन्ने (क्लेदयुक्ते) अक्षिण वाच्ये, तद्वति पुरुषे च वाच्ये अक्ष्णः सम्बन्धे ल प्रत्ययः स्यात्, तस्मिन् परे अक्ष्णः चुत् चित् पित् इत्येते विरिञ्चयश्च भवन्ति । अक्षि अस्त्यस्य अस्मिन् वेति चुल्लं क्लिन्न चक्षुः, चुल्लः क्लिन्नाक्षः पुरुषः । एवं चिल्लंपिल्लमिति च ।

---

**बाल०**—क्षुद्र । तदस्यास्त्यस्मिन् वेत्यर्थे क्षुद्रजन्तूपतापवाचिभ्यश्च लो वा स्यात् । क्षुद्रजन्तुरनस्थिः स्यादिति क्षुद्रजन्तुलक्षणं स्वयं ग्रन्थकृतोक्तं (१२३८ पृः) । मूषिकास्यास्त्यस्मिन् वेति मूषिकाल इत्यादिः । पक्षे मूषिकावानित्यादिश्च । उपतापं लक्षीकृत्योदाहरति उपेति । उपतापः शरीरविकारमात्रं । मूच्र्छा मोहः सास्यास्त्यस्मिन् वेति मूच्र्छालो मूच्र्छालो मूर्च्छितः । विचर्च्चिका गात्रकण्डूः सास्येत्यादि पूर्ववत् विचर्च्चिकाल इत्यादिः । पक्षे, मूच्र्छावानित्यादिश्च । सर्वत्र स्वाभिप्रेतं विकल्पानुवर्तनं स्मारयति विकल्पेति । एवमुत्तरत्रापि सर्वत्र विकल्पानुवृत्तिः स्यादित्यतिदिशति एवमिति ।। ९३९ ।।

**बाल०**—वत् । तदस्यास्त्यस्मिन् वेत्यर्थे कामवति वाच्ये लप्रत्ययेन सह वत्सस्य लः साधुः स्यात् । अंश । तदस्यास्त्यस्मिन् वेत्यर्थे बलवति वाच्ये लरामेण सह अंशस्य अंशलः साधुः स्यात् । साधू इति द्विवनान्तमुभयसम्बन्धसूचनार्थम् ।। ९४० ।।

**बाल०**—क्लिन्ने । पूर्वोक्तेऽर्थे क्लिनेऽक्षिण वाच्ये तद्वति क्लिन्नाक्षवति पुरुषे च वाच्ये अक्ष्णः सम्बन्धे लः स्यात्, तस्मिन् परे तस्य चुत् चित् पित् इत्येते विरिञ्चयश्च

## ९४२. फेनिल-फेनलौ ।

साधू ।

## ९४३. लोमशादयः पामनादयश्च ।

साधवः । लोमशः कपिशः, पामनः श्लेष्मणः हेमनः बलिनः ।

## ९४४. लक्ष्मणो लक्ष्मीवति; अङ्गणा-दद्रुण-पिच्छिल-जटिलो-रसिलाः ।

साधवः ।

---

**अमृता०**—९४२. फेनिलेति । उक्तार्थे फेनस्य इल-लाभ्यां फेनिल-फेनलौ साधू भवतः ।

**अमृता०**—९४३. लोमशेति । प्रोक्तार्थे श प्रत्ययेन सह लोमादीनां लोमशादयः साधवो भवन्ति । तथा न प्रत्ययेन साकं पामादीनां पामनादयश्च साधवो भवन्ति । लोमन् रोमन् वभ्रु हरि गिरि कर्क कपि मुनि तरु इति लोमादि । पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रु बलि सामन् उष्मन् कृमि इति पामादिः । पक्षेवत्सवानित्यादयो लोमवा-नित्यादयश्च ज्ञेयाः ।

**अमृता०**—९४४. लक्ष्मण इति । तदस्यास्त्यस्मिन् वेत्यथ लक्ष्मीवति वाच्ये नरामेण सह लक्ष्म शब्दस्य लक्ष्मणः साधुः स्यात् । उक्तार्थे न प्रत्ययेन सह अङ्ग-दद्रवो रङ्गना—दद्रुणौ साधू भवतः, तथा इल प्रत्ययेन सार्द्धं पिच्छ जटारसां पिच्छल-जटिलोरसिलाश्च साधवो भवन्ति ।

---

भवन्ति । अक्ष्यस्यास्त्यस्मिन् वेति ईश्वरेच्छासंकेतग्रहात् । चिल्लं क्लिन्नचक्षुः, चिल्लः क्लिन्नाक्षियुक्तपुरुषः । इत्यादयः इत्यादिपदेन चिल्लं चिल्लः, पिल्लं पिल्ल इति, पूर्वस्य विष्णुपदवत्त्वं स्वादितद्धितयोरित्युक्तात् सर्वत्र दतौ परवर्णौ लचटवर्गेषु नित्यमित्यनेन तरामस्य लः स्यात् ॥ ९४१ ॥

**बाल०**—फेनि । तदस्यास्त्यस्मिन् वेति इललाभ्यां सह फेनस्य फेनिलफेनलौ द्वौ साधू भवतः ॥ ९४२ ॥

**बाल०**—लोम । तदस्यास्त्यस्मिन् वेत्यर्थे शरामेण सह लोमादीनां लोमशादयः भवन्ति, नरामेण साकन्तु पामादीनां पामनादयश्च साधवो भवन्ति । लोमास्यास्त्यस्मिन् वेति लोमश इत्यादि । पामास्यात्यस्मिन् वेति पामन इत्यादि । एवमुत्तरत्रापित्युक्तत्वात् वत्सवान् लोमवानित्यादिच ॥ ९४३ ॥

**बाल०**—लक्ष्म । तदस्यास्त्यस्मिन् वेत्यर्थे लक्ष्मीः शोभादिस्तद्वती वाच्ये नरामेण सह लक्ष्मशब्दस्य लक्ष्मणः साधुः स्यात् । अङ्ग । तदस्यास्त्यस्मिन् वेत्यर्थे नरामेण

## ९४५. प्रज्ञा-श्रद्धाचर्चा-वृत्तिभ्यो णरामः ।

प्राज्ञः ।

## ९४६. तपस्वि-सहस्त्रिणौ, तापस-सहस्रौ च ।

साधू । केशवाणान्तत्वात् तापसी साहस्त्री ।

## ९४७. ज्योत्स्नादेः केशव णः ।

ज्योत्स्नः तामिस्त्रः पक्षः ।

## ९४८. सिकता-शर्कराभ्याञ्च ।

सैकती यमुना, शार्करो घटः ।

---

**अमृता०**—९४५. अज्ञेति । उक्तार्थे प्रज्ञादिम्य श्चतुर्भ्यो ण प्रत्ययः स्यात् । अज्ञा अस्त्यस्य अस्मिन् वेति प्राज्ञः, पक्षे प्रज्ञावान् । एवं श्राद्धः आर्च्चः वार्त्त इत्यादयः, श्रद्धावानित्यादयश्च ।

**अमृता०**—९४६. तपस्वीति । पूर्वोक्तार्थे वि-निन् प्रत्ययाम्यां तपः सहस्रयोः तपस्वि-सहस्त्रिणौ साधू स्यातां तथा केशवणेन तयोः तापस-साहस्रौ च भवतः । केशव-णान्तत्वात् लक्ष्म्यमीप् स्यादिति दर्शितं—तापसीत्यादिभ्याम् ।

**अमृता०**—९४७. ज्योत्स्नेति । तदस्यास्त्यस्मिन् वेत्यर्थे ज्योत्स्नादेः केशवणः स्यात् । ज्योत्स्ना अस्य अस्मिन् वास्तीति ज्यौत्स्नः पक्षः । एवं तमिस्रा अन्धकारः अस्यास्मिन् वास्ति तामिस्रः कृष्ण पक्षः । तथा मतुरपि—ज्योत्स्नावानित्यादि ।

**अमृता०**—९४८. सिकतेति । उक्ताथ सिकता-शर्कराभ्याञ्च केशवणः स्यात् । सिकता वालुका ।

---

साकमङ्गदद्रवोरङ्गनादद्रुणौ साधू भवतः । इलेन सह पिच्छजटोरसां पिच्छलजटिलोर-सिलाश्च साधवो भवन्ति । प्रशंसायामङ्गना त्वन्यत्राङ्गवतीत्यन्ये ।। ९४४ ।।

**बाल०**—प्रज्ञा । तदस्यास्त्यस्मिन् वेत्यर्थे प्रज्ञाश्रद्धार्चावृत्तिभ्यो णरामः स्यात् । ण इदरामशेषः प्रज्ञास्यास्त्यस्मिन् वेति प्राज्ञः । एवं श्राद्धः आर्चः वार्त इति ।। ९४५ ।।

**बाल०**—तप । तदस्यास्त्यस्मिन् वेत्यर्थे विनिन्भ्यां सह तपःसहस्रयोर्यथासंख्यं तपस्विसहस्त्रिणौ साधू भवतः । एवं केशवणेन सह तयोस्तापससाहस्रौच साधू भवतः । परत्रकेशवणान्तत्वाल्लक्ष्म्यामीप् स्यादिति स्वाभिप्रेतमाह केशवेति ।। ९४६ ।।

**बाल०**—ज्योत । पूर्वोक्तेऽर्थे ज्योत्स्नादेः केशवणः स्यात् । ज्योत्स्नास्यास्त्यस्मिन् वेति ज्यौत्स्नः । तमिस्रास्यास्त्यस्मिन् वेति तामिस्रः द्वयोरपि विशेष्यं पक्ष इति । एवं यथासम्भवं लक्ष्मवान् ज्योत्स्नावानित्यादि ।। ९४७ ।।

**९४९. स्मरहर इनश्च देशे ।**

सिकता देशः, सिकतिलः सैकतः ।

**९५०. मतुश्च ।**

सिकतावान् । एवं शर्करादि ।

**९५१. दन्तुर उन्नतदन्ते ।**

साधुः ।

**९५२. उषर-शुशिर-पुष्कर-मधुराणि साधूनि, मुखरादयश्च ।**

साधवः ।

---

**अमृता०**—९४९. स्मरेति । उक्तार्थे सिकता-शर्कराभ्यां केशवणस्य स्मरहरश्च इलश्च स्यात् देशे वाच्ये । स्मरहरपक्षे सिकता, इलपक्षे सिकतिलः, चकारात् पूर्वविहितः केशवणश्च ।

**अमृता०**—९५०. मतुश्चेति । सिकता-शर्कराभ्यां पूर्वोक्तार्थे मतुश्च भवति । सर्वत्र विकल्पानुवृत्तिरिह च मतौ प्राप्तेऽपि पुनश्च विधानं स्पष्टार्थं, परत्र मतुप्राप्तिज्ञापकार्थञ्च ।

**अमृता०**—९५१. तन्तुर इति । तदस्यास्मिन् वेत्यर्थे उन्नत दन्ते वाच्ये उर प्रत्ययेन सह दन्तस्य दन्तुरः साधुः स्यात् ।

**अमृता०**—९५२. उषरेति । पूर्वोक्तार्थे रप्रत्यरेन साकं उषादीनां उषर-शुषिर-पुष्कर-मधुराणि साधूनि भवन्ति । उक्तार्थे रप्रत्ययेन सह मुखादीनां मुखरादयश्च साधवो भवन्ति । अत्रादिपदेन नखर-पाण्डुर-पांशुर-बन्धुर-नगर-कुञ्जर सिन्दुरेत्यादयो ग्राह्याः ।

---

**बाल०**—सिक । पूर्वोक्तेऽर्थे शिकताशर्कराभ्याञ्च केशवणः स्यात् । सिकतास्या अस्त्यस्यां वेति सैकतीति । शर्करास्यास्त्यस्मिन् वेति शार्कर इति ॥ ९४८ ॥

**बाल०**—स्मर । तदस्यास्त्यस्मिन् वेत्यर्थे सिकताशर्कराभ्यां केशवणस्य स्मरहरः इलश्च स्यात् देशे वाच्ये । वेत्यस्य सर्वत्रानुवर्तनात् यत्र ये विहितास्तेषां सर्वेषां विकल्पत्वमनुसन्धेयं । तेनच पक्षे केशवणस्य स्थितत्वात् सैकतश्चेति ॥ ९४९ ॥

**बाल०**—मतु । पूर्वोक्तेऽर्थे सिकताशर्कराभ्यां मतुश्च स्यात् । सामान्यतो मतौ प्राप्ते यत् पुनरिदं तत् स्पष्टार्थं परत्र मतुप्राप्तेर्ज्ञापकञ्च । एवमिति शर्करेति । स्मरहरपक्षे आदिपदात् शर्करिलः सार्करः शर्करावानिति ॥ ९५० ॥

**बाल०**—दन्तु । तदस्यास्त्यस्मिन् वेत्यर्थे उन्नता दन्ता यस्य तस्मिन् वाच्ये उरप्रत्ययेन सह दन्तस्य दन्तुरः साधुः स्यात् । अन्यत्र दन्तवान् ॥ ९५१ ॥

**बाल०**—उष । तदस्यास्त्यस्मिन् वेत्यर्थे रप्रत्ययेन साकं उषादीनां उषरशुषिर पुष्कर मधुराणि साधूनि स्युः । मुख तदस्यास्त्यस्मिन् वेत्यर्थे रप्रत्ययेन सह मुखादीनां

**९५३. द्युम-द्रुमौ ।**

साधू ।

**९५४. केशादे र्वो वा ।**

केशवः मणिवः हिरण्यवः इष्टकावः । केशिक-केशि-केशवन्तश्च प्रयुज्यन्ते ।

**९५५. काण्डीराण्डीरौ ।**

साधू ।

**९५६. रजः कृष्यासुतिपरिषदादिभ्यो वलः ।**

रजस्वला ।

---

अमृता०—९५३. द्युमेति । पूर्वोक्तार्थे मरामेण साकं द्यु-द्रु शब्दयो द्युम-द्रुमौ साधू भवतः । उभौ च वृक्षवाचकौ । संज्ञाशब्देऽत्र मतु र्नेष्यते ।

अमृता०—९५४. केशादेरिति । तदस्यास्त्यस्मिन् वेत्यर्थे केशादेरुत्तरे व प्रत्ययो वा स्यात् । केशोऽस्याति अस्मिन् वा केशवः । वा करणात् ठ-इनिश्चे ष्यत इत्याह—केशिक-केशि-केशवन्तश्चेति । मतु स्तु पूर्वसिद्धः । मणिवो नागविशेषः, हिरण्यवो मणि विशेषः, इष्टकावो हर्म्यः । एभ्यश्च संज्ञाशब्देभ्यः ठादयो नेष्यन्ते । एवं अर्णो जलं, अर्णवो जलनिधिः, निपातात् सलोपः । तथा गाण्डीवः पार्थधनुः ।

अमृता०—९५५. काण्डीरेति । पूर्वोक्तार्थे ईर प्रत्ययेन काण्ड-अण्डयोः काण्डीराण्डीरौ साधू भवतः ।

अमृता०—९५६. रज इति । प्रोक्तार्थे रजः कृषि आसुति परिषदादिभ्यो वल प्रत्ययः स्यात् । रजस्वला नारी नदीवा । एवं कृषीवलादयः ।

---

मुखरादयश्च साधवो भवन्ति । मुखरः नखरः पांशुरः पाण्डुरः बन्धुरः खरः नगरः सिन्दूरः कुञ्जर इत्यादि ॥ ९५२ ॥

बाल०—द्युम । पूर्वोक्तेऽर्थे मरामेण सजूः द्युद्र्वोर्द्युमद्रुमौ साधू भवतः । द्यौरस्यास्त्यस्मिन् वेति पूर्वस्य विष्णुपदवत्त्वात् दिव उर्विष्णुपदान्त इति द्युमः । द्रुर्वृक्षावयवः सोऽस्यास्त्यस्मिन् वेति द्रुमः ॥ ९५३ ॥

बाल०—केश । तदस्यास्त्यस्मिन् वेत्यर्थे केशादेरुत्तरो वो वा स्यात् । केशादयश्चत्वार इत्युदाहरणेन स्पष्टयति केशव इति । केशशब्दात् ठमतु चास्मिन्नर्थे भवत इत्याह केशिकेति । प्रयुज्यन्त इति प्राचीनैरिति शेषः । अस्मादिनिश्चेत्येके तेन केशीतिच । एतदुपलक्षणं मण्यादेरपि ठादयो भवन्तीति ॥ ९५४ ॥

बाल०—काण्डी । तदस्यास्त्यस्मिन् वेति ईश्वरप्रत्ययेन काण्डाण्डयोः काण्डीराण्डीरौ साधू भवतः ॥ ९५५ ॥

## ९५७. त्रिविक्रमश्च ।

**कृषीवलः आसुतीवलः परिषद्वलः । आदिना भ्रातृवलः पुत्रवलः मैत्रीवलः यात्रावलः ।**

## ९५८. दन्तावल-शिखावलौ हस्ति-मयूरौ ।

## ९५९. ज्योत्स्ना तमिस्रा शृङ्गिणोस्विन्नुर्जस्वल–गोमिन मलिन–मलीन-मलीमसाः साधवः ।

---

अमृता०—९५७. त्रिविक्रमश्चेति । वल प्रत्यये परे वामनान्तस्य क्वचित् त्रिविक्रमश्च भवति । कृषिरस्यास्तीति कृषीवलो वैश्यः, परिषद्वलो राजा । आदि शब्दोपादानफलं दर्शयति—आदिना भ्रातृवल इत्यादि ।

अमृता०—९५८. दन्तेति । पूर्वोक्तार्थे वलप्रत्ययेन सह दन्त-शिखयोः दन्तावल-शिखावलौ साधू भवन्तौ हस्ति-मयूर वाचकौ भवतः । अत एवान्यप्रत्यया एभ्यो नेष्यन्ते ।

अमृता०—९५९. ज्योत्स्नेति । पूर्वोक्त मत्वथ चन्द्रकिरणादि वाच्ये नप्रत्ययादिभिः साकं ज्योतिषादीनां यथास्वं ज्योत्स्नादयो निपात्यन्ते । ज्योति रस्या अस्ति अस्यां वेति रप्रत्यये सति निपातात् ज्योतिष इरामहरः, ततो निमित्तापायात् षत्वापायः—ज्योत्स्ना कौमुदी । तमोऽस्या अस्त्यस्यां वेति रप्रत्यये निपातादिरामागमः षत्वाभावश्च तमिस्रा रजनी । लक्ष्मीत्वमतन्त्रं,—तमिस्रं नभः । शृङ्गमस्यास्त्यस्मिन् वेति इनप्रत्ययः—शृङ्गिणो गवादिः । उर्ज्ज स्तेजोऽस्यस्त्यिन् वेति निपातात् विन् वलो—उर्ज्जस्वी उर्ज्जस्वलश्च । गोशब्दाद्निपातेन मिन्—गोमी गोमानित्यर्थः । उर्ज्जस्विन् गोमिन् इत्युभयत्र सूत्रे नरामान्तत्वबोधनाय न लोपो न कृतः । मल शब्दान्निपातनेन इन ईन ईमसश्च—मलिनः मलीनः मलीमसः पठः ।

---

बाल०—रजः पूर्वोक्तेऽर्थे रजःकृष्यासूतिपरिषदादिभ्यो वलः स्यात् । रजोऽस्या अस्त्यस्यां वेति रजस्वला नारी नदी वा । अन्यत्र रजस्वान् वातः ॥ ९५६ ॥

बाल०—त्रिवि । वने परे वामनान्तानां त्रिविक्रमश्च स्यात् । शिष्टाचाराद्वामनान्तानामन्तस्य त्रिविक्रम इति ग्रन्थकृतामभिप्रायो लक्ष्यते । यदि रजआदीनामपि त्रिविक्रमः स्यात्तदेदं पृथक् करणमनर्थकं नृसिंहवल इति कृतेऽपि प्रयोगसिद्धः । वलो भवति त्रिविक्रमश्चेति सूचनार्थं चकार उपन्यस्तः कृषिरस्यास्त्यस्मिन् वेति कृषीवल इत्यादि । आदिशब्दोपादानेन भ्रातृवलप्रभृतयोऽपि भवन्तीत्याह आदीति ॥ ९५७ ॥

बाल०—दन्ता । तदस्यास्त्यस्मिन् वेति वलेन सह दन्तशिखयोर्दन्तावलशिखावलौ हस्तिमयूरसंज्ञकौ साधू भवतः । किम्वा नेदं सूत्रं, किन्तु पूर्वस्यैव वाच्यनिरूपणपूर्वकमुदाहरणं पूर्वत्रादिग्रहणादनयोः संज्ञात्वाच्च ॥ ९५८ ॥

## ९६०. अरामादिनि-ठरामौ, व्रीह्यादेश्च ।

दण्डी दण्डिकः ।

## ९६१. मतुश्चात्र परत्र च ।

दण्डवान् ।

## ९६२. एकाक्षरात् कृतो जातेः सप्तम्याञ्चेनि-ठौ नतु ।

स्ववान् कारकवान् ब्राह्मणवान् । सप्तम्यां,—कृष्णोऽत्रास्ति कृष्णवान्

---

अमृता०—९६०. अरामादिति । पूर्वोक्तार्थे अरामान्तशब्दात् इनि-ठरामौ भवतः । तथा व्रीह्यादेश्चोत्तरे तौ भवतः ।

अमृता०—९६१. मतुरिति । अत्र इनि-ठराम विषये परत्र मत्वर्थीय प्रत्यये च विषये मतुश्च भवति । पूर्वं कतिचित् सूत्रे मत्वपवादाः प्रत्यया उक्ताः, अत इह विभाषया प्राप्त्यर्थं वचनम् । ततएवारामान्तात् व्रीह्यादेश्च प्रत्ययत्रयं दर्शितम् ।

अमृता०—९६२. एकेति । अपवादविधिरयम् । अरामान्तेषु मध्ये एकाक्षरात्, कृदन्तात् तथा जाति वाचकाच्च शब्दात् तथा सप्तम्यर्थे च इनि-ठौ न भवतः किन्तु

---

बाल०—ज्योत् । तदस्यास्त्यस्मिन् वेत्यर्थे इन्दुकिरणादिवाच्ये न प्रत्ययादिभिः सह ज्योतिषादीनां यथास्वं ज्योत्स्नादयः साधवो भवन्ति । ज्योतिरस्या अस्त्यस्यां वेति निपातान्नो ज्योतिष इरामहरश्च निमित्तापायात् षत्वापाये ज्योत्स्ना चन्द्रिकेति । तमोऽस्या अस्तस्यां वेति निपातात्, रस्तमसोऽस इश्च तमिस्रा रात्रिरिति कृष्णादावित्यनेनाभ्यामाप् । शृङ्गमस्यास्त्यस्मिन् वेति निपातादिनः शृङ्गिणो गवादिः । ऊर्जस्तेजोऽस्यास्त्यस्मिन् वेति निपाताद्विन्वलौ ऊर्जसी ऊर्जस्वलश्च बलवानिति । गौरस्यास्त्यस्मिन् वेति निपातादिनो मुमागमश्च गोमिन इति गोस्वामी । मलमस्यास्त्यस्मिन् वेति निपातादिन ईन ईमसैः सह मलस्य क्रमेण मलिन इत्यादित्रयं । मतोरौत्सर्गिकत्वात् यथायोग्यं मुखवान् ज्योतिष्मानित्यादयो ज्ञेयाः ॥ ९५९ ॥

बाल०—अरा । पूर्वोक्तेऽर्थेऽरामान्तादिनिठरामौ भवतः । व्रीह्या । पूर्वोक्तेऽर्थे व्रीह्यादेश्चेनिठरामौ भवतः । दण्डमस्यास्त्यस्मिन् वेति दण्डी दण्डिकश्चेति ॥ ९६० ॥

बाल०—मतु । अत्र विषये परत्र विषयेच मतुरपि भवति । विषयः कार्यज्ञापकस्तेन अरामाद्व्रीह्यादेश्च मतुः स्यादित्यर्थः । दण्डवानिति पूर्ववत् ॥ ९६१ ॥

बाल०—एका । पूर्वोक्तेऽर्थे एकाक्षरात् कृतः कृदन्तात् जातेर्जातिवाचकात् सप्तमस्याञ्चेति ठरामौ नतु भवतः । अरामान्तात् प्राप्तेर्निषेधोऽयं । स्वमस्यास्त्यस्मिन् वेति स्ववान् । एवमवान् कवान् खवानित्यादि । कारकमस्यास्त्यस्मिन् वेति कारकवान् । एवं कृतवान् क्रियमाणवानित्यादि । ब्राह्मणोऽस्यास्त्यस्मिन् वेति ब्राह्मणवान् । एवं कृतवान् क्रियमाणवानित्यादि । ब्राह्मणोऽस्यास्त्यस्मिन् वेति ब्राह्मणवान् । एवं क्षत्रीयवान्

देशः। व्यभिचरति च,—कार्यी हार्यी तण्डुली तण्डुलिकः। व्रीह्यादेः,— व्रीही व्रीहिकः व्रीहिमान्, मायी मायिकः मायावान्।

**९६३. शिखादिभ्य इनिः।**

शिखी शिखावान्। एवं माली मेखली सङ्गी पताकी कर्मी चर्मी।

**९६४. नावादिभ्य ष्ठरामः।**

नाविकः नौमान् यवखदिकः यवखदावान्।

---

मतुरेव। क्रमेणोदाहरति—स्ववानित्यादि। कृतिवान् क्रियावानित्यादयश्च कृत उदाहार्याः। तथा क्षत्रियवान् वैश्यवानित्यादयश्च जातेः। अनित्योऽयं प्रतिषेधविधिरिति प्राह— व्यभिचरति चेति। व्रीह्यादे र्गणो गणपाठे द्रष्टव्यः।

अमृता०—९६३. शिखेति। पूर्वोक्तार्थे शिखादिभ्य इनिः स्यात्, मतुश्च। एवमित्यनेनास्य आकृतिगणत्वं सूचितम्।

अमृता०—९६४. नावादिभ्य इति। पूर्वोक्तार्थे नावादिभ्य उत्तरे ठरामः स्यात् तथा मतुश्च। नौरस्यास्मिन् वास्तीति नाविकः, नौमानिति च। एवं यवखदिक इत्यादि।

---

वैश्यवान् क्षुद्रवानित्यादि। सप्तम्या मित्युदाह्रियत इति शेषः। अस्मिन्नित्यनेन सप्तम्यां लब्धेऽपि यत् पुनः सप्तम्याञ्चेति कृतं तत्तु विशेषं ज्ञापयति तस्मादेव एकाक्षरात् कृतो जातेरन्येभ्यः सप्तम्यामिनिठौ न भवतस्तस्येत्यर्थेतु तावपि भवतः तेन कृष्णोऽत्रास्तीति वाक्यमुपक्षिप्तं। कृष्णोऽस्यास्तीत्यर्थेतु कृष्णी कृष्णिकः कृष्णवानिति। व्यभिचरति चेति प्रतिषेध इति शेषः। तेन कार्यं कृतं तदस्यास्त्यस्मिन् वेति कार्यी हार्यीति। तण्डुलमस्त्यस्मिन्निति तण्डुली तण्डुलिक इत्यादि। व्रीह्यादेरिति रूपाणि दर्श्यन्त इति पूरयितव्यं। व्रीहिरस्यास्त्यस्मिन् वेति व्रीहीत्यादिद्वयं। मतुश्चात्र परत्र चेत्यनेन व्रीहिमानित्यपि। एवं मायीत्यादित्रयं। शिरः शब्दोऽप्यत्र कैश्चित् पठ्यते॥ ९६२॥

बाल०—शिखा। पूर्वोक्तेऽर्थे शिखादिभ्य इनिः स्यात्। शिखास्यास्त्यस्मिन् वेति शिखीति मतुश्चात्रेत्यनेन शिखावानित्यपि। अतिदेशेन गणं दर्शयति एवमिति। चर्मीत्यस्मादित्यादीति योज्यमाकृतिगणत्वात्॥ ९६३॥

बाल०—नावा। पूर्वोक्तेऽर्थे नावादिभ्यष्ठरामो भवति। नौरस्यास्त्यस्मिन् वेति नाविकः पूर्ववन्नौमानित्यपि। एवं यवखदिक इत्यादिद्वयं। यथोक्तमन्यैश्च। व्रीहिशिरोमायाभ्यः शालेरिणिकौ भवतः। संज्ञा माला वीणा शिखा इष्टका मेखला घृणा शाखा। केका जरा पताका बड़वा दंष्ट्रा गदा मानोत्साहाः। आयास व्रत मुकुलोद्दाम दाम निचुल परिणाहाः। स्तवकोद्य मालयान करालारोहाः फलोपयापोच। अवरोह व्यायामायासाद्याः कर्म चर्माद्याः। इन्नेवंतेभ्यः स्यान्मतुश्च सर्वेभ्य एवेष्टः। इक एव नौ कुमारी करण सभा यवखदादिभ्यः॥ ९६४॥

## ९६५. तुन्दादेरिलस्तौ च ।

तुन्दिलः तुन्दिकः तुन्दी तुन्दवान्, उदरिलः उदरिकः उदरी उदरवान् । एवं पिचिण्ड यव । व्रीहेरर्थग्रहणं तुन्दादिषु, शालिलः शालिकः शाली ।

## ९६६. स्वाङ्गाद्वृद्धौ च ।

स्थूलकर्णः । कर्णिलः कर्णिकः कर्णी ।

## ९६७. एक-गो पूर्वान्माधव ठः, निष्कपूर्वशत सहस्राभ्याञ्च ।

---

**अमृता०**—९६५. तुन्दादेरिति । पूर्वोक्तार्थे तुन्द प्रभृतेरुत्तरे इल प्रत्ययः स्यात्, तौ इनि-ठौ च स्याताम्, तथा मतुप्च भवति । तुन्दं (उदरं) अस्यास्त्यस्मिन् वेति तुन्दिलादि चतुष्टयम् । तुन्द उदर पिचण्ड यवव्रीहीति तुन्दादिर्गणः प्राचीनैः पठ्यते, तत्र व्रीहादे रिनि-ठौ प्रागेव विहितौ, पुनरिह तु कथं ग्रहणमिति शङ्कायां समाधन्ते—व्रीहेरर्थग्रहणमिति । अत्र व्रीहि शब्देन तत् पर्यायवाची शब्दएव गृह्यते नतु साक्षात् व्रीहि स्वरूपमिति भावः, तेन शालिल इत्यादयोऽपि सिध्यन्तीत्यर्थः ।

**अमृता०**—९६६. स्वाङ्गादिति । उक्तार्थे वृद्धयुपाधिकात् स्वाङ्गवाचिनश्च इलादयो भवन्ति । कर्णिलादेरथमाह—स्थूलकर्ण इति, पीताम्बर समासः । मतुश्च कर्णवानिति च ।

**अमृता०**—९६७. एकेति । पूर्वोक्तार्थे एकपूर्वात् गो पूर्वाच्च शब्दात् माधवठः स्यात् तथा निष्कपूर्वाभ्यां शत-सहस्राभ्याञ्च माधवठः स्यात् । एकादशीति—एकञ्च तत्

---

**बाल०**—तुन्दा । पूर्वोक्तेऽर्थे तुन्दादेरुत्तर इलः, तौ इनिठौच भवन्ति । तुन्दमस्यास्त्यस्मिन् वेति तुन्दिल इत्यादि । एवमिति पिचिण्डिकः पिचिण्डी पिचिण्डवान् । यविलः यविकः यवी यववान् । वर्ग्ययरामादिरत्र क्वचित् पुस्तके दृश्यते सोऽपि नासङ्गतः, शीघ्रार्थजवशब्दस्य सम्भवात् । व्रीहिपर्यायस्य तुन्दादौ ग्रहणमिति सर्वैर्मन्यते इत्याह व्रीहेरिति । अतएव शाल्यस्यास्त्यस्मिन् वेति शालिल इत्यादि । एवं मासमुद्गयवेत्युक्तदिशा मासादीनामपि व्रीह्यर्थत्वात् मासिलः मुद्गिल इत्यादिच ।। ९६५ ।।

**बाल०**—स्वाङ्गा । वृद्धावर्थे तदस्यास्त्यस्मिन् वेत्यर्थेच स्वाङ्गवाचकादिल-इनिठौ च भवन्ति । मतुश्चात्रेत्यनेनतु मतुश्च सर्वत्र । स्थूलकर्ण इति कर्णिल इत्यादि । तथा कर्णोऽस्यास्त्यस्मिन् वेति कर्णिल इत्यादि ।। ९६६ ।।

**बाल०**—एक । तदस्यास्त्यस्मिन् वेत्यर्थे एकः गौश्चेति पूर्वे यस्य तस्मान्नाम्नो माधवठो भवति । निष्क । पूर्वोक्तेऽर्थे निष्क इति पूर्वो ययोस्तथाभूतशतसहस्राभ्याञ्च माधवठः स्यात् । एकशतमस्यास्त्यस्मिन् वेति ऐकशतिक इति । एवं गवां सहस्रमस्येत्यादि गौसहस्रिक इति । नन्वेकगोपूर्वाद्यदि माधवठ एव तर्हि कथमेकादशी, इत्यत्रसिद्धान्तमाह एकादशीति । एकञ्च तत् दश चेति श्यामरामनिष्पन्नात् केशवारामे ईपिच कृते एकादशी-

ऐकशतिकः गौसहस्रिकः । एकादशीति श्यामरामाद्बिवेष्यते । तथा नैष्कशतिकः नैष्कसहस्रिकः ।

**९६८. रूप्यो दीनारे प्रशस्यरूपे च ।**

साधुः ।

**९६९. हिम्यादयश्च साधवः ।**

हिम्यः गुण्यः पद्मम् ।

**९७०. अस्-माया-मेघा-स्रग्भ्यो विनिः ।**

---

दश चेति श्यामराम निष्पन्नात् केशवारामे ईपि च एकादशीति प्राचीनैरिष्यते, किन्तु ऐकदशिक इत्यादयः पीताम्बर वाक्ये हि भवन्तीत्याशयः ।

**अमृता०**—९६८. रूप्य इति । दीनारो हेमपरिमाणविशेषः, हेममुद्रा वा, तस्मिन् वाच्ये तथा प्रशस्तरूपे च वाच्ये रूपस्य रूप्यः साधुर्भवति ।

**अमृता०**—९६९. हिम्येति । पूर्वोक्तार्थे यरामेण सह हिमादीनां हिम्यादयः साधवो भवन्ति । हिममस्यास्त्यमिन् वेति म्यिः पर्वत इत्यादिः ।

**अमृता०**—९७०. असिति । पूर्वोक्तार्थे असन्तात् माया-मेघा-स्रग्भ्यश्च विनि प्रत्ययः स्यात्, इरामइत् । पयस्वीत्यत्र सरामस्य विष्णुसर्गत्वं निषेधयितुं मत्वर्थीयानां यादित्वमतिदिशति—तसाभ्यामिति । तेनात्र विनिप्रत्ययस्य यादित्त्वातिदेशेन पूर्वस्य विष्णुपदक्त्वं

---

तीष्यते । किंवा श्यामरामसिद्धादेका दशास्य सन्त्यस्मिन् वेति इनि कृते एकादशीत्येवेष्यते । एकेनाधिका दश सन्त्यस्यास्मिन् वेति एकादशिक इत्यन्ये । निष्कपूर्वस्योदाहरणमाह तथेति । निष्कशतमस्यास्त्यस्मिन् वेति नैष्कशतिक । एवं नैष्कसहस्रिक इति ॥ ९६७ ॥

**बाल०**—रूप्यो । तदस्यास्त्यस्मिन् वेत्यर्थे दीनारे प्रशस्तरूपेच वाच्ये यरामेण रूपस्य रूप्यः साधुः स्यात् । दीनारो रोपकैरष्टाविंशत्या परिकीर्तितः । सुवर्णसप्ततितमो भागो रोपक उच्यते । पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥ ९६८ ॥

**बाल०**—हिम्या । तदस्यास्त्यस्मिन् वेत्यर्थे घरामेण साकं हिमादीनां हिमादयः साधवो भवन्ति । हिममस्यास्त्यस्मिन् वेति हिम्य इत्यादि । पूर्ववत् रूपवान् हिमवानित्यादिच ॥ ९६९ ॥

**बाल०**—अस् । पूर्वोक्तेऽर्थे असित्यसन्तात् मायामेधास्रग्भ्यश्च विनिः स्यात् । मत्वर्थीयानां यादिवत्त्वमतिदिशति तसेति । तरामसरामाभ्यामुत्तरस्था मत्वर्थीया यादिवद्भवन्तीति यादिवत्त्वान्मत्वर्थीये परे पूर्वस्य विष्णुपदवत्त्वं स्वादितद्धितयोरयसर्वेश्वराद्योरित्यनेन पूर्वस्य विष्णुपदवत्त्वं न स्यात् । अतएव पयोऽस्यास्त्यस्मिन् वेति मायावी । एवं मेधावीति । ननु यदि मत्वर्थीये पूर्वस्य विष्णुपदवत्त्वाभावस्तर्हि स्रग्वीत्यत्र

तसाभ्यां मत्वर्थीया यादिवत्। पयस्वी मायावी मेधावी स्रग्वी। सरस्वान् सरस्वतीत्येव तु स्यात्, विनेरनभिधानात्।

**९७१. अर्श आदेरराम:।**

अर्शस: तुन्द: काण: खञ्ज: पलित: लवण: गोधूम:।

**९७२. आमयावी रोगिणि।**

साधु:।

**९७३. शृङ्गारक:-वृन्दारक:-फलिन-र्वाहिण-हृदयालव:।**

**इत्येते साधव:। फली वर्ही। हृदयिको हृदयीहृदयवानित्यपि दृश्यते।**

---

स्वादितद्धितयोरयसर्वेश्वराद्योरित्यनेन विष्णुपदवत्वाभावात् सररामयोरिति नहि विष्णुसर्ग इत्याशय:। स्रग्वीत्यत्र असवर्ग वैष्णवपरत्वादेव कस्य ग:, ननु विष्णुपदान्त निमित्तत्वात्। सरस्वानित्यत्र तु मतुरेव स्यात्, विनेरनभिधानात् अकथनात् प्राचीनैरिति शेष:।

**अमृता०**—९७१. अर्श इति। अर्श: प्रभृतेरुत्तरे अराम: स्यात्। अर्शो रोगविशेष:, सोऽस्यास्त्यस्मिन् वेति अर्शस इत्यादि प्रयोगा:।

**अमृता०**—९७२. आमयावीति। उक्तार्थे रोगिसामान्य वाच्ये आविन् प्रत्ययेन सह आमयस्य आमयावी साधुर्भवति।

**अमृता०**—९७३. शृङ्गारकेति। पूर्वोक्तार्थे आरक प्रत्ययेन सह शृङ्ग-वृन्दयो: शृङ्गारक-वृन्दारकौ साधू भवत:, इन् प्रत्ययेन फल-वर्हयो: फलिन-र्वाहिणौ साधू स्याताम् तथा आलु प्रत्ययेन हृदयस्य हृदयालु: साधुर्भवति। व्याभिचारात् एभ्य इन् इष्ट: मतुश्च भवतीत्याह—फलीत्यादिभि:।

---

कथं चवर्गस्य कवर्ग:, सत्यं नायं दोष:, चवर्गस्य कवर्गो विष्णुपदान्तेऽत्र जस्य गो स्यात्, किन्तु वैष्णवे त्वसवर्गे इत्यनेनाविष्णुपदान्ते सवर्गातिरिक्ते वैष्णवे तस्य ग इति। यद्यप्यसित्यनेनासन्ताद्विनिर्विहितस्तथापि सरसो मतुप्रत्ययेन पुरुषोत्तमलक्ष्म्यो: सरस्वान् सरस्वतीत्येवतु स्यात्, शिष्टैर्विनेरनभिधानादित्याह सरस्वानिति ॥ ९७० ॥

**बाल०**—अर्श। पूर्वोक्तेऽर्थे अर्श इति आदिर्यस्य तस्मादराम: स्यात्। अर्शोऽस्यास्त्यस्मिन् वेति अर्शस इत्यादि ॥ ९७१ ॥

**बाल०**—आम। तदस्यास्त्यस्मिन् वेत्यर्थे रोगिणि वाच्ये आविना सह आमयस्य आमयावी साधु: स्यात् ॥ ९७२ ॥

**बाल०**—शृङ्गा। तदस्यास्त्यस्मिन् वेत्यर्थे आरकेनालुभि: सह क्रमेण शृङ्गवृन्दफलवर्हि हृदयानां शृङ्गारकादय: साधवो भवन्ति। वृत्तिमाह इत्येत इति। व्यभिचारादस्य यथासम्भवं फलादिभ्य इनिष्ठो मतुश्च भवतीत्याह फल्यादिना दृश्यत इत्यन्तेन ॥ ९७३ ॥

## ६७४. शीतालु-तिग्मालु-वलूलु-हिमलेव स्तत्तदसहे ।

साधवः । हिमेलुरिति सन्ध्यक्षरमध्यः ।

## ६७५. वातूलो वातासह-वातसङ्घयोः ।

साधुः ।

## ६७६. ऊर्णायुर्मेषकम्बले ।

उरामान्तः साधुः ।

---

**अमृता०**—६७४. शीतालिविति । पूर्वोक्तार्थे शीताद्यसने वाच्ये आलु ऊलु एलु प्रत्ययैः सह शीतादीनां शीतालु प्रभृतय श्चत्वारः साधवो भवन्ति । असह्यः शीतोऽस्त्यस्मिन् शीतालुः हिमालयः। एवमुष्णालुरिति च बोध्यम् । बलमसह्यमस्यास्मिन् वास्तीति वलूलुः । असह्यं हिममस्त्यस्मिन् हिमेलु रित्यत्र आलु प्रत्ययान्तप्रतीति निरासार्थमास—सन्ध्यक्षरमध्य इति ।

**अमृता०**—६७५. वातूल इति । मत्वर्थे वातासहे वाच्ये वायुसङ्घाते च वाच्ये वातस्य वातूल इति निपात्यते ।

**अमृता०**—६७६. उर्णायुरिति । मत्वर्थे मेषकम्बले वाच्ये उरामेण साकं ऊर्णाया ऊर्णायुरिति साधुः स्यात् ।

---

**बाल०**—शीता । तदस्यास्त्यस्मिन् वेत्यर्थे तत्तदसहे वाच्ये आलु ऊलु एलुभिः सह शीततिग्मबलहिम इत्येतेषां शीतालुप्रभृतयः साधवः स्युः । शीतमस्यास्त्यस्मिन् वेति तन्न सहते शीतालुरिति । यस्य विद्यमानत्वं नास्ति, तस्यासहनं न सम्भवतीति शीतस्य विद्यमानपूर्वकमसहनं । एवमुत्तरत्रापि । किञ्च, बलमस्यास्त्यस्मिन् वेति त्रिविक्रमो रामाद्यूलुना बलस्य वलूलुरिति । हिमेलुरित्यत्र इलुप्रत्ययाशङ्कानिरासार्थमाह सन्ध्यक्षरेति । किंवा अत्र लैलुप्रत्ययः, किन्तु लिपिकरप्रमादादालुप्रत्ययान्तः। हिमालुरित्यत्र हिमेलुरित्यभूदित्याशङ्का स्यात्, तन्निरासार्थं सन्ध्यक्षरेत्युक्तम् ॥ ६७४ ॥

**बाल०**—वातू । तदस्यास्त्यस्मिन् वेत्यर्थे वातस्यासहे वातस्य संघेच वाच्ये ऊलेन सह वातस्य वातूलः साधुः स्यात् । अत्रापि वातस्य विद्यमानत्वपूर्वकावसहनसङ्घौ ज्ञेयौ पूर्ववदसङ्गतेः ॥ ६७५ ॥

**बाल०**—उर्णा । तदस्यास्त्यस्मिन् वेत्यर्थे मेषकम्बले वाच्ये उरामेण साकमुर्णाया उर्णायूः साधुः स्यात् । वृत्तावुरामान्त इत्यनेन पूर्वत्र युगागमः सूचितोऽन्यथा प्रयोगसिद्धेः। एवं न कृत्वा युप्रत्ययान्त इति यदि कृतं स्यात्तदा अइद्वयस्येत्यनेनारामे हरे सति उर्ण्युरित्येव स्यात् ॥ ६७६ ॥

**९७७. वाग्ग्मी पण्डिते ।**

द्विगकारोऽयं साधुः ।

**९७८. वाचाल-वाचाटौ निन्द्य बहुभाषिणि ।**

साधू ।

**९७९. स्वामीश्वरे ।**

साधुः ।

**९८०. वातक्यति-सारकि-पिशाचकिनः ।**

साधवः ।

**९८१. रामकृष्णादुपतापाद्गर्ह्यादप्यरामात् प्राणिस्थादिनि नं तु मतुः ।**

---

अमृता०—९७७. वाग्ग्मीति । मत्वर्थे पण्डिते वाच्ये ग्मिन् प्रत्ययेन वाचो वाग्ग्मी साधुर्भवति । ग्मिन् प्रत्ययान्तं स्फुटयितुं वृत्तिमाह—द्विगकारोऽयमिति ।

अमृता०—९७८. वाचलेति । मत्वर्थे कुत्सित बहुभाषिणि वाच्ये वाच आल आट प्रत्ययाभ्यां वाचाल-वाचाटौ साधू भवतः ।

अमृता०—९७९. स्वामीति । मत्वर्थे ईश्वरे वाच्ये स्वशब्दस्य आमिन् प्रत्ययेन सह स्वामीति साधुः स्यात् ।

अमृता०—९८०. वातेति । मत्वर्थे इन् प्रत्ययेन करामागमेन च साकं वात्-सार-पिशाचानां वातक्यति-सारकि-पिशाचकिनः साधवो भवन्ति ।

अमृता०—९८१. रामेति । पूर्वोक्तार्थे प्राणिस्थादरामान्तात् रामकृष्णसमासात्

---

बाल०—वाग्ग्मी । तदस्यास्त्यस्मिन् वेत्यर्थे पण्डिते वाच्ये ग्मिन्प्रत्ययेन सह वाचो वाग्ग्मी साधुः स्यात् । ग्मिन्नन्तं स्फुटयितुं वृत्तिमाह द्विगेति । अन्यथा द्विगकारो न घटते । परत्र निन्द्यबहुभाषिणीत्युक्तत्वादत्र स्तुत्यभाषित्वं गम्यते । तदधि विद्यमानपूर्वकमेवेति तदस्येत्यादिसामान्यार्थस्य न व्यभिचारः ॥ ९७७ ॥

बाल०—वाचा । तदस्यास्त्यस्मिन् वेत्यर्थे निन्द्यबहुभाषिणि वाच्ये आलाटाभ्यां साकं वाचो वाचालवाचाटौ साधू भवतः । अत्रापि कुत्सितभाषित्वं विद्यमानपूर्वकमेवेति पूर्ववत् सामान्यार्थस्य न व्यभिचारः । एवमुत्तरत्रापि कल्प्यं ॥ ९७८ ॥

बाल०—स्वामी । तदस्यास्त्यस्मिन् वेत्यर्थे ईश्वरे वाच्ये आमिना सह स्वस्य स्वामी साधुः स्यात् ॥ ९७९ ॥

बाल०—वात । तदस्यास्त्यस्मिन् वेत्यर्थे इना करामागमेनच सह वातातिसार-पिशाचानां वातक्यतिसारकिपिशाचकिनः साधवो भवन्ति ॥ ९८० ॥

कटकवलयी कुष्ठी ककुदावर्ती । प्राणिस्थात् किं—पुष्पफलवान् ।

**९८२. प्राण्यङ्गान्नेष्यते ।**

पाणिपादवती । अरामात् किम्—मूर्च्छावती ।

**९८३. पूरणाद्वयसि ।**

पञ्चमो मासो वर्षो वास्य पञ्चमी ।

**९८४. दशमी वृद्धे साधुः ।**

---

उपतापवाचकात् तथा गर्ह्य वाचकाच्च नाम्न इनि प्रत्यय एव स्यात् नतु मतुः । अनेन पूर्वत्र परत्र च निषेधाभावे मतु र्भवतीति ज्ञापितम् । कटक-वलयौ स्तः अस्येति कटकवलयीति कुष्ठोः रोगविशेष इत्युपतापत्वात् इन् । ककुदं तालु, तस्या वर्त्तं कुत्सितभ्रमणं (जिह्वया) ककुदावर्त्तमिति गर्ह्यत्वादिन् ।

अमृता०—९८२. प्राणीति । पूर्वस्यापवादः । प्राणिस्थादरामान्तात् प्राण्यङ्गात् इनि नेष्यते किन्तु मतुरेवेष्यत इत्यर्थः ।

अमृता०—९८३. पूरणादिति । पूर्वोक्तार्थे वयसि गम्यमाने पूरण प्रत्यया न्तादिनिः स्यात् ।

अमृता०—९८४ दशमीति । पूर्वोक्तार्थे वृद्धवाच्ये इना सह दशमस्य दशमी साधुः स्यात् । दशमी अवस्था मृत्यु रस्यास्तीति दशमी वृद्धः ।

---

बाल०—राम । पूर्वोक्तेऽर्थे प्राणिस्तादरामान्तात् रामकृष्णसमाससिद्धादुपतापवाचकाद्गर्ह्यवाचकाच्च नाम्न इनिः स्यात्, मतुस्तु न स्यात् । अत्र मतुनिषेधेन पूर्वत्र परत्रच यत्र प्रतिषेधनियमयोरभावस्तत्र सर्वत्रैव मतुरिति ज्ञापितं । कटवलयावस्य स्तोऽस्मिन् वेति कटवलयी कुष्ठमस्यास्त्यस्मिन् वेति कुष्ठी । एवं ज्वरी । ककुदं तालु-तस्यावर्तं कुत्सितभ्रमणं ककुदावर्तं तदस्यास्त्यस्मिन् वेति ककुदावर्ती हयः । प्राणिस्थादिति किं किमर्थं । पुष्पफले अस्य स्तोऽस्मिन् वेति पुष्पफलवानित्यत्र मतुरेव॥९८१

बाल०—प्राण्या । पूर्वोक्तेऽर्थे प्राणिस्थादरामात् प्राण्यङ्गादिनिर्नेष्यते । रामकृष्णादित्यनेन प्राप्ते निषेधोऽयं । पाणिपादावस्य स्तोऽस्यां वेति पाणि पादवती उपतापत्वात् प्राप्तेरेकाङ्गवैकुल्येन व्यावर्तयति अरामात् किमिति । मूर्च्छास्या अस्यस्यां वेति मूर्च्छावती ।। ९८२ ।।

बाल०—पूर । पूर्वोक्तेऽर्थ वयसि वाच्ये पूरणप्रत्ययान्तादिनिः स्यात् । वाक्येऽस्येत्यस्मात् परमस्त्यस्मिन् वेति योज्यं । पञ्चमी बालः ।। ९८३ ।।

बाल०—दश । तदस्यास्त्यस्मिन् वेत्यर्थे वृद्धे वाच्ये इना सह दशमीत्यस्य दशमी साधुः स्यात् । दशमी दशा मृत्युरस्यास्त्यस्मिन् वेति दशमी । वयःप्रतीतिरत्र नास्तीति निपातः कृतः ।। ९८४ ।।

**९८५. सुखादिभ्यश्च ।**

सुखी दुःखी ।

**९८६. धर्मशील वर्णान्ताच्च ।**

वैष्णवधर्मी वैष्णवशीली ब्राह्मणवर्णी ।

**९८७. हस्ती जातौ साधुः ।**

**९८८. वर्णी ब्रह्मचारिणि, पुष्करिण्यादयो देशे ।**

साधवः ।

---

अमृता०—९८५. सुखेति । मत्वर्थे सुखादिभ्यश्च इनिः स्यात् । एवं क्रोधी कामी पिपासी लोभीत्यादयश्च ।

अमृता०—९८६. धर्मेति । पूर्वोक्ताथ धर्मशीलवर्णा अन्ते यस्य तादृशात् नाम्नश्च इनिर्भवति । वैष्णवधर्मोऽस्यस्मिन वास्तीति वैष्णवधर्मीत्यादि ।

अमृता०—९८८. वर्णीति । मत्वर्थे ब्रह्मचारिणी वाच्ये इना सह वर्णस्य वर्णी साधुः स्यात् । तथा देशे वाच्ये इना साकं पुष्करादेः पुष्करिण्यादयः साधवो भवन्ति । पुष्करिण्यान्तुखातं स्यादित्यमर शासनात् पुष्करिणी वापी । एवं तमाली पद्मिनीत्यादयः । अस्यगणस्तु परिशिष्टे द्रष्टव्यः ।

---

बाल०—सुखा । पूर्वोक्तेऽर्थे सुखादिभ्यश्च इनिः स्यात् । सुखमस्यास्त्यस्मिन् वेति सुखी । एवं दुःखी पिपासी क्रोधी मनःसुखी मनोदुःखीत्यादयः ॥ ९८५ ॥

बाल०—धर्म । पूर्वोक्तेऽर्थे धर्मशीलवर्णा अन्ते यस्य तस्माच्च नाम्न इनिः स्यात् । वैष्णवधर्मोऽस्यास्त्यस्मिन् वेति वैष्णवधर्मी । एवं वैष्णवशीली ब्राह्मणवर्णी ब्राह्मणधर्मी क्षत्रीयधर्मीत्यादि ॥ ९८६ ॥

बाल०—हस्ती । तदस्यास्त्यस्मिन् वेत्यर्थे जातौ वाच्ये इना सह हस्तस्य हस्ती स्यात् । करी दन्तीच गजे इति वक्तव्यं ॥ ९८७ ॥

बाल०—वर्णी । तदस्यास्त्यस्मिन् वेत्यर्थे ब्रह्मचारिणि वाच्ये इना साकं वर्णस्य वर्णी साधुः स्यात् । पुष्क । पुष्करिण्यान्तु खातं स्यादित्यमरोक्तदिशा पुष्करिण्यादय इत्यत्र लिपिकरप्रमादात् पुष्करण्यादय इति लक्ष्यते । तदस्यास्त्यस्मिन् वेत्यर्थे देशे वाच्ये इना सह पुष्करादीनां पुष्करिण्यादयः साधवो भवन्ति । पुष्करमस्या अस्त्यस्यां पुष्करिणी वापी । एवं पुष्करी तडागः, पुष्करि कुण्डं । पुष्कराणि तीर्थानि सन्त्यस्मिन् देशे इत्यत्र इन् न स्यादनभिधानात् । एवं तमालिप्रभृतयः । देशादन्यत्रतु पुष्करवान् गजः । पुष्कर तमाल पद्मोत्पलनल शालुक कुमुद कल्लोलाः । यवसशिरीषकरीषा मृणालविषकर्दमास्त-रङ्गश्च । कैरवमिति विज्ञेयं प्रयोगतः पुष्करादिरन्योऽपि । तेन काश्मीरिश्भृङ्गिप्रभृतयश्च भवन्तीति ॥ ९८८ ॥

**६८८९. बाहुवलि-उरुवलिनौ, सर्ववली सर्वजीवी सर्ववेशी च साधवः ।**

**६८९०. अर्थी याचके साधुस्तदाच्च ।**

धनार्थी ।

**६८९१. बलादेर्मतु वा ।**

बलवान् बली, उत्साहवान् उत्साही ।

**६८९२. कंयु-शंयु-शुभंय्वहंय्वादयः ।**

साधवः । आदिग्रहणात्—कम्बः शम्बः कम्भः शम्भः कन्तिः शन्तिः कन्तः शन्तः कन्तुः शन्तुः कंयः शंयः ।

---

अमृता०—६८८९. बाहुवलीति । पूर्वोक्तार्थे इना सह वाहुवलोरुवलयो र्वाहु-वली-उरुवली च साधू भवतः, तथा इना सह सर्ववल्यादयः साधवो भवन्ति ।

अमृता०—६८९०. अर्थीति । पूर्वोक्तार्थे याचके वाच्ये इना साकं अर्थस्य अर्थी साधुः स्यात् तथा अर्थान्ताच्च नाम्न इनिः स्यात् ।

अमृता०—६८९१. वलादेरिति । उक्तार्थे वलादे मंतु र्वा स्यात्, पक्षे इनिश्च ।

अमृता०—६८९२. कंय्विति । पूर्वोक्तार्थे युप्रत्ययेन सह कम् प्रभृतीनां कंय्वादयः साधवो भवन्ति । कमित्यव्ययं जलार्थे, मस्तकार्थे च कं वारिणि च मूर्द्धनीत्यमरः । तदस्त्यस्यास्मिन् वेति कंयुः । शमित्यव्ययं सुखे–शंयुः । एवं शुभंयुः अहंयुरिति च । अहं अहङ्कार इत्यर्थः । आदिग्रहणप्रयोजनमाह –कम्वः शम्व इत्यादि । कम्वादयः शंयान्ता द्वादश आदिना ग्राह्याः साधव इत्यर्थः ।

---

बाल०—वाहु । तदस्यास्त्यस्मिन् वेत्यर्थे इना सह बाहुबलोरुबलयोर्बाहुबल्यूरुबलिनौ साधू भवतः । सर्व । तदस्यास्त्यस्मिन् वेत्यर्थे इना सह सर्वबलादीनां सर्वबली सर्वजीवी सर्ववेशीच साधवो भवन्ति ॥ ६८८९ ॥

बाल०—अर्थी । तदस्यास्त्यस्मिन् वेत्यर्थे याचके वाच्ये इना सजूः अर्थस्यार्थी साधुः स्यात् । तद । पूर्वोक्तेऽर्थे तदन्तात्तन्नामान्ताच्च इन् स्यात् । धनार्थमस्यास्त्यस्मिन् वेति धनार्थी ॥ ६८९० ॥

बाल०—बला । पूर्वोक्तेऽर्थे बलादेर्मतुर्वा स्यात् पक्षे प्राकरणिक इनिश्च । बलमस्यास्त्यस्मिन् वेति बलवानित्यादि । आकृतिगणोऽयं ॥ ६८९१ ॥

बाल०—कंयु । तदस्यास्त्यस्मिन् वेत्यर्थे युप्रत्ययेन सह कमादीनां कंय्वादयः साधवो भवन्ति । कं वारिणिच मूर्द्धनीति, विकल्पे कं किमुत चेति चामरोक्तात् कमित्यव्ययं तदस्यास्त्यस्मिन् वेति कंयुरिति । दिष्ट्यां शमुपजोषञ्चेत्यप्यमरोक्तात्

## ९९३. तुन्दि-बलि-वटिभ्यो भः ।

तुन्दिभः । पामादित्वाद्बलिनश्च । उक्ता मत्वर्थीयाः ।

अतः परं स्वार्थिकाः ।

अत्र प्रथमनिर्दिष्टविष्णुभक्त्यन्तात् प्रत्यय इति निवृत्तं, विभाषा त्वनुवर्तते ।

---

**अमृता०**—९९३. तुन्दीति । उक्तार्थे तुन्द-बलि-कटिभ्यो भप्रत्ययो भवति । एवं बलिभः कटिभ इति । बलि शब्दस्य पामादिगणो पाठात् न प्रत्ययेन बलिन इति च भवतीत्याह—पामादित्वादित्वादिति । मत्वर्थीयान् प्रत्ययान् समापयति—उक्ता इति । अथ स्वार्थिकान् प्रत्ययानुपक्रममाणः प्राकरणिकपरिभाषां निवर्त्तयति—अत्र प्रथमेत्यादिना । प्रत्ययविभाषा त्वनुवर्त्तत इति—परिभाषेयमापरिसमाप्तेरित्युक्तेः, वाक्यसमासपक्षौ तु न निवृत्तावित्यर्थः ।

---

शमिति चाव्ययं तदस्येत्यादिपूर्ववद्वाक्यं शंयुरिति । अनयोः साहचर्यात् शुभमप्यव्ययं, ततस्तदस्येत्यादिपूर्ववत् शुभंयुरिति । मङ्गलार्थशुभशब्दाद् युमुम् चेत्येके । अहङ्कारार्थाहमप्यव्ययं तेन पूर्ववदहंयुरित्यपि । आदीति सूत्रे आदिशब्दोपादानात् कम्बादयः संयान्ता द्वादशापि भवन्तीत्यन्वयः । कंशंभ्यां भ-व-ति-त-तु-या इति क्रमदीश्वरसूत्रं । एवं सर्वेषाञ्च । तेन कमस्यास्त्यस्मिन् वेति कम्ब इत्यादौ मो विष्णुचक्रं विष्णुजन इत्यनेन विष्णुचक्रं विधाय विष्णुचक्रस्य हरिवेणुरिति हरिवेणुः कर्तव्यः । मतान्तरन्तु न किञ्चित् । (कम्भिः शम्भिः, कम्भुः शम्भुः, इतिच पाठो मतान्तरे) ॥ ९९२ ॥

**बाल०**—तुन्दि । पूर्वोक्तेऽर्थे तुन्दिबलिवटिभ्यो भः स्यात् । तुन्दिरस्यास्त्यस्मिन् वेति तुन्दिभ इति । एवं बलिभः वटिभः । बलिशब्दस्य पामादिगणपाठात् नप्रत्ययेन बलिन इत्यपि स्यादित्याह पामेति । तुण्डिमप्यत्र कश्चित् पठति । तुण्डिवृं द्धानाभिरुच्यते । अयमिन्नन्तोऽप्यस्ति, तेन तुण्डिभ इतिच । उदन्वानुदधौ वेति वाच्यं । उदकमस्यास्त्यस्मिन् वेति मतुरुदकस्योदन् मतोर्मस्य वश्च निपातात् उदन्वान् समुद्रः । चकारात् उदन्वान्नाम ऋषिश्च । विषूचोनो विषुश्चेति वक्तव्यं : तदस्येत्याद्यर्थे विषूचो नरामः स्यात्तस्य विषुश्च । विष्वगस्यास्त्यस्मिन् वेति र ष ऋद्वयाभ्यामित्यनेन णत्वं विषुण इति । औत्सर्गिको मतुश्चात्र दृश्यत इति विष्वग्वानित्यपि । अर्णसो वः स-हरश्चेति वक्तव्यं । अर्णोऽस्यास्त्यस्मिन् वेति अर्णवः समुद्रः, रूढित्वादत्र मतुर्न स्यात् । गाण्ड्यजकाभ्यां वः संज्ञायामिति वाच्यं । गाण्ड्यस्यास्त्यस्मिन् वेति गाण्डीवमर्जुनधनुः । वामनादपि दृश्यते: तस्मात् गाण्डिवमितिच । अजो विष्णुः को ब्रह्मा तावस्य स्तोऽस्मिन् वेति तद्धितबाहुल्यात् कस्य गश्चेत्यजगवं शिवधनुः । अजकवमित्यन्ये । मेधारथाभ्यामिनश्चेति वक्तव्यं । मेधाऽस्यास्त्यस्मिन् वेति मेधिनः । एवं रथिनः । मतुरप्यत्रेष्यते, तेन मेधावान् रथवानितिच । धनादिनि-ठावुत्तमर्णे इति वाच्यं । धनमस्यास्त्यस्मिन वेति धनी धनिकश्चेति । गोमी पूज्ये साधुरिति वाच्यं । गौरस्यास्त्यस्मिन् वेति गोमी व्रजनाथः । विमुक्तादेः केशुवण

## ९९४. कृष्णनाम बहुभ्यां नतु द्व्यादिचतुर्भ्यः ।

**प्रभुरयं प्राग्दिशीयः, सचायं पूर्वविष्णुभक्तिवन्मन्तव्यः ।**

## ९९५. पञ्चमीतस्तसिः ।

**अन्तरङ्गस्वादे महाहरः । सर्वतः विश्वतः ततः यतः बहुतः ।**

---

**अमृता०—९९४.** कृष्णेति । अधिकारसूत्रमिदम् । स्वार्थे कृष्णनामसंज्ञकात् बहुशब्दाच्च यथास्वं प्रत्ययाः कार्याणि च भवन्तीत्यर्थः । किन्तु तत्र द्विप्रभृतिचतुर्भ्यः ( द्वि-युष्मदस्मद् भवतुइत्येतेभ्य इत्यर्थः ) वक्ष्यमाणाः प्रत्ययाः कार्याणि वा न भवन्ति । पूर्वविष्णुभक्ति वदिति—पूर्वस्य विष्णुपदत्वं स्वादि-तद्धितयो रयसर्वेश्वरादयो रित्यनेन विष्णुपदवत्त्वं मन्तव्यमित्यर्थः अस्य कार्यञ्चोत्तर सूत्रे—अन्तरङ्ग—स्वादे महाहर इत्यनेन व्यक्तं भावि ।

**अमृता०—९९५.** पञ्चमीत इति । स्वार्थे कृष्णनाम-बहुभ्यामुत्तरस्याः पञ्चम्याः तसिप्रत्ययः स्यात्, किन्तु कृष्णनामसु द्विप्रभृति चतुर्भ्यः स न भवति । पूर्वस्य विष्णुपद

---

इति वक्तव्यं । विमुक्तोऽस्यास्त्यस्मिन् वेति वैमुक्तो द्वारकादिर्वेदादिर्वा । निद्रादेरालुश्चेति वाच्यं । निद्रास्यास्त्यस्मिन् वेति निद्रालुः । एवं तन्त्रालुः श्रद्धालुः कृपालुः । चशब्दात् निद्रावानित्याद्यपि । अच्छवाकादेश्छः सूक्तसाम्नोरिति वक्तव्यं । अच्छवागस्यास्त्यस्मिन् वेति अच्छवाकीयं सूक्तं साम वा । अध्यायानुवाकयोश्छस्य हरश्च वा । अध्यायानुवाकयो-र्वाच्ययोरच्छवागादित्वात् प्राप्तछस्य हरो वा स्यात् पक्षे स्थितिश्च । गर्द्धभाण्डोऽस्यास्त्यस्मिन् वेति गर्द्धभाण्डीयो गर्द्धभाण्डोऽध्यायोऽनुवाको वा । एवं यथासम्भवमन्यान्युह्यानि । मत्वर्थीयान् समापयति उक्ता इति ।

अतः । अर्थविशेषेषु प्रत्ययान् दर्शयित्वा इदानीं स्वार्थिकान्दर्शयितुं प्रक्रमते अत इति । अतो मत्वर्थीयेभ्यः परं परस्मिन् स्वस्मिन्नर्थे भवाः प्रत्यया दर्श्यन्त इत्यर्थः । प्रकृतिलिङ्गवचनान्यतिक्रम्य ये वर्तन्ते ते स्वार्थिका इति प्रथा । प्रथमनिर्दिष्टविष्णु-भक्त्यन्तात् प्रत्ययः इति यदुक्तं तन्निवृत्तं विभाषा पुनरनुवर्तत एवेति प्रतिपादयति अत्रेति । अत्र स्वार्थेऽर्थे ॥ ९९३ ॥

**बाल०—**कृष्ण । स्वार्थेऽर्थे कृष्णनामसंज्ञकात् बहुशब्दाच्च परेभ्यः प्रत्ययेभ्यो यथास्वं कार्याणि स्युः । द्व्यादिचतुर्भ्यस्तु न स्युः । द्व्यादीत्यत्र चतुर्भ्य इति पदेन युष्मदस्मद्भवतां ग्रहणं । प्रभुनामायमधिकार इत्याह प्रभुरिति । दिशः प्राक् प्राग्दिक् तत्र भवः प्राग्दिशीयः, अयमधिकारः प्राग्दिशीयः स्यात्, दिक् पूर्वविद्यमानत्वात् । चेति सोऽयं दिशः प्राग्विहितः प्रसिद्धाचारात् पूर्वविष्णुभक्तिसदृशो मन्तव्य इत्यन्वयः अनेन पञ्चम्यादीना मुत्तरे ये यत्र विधास्यन्ते ते तत्सदृशा इति प्रतिपादितं । तेनच प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इत्यनेन प्रकृतिप्रत्यययोरेकार्थताप्रतिपादनात् वक्ष्यमाणपञ्चम्यादिभ्यः पूर्वविहितकार्याणां स्वार्थिकत्वं ॥ ९९४ ॥

**९९६. सप्तमीतस्त्रः ।**

सर्वत्र बहुत्र ।

**९९७. एतदोऽतोऽत्र, इदम इत इह, अदसोऽमुतोऽमुत्र, किमः कुतः कुत्रेति ।**

तस्-त्राभ्यां त्रिष्वपि लिङ्गेषु साधवः ।

---

वत्त्वात् अन्तर्भिन्न पदत्वेऽप्येकनामत्वेन योजनं समासः । पञ्चम्यादि विष्णु भक्तीनां पूर्वोक्तत्वा दन्तरङ्गत्वम् । अतोऽन्तरङ्गत्वादेः पञ्चम्यादे र्महाहर इत्युक्तम् । सर्वस्मादित्यत्र सर्वतः, तस्मादिति ततः, पूर्वविष्णुपदत्वमननात् तदादि सप्तानां संसारस्यारामः । एवं यतः । एवद्विवचन-बहुवचनयोश्च—सर्वाभ्यां सर्वतः, सर्वेभ्यः सर्वत इति योज्यम् । तथा लक्ष्मी—सर्वस्या इति सर्वत इत्यादि ज्ञेयम् । त्रादो वाच्यलिङ्गलक्ष्म्याः पुरोषोत्तमवत्त्वमुक्तम् ।

**अमृता०**—९९६. सप्तमीति इति । स्वार्थे सर्वनाम-बहुभ्यामुत्तरस्याः सप्तम्याः परं त्रप्रत्ययः स्यात् द्व्यादिचतुर्भ्यस्तु । सर्वस्मिन् सर्वयोः सर्वेषु वेति सर्वत्र । तथा सर्वस्यां सर्वयोः सर्वासु वेति सर्वत्र । तस्मिन् तत्र, यस्मिन् यत्र

**अमृता०**—९९७. एतद इति । त्रिष्वपि लिङ्गेषु एकत्व द्वित्व बहुत्वेषु पञ्चमी सप्तम्यो रादशाभ्यां तस् त्राभ्यां सह एतदादीनां क्रमेण अतः अत्र प्रभृतयः साधवो भवन्ति। अत्र एतदः अरामः, इदम इरामः, अदसः अमुः, किमः कुरित्येतानि निपात फलानि ।

---

**बाल०**—पञ्च । स्वार्थे कृष्णनामबहुभ्यामुत्तरस्याः पञ्चम्या उत्तरस्तसिः स्यात् द्व्यादिचतुर्भ्यस्तु न । पूर्वस्य विष्णुपदवत्त्वमित्युक्तदिशा पूर्वस्य विष्णुपदवत्ता । तस्यादिप्रत्ययानां समासावयवत्वात् पूर्वस्य विष्णुपदवत्त्वाच्च अन्तर्भिन्नपदत्वेऽप्येकनामेत्यनेन समासः । प्रकृत्याश्रितं प्रकृतावपीत्यनेन पञ्चम्यादीनां पूर्वकृतत्वादन्तरङ्गत्वं । एतत् सर्वं मनोगतं स्पष्टयन्नाह अन्तरंगेति । अन्यथैकपदत्वारम्भाभावेऽन्तरङ्गेत्युक्तमनर्थकं स्यात् । कार्यपूर्वे पञ्चमी स्यात् कार्यस्थानेतु षष्ठिका । इत्यनुसारेण पञ्चम्या इति षष्ठ्यन्तनिर्देशेनापि प्रयोगसिद्धौ यत् पञ्चमीत इति कृतं तद्विष्णुपदवत्त्वादीनां ज्ञापनार्थं शिष्याणां व्युत्पत्तिवैचित्र्यार्थञ्च । सर्वस्मादिति सर्वतः । एवं विश्वतः । तस्मादिति ततः । स चायमित्यनेन पूर्वस्वादिवन्मननादत्र तदादिसप्तानां संसारस्याराम इत्यनेन संसारस्यारामः । एव यतः । पञ्चमीत इति पञ्चमीमात्रनिर्देशात् बहुभ्य इति बहुतः । एवं ब्रह्मलक्ष्म्योरपि, यतो वाच्यलिङ्गलक्ष्म्यास्त्रादौ पुरुषोत्तमवत्त्वमुक्तं । नत्वित्यनेन निषेधात् द्वित इत्यादिकं न स्यात् । केचित्तु द्वितः युष्मत्तः अस्मत्त इति यदुदाहरन्ति तदस्माकं नाभीष्टं द्वित इत्यत्र संसारस्यारामाभावात् भवतु इत्यदर्शनात् भाष्यविरोधाच्च । किंच, युष्मत्तः अस्मत्त इति छान्दसं, द्वाभ्यामागत इति तस्प्रत्ययान्तो द्वित इति सर्वेषां मतं ॥ ९९५ ॥

**बाल०**—सप्त । स्वार्थे सर्वनाम-बहुभ्यामुत्तरस्याः सप्तमीतः परस्त्रः स्यात्, द्व्यादिचतुर्भ्यस्तु न । अत्रापि सप्तमीत इति पूर्ववत् समाधेयं । सर्वस्मिन्निति सर्वत्र, बहुष्विति बहुत्र । एवमाद्यन्तोदाहरणात् विश्वत्र तत्र यत्रेति च ॥ ९९६ ॥

**९९९८. कुत्रस्य क्वेति च, इतरत्रापि भवदादियोगे दृश्यते ।**

स भवान् ततो भवान् तत्र भवान् । ततोदीर्घायुषं ब्रवीमि यत्र वा । ततो देवाना प्रियेण कृतं तत्र वा इत्यादि ।

**९९९९. कालेऽधिकरणे सर्वदादयः ।**

साधवः ।

---

अमृता०—९९९८. कुत्रस्येति । कुत्र इत्यादिष्टस्य क्व इत्यादिश्यते । चकारो वार्थ, तेन कुत्र इत्यस्य च स्थितिः । इतरत्रापीति—पञ्चमीसप्तमीभ्या-मन्यत्रापि प्रथमादिष्वपि दृश्यते; तस् त्रचेतिशेषः । स भवानित्यनेन प्रथमायां, ततो दोर्घायुषमिति द्वितीयायां, ततो देवानामिति षष्ठीस्थले च तस्-त्रौ दर्शितौ ।

अमृता०—९९९९. काले अधिकरणे वाच्ये दादि प्रत्येन सह सर्वादीनां सर्वदादयः साधवो भवन्ति । के च ते इत्यपेक्षावांतान् निर्दिशति,—

---

बाल०—एत । वृत्तिमाह तसेति । अविशेषात् त्रिष्वपि लिङ्गेषु एकत्वद्वित्वबहुत्वेषु पञ्चमीसप्तम्योरादेशाभ्यां तसत्राभ्यां सह एतदादीनां क्रमेणातोऽत्रादयः साधवो भवन्ति । यद्यपि प्रकृतिप्रत्यययोः सहैवादेशो निपात इत्येकदादेशेनावयवभेदाभावास्तथापि एतदोऽराम: पञ्चमीसप्तम्योस्तस्त्रौ । इदम इराम: पञ्चमीसप्तम्योस्तोहौ । अदसोऽमु: पञ्चमीसप्तम्योस्तस्त्रौ । किम: कु: पञ्चमीसप्तम्योस्तस्त्रावित्यवयभेद: कल्पनीय: । एतस्मात् एताभ्यां एतेभ्य इति अतः । एतस्मिन् एतयोः एतेष्विति अत्रेत्यादीनि यथासम्भवं वाक्योदाहरणानि ॥ ९९९७ ॥

बाल०—कुत्र । कुत्रेत्यस्य क्व इतिच साधुःस्यात् । चशब्दोऽत्र वार्थ इति, पक्षे कुत्रेत्यस्यापि स्थितः । पञ्चमीसप्तमीभ्यामन्यस्वादिविषयेऽपि तस्त्राविति सर्वेषां मतमालोक्याह इतरेति । भवदावियोगे सति कृष्णनामादिभ्य: पञ्चमीसप्तमीभ्यामितरत्रापि प्रथमादिस्वादिष्वपि तस्त्रौ भवत इति दृश्यते । अतएव सभवानिति वाक्ये तच्छब्दस्य ततोभवान् तत्रभवानिति । एवं सर्वो भवान् सर्वत्रभवान्, योभवान् यतोभवान् यत्रभवानित्यादि । भवदादीत्यादिशब्देन दीर्घायुषादीनां ग्रहणमिति सूचयन्नाह तत इति । तं दीर्घायुषं ब्रवीमीति वाक्ये ततो दीर्घायुषं वा ब्रवीमोति । एवं सर्वं दीर्घायुषं ब्रवीमीति सर्वतो दीर्घायुषं सर्वत्र दीर्घायुषं वा ब्रवीमीत्यादि पूर्ववत् । तेन देवानां प्रियेण कृतं व्यर्थमिति वाक्ये ततस्तत्र वा देवानां प्रियेण कृतमिति । इत्यादीत्यादिपदेन तस्मै देवाय दत्तं हविरिति ततो देवाय दत्तं हविस्तत्र वा । तस्य देवस्येदं हविरिति ततो देवस्येदं हविस्तत्र वेति । एवं द्वित्वबहुत्वयोरपूह्यं । तथा सर्वो भवानित्यादिवाक्ये सर्वतोभवान् सर्वत्र वेति । यो भवानित्यादिवाक्ये यतोभवान् यत्र वेत्यादिच ॥ ९९९८ ॥

बाल०—काले । कालेऽधिकरणे वाच्ये दादिप्रत्ययेन साकं सर्वादीनां यथासम्भवं सर्वदादयः साधवो भवन्ति ॥ ९९९९ ॥

**१०००. सर्वस्य सर्वदा सदा, तदस्तदा तदानीं तर्हि, यदो यदा यर्हि, इदम एतर्हि इदानीमधुना, किमः कदा कर्हीति, विशेष्योपादानेतु न स्यात् ।**

**सर्वत्र काले ।**

**१००१. सर्वेण प्रकारेणेत्यादौ सर्वथादयः ।**

**सर्वथा यथा तथा इत्थं कथम् ।**

---

**अमृता०—१०००.** सर्वस्येति । सर्वस्मिन् काले इत्यर्थे सर्वस्य दा प्रत्येन साकं सर्वदा सदा साधू भवतः । तस्मिन् काले इत्यर्थे दा दानीं र्हि प्रत्ययैतच्छब्दस्य तदा तदानीं तर्हि इत्येते साधवो भवन्ति । यस्मिन् काले इत्यर्थे यच्छब्दस्य दा र्हि प्रत्ययाभ्यां यदा यर्हि इत्येतौ साधू भवतः । अस्मिन् काले इत्यर्थे र्हि-दानीं-धुना प्रत्ययैः इदं शब्दस्य एतर्हि इदानीं अधुना इत्येते साधवः स्युः । कस्मिन् काले इत्यर्थे किं शब्दस्य दा-र्हि प्रत्ययाभ्यां कदा कर्हि इत्येतौ साधू भवतः । किन्तु विशेष्यग्रहण सति कालेऽधिकरणे वाच्ये सर्वदादि रादेशो न भवति । काल इति किम्—सर्वस्मिन् देशे इत्यर्थे मा भूत् ।

**अमृता०—१००१.** सर्वेणेति । सर्वेण प्रकारेण इत्याद्यादचर्थे थादि प्रत्ययैः सह

---

**बाल०—सर्व** । यद्यपि काल इति सामान्यसूत्रेणैव सर्वे प्रयोगाः सिध्यन्ति, तथापि प्रकृतिप्रत्ययानां भेदार्थं किप्रतीनां विशेषकरणेन तदन्येषां दाप्रत्ययसिद्धावशिष्टार्थञ्च विवरणसूत्राण्याह सर्वेत्यादि । सर्वस्मिन् काल इत्यर्थे दाप्रत्यये न सह सर्वस्य सर्वदा सदेत्येतौ साधू भवतः । निपातफलमत्र दाप्रत्यय पक्षे सर्वस्य स इत्यादेशश्च । तद । तस्मिन् काल इत्यर्थे दा दानीं र्हिभिः सह तच्छब्दस्य यदा तदानीं तर्हीत्येते साधवो भवन्ति । यदो । यस्मिन् काल इत्यर्थे दा र्हिभ्यां सजूः यच्छब्दस्य यदा यर्हीत्येतौ साधू भवतः । तदादिसमानामित्यनेन तद्यदोरित्यनयोः संसारस्यारामः । इद । अस्मिन् काल इत्यर्थे र्हि दानीं धुनाभिः सार्द्धमिदंशब्दस्य एतर्हि इदानीं अधुना इत्येते साधवो भवन्ति । अत्र र्हीत्यादित्रयप्रत्यया इदम एत इ अश्च निपातनादिति । किमः । कस्मिन् काल इत्यर्थे दार्हिभ्यां सह किम्शब्दस्य कदा कर्हीत्येतौ साधू भवतः । किमः कश्चात्र निपातफलं । विशे । विशेष्यग्रहणे सति कालेऽधिकरणे वाच्ये सर्वदादिस्तु न स्यात् । सर्वस्मिन् काल इति सर्वत्र काल इत्यत्रतु पूर्वोक्तत्रप्रत्यय एव । एवं तत्र काल इत्यादिच । कालेऽधिकरणे सर्वदादयः सप्तम्यामेवेत्यन्ये केचित्तु सप्तम्या अन्यैर्दादिभिरिति ज्ञेयं । अन्यर्हि अमुर्हि चेति कश्चिदिच्छति । काल इति किं सर्वस्मिन् देश इत्यादौ न स्यात् । अनद्यतने र्हिरन्यतरस्यामिति पाणिनिलक्षणे सर्वनामभ्य एव र्हिः प्राप्नोति, तथापि प्रयोगदर्शनेन व्यवस्थितमिति सूचयद्भिश्चन्द्रवर्द्धमानादिभिः किं यत्तदेतदन्येभ्य एव र्हिर्विहितः । जयादित्येन अन्यर्हीति नोदाहृतं । जुमरनन्दिनातु अमुर्हीति सुवन्तपादे उदाहृतमिति गोयीचन्द्रेणोक्तम् ॥ १००० ॥

## १००२. सद्य आदयश्च ।

समानेऽहनि सद्यः । पूर्वस्मिन् वत्सरे परुत् । पूर्वतरे वत्सरे परारि । अस्मिन् वत्सरे ऐषमः । परस्मिन्नहनि परेद्युः । उभयस्मिन्नहनि उभयेद्युः उभयद्युः । उक्ताः प्राग्दिशीयाः ।

---

सर्वादीनां सर्वथादयो यथास्वं साधवो भवन्ति । सर्वस्य सर्वथा, यदो यथा, तदः तथा, इदम् इत्थं, किमः कथमिति ।

अमृता०—१००२. सद्य इति । अहरादौ वाच्ये समादीनां सद्यः प्रभृतयः साधवो भवन्ति । वाक्योदाहरणानि दर्शयति—समान इत्यादिना । एवं अपरद्युः अधरेद्युः अन्येद्युरित्यादयश्च । प्राग् दिशीयाः पूर्णाः ।

---

बाल०—सर्व । सर्वेण प्रकारेणेत्यादावर्थे थादिभिः सह सर्वादीनां यथास्वं सर्वथादयः साधवो भवन्ति । प्रकारः सादृश्येऽप्यस्ति यथायं विष्णुदत्तप्रकार इति सामान्यस्य भेदके धर्मेऽप्यस्ति सतु द्रव्याश्रितः यथा निपुणत्वादिः । अत्र पुनर्द्वितीयार्थस्य ग्रहणमिति सर्वः । सर्वविष्णुभक्त्यर्थेऽयं विधिरिति सूचनार्थं सूत्रे इत्यादावित्युपन्यस्तं । तस्मात् सर्वेण प्रकारेण सम्पादयति, सर्वं प्रकारं करोति, सर्वस्मै प्रकाराय ददाति, सर्वस्मात् प्रकाराद् भुङ्क्ते, सर्वस्य प्रकारस्य स्निह्यति, सर्वस्मिन् प्रकारे तुष्यतीत्यर्थे सर्वथेति । एवं येन प्रकारेणेत्याद्यर्थे यथेति । एवञ्च, तथा एतथा, उभथा उभयथा, अन्यथा अन्यतरथा, इतरथा अमुथा अपरथेत्यातिप्रयोगदर्शनादन्यदप्यूह्यं । इत्थमिति अनेन प्रकारेणेत्यादावर्थे निपातादिदमस्थम् तस्य इदादेदश्च । कथमित्यत्रापि केन प्रकारेणेत्यादावर्थे निपातात् थम् स्वादिस्थानीयत्वात् थमस्तस्मिन् परे किमः को विष्णुभक्तावित्यनेन किमः कादेशः । थापवादावेतौ । एवं द्वित्वबहुत्वयोरपि सर्वथादयो यथास्वमूह्याः । एतच्छब्दस्य इत्थमित्येके तन्मते एतथेति न स्यात् ॥ १००१ ॥

बाल०—सद्य । अहरादौ वाच्ये द्य आदिभिः सह समानादीनां सद्य आदयश्च साधवो भवन्ति । वाक्योदाहरणानि स्वयमाह समान इत्यादिनोभयद्युरित्यस्तेन । तथातु निपातसामर्थ्यात् प्रकृतिप्रत्ययविभाग आदेशश्च यथासम्भवं कल्प्यते । सद्य इति समानशब्दाद्द्यस्तस्मिंस्तस्य सादेशश्च । सद्यः निमित्तनिमित्तिनोः समानेऽहनीतितु निर्गलितार्थः । यथोक्तमन्यैः । सद्यः प्राणहरं मर्मताडनमिति यस्मिन्नहनि मर्मताडनं तस्मिन्नेवाहनि प्राणहरणमित्यर्थः । परुदिति पूर्वशब्दादुत् तस्मिंस्तस्य परादेशश्च । परारीति पूर्वतरशब्दादारि तस्मिंस्तस्य परादेशश्च । एवमरिप्रत्ययेन साकं पूर्वतरस्य पररीतिच : ऐषम इति इदम्शब्दान्नृसिंहसमस् तस्मिंस्तस्य दम्भागहरश्च । आदिसर्वेश्वरस्येति वृष्णीन्द्रः । ईश्वरहरिमित्रैति षत्वं । परेद्यवीति परशब्दादेद्यवि अ-इद्वयस्येत्यरामहरः । अद्य इति इदं शब्दात् द्य तस्मिंस्तस्यारामादेशश्च पूर्वेद्युरिति पूर्वशब्दादेद्युस् अ इद्वयस्येत्यरामहरः । एवमपरस्मिन्नहनीत्यादिवाक्ये अपरेद्युः उत्तरेद्युः अधरेद्युः अन्येद्युः अन्यतरेद्युः इतरेद्युरित्येतेऽपि केनचिदुदाह्रियन्ते । उभयेद्युरित्यादिद्वयेतु उभयशब्दादेद्युस् द्युस्

## १००३. दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्व- स्तातिः, पूर्वाधरावरेभ्योऽसिश्च, पूर्वादीनां पुर अध अव तयोः, अवस्त्वस्तातौ वा ।

पूर्वस्यां दिशि, पूर्वस्या दिशः, पूर्वा दिक्-पुरस्तात् पुरः । एवं देशकाल-योरपि । धा प्रत्ययं यावदस्ताति प्रत्ययैकविषये विधिः ।

---

अमृता०—१००३. दिगिति । दिग् देश-कालेषु वाच्येषु वर्त्तमानेभ्यो दिग्वाचिश-ब्देभ्यः तत्र पुनः सप्तमी पञ्चमी प्रथमाभ्य उत्तरे अस्तातिः प्रत्ययः स्यात् । इराम इत् । दिग् देश कालेषु वर्त्तमानेभ्यः पूर्वाधरावरेभ्यः सप्तमी पञ्चमी प्रथमाभ्य उत्तरे असिः प्रत्ययः स्यात्, चकारेण अस्तातिरपि । तयोः प्रत्यययोः परयोः पूर्वादीनां स्थाने यथाक्रमं पुर अध अव इत्येते आदिश्यन्ते, अस्तातौ परे तु अवरस्य अवादेशो वा भवति । वाक्योदाहरणानि क्रमतो दर्शयति—पूर्वस्यामित्यादिना । एवमिति—पूर्वस्मिन देशे काले वा वसति, पूर्व-स्मात् देशात् कालाद् वागतः, पूर्वो देशो वा कालो वा धार्मिक इत्यादि वाक्येऽपि पुरस्तात् पुरः इति भवति । सप्तम्यादिभ्यः अस्ताते विधानात् पूर्वविष्णुभक्तिमत्त्वं, ततोऽन्तरङ्गस्वादे र्महाहरः । गम्यमानाधिकारस्य फलभूत पारिभाषिक व्यवस्थामाह—धाप्रत्ययमिति । अस्ताति प्रत्ययैक विषय इति—दिग् देश कालेष्वर्थेषु दिग् देशेभ्य एव विधिर्भवतोति फलितार्थः ।

---

चेति । विनञ्भ्यां नानाञाविति वक्तव्यं । ( संक्षिप्तसारे तद्धितपरिशिष्टे ३६८ ) । लोकप्रसिद्धार्थे वि नञ् इत्येताभ्यां यथासंख्यं नाना ञौ भवतः । विना नाना । एते सर्वेऽव्ययाः प्राग्दिशीयान् समापयति उक्ता इति ॥ १००२ ॥

बाल०—दिक् । दिग्देशकालेष्वर्थेषु वर्तमानेभ्यो दिग्वाचिशब्देभ्यः परवर्तिनीभ्यः सप्तमीपञ्चमीप्रथमाभ्य उत्तरोऽस्तातिः स्यात् । सिद्धोपदेशे विरिञ्चौ चेत्यनेन इराम इत् । विभुरयमिति गम्यं । सप्तम्यादिभ्योऽस्तातेर्विधानात् पूर्वविष्णुभक्तिवत्त्वं सूचितं । तेनान्तरङ्गस्वादेर्महाहर इत्यनेन सप्तमादेर्महाहरः । पूर्वा । दिग्देशकालेषु वर्त्तमानेभ्यः पूर्वाधरावरेभ्यः परवर्तिसप्तमीपञ्चमीप्रथमाभ्यः उत्तरोऽसिः स्यात् चकारादस्तातिरपि । तयोरस्तात्यस्योः परयोः पूर्वादीनां स्थाने क्रमेण पुर अध अव इत्येते विरिञ्चयो भवन्ति । अस्तातौ परे त्ववरस्याव इत्यादेशो वा स्यात् । वाक्योदाहरणानि क्रमेण दर्शयति पूर्वस्यामिति । किञ्च, अपेक्षकत्वात् दिशि दिशो दिगित्येतेभ्यो यथायोग्यं वसति आगतः रमणीया इत्येताः प्रयोक्तव्याः । तथा दिक् रमणीयेत्यस्मात् परमिति वाक्ये इत्यपि योज्यं । पुरस्तादित्यादौ अ-द्वयस्येत्यनेनारामहरः । एवमित्यतिदेशेन पूर्वस्मिन् देशे काले वा वसति पूर्वस्मात् देशात् कालाद्वा आगतः, पूर्वो देशः कालो वा रमणीय इत्यादि वाक्ये पूर्ववत् पुरस्तादादयो भवन्तीति सूचितं । पूर्वाविष्णुभक्तिवत्त्वात् वाक्यवत् पुरस्तात् वसति आगतः रमणीय इत्यादयोऽपि ज्ञेयाः । एवं द्वित्वबहुत्वयोरपि सर्वत्र ।

### १००४. दक्षिणोत्तराभ्यामतसिः ।

दक्षिणतः ।

### १००५. परावराभ्यां वा ।

परस्तात् परतः ।

### १००६. अञ्चतेर्महाहरः ।

अञ्चत्यन्ताद् दिक् शब्दादस्ताते र्महाहरः स्यात् । तत्र लक्ष्मी प्रत्ययस्य महाहरः स्यात् । प्राग् वसतीत्यादि ।

### १००७. उपर्युपरिष्टात् ।

एतौ अस्तात्यर्थे निपात्येते ।

---

अमृता०—१००४. दक्षिणेति । दिग् देश कालेषु वर्त्तमानाभ्यां दक्षिणोत्तराभ्यां सप्तमी पञ्चमी प्रथमाभ्यां अतसि प्रत्ययः स्यात्, इराम इत् ।

अमृता०—१००५. परेति । दिग् देशकालेषु वर्त्तमानाभ्यां परावराभ्यां सप्तम्यादेः परं अतसि र्वा स्यात् पक्षे अस्तातिरपि स्यात् ।

अमृता०—१००६. अञ्चतेरिति । वृत्तिमाह-अञ्चतीत्यादिना । दिक् शब्दा-दुत्तरतः सप्तम्यादे रिति योज्यम् ।

अमृता०—१००७. उपरीति व्यक्तमेव ।

---

गम्यमानविभ्वधिकारफलभूतपारिभाषिकव्यवस्थामाह धाप्रत्ययमिति । यावत् धाप्रत्ययं तावत् अस्तातिप्रत्ययस्य य एकरूपो विषयस्तस्मिन् विधिर्विधानं ।। १००३ ।।

बाल०—दक्षि । दिग्देशकालेषु वर्तमानाभ्यां दक्षिणोत्तराभ्यामुत्तरस्मात् सप्तम्यादेः परोऽतसिर्भवति । दक्षिणस्यां दिशि वसति दक्षिणस्या दिश आगतः दक्षिणा दिक् रस्येति दक्षिणत इति । एवमुत्तरतः । पूर्ववत् दक्षिणतो वसती त्याद्यपि ज्ञेयं ।।१००४

बाल०—परा । दिग्देशकालेषु वर्तमानाभ्यां परावराभ्यामुत्तरस्मात् सप्तम्यादेः परोऽतसिर्वा स्यात् पक्षे अस्तातिश्च । परस्यां दिशि वसतीत्यादौ वाक्ये परतः परस्तादिति । एवमवरतः अवरस्तात् । पूर्ववत् परतो वसतीत्यादिच ।। १००५ ।।

बाल०—अञ्च । वृत्तिमाह अञ्चतीति दिक्शब्दादुत्तरतः सप्तम्यादेरिति योज्यं । तत्रेति अस्तातो महाहरे सतीत्यर्थः । लक्ष्मी प्रत्ययस्य महाहर इति तद्धितमहाहरे इति शेषः । प्राच्यां दिशि वसतीत्यादौ वाक्ये प्राग्वसतीत्यादि । एवं अवाग्वसतीत्यादि उदग्वसतीत्यादि परागवसतीत्यादिच ।। १००६ ।।

## १००८. अवरस्य पश्चादस्तातौ साधुः ।

पश्चाद् वसत्यागतो रमणीयं वा ।

## १००९. दिक् पूर्वपदस्य च ।

दक्षिणपश्चात्, पश्चभावात् पश्चार्द्धो दक्षिणपश्चार्द्धः ।

## १०१०. उत्तराधर दक्षिणेभ्य आतिः ।

उत्तरात् अधरात् ।

---

अमृता०—१००८. अवरस्येति । अस्तातौ परे अवरस्य पश्चादित्यादिश्यते, निपात्यत इत्यर्थः ।

**अमृता०—१००९.** दिगिति । अस्तातिना सह दिगादै । वर्त्तमानस्य दिग्वाचि पूर्वपदं यस्य तादृशावरस्य च पश्चादिति साधुः स्यात् । पश्चाच्छब्दस्य पश्च भावोऽर्द्धेइत्यादेशं स्मारयति–पश्चभावादिति ।

**अमृता०—१०१०.** उत्तरेति । दिगादौ वर्त्तमानेभ्य उत्तराधर दक्षिणेभ्यः सप्तम्यादेः पर आति प्रत्ययः स्यात्, इराम इत् ।

---

**बाल०**—उप । वृत्तिमाह एताविति । अरि अरिष्टाभ्यां सह दिग्देश कालेषु वर्तमानस्योद्धर्वशब्दस्यैतावुपर्युपरिष्टातौ निपात्येते । निपातनादत्र अर्यरिष्टातौ ऊद्धर्वशब्दस्य उपश्च । ऊद्धर्वायां दिशि वसति ऊद्धर्वाया दिश आगतः ऊद्धर्वा दिक् रमणीयेति वाक्ये उपरि उपरिष्टाद्वसतीत्यादिपूर्ववत् । दिगादेरन्यत्रतु ऊद्धर्वे ब्राह्मणे वसतीत्यादौ न स्यादनभिधानात् । अत्रोद्धर्वशब्दो देशाद्युपलक्षिते ब्राह्मणे वर्तत इति । एवमस्तात्यर्थ इति वृत्तौ सूचनेन अनयोरपि सप्तम्यादेरुत्तरत्र विहितत्वे लब्धे ऊद्धर्वं देशं गत इत्यत्र न स्यात् । एतदुपलक्षणं सप्तम्यादेरन्यतोऽस्तातिप्रभृतयोऽपि पूर्वत्रोत्तरत्रच न भवन्तीति ॥ १००७ ॥

**बाल०**—अव । अस्तातावित्यस्मात् परं विषयेऽयमिति योज्यं । अर्थात् सप्तम्यादेः परस्यास्तातेरातं विधाय, तेन सह दिगादौ वर्तमानस्यावरस्य पश्चादेशेन पश्चात् साधु स्यात् । अवरस्यां दिशि वसतीत्यादौ वाक्ये पश्चाद्वसतीत्यादि ॥ १००८ ॥

**बाल०**—दिक् । पूर्ववदस्तातिना साकं दिगादौ वर्तमानस्य द्विग्वाचि पूर्वपदं यस्य तस्य चावरस्य पश्चात् साधू स्यात् । दक्षिणस्याश्च अवरस्याश्च दिशोर्यदन्तरालमिति वाक्ये दक्षिणपूर्वादयस्तदन्तराले इति पीताम्बरः दक्षिणावरादिक् तस्यां दिशि वसतीत्यादौ वाक्ये दक्षिणपश्चाद्वसतीत्यादि । एवमुत्तरपश्चाद्वसतीत्यादिच यथास्वमूह्यं । पश्चाच्छब्दस्य पश्चभावोऽर्द्धे इत्यनेन विहितः पश्चभावोऽत्र दिक् पूर्वपदस्य भवेन्न वा इत्याशङ्कायामाह पश्चभावादिति । प्रसङ्गात् पूर्वोदाहरणमप्युपन्यस्तं पश्चार्द्ध इति । दक्षिणपश्चाद्दिशोऽर्द्धः दक्षिणपश्चार्द्ध इति ॥ १००९ ॥

## १०११. अदूरे एनोऽपञ्चम्या वा ।

उत्तरात् उत्तरेण वसति रमणीयं वा । अपञ्चम्याः किम्व्रजस्य दक्षिणत आगतः ।

## १०१२. दक्षिणाददूरे आरामः ।

दक्षिणा वसति रमणीयं वा ।

## १०१३. आहिश्च दूरे ।

दक्षिणाहि दक्षिणा ।

---

**अमृता०—१०११.** अदूर इति । अदूरेऽर्थेदिगादौ वर्त्तमानेभ्य उत्तराधरदक्षिणेभ्यः परः अपञ्चम्या उत्तर एनप्रत्ययो वास्यात्, पक्षे आतिश्च । पञ्चम्या-स्तु एनो न, किन्तु पञ्चमीति स्तसिरिति तसि रेव भवतीति दर्शयति—व्रजस्य दक्षिणत इति ।

**अमृता०—१०१२.** दक्षिणादिति । अदूरे दिगादौ वर्त्तमानात् दक्षिणादपञ्चम्या आराम प्रत्ययः स्यात् । दक्षिणस्यां दिशि निकटे वसतीत्यर्थः ।

**अमृता०—१०१३.** आहिरिति । दूरे दिगादौ वर्त्तमानाद् दक्षिणादपञ्चम्या आहि प्रत्ययः स्यात्, चकारात् आरामश्च भवति ।

---

**बाल०—उत्त** । दिगादौ वर्तमानेभ्य उत्तराधरदक्षिणेभ्य उत्तरस्मात् सप्तम्यादेः पर आतिः स्यात् । उत्तरस्यां दिशि वसतीत्यादौ वाक्ये उत्तराद्वसतीत्यादि । अधरस्यां वसतीत्यादौ वाक्ये अधराद्वसतीत्यादि । किञ्च, दक्षिणशब्दस्य काले वर्तनं न सम्भवतीति दिग्देशयोरेव वृत्तिर्गृह्यते । तेन दक्षिणस्यां दिशि दक्षिणस्मिन् देशे वा वसतीत्यादौ वाक्ये दक्षिणाद्वसति रमणीयं वेत्यादि ।। १०१० ।।

**बाल०—अदू** । अत्र प्रकृतिनिर्देशाभावेन पूर्वसूत्रादुत्तरादयोऽनुवर्तन्ते व्यवधान-राहित्यात् । तेनादूरे दिगादौ वर्तमानेभ्य उत्तराधरदक्षिणेभ्यः परस्या अपञ्चम्या उत्तर एनो वा स्यात् पक्षे आतिश्च । अदूरायामुत्तरस्यां दिशि वसतींत्यादौ वाक्ये उत्तरादुत्तरेण वसतीत्यादि एवमधरात् अधरेण वसतीत्यादि, दक्षिणात् दक्षिणेन वसतीत्यादिच । पञ्चमीवर्जनस्य फलं दर्शयति अपञ्चेति । पञ्चम्या उत्तरस्तु एनो न स्यात् । पञ्चमीतस्तसिरिति तसिश्च स्यादित्यभिप्रायः । व्रजस्यादूराया दक्षिणस्या आगत इति व्रजस्येत्यादि ।। १०११ ।।

**बाल०—दक्षि** । अदूरे दिगादौ वर्तमानाद्दक्षिणादुत्तरस्या अपञ्चम्या आरामः स्यात् । अदूरायां दक्षिणस्यां दिशि वसतीत्यादौ वाक्ये दक्षिणा वसतीत्यादि ।। १०१२ ।।

**बाल०—आहि** । दूरे दिगादौ वर्तमानाद्दक्षिणादपञ्चम्या आहिः स्यात्, चशब्दादा-रामोऽपि । दरायां दक्षिणस्यां दिशि वसतीत्यादौ वाक्ये दक्षिणाहि वसतीत्यादि ।।१०१३।।

## १०१४. उत्तराच्च ।

उत्तरा उत्तराहि वसति रम्यं वा । अपञ्चम्या इति निवृत्तम् । उक्ता अस्तात्यर्थाः । एतएवातस्यर्थाः, यैर्योगे षष्ठी, ऐनेन द्वितीया-षष्ठ्यो, अञ्चूत्तरपदादारामाहि योगे पञ्चमी भवेत् ।

## १०१५. क्रिया प्रकार वृत्तेः संख्याया धा ।

पञ्चधा हरिमर्च्चयति सप्तधा ।

## १०१६. द्रव्यविभागे च ।

एकं द्विधा कुरु ।

---

अमृता०—१०१४. उत्तरादिति । तादृशादुत्तराच्च आरामाही भवतः । अस्तात्यर्थान् प्रत्ययान् समापयति—उक्ता इति । उपपदविष्णुभक्तचर्थान् स्मारयति—यैर्योगे षष्ठीत्यादिभिः । अञ्चूत्तर पदादयोऽन्यार्थादिभि र्योगे पञ्चमीत्यत्र प्रपञ्चिताः सन्ति । अतः स्याद्यन्ता अव्ययानीति वक्ष्यते ।

अमृता०—१०१५. क्रियेति । क्रियायाः प्रकारभूता वेदस्वरूपा वृत्ति र्यस्या स्तादृश्याः संख्याया उत्तरे धा प्रत्ययः स्यात् । पञ्च प्रकारान् पञ्चभिः प्रकारै र्वा हरिमर्चयतीत्यर्थे पञ्चधा हरि मर्चयतीति ।

अमृता०—१०१६. द्रव्येति । द्रव्यविभागे गम्यमाने च संख्याया धा भवति । द्विधा कुर्विति द्वि भागं कुरु इत्यर्थः ।

---

बाल०—उत्त । दूरे दिगादौ वर्तमानादुत्तरशब्दाच्चापञ्चम्या आरामाही भवतः । दूरायामुत्तरस्यां दिशि वसतीत्यादौ वाक्ये उत्तरेत्यादि । अस्तात्यर्थान् समापयति उक्ता इति । अतस्यर्थान् प्रतिपादयति एत इति । यैर्योगे षष्ठी । एनेन द्वितीयाषष्ठ्यौ, अञ्चूत्तरपदादारामाहियोगे पञ्चमी भवेत्, एतएवास्तात्यर्था प्रत्ययः ॥ १०१४ ॥

बाल०—क्रिया । प्रकारौ भेदसादृश्ये इत्यमरोक्ताद्द्वयोरेवात्र ग्रहणं । क्रियायाः प्रकारभूता वृत्तिर्यस्यास्तस्याः संख्याया उत्तरो धा भवति । पञ्च प्रकारान् पञ्चभिः प्रकारैर्वा हरिमर्चयतीति पञ्चधा हरिमर्चयतीति । एवं सप्तधा हरिमर्चयतीति । तथा षड्धा चतुर्धा अष्टधा नवधा विंशतिधेत्यादि । डत्यन्तादिश्च संख्यावाचीत्यन्ये । तेन कतिधा यतिधा ततिधा बहुधेत्यादिच । डत्यन्तयत्वन्त-वत्वन्त अप्रचुरार्थबहु असङ्घार्थगणः ॥ १०१५ ॥

बाल०—द्रव्य । द्रव्यविभागेच वर्तमानायाः संख्याया धा स्यात् । एकं द्विभागं कुर्विति एकं द्विधेति ॥ १०१६ ॥

**१०१७. एकधास्थाने ऐकध्यञ्च ।**

साधु । द्विधा-त्रिधा स्थाने द्वेधा-द्वैधमित्यादि च । तसिमारभ्य सर्वमेतदन्तमव्ययम् ।

**१०१८. गर्ह्ये पाशः ।**

हीनो याज्ञिको याज्ञिकपाशः ।

**१०१९. षष्ठाष्टमाभ्यां णरामारामौ भागे ।**

षाष्ठः षष्ठो भागः, आष्टमः अष्टमः ।

**१०२०. पश्वङ्गे भागे षष्ठकः साधुः ।**

---

अमृता०—१०१७. एकधेति । धा प्रत्ययनिष्पन्नो य एकधाशब्दः तस्य स्थाने ऐकध्यमिति च साधुः स्यात्, तथा द्विधा स्थाने द्वेधा द्वैधं, त्रिधा स्थाने त्रेधा त्रैधमिति च साधवः स्युः । तसि प्रभृति प्रत्ययान्ता अव्ययसंज्ञका भवन्तीत्याह—तसिमारभ्येति ।

अमृता०—१०१८. गर्ह्य इति । गर्ह्यं निन्द्यं, तस्मिन् वाच्ये नाम्नः पाश प्रत्ययः स्यात् ।

अमृता०—१०१९. षष्ठेति । भागार्थे वर्त्तमानाभ्यां षष्ठाष्टमाभ्यां णरामारामौ भवतः ।

अमृता०—१०२०. पश्वङ्ग इति स्फुटम् ।

---

बाल०—एक । एकधा स्थाने ऐकध्यञ्च साधु स्यात् । अत्र धाप्रत्ययस्य नृसिंहध्याकरणमेव निपातफलं तस्मिन् सति वृष्णीन्द्रस्तु स्वयमेव सिध्येत् । द्वौ राशी एकप्रकारं करोतीति ऐकध्यं करोतीति । एतदुपलक्षणं । तेन द्विधा त्रिधा स्थाने द्वेधा द्वैधमित्यादिच भवति । इत्यादीत्यादिपदात् त्रेधा त्रैधमिति । अत्र गोविन्दवृष्णीन्द्रौ वृष्णीन्द्रपक्षे धेत्यस्य वामनश्च निपातनफलं । तस्यन्तमवधीकृत्य एतत्पर्यन्तं सर्वमव्ययमिति स्पष्टयन्नाह तसिमिति । किञ्च, अव्यय निरूपणे वदादितद्धित इत्युक्तत्वादेतत्सर्वं वदाद्यन्तर्भूतं ज्ञेयम् ॥ १०१७ ॥

बाल०—गर्ह्ये । गर्ह्यो निन्द्यस्तस्मिन् वर्तमानान्नाम्नः पाशो भवति । येन प्रवृत्तिनिमित्तेन शब्दस्य वृत्तिस्तस्यैव निन्द्यायामयं प्रत्ययस्तदर्थप्रतीतेर्नैकट्यात् । वाक्योदाहरणे स्पष्टे । एवं वैयाकरणपाशः पाचकपाश इत्यादि । यदि यज्ञे प्रवीणः प्रकारान्तरेण गर्ह्यस्तत्रतु न भवति । यथा याज्ञिकः कितवः वैयाकरणश्चोर इति । अत्रार्थेऽपि भवतीतितु रक्षस्पाशानिति भट्टौ दृश्यते । राक्षसत्वेनात्र न निन्द्यः, किन्तु युद्धेनैव । जातेर्निन्दाया अभावात् द्रव्यस्यैव निन्दायां रक्षस् शब्दात् पाश इति भावः ॥१०१८

बाल०—षष्ठा । भागे वर्तमानाभ्यां षष्ठाष्टमाभ्यां णरामारामौ भवतः । षष्ठो भाग इति षाष्ठ इत्यादिद्वयं । एवमाष्टम इत्यादिद्वयञ्च ॥ १०१९ ॥

## १०२१. भूतपूर्वे केशवचरः ।

भूतपूर्वो वैष्णवः वैष्णव चरः ।

## १०२२. षष्ठ्या रूप्यश्च ।

वैष्णवस्यभूतपूर्वो वैष्णवरूप्यो ग्रामः, वैष्णवचरः ।

## १०२३. गुणप्रकर्षयुक्तात्तमेष्ठौ ।

---

अमृता०—१०२१. भूतेति । भूतपूर्वेऽर्थे नाम्नः केशव चरः प्रत्ययः स्यात् । भूतपूर्वं इति प्राग्भूत इत्यर्थः । केशवत्ववदीप्—वैष्णवचरी, अनर्पित चरी भक्ति र्निरुपाधिः ।

अमृता०—१०२२. षष्ठ्या इति । भूतपूर्वे वाच्ये षष्ठ्यन्तनाम्नो रूप्य प्रत्ययः स्यात् चकारात् केशवणश्च ।

अमृता०—१०२३. गुणेति । गुणस्य प्रकर्षं उत्कर्षं स्तेनयुक्तान्नाम्नः तमः इष्ठश्च प्रत्ययौ भवतः । गुण तारतम्यविचारे एकाधिकपात्रस्यावस्थानमावश्यकम् । तत्र द्वयो रेकतरस्य गुणातिशय्ये तरेयसू वक्ष्येते । तम इष्ठश्च बहुवचन विषयक एवेति वाक्यमुखेनोपपादयति—अयमेषामिति । तेन बहूनां मध्ये यस्यैकतरस्य गुणतिशय्यमुच्यते तस्मादेव इमौ भवत इति फलितार्थः । तथा च,—अयं कृष्णः, अयं कृष्णः, अयं कृष्णः इत्येषां मध्ये अयमतिशयः कृष्ण इत्यर्थे कृष्णतम इति । एवमयं पटुः, अयं पटुः, अयं पटुः, इत्येषा

---

बाल०—अश्व । अश्वङ्गे भागे वर्तमानस्य षष्ठस्य करात्रेण सह षष्ठकः साधुः स्यात् । मानरूपे भागेऽयं साधुरित्यन्ये ॥ १०२० ॥

बाल०—भूत । भूतपूर्वेऽर्थे वर्तमानान्नाम्नः केशवचरः स्यात् । प्राग्भूते चरट् इति केषाञ्चित् सूत्रं । पूवभूत इति प्राग्भूत इत्यर्थः एवं वैष्णवचरी अनर्पितचरीत्यादि । सर्वथाऽतीतत्वमत्रार्थो भूतग्रहणात् यत्र भूतस्य वर्तमानताऽस्ति तत्र न भवति । यथा ईश्वरो भूतः प्रागीश्वर आसीदिदानीमप्यस्तीत्यर्थः ॥ १०२१ ॥

बाल०—षष्ठ्या । तत्सम्बन्धिनि भूतपूर्वे वाच्ये षष्ठ्यन्तान्नाम्नो रूप्यः स्यात् केशवचरश्च । वैष्णवस्य सम्बन्धी भूतपूर्वः प्राग्भूतो ग्राम इति वाक्ये वैष्णवरूप्य इत्यादिद्वयं ॥ १०२२ ॥

बाल०—गुण । गुणप्रकर्षयुक्तान्नाम्नस्तमेष्ठौ भवतः । प्रकर्षोऽतिशयोऽत्यर्थं इति पर्यायः । गुणस्य प्रकर्षः गुणप्रकर्षः, तेन युक्तः गुणप्रकर्षयुक्तस्तस्मात् । गुणप्रकर्षयुक्तस्तु समानापेक्षको भवति । तेन बहूनां मध्ये यस्यैकतरस्य प्रकर्षगुणयुक्तत्वं तस्मादेव इमाविति सूचकं वाक्यमाह अयमेषामिति । अयमेषां प्रकर्षः कृष्ण इति शेषः । एवमुत्तरत्रापि । तथाच अयं कृष्णोऽयं कृष्णोऽयं कृष्णोऽयं कृष्ण इत्येषां मध्येऽयमतिशयः कृष्ण इति कृष्णतमः । एवमयं पटुरयं पटुरित्येषां मध्ये प्रकर्षोऽयं पटुरिति पटिष्ठः । अस्मिन् प्रकरणे

अयमेषां कृष्णतमः, अयमेषां पटिष्ठः। अत्रनामजन्य प्रकरणोक्त मनेकसर्वेश्वरस्य संसार हर इत्यादिकं स्मर्त्तव्यम्।

**१०२४. आख्यातात्तमाम्।**

भजतितमाम्।

**१०२५. द्वयोरेकतरस्य गुणप्रकर्षे तरेयसू।**

---

मध्ये अयमतिशयपटुरिति पटिष्ठः। अत्र नामधातु प्रकरणोक्त विधिकतिपयं स्मारयति—अत्र नामजन्येत्यादिना। नामजधातु प्रकरणोक्तमित्यर्थः। तत्र—"णौ इष्ठेमेयःसु" इति परनिमित्ततोक्ते रिह चात्रेच संसारहरादिकं कार्यकतिपयं यथायथमुन्नेयमिति भावः। एवं लघिष्ठः गरिष्ठः वरिष्ठः प्रतिष्ठः म्रदिष्ठ इत्यादय स्तथा लघुतम इत्यादयश्च।

अमृता०—१०२४. आख्यातादिति। बहूनामाख्यातान्तानां मध्ये एकस्य गुण प्रकर्षे गम्ये तस्मादाख्यातान्तात् तमां प्रत्ययः स्यात्। इह चाख्यातस्य गुण प्रकर्षतया तत्र कर्त्तु-रपि प्रकर्षता बोध्या। तेनायं भजति; अयं भजति, अयं भजतीत्येषां मध्ये अयं प्रकर्षण भजतीति भजतितमाम्।

अमृता०—१०२५. द्वयोरिति। द्वयो र्मध्ये एकतरस्य गुण प्रकर्षे गम्ये तरः ईयसुश्च प्रत्ययौ भवतः। स्पष्टानि वाक्योदाहरणानि। द्विभागमात्रपरमिति नतु द्विवचनपरमिति

---

णौ इष्ठेमेयःसु परेषु नामधातुप्रकरणोक्तं विशेषादिकमपि चिन्तनीयमित्याह अत्रेति। नामज-ण्यन्तेत्यनेन नामजधातुर्ण्यन्तो ज्ञेयः, तस्य प्रकरणे उक्त। नामजन्यप्रकरणोक्तमिति पाठः क्वचिद्दृश्यते तथा सति, नामजधातुप्रकरणोक्तमिति ज्ञेयं। इत्यादिकमित्यादिपदेन पृथुमृद्वादेर्ऋ रामस्य रश्च, क्षिप्रस्य क्षेर इत्यादेर्ग्रहणं। अतएव पटिष्ठ इत्यत्र इष्ठे परे पटुशब्दस्य संसारहरः। एवं कृष्णेष्ठः पटुतम इतिच। तथा शुक्लतमः लघिष्ठ इत्यादि॥१०२३

बाल०—आख्या। आख्यातपदेनात्राख्यातान्तो गृह्यते, केवलाख्यातस्य प्रयोगा-सम्भवात्। तेन बहूनामाख्यातान्तानां मध्ये एकस्य गुणप्रकर्षत्वे गुणप्रकर्षयुक्तादाख्या-तान्तात् तमां स्यात्। यद्यपि क्रियाया गुणविशेषत्वात् न गुणागुणवृत्तय इत्युक्तदिशा गुणप्रकर्षयुक्तता न घटते, तथापि तदाश्रयकर्तुर्भजनादिनैगुण्यगुणप्रकर्षयुक्तत्वस्योपचारात् तद्युक्तत्वं सम्भवतीति ज्ञेयं। अतएव अयं भजति अयं भजतीत्येषां मध्येऽयं प्रकर्षेण भजतीति भजतितमां। एवं पचतितमां पठतितमामित्यादि। न केवलमयं वर्तमानेऽपितु भूतभविष्यतोरपीति अभूत्तमां बभूवतमां भवितातमां भविष्यतितमामभविष्यत्तमा-मित्यादिच॥ १०२४॥

बाल०—द्वयो। द्वयोर्मध्ये एकतरस्य गुणप्रकर्षे सति तद्युक्तात् तरेयसु भवतः। पूर्ववदत्रापि द्वयोर्मध्ये एकतरस्य गुणप्रकर्षयुक्तत्वसूचकं वाक्यमाह अयमिति। अयमनयोः प्रकर्षो वैष्णवो इति, तथाच अयं वैष्णवः अयं वैष्णवः इत्यनयोर्मध्ये प्रकर्षोऽयं वैष्णवः वैष्णवतरः। एवं पटुतरः पटीयानीति। अत्रापि पूर्ववत् पटुशब्दस्य संसारहरः। तथा

अयमनयो र्वैष्णवतरः पटुतरः पटीयान् । द्वयो रिति द्विभाग मात्रपरं, तेन पञ्चमीपक्षेऽपि श्रोघ्नेभ्यो माथुरा आढ्यतराः ।

## १०२६. आख्यातात्तराम् ।

भजतितरां : इष्टेयसू गुणवचनादेव, तथैवोदाहृतम् । विन्म-त्वो र्हर इति इष्टेयस्वोरपि दर्शितत्वादगुणवचनेभ्योऽपि तौ ज्ञाप्यौ । यथा—

---

भावः । अतो द्वयो र्भागयोर्मध्ये एकभागस्य एकत्वे बहुत्वे वा तरः स्यादेवेति फलितम् । तेन श्रोघ्नस्य इत्याद्युदाहरणे बहुत्वेऽपि तर प्रत्ययस्य प्रयोगो न दोषावह इति विवेकः ।

अमृता०—१०२६. आख्यातादिति । द्वयो राख्यातान्तयो र्मध्ये एकतरस्य गुणप्रकर्षे सति तदाख्यातान्तात् तरां प्रत्ययः स्यात् । स्फुटमेव सर्वं मूले । केवलगुणवचनादेव इष्ठेयसूभवत इति स्वाभिप्रायमाह—इष्ठेयसू इति । जाति-संज्ञयोस्तु गुणवाचित्वाभावान्न

---

वैष्णवीयानित्यपि । ननु यदि द्वयोरेकतरस्य गुणप्रकर्षे तरेयसु इति भवता विहित र्तहि कथं श्रोघ्नेभ्यो माथुरा आढ्यतरा इति बहुत्वे तरः, इति प्रश्ने सिद्धान्तमाह द्वयोरिति । द्वयोरिति पदं द्विभागमात्रपरं नतु द्विवचनपरमित्येताद्विभागयोर्मध्ये एकतरभागस्यैकत्वे बहुत्वेऽपि तरो न दोषायेति भावः । तेनेति द्विभागमात्रपरत्वेन हेतुनेत्यर्थः । पञ्चमीपक्षेऽपीत्यनेनतु षष्ठीसप्तम्योर्निर्द्धारणे तर इत्याशङ्कापि निराकृता । पञ्चमी चात्र सामान्यतो विशेषस्य निर्द्धारणे षष्ठीसप्तम्यौ विशेषतश्चेत् पञ्चम्येवेत्यनेन ज्ञेया ॥ १०२५ ॥

बाल०—आख्या । द्वयोराख्यातान्तयोरेकतरस्य गुणप्रकर्षे तद्युक्तादाख्यातान्तात् तरां स्यात् । आख्यातात्तमामित्यत्र यदुक्तं तत्सर्वमत्रापि योज्यं । तेन अयं भजति अयं भजतीत्यनयोर्मध्ये प्रकर्षेणायं भजतीति भजतितरामित्यादि । केवलगुणवचनादेवेष्ठेयेसु भवत इति स्वाभिप्रायमाह इष्ठ इति । एवशब्दात परं हेत्वर्थं इति शब्दः प्रयोक्तव्यः । इति तथैवोदाहृतं पटिष्ठः पटीयानित्येवोदाहृतं । गुणविशिष्टत्वेन केवलगुणवाचित्वाभावात् कृष्णेष्ठः वैष्णवीयानितितु नोदाहृतं । मयातु गुणविशिष्टस्यापि गुणगुणिनोरभेदविवक्षया गुणवाचित्वप्रतिपादनात् कादाचित्कप्रयोगदर्शनाच्चोदाहृतमिति । ज्ञातिसंज्ञयोस्तु गुणवाचित्वाभावेन गुणप्रकर्षयुक्तत्वाभावात् गोतमः देवदत्ततमः ब्राह्मणतरः डित्थतरः इत्यादि न स्यात् । यद्यत्रापि क्रियागुणप्रकर्षो विधीयते तदा तमतराभ्यां भवितव्यमेव । तेन गौरीतमा कुमारीतमा शबलीतरा ब्राह्मणीतरेत्यादि यथास्वं स्यात् । ननु भवतु नामैतदादिकं तमादीनां स्वार्थिकत्त्वेन गौरीतमादेरुत्तरोऽणकेशवगौरादिभ्य इत्यनेन अरामान्तजातेरित्यनेनच ईप् कथं न स्यात् । सत्यं, श्रूयतां । अचरमवयस्काः सर्वे गौरादय इत्युक्तमित्यतो रूढ्या येऽचरमवयोवचना वर्णजातिवचनाश्च तेभ्य एव ईप्प्रत्ययः स्यात् । यतो नतु तमतरान्तादयोऽचरमवयःप्रभृतिषु रूढा अत एभ्यो न ईप् अजादेराकृतिगणत्वात्तु आवेव । किञ्च, गुणप्रकर्षप्रत्ययान्तात् पुनर्गुणप्रकर्षे द्योत्ये स्वरूपप्रत्ययो नेष्यते विरूपप्रत्ययस्त्विष्यत एव । यथा कुरूणां युधिष्ठिरः श्रेष्ठतम इत्यादि । श्रीगोस्वामिपादस्तु

अयमेषां सृजिष्ठः, अयमनयोः सृजीयान् । एवमोजिष्ठः ओजीयान्, त्वचिष्ठः त्वचीयान्, धर्मिष्ठश्च ।

## १०२७. प्रशंसायां रूपः ।

वैष्णवरूपः पण्डितरूपः ।

---

तौ, तेन गोतमः विष्णुदासतम इत्यादिकं न प्रयोक्तव्यम् । परमतं मनसिकृत्य ज्ञापकत्वमाचष्टे—विन्मत्वोरिति । नामधातुप्रकरणे यत्कार्यमुक्तं विन्मत्वोर्हरइत्यादि, तत्र परनिमित्तं णौइष्ठेमेयःसु इति, अत इष्ठेयस्वोरपि विन्मत्वो र्हरदर्शनात्, मतु विनिश्च पुनरगुणवचनाद् भवतीति लब्धात्, इष्ठेयसू चागुणवचनाच्च स्यादेवेति ज्ञाप्यत इति भावः। तथोदाहृतं—अयमेषामित्यादिना ।

अमृता०—१०२७. प्रशंसायामिति । प्रशंसा स्तुतिः, तदर्थे वर्त्तमानान्नाम्नो रूप प्रत्ययः स्यात् । वैष्णवरूप इति प्रशंसायोग्यो वैष्णव इत्यर्थः ।

---

इष्ठेयेषू इत्यत्र नियमं विधाय तथैवोदाहृतमित्युक्त्वापि एतदादिकं परमतं हृदि निधाय तत्रारुचिः सन् ज्ञापकमाह विन्मत्वोरिति । विन्मत्वोर्हर इत्यत्र णौ इष्ठेमेयःस्विति परनिमित्तेषु इष्ठेयस्वोरपि दर्शितत्वात् अगुणवाचिभ्योऽपि ताविष्ठेषु ज्ञाप्यौ भवत इत्यर्थः । एतएवागुणवचनात् तौ यथोदाह्रियेते इत्याह यथेति । अयमेषामिति । अयं स्रग्वीत्येषां मध्येऽयं प्रकर्षः स्रग्वीति स्रजिष्ठः । अयमनयोरिति । अयं स्रग्वी अयं स्रग्वीत्यनयोर्मध्येऽयं प्रकर्षः स्रग्वीति स्रजीयान् । एवमिति अयमेषां प्रकर्ष ओजस्वीति ओजिष्ठः । अयमनयोः प्रकर्ष ओजस्वीति ओजीयान् । अयमेषां प्रकर्षस्त्वग्वानिति त्वचिष्ठः । अयमनयोः प्रकर्षस्त्वग्वानिति त्वचीयान् । धर्मिष्ठश्चेति । अयमेषां प्रकर्षो धर्मवानित्यर्थः । तथा अयं धर्मवान् अयं धर्मवान् अयं धर्मवानित्येषां मध्येऽयं प्रकर्षो धर्मवानितिच । किञ्च, नामधातुप्रकरणे तत्करोत्याद्यर्थे णिविधौ प्रकरणस्यास्य प्रासङ्गिकत्वात् तत्र यद्यदुक्तं । तत्सर्वमिहाप्यातीति प्रशस्यस्य श्रज्यौ वृद्धस्य वर्षज्यावित्यनेन इष्ठादौ श्रेष्ठः श्रेयान्, वर्षिष्ठः वर्षीयान्, ज्येष्ठः ज्यायानित्याद्यपि यथासम्भवं स्यात् । किन्तु, सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः । इति श्रीहरिभक्तिरसामृतसिन्धौ ज्यायानिति दर्शनात्, ज्यायानित्यस्य ज्यायान् वा साधुरिति वक्तव्यः । श्रीमज्जीवगोस्वामिपादानां तथैवानुमतत्वाच्च यतस्तत्र पद्ये तथाभूतप्रयोगं दृष्ट्वाप्यत्र विशेषो न कृतः । अन्येतु प्रशस्यवृद्धयोर्ज्यादेशं कृत्वा नित्यमीयसोराबिलोपमाहुरिति ॥ १०२६ ॥

बाल०—प्रशं । प्रशंसा स्तुतिः । प्रकृतिविशेषणञ्चैतत् । तेन प्रशंसस्यविशिष्टेऽर्थे वर्तमानान्नाम्नो रूपः स्यात् । अगृहीतार्थविशेषाः प्रत्ययाः प्रकृत्यर्थं विशेषयन्तीत्यतः प्रकृत्यर्थस्यैव ये लिङ्गवचने ते विशेषणस्यापि भवत इति । प्रशस्तः वैष्णवः वैष्णवरूप इति । एवं प्रशस्तः पाण्डितः पण्डितरूप इत्यादि ॥ १०२७ ॥

## १०२८. आख्याताच्च ।

पचतिरूपं, अत्र ब्रह्मत्वमेव ।

## १०२९. ईषदसमाप्तौ कल्प-देश्य-देशीयाः ।

वैष्णवकल्पः पण्डिदेश्यः ।

## १०३०. आख्याताच्च ।

भजतिकल्पं । स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिक्रान्ता अपीति,

---

अमृता०—१०२८. आख्याताच्चेति । प्रशंसाविशिष्टेऽर्थे वर्त्तमानाख्याताच्च रूप प्रत्ययः स्यात् । प्रशस्तं पठतीति पठति रूपम् । अस्य क्रिया विशेषणत्वं ख्यापयितुमाह—अत्रब्रह्मत्वमेवेति । क्रिया विशेषण कर्म, तच्च ब्रह्मैकवचनं सदानुक्तञ्चेति वचनबलादिति भावः ।

अमृता०—१०२९. ईषादिति । ईषदसमाप्तौ किञ्चिन् न्यूनेऽर्थे कल्प-देश्य-देशीयाः प्रत्यया भवन्ति । किञ्चिन्न्यूनो वैष्णवकल्पः । एवं वैष्णवदेश्यः वैष्णवदेशीय इति ।

अमृता०—१०३०. आख्यातादिति । ईषदसमाप्तौ वर्त्तमानादाख्यातान्ताच्च कल्प-देश्य-देशीया भवन्ति । किञ्चित् न्यूनं भजतीत्यर्थे भजति कल्पं एवं भजति देश्यं

---

बाल०—आख्या । प्रशंसाविशिष्टेऽर्थे वर्तमानादाख्यातान्ताच्च रूपः स्यात् । प्रशस्तं पठतीति पठतिरूपं । एवं प्रशस्तं पठतः पठन्तीति पठतोरूपं पठन्तिरूपमित्यादि । क्रियाविशेषणं कर्म तच्च ब्रह्मैकवचनं सदानुक्तञ्चेत्यनेन क्रियाविशेषणस्य ब्रह्मत्वस्यैव सम्भवादाह अत्रेति । अगृतीतार्थविशेषप्रत्ययानां प्रकृत्यर्थविशेषकरणत्वेन विशेषणत्वे सिद्धे ब्रह्मत्वमेवेति भावः । क्रिया धात्वर्थ इत्युक्तं, साच द्विधा, साधकरूपा, इत्यपि प्रकारान्तरेणोक्तश्च । अत्रतु गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न्यायेन साधकरूपाया एव ग्रहणात् स्वार्थिक प्रत्ययानां तस्या एव विशेषणत्वं नतु साधनरूपायाः, अतएव सत्तादिक्रियावाचि-भूप्रभृतिधातूनां कर्त्रादिवाच्यभेदेन द्वित्वे बहुत्वेऽपि केवलसत्तादिरूप-साध्यक्रियाया एकत्वात् तस्याः फलभूताया एकरूपकर्मविशेषणात् रूपप्रत्ययान्तादेकवचन-मेव द्विबहुवचने न भवत इति ॥ १०२८ ॥

बाल०—ईष । ईषदसमाप्तिर्मनागूना किञ्चिन्न्यूना इति यावत् । ईषदसमाप्तौ वर्तमानान्नाम्नः कल्पदेश्यदेशीया भवन्ति । किञ्चिन्न्यूनो वैष्णव इति वैष्णवकल्पः । किञ्चिदल्पत्वप्रवृत्तिनिमित्तो वैष्णवोऽत्रोच्यते । एवं वैष्णवदेश्यः वैष्णवदेशीयः । तथा ईषदसमाप्तः पण्डित इति पण्डितदेश्यः पण्डितकल्पः पण्डितदेशीय इत्यादि ॥ १०२९ ॥

बाल०—आख्या । ईषदसमाप्तौ वर्तमानादाख्यातान्ताच्च कल्पदेश्यदेशीया भवन्ति । ईषन्न्यूनं भजतीति भजतिकल्पं । किञ्चिदल्पप्रवृत्तिनिमित्ता भजनक्रियात्रोच्यते । एवं

विष्णुकल्पा लक्ष्मीः, दर्शनकल्पा हरेः स्फूर्त्तिः, दृष्टिकल्पं हरेः स्फुरणम्।

**१०३१. स्वादयन्तात् प्राग्बहु र्वा कल्पार्थे।**

बहुनारायणा लक्ष्मीः, लघु र्बहुतृणं नरः। पक्षे नारायण-कल्पा इत्यादि।

---

भजतिदेशीयमित्यादि। स्वार्थिकाः प्रत्ययाः सामान्यतः प्रकृतिलिङ्गवचनानि भजन्ति क्वचित्तु तद् व्यभिचरन्तीत्याह—स्वार्थिका इति।

अमृता०—१०३१. स्वाद्यन्तादिति। कल्पार्थे (इषदसमाप्तावर्थे) वर्त्तमान स्वाद्यन्तात् प्राक् पूर्वं बहु पत्ययो वा स्यात्। अपूर्व प्रकारोऽयं प्रत्ययः, यतो नियम साधारणं सर्वत्र—प्रत्ययः पर इति, अत्र तु तद व्यभिचारात् प्रकृतेः पूर्वमेव बहु प्रत्ययो भवतीति। बहु नारायणेति नारायणकल्पेत्यर्थः। बहुतृणं तृणकल्पो लघुरित्यर्थः। पक्षे कल्पादयोऽपि सुरित्याह—पक्षइति।

---

भजतिदेश्यं भजतिदेशीयं भजतोदेश्यं भजन्तिदेश्यमित्यादि। अत्रापि रूपप्रत्ययान्तवत् लिङ्गवचनकल्पनं योज्यं। स्वार्थिकप्रत्ययानां प्रकृतिलिङ्गवचनवत्त्वस्य क्वचिद्व्यभिचारोऽपि भवतीति सूचयन्नाह स्वार्थिका इति। प्रकृतित इति षष्ठ्यास्तसिस्तेन स्वार्थिकाः प्रकृतेर्लिङ्गवचनान्यतिक्रान्ता अपि भवन्तीति हेतोर्विष्णुकल्पेत्यादौ लक्ष्मीलिङ्गत्वादीत्यर्थः। विष्णुकल्पालक्ष्मीरित्यत्र लक्ष्म्यामौपचारिकस्य विष्णुत्वस्य किञ्चिन्न्यूनत्वमिति विष्णोः किञ्चिन्न्यूना लक्ष्मीरिति, तस्य सदृशेति निर्गलितोऽर्थः। एवं दर्शनकल्पेत्यादावपि। वाक्यमर्थञ्च यथायथमूह्यं। अत्र त्वत्कल्पः पचति त्वत्कल्पो वैष्णवाचार्यः पाचयतीत्याद्यपि कश्चिदुदाहरतीति ॥ १०३० ॥

बाल०—स्वाद्य। कल्पार्थे वर्तमानात् स्वाद्यन्तान्नाम्नः प्राक पूर्वं बहुप्रत्ययो वा स्यात्। पञ्चमीच तदुत्तरे इत्यस्य बाधनार्थं प्रागित्युपन्यस्तं। बहुनारायणा लक्ष्मीरिति नारायणात् किञ्चिन्न्यूना लक्ष्मीरित्यर्थः। लघुर्बहुतृणं नर इति (माघे २। ५०) तृणादपि लघुः क्षुद्रो नर इत्यर्थः। स्वार्थिका इत्यनेन स्वार्थिकप्रत्ययानां प्रकृतिलिङ्गवचनातिक्रमणानतिक्रमणत्वं यदुक्तं तदेव स्पष्टयितुमुदाहरणद्वयं दर्शितं। तेन पूर्वत्र प्रकृतिलिङ्गवचनयोरतिक्रमणात् लक्ष्मीलिङ्गता परत्र तयोरनतिक्रमणाद्ब्रह्मलिङ्गतेति। ननु बहु ददाति बहु करोतीत्यादौ किञ्चिदूनार्थे बहुशब्दो दृश्यत एव। तेन समासेनैवाभीष्टप्रयोगसिद्धत्वात् सूत्रमिदं व्यर्थमिति यत् तदसत्, यतो गर्तोत्तरपदात् छप्रत्ययेन बहुगर्तीय इत्येव स्यात्, केशवणरामेणतु बाहुगर्त इति न स्यात्। बहुपत्या इत्यत्र समासे निषेधाभावात् हरिसंज्ञत्वे हरितष्टा नेत्यनेन नादेशः स्यात्। बहुराजा बहुगौः बहुपन्था इत्यादौ राजाहःसखिभ्य इत्यादिना समासान्तः केशवारामः स्यात्। बहुसर्पिष्पात्रमित्यत्रोत्तरपदस्थत्वात् विष्णुसर्गस्य यरामो न स्यात्। एतदेव चान्द्रादीनामपि मतं। सूत्रे वाशब्दोपादानात् पक्षे कल्पादयोऽपि भवन्तीत्याह पक्ष इति। इत्यादीत्यादिपदेन नारायणदेश्या नारायणदेशीयेति ॥ १०३१ ॥

## १०३२. प्रकारवति जातीयः ।

वैष्णवप्रकारवान् वैष्णवजातीयः । तथा जातीयः तज्जातीतः ।

## १०३३. प्रागिवीयात् कः, अव्यय-कृष्णनाम्नोस्तु संसारात् प्रागक् कस्य च दः, तत्र स्वाद्यन्तस्य संसारात् प्रागक् ओराम-सराम-भरामादि वर्जम् ।

प्रभुरयम् । कस्य च द इति यथासम्भवं सहजस्यान्तिमकरामस्येति ज्ञेयम् । उच्चकः नीचकैः, धिक्धकित्, पृथक्–पृथकत् । सर्वके विश्वके,

---

अमृता०—१०३२. प्रकारेति । प्रकारः सामान्यस्य भेदको धर्मः । प्रकारवति वर्त्तनानान्नाम्नो जातीय प्रत्ययो भवति ।

अमृता०—१०३३. प्रागिति । अधिकार सूत्रं विधिसूत्रञ्चेदम् । इव सम्बन्धीयः इवीयः । इवीयार्थात् प्रागर्थे नाम्नो यथास्वं क प्रत्ययः स्यात् । इवात् प्रागर्थे अव्यय–कृष्णनाम्नोस्तु संसारात् प्राग् अक् प्रत्ययः स्यात्, तयोरव्यय·कृष्णनाम्नोः कस्य च द आदिश्यते । तत्रापि विशेषमाह—स्वाद्यन्तस्येति । ओराम-सराम-मरामा आदयो यस्य

---

बाल०—प्रका । प्रकारः सामान्यस्य भेदको धर्मः सतु द्रव्याश्रितः, यथा वैष्णवत्वादि । प्रकारवति वर्तमानान्नाम्नो जातीयः स्यात् । वाक्योदाहरणे दर्शयति वैष्णवेति । प्रकारार्थे थादय उक्ता अयन्तु प्रकारवतीति विषयभेदात् प्रकारवत्यर्थे तथाशब्दादपि जातीयो भवत्येव । एवमस्मिन्नर्थे तदादेरुत्तरस्य जातीयस्य तैर्बाधोऽपि न स्यादित्युदाहरणद्वयमाह तथेति । तथा प्रकारवान् तथाजातीय इति तत्प्रकारवान् तज्जातीय इति । एवं यथाजातीयः यज्जातीय इत्यादिः ।। १०३२ ।।

बाल०—प्रागि । इवीयार्थात् प्रागर्थे नाम्नो यथास्वं कः स्यात् । प्रभुरयमिति गम्यं । अव्य । इवात् प्रागर्थेऽव्ययकृष्णनाम्नोस्तु सम्बन्धिनः संसारात् पूर्वस्मिन् अक्प्रत्ययः स्यात्,- तयोः कस्यच दश्च । तत्र । ओराम-सराम भरामा आदयो यस्य संसारस्य तं वर्जयित्वा ओराम-सराम-भरामादिवर्जं । युवयोरावयोरित्यादौ विष्णुसर्गमपेक्ष्य ओरामस्यादित्वं । अन्तरालपाठात् विष्णुसर्गस्य सर्वेश्वरत्वेन संसारत्वञ्च । तत्राव्यय·कृष्णनाम्नोर्मध्ये ओरामसरामभरामादिरूपं संसारं वर्जयित्वा स्वाद्यन्तस्य संसारात् पूर्वमक् स्यात् । प्रभुरयमित्यत्र प्रभुश्चायमिति योज्यं विध्यंशस्यापि सम्भवात् । कस्यच द इत्यस्य दुष्पष्टत्वात स्वयं विवृणोति कस्येति । अर्थान्तरस्यानुक्तत्वादत्र स्वार्थेऽयं प्रत्यय इति ज्ञेयं । तेन उच्चैरेव उच्चकैः, नीचैरेव नीचकैः, धिक्धिगेव धिक्धकित्, पृथक्पृथगेव पृथक्पृथकदिति । शेषद्वयेऽत्र सहजान्तिम·करामस्यदरामो वीप्सया द्विरुक्तिश्च, ततो विष्णुदासस्य हरिकमलं वेत्यनेन तरामः । सर्वे एव सर्वके । एवं विश्वके इति । इदानीं स्वाद्यन्तस्योदाहरणान्याह त्वयैव त्वयकेत्यादि ओरामेत्यस्य विवरणपूर्वकमुदाहरणान्याह

त्वयका मयका, त्वयकि मयकि। तुरामादि परत्ववर्जनादिह नाम्न एव संसारात् प्रागक्। युवकयोः आवकयोः, युष्मकासु अस्मकासु, युष्मकाभिः अस्मकाभिः। गौणत्वेन कृष्णनामत्वाभावादत्र नाक्—त्वं पिता यस्य स त्वत्पितृकः, नतु त्वकत्पितृकः। नाममात्रस्य वाच्यत्वात् समासेऽन्यपदार्थ प्रधानत्वात् गौणत्वम्। आख्यातस्य च दृश्यते-जल्पतकि।

## १०३४. अत्र वचे र्निजेश्च भूतेश्वरे।

अवक् अवकक् अनेनेक अनेनकेक्। अत्र कस्य दो नेष्यते।

---

संसारस्य तंतं वर्जयित्वा स्वाद्यन्तस्य संसारात् प्रागक् भवतीत्यर्थः। अस्पष्टत्वात् कस्य च द इत्यादिष्ट विवृणोति—सहजस्येति। स्वार्थे एवायं प्रत्ययः, उच्चैरेव उच्चकै रित्यादि। धिक्धिगेव धिक् धकित्। गौणत्वमिति—कृष्णनाम्न इति शेषः। दृश्यत इति—अक् प्रत्यय इत्यर्थः।

**अमृता०**—१०३४. अत्रेति। अत्राख्यातेषु मध्ये भूतेश्वरे प्रयोगे वचे र्निजेश्च संसारात् प्रागक् स्यात्। वचेः—अवक् एव अवकक्। निजेः—अनेनेक् एव अनेनकेक्। कस्य दो नेष्यत इति—सहजत्वाभावात्, चवर्गजातत्वादित्याशयः।

---

ओरामेति। ओरामादिभ्यः परो यः संसारः स ओरामादिपरः तस्य भावः ओरामादिपरत्वं तस्य वर्जनं ओरामादिपरत्ववर्जनं तस्मात्। एतदेव सुदन्तपादे, किन्तु त्रिसर्वेश्वरत्वे मध्यसर्वेश्वरात् प्रागक् इत्यनेनोक्तं। युवयोरेव युवकयोरित्यादि। समासादिना गौणत्वेन कृष्णनामत्वाभावस्तस्मादेवच स्वार्थाभावात् स्वार्थिकोऽयमत्र न स्यादित्याह गौणेति। तत्पितृक इत्यत्र पीताम्बरे कप्रत्ययः। युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरित्यनेन त्वदादेशश्च। व्यावर्तकं पदमाह नत्विति। गौणत्वं प्रतिपादयति नामेति। समासेऽन्यपदार्थ-प्रधानत्वेन नाममात्रस्य वाच्यत्वात्। कृष्णनाम्नो गौणत्वमित्यर्थः। आख्यातान्तस्यापि लिङ्गधर्मत्वाभावेनाव्ययान्तःपातादयं स्यादित्याह आख्यातेति। दृश्यत इति अगिति शेषः। जल्पत्येव जल्पतकीत्यादि ॥ १०३३ ॥

**बाल०**—अत्र। अत्रेत्याख्यातेषु मध्ये भूतेश्वरे प्रयोगे वचेर्निजेश्च संसारात् प्रागक् स्यात्। अवगिति वच परिभाषणे इत्यस्मात् भूतेश्वर-दिप् अदादेः शपो महाहर इति शपो महाहरः। धातोः पूर्वमदित्यनेनादागमः। विष्णुजनाद्दिस्योर्हर इति दिप्सिपोर्हरः। ततः अवगेव अवकक्। अनेनेगिति। निजिर् शौचे जुहोत्यादेरद्यन्तर्गणत्वात् भूतेश्वरदिवादि-पूर्ववत्। किञ्च, जुहोत्यादेः पूर्ववद्द्विर्वचनं शब्लुकीत्यनेन द्विर्वचनं। निजि-विजि-विषां नरस्य गोविन्दः कृष्णधातुकमात्रे इत्यनेन नरस्य गोविन्दः। लघुद्धवस्येत्यनेनतु नारायणस्य गोविन्दः, ततः अनेनेगेव अनेनकेक् इति। अत्र कस्यच दो नेष्यते सहजत्वाभावादिति शेषः ॥ १०३४ ॥

**१०३५. तूष्णीम स्तूष्णीका साधुः ।**

तूष्णीकामासते विज्ञाः । अथ तत्रार्थ नियमाः ।

**१०३६. अज्ञातवैशिष्ठ्ये ।**

न ज्ञायते कस्यायं वैष्णवः वैष्णवकः । अज्ञात उच्चैरीदृशस्तादृशो वा उच्चकैः । अज्ञातासौ कस्य कीदृशी वा असकौ । एवं सर्वके विश्वके, भजतकि, कस्य च दः पृथकत् ।

**१०३७. कुत्सिते ।**

अत्र च काकौ । कुत्सितोऽश्वः अश्वकः; उच्चकैः सर्वके भजतकि ।

---

अमृता०—१०३५. तूष्णीम इति । काम् प्रत्ययेन सह तूष्णीमित्यव्ययस्य तूष्णीकामिति निपातः स्यात् । अथ तत्र क प्रत्ययाधिकारे अर्थ नियमा उच्यन्त इत्यर्थः ।

अमृता०—१०३६. अज्ञातेति । न ज्ञायते वैशिष्ट्य यस्य तस्मिन्नर्थे वर्तमानस्य नाम्नः कः स्यात्, तथा तादृशार्थ युक्तस्याव्ययस्य कृष्ण नामश्च तथाख्यातस्य च सम्बन्धे संसारात् प्रागक् स्यात् । स्पष्टान्युदाहरणानि ।

अमृता०—१०३७. कुत्सित इति । कुत्सितेऽर्थे वर्त्तमानेभ्यो नामाव्यय कृष्णनामाख्यातेभ्यः काको भवतः । तत्र नाम्नः कः, तदितरेभ्यस्तु अक् इति बोध्यम् ।

---

बाल०—तूष्णी । काम्प्रत्ययेन सह तूष्णीम्शब्दस्य मरामहरेण तूष्णीकामिति साधु स्यात् । तूष्णीकामित्यस्य मान्ताव्ययत्वात् तूष्णीकामासते विज्ञा इति तूष्णीकां यथा स्यात्तथा तिष्ठन्तीत्यर्थः । अथेति अथानन्तरमिदानीं तत्राक्प्रत्ययविषयेऽर्थनियमा दर्श्यन्त इत्यर्थः ॥ १०३५ ॥

बाल०—अज्ञा । विशिष्टस्य भावः वैशिष्ट्यं, न ज्ञातं वैशिष्ट्यं यस्य तस्मिन्नर्थे वर्तमानस्य नाम्नः सम्बन्धे कोऽव्ययस्य कृष्णनाम्नस्तथाख्यातस्यच संसारात् प्रागक् स्यात् । वाक्योदाहरणानि क्रमेणाह न ज्ञायत इत्यादि । अत्र वाक्यस्था ईदृशादयस्त्रयः कप्रत्ययान्ता ज्ञेयाः । यथा तत्सूत्राणि । समाने कर्मण्यन्यतदादिषुच कर्मोपमानेषु दृशः कः क्विप् सकः कर्मणि । समानस्यच सः । अन्यादेरिवेन सह संसारस्यारामो दृशादिषु । इदम ईश् किमः कीश् अदसोऽमूश् । अयमिव दृश्यतेऽसौ इत्यादिवाक्ये ईदृश इत्यादि यथास्वं । एवमिति न ज्ञायन्ते कस्येमे सर्वे सर्वके इति । तथा विश्वके यके तके इत्यादि । न ज्ञायते कोऽयं कीदृशं भजति भजतकीत्यादि । न ज्ञातं पृथगीदृशं तादृशं वा पृथकदिति ॥ १०३६ ॥

बाल०—कुत् । कुत्सितो निन्द्यः । अस्मिन्नर्थे वर्तमानेभ्यो नामादिभ्यः काकौ भवत इत्यस्य सूचकं विवरणमाहात्र चेति । यद्यप्यत्र सामान्येन काकाविरयुक्तं । तथापि यावत् सम्भवस्तावद्विधिरिति न्यायेन कुत्सिते वर्तमानान्नाम्नः कः स्यात्, तथा अस्मिन्

## १०३८. संज्ञायाम् ।

काकौ । शूद्रक इति कस्यचिद् राज्ञोनाम ।

## १०३९. अनुकम्पायाम् ।

काकौ । वैष्णवको दुर्बलकः । सर्वके भजतकि ।

## १०४०. एवं नीति-दान-मानितयोरपि ।

गोपायकेद्धनायुषी । सुवर्णं गृहीत्वा सुखं तिष्ठक इति ।

---

अमृता०—१०३८. संज्ञायामिति । संज्ञायां वर्त्तमानेभ्यो यथा सम्भवं नामादिभ्यः तौ प्रत्ययो भवतः ।

अमृता०—१०३९. अन्विति । अनुकम्पायां करुणायां वर्त्तमानेभ्यो नामाव्यया-दिभ्यो यथा सम्भवं काकौ भवतः ।

अमृता०—१०४०. एवमिति । दानेन मानितः दानमानियः, नीतिश्च दानमनितश्च ते, तयोरर्थयो र्वर्त्तमानेभ्यो नामादिभ्यः काकौ स्याताम् । गोपायकेदिति—स्वेष्टं मन्त्रं गुरुञ्चापि गोपायकेद्धनायुषी इत्युक्तं नीतिशास्त्रे । सुवर्णं गृहीत्वा सुखं तिष्ठेति दानमानितम् ।

---

वर्तमानानामव्ययादीनां संसारात् प्रागक् स्यादिति ज्ञेयं। एवमुत्तरत्रापि। नाम्नो वाक्योदाहरणे स्पष्टे। कुत्सितमुच्चैरुच्चकैरिति। एवं कुत्सिताः सर्वे कुत्सितं भजतीति सर्वके इत्यादिद्वयं। पूर्ववदत्राऽपि पृथकत् यके तके इत्यादयो ज्ञेयाः ॥ १०३७ ॥

बाल०—संज्ञा। संज्ञायां वर्तमानेभ्यो यथासम्भवं काकौ भवतः। शूद्रनामा कश्चिद्राजा शूद्रक इति। एवं सर्वकः शिवः, दक्षिणकः प्रवीणः इत्यादि ॥ १०३८ ॥

बाल०—अनु। कारुण्येनाभ्युपपत्तिरनुकम्पा, अस्यां वर्तमानेभ्यो नामादिभ्यो यथास्वं काकौ भवतः। अनुकम्पितो वैष्णवः वैष्णवक इति। अनुकम्पितो दुर्बलो दुर्बलक इति। एवं सर्वके यके तके इत्यादि। अनुकम्पितं भजति भजतकीति। एवं अवकक् अनेनकेक् इत्यादि ॥ १०३९ ॥

बाल०—एवं। एवमुक्तप्रकारेण नीतिदानमानितयोरपि वर्तमानेभ्यो नामादिभ्यो यथायथं काकौ भवतः। धनायुषी गोपायेदिति गोपायकेदिति। स्वेष्टमन्त्रं गुरुञ्चापि गोपायकेद्धनायुषी इति नीतिशास्त्रोक्तं। सुवर्णं गृहीत्वा सुखं तिष्ठ तिष्ठक इत्यादि। यथोक्तमन्यैः। कृपायां निन्दने ज्ञाने नीतौ दानेन मानिते। अन्त्यस्वरात् पूर्वमक् वा सर्वनाम-तिङव्ययादिति ॥ १०४० ॥

## १०४१. बहुसर्वेश्वरान्नृनाम्न ठरामो वा घराम इलश्च उपादेर-डवुरामौ च ।

तत्र कपक्षे—देवदत्तक- उपेन्द्रदत्तकः ।

## १०४२. अजिनान्तस्योत्तरपदलोपश्च ।

व्याघ्राजिनो नामानुकम्पितः व्याघ्रकः । एवं कृष्णकः । ठादिपक्षे सूत्रान्तराणि ।

## १०४३. द्वितीयात् सर्वेश्वराच्चतुर्थादपि परभागस्य सर्वेश्वरे ।

अनुकम्पितो विष्णुदत्तो विष्णुकः । चतुर्भुजान्तादिति ठस्य कः । एवं पितृकः । अनुकम्पितो देवदत्तः देविकः । घपक्षे देवियः, इलः—देविलः । चतुर्थसर्वेश्वरात्—लक्ष्मीपतिदत्तोऽनुकम्पितो लक्ष्मीपतिकः ।

---

अमृता०—१०४१. बह्विति । संज्ञादावर्थे वर्त्तमानात् बहुसर्वेश्वरात् मनुष्यनाम्नः ठरामो वा स्यात्, घराम इलश्च स्यात्, पक्षे कश्च भवति । उप आदौ यस्य तस्माद् बहु-सर्वेश्वरान्नृनाम्नः अड्वुरामौ भवतः । चकारात् ठरामादयः कश्च भवति । घरादि पक्षे दर्शयिष्यते ।

अमृता०—१०४२. अजनेति । अजिनोऽन्ते यस्य तादृशस्य नाम्न उत्तरपदलोपश्च भवति । एवं कृष्णक इति—कृष्णाजिनो नामानुकम्पित इत्यर्थः । कपक्षं दर्शयित्वा ठादि-पक्षान् दर्शयितुं सूत्रान्तराणि वक्ष्यन्त इति शेषः ।

अमृता०—१०४३. द्वितीयादिति । लोप इत्यनुवर्त्तते । सर्वेश्वरे हरे द्वितीयात् सर्वेश्वरात् चतुर्थादपि सर्वेश्वरात् परभागस्य लोपः स्यात् । विष्णुक इति—द्वितीयसर्वे-श्वरात् परभागस्य दत्तेत्यस्य हरः । एवमिति—अनुकम्पितः पितृदत्त इत्यर्थे पितृकः । चतुर्थ सर्वेश्वरात् परभागस्य लोपं दर्शयति—लक्ष्मीति ।

---

बाल०—बहु । अनुकम्पादौ वर्तमानात् बहवः सर्वेश्वरा यस्य तस्मात् मनुष्यनाम्न-ष्ठरामो वा स्यात् । घराम इलश्च तथा कश्च । उपा । अनुकम्पादौ वर्तमानात् उप आदिर्यस्य तस्माद्बहुसर्वेश्वरान्नृनाम्नोऽडवुरामौ भवतः । चशब्दात् ठरामादयः कश्च भवन्ति । प्रथमतः कपक्ष उदाहरति तत्रेति । अनुकम्पितो देवदत्तः देवदत्तक इति । अनुकम्पित उपेन्द्रदत्त इति उपेन्द्रदत्तकः ॥ १०४१ ॥

बाल०—अजि । अजिनान्तस्य सम्बन्धे ठरामादयो भवन्ति, उत्तरपदलोपश्च । एवं कृष्णक इति कृष्णाजिनो नामानुकम्पित इत्यर्थः । सूत्रान्तराणि दर्शयितुमाह ठादीति ॥ १०४२ ॥

**१०४४. लोपोऽसर्वेश्वरे क्वापि क्वापि पूर्वपदस्य च ।**
**अप्रत्यय स्तथैवेष्ट उद्वयाल्ल इलस्य च ॥**

**देवकः दत्तकः दत्तः । विष्णुलः । उपादेः खल्वपि ।**

**१०४५. सन्ध्यक्षरस्य द्वितीयसर्वेश्वरत्वे तदादे र्लोपवचनम् ।**

**अनुकम्पित उपेन्द्रदत्तः—उपडः उपकः ।**

---

**अमृता०**—१०४४. लोपइति । असर्वेश्वरे प्रत्यये परे कुत्रचित् पूर्वपदस्य च लोपः स्यात्, चकारात् कुत्रचित् परपदस्य च । तथा कुत्रचित् अप्रत्ययश्च इष्यते, उद्वयादुत्तरस्य इलस्य लश्चादिष्यते । उपादेः खल्वपीति—उपादेरुत्तरस्य परभागस्यैव लोप इत्यर्थः ।

**अमृता०**—१०४५. सन्ध्यक्षरस्यैति । सन्ध्यक्षरस्य द्वितीयसर्वेश्वरत्वे सति तत् सन्ध्यक्षरमारभ्यान्तभागस्य लोपकथनं भवति । केवलमुत्तरपदस्यलोपे प्राप्ते सन्ध्यक्षरादे र्लोपे चा प्राप्ते कथनमिदम् उपडेति—उपादे रड-वुरामौ चेति अडः । उपक इति-वोरकः । एवं घरामे-उपियः, इले—उपिल इति च । सर्वेश्वरे हि लोपविधानात् कपक्षे उपेन्द्रदत्तक इति च ।

---

**बाल०**—द्विती । सर्वेश्वरे परे द्वितीयात् सर्वेश्वरात् चतुर्थादपि सर्वेश्वरात् परभागस्य हरः स्यात् । प्रथमतः सर्वेश्वरपरत्वाय ठस्य इकं कृत्वापि वर्णानां तद्वयक्ति-वद्भावो यत्र संस्यते तत्रैवेत्यनेनात्र व्यक्तिवद्भावमङ्गीकृत्याह चतुर्भुजेति । पितृक इति अनुकम्पितः पितृदत्त इत्यर्थः । घ इल इति घपक्षे इलपक्षे उदाह्रियत् इति शेषः । चतुर्थसर्वेश्वरादिति परभागस्य हरो दर्श्यंत इति शेषः । यथा लक्ष्मीपतिकस्तथा लक्ष्मीपतियः लक्ष्मीपतिलः लक्ष्मीपतिदत्तकश्च ॥ १०४३ ॥

**बाल०**—लोपो । असर्वेश्वरे प्रत्यये परे क्वापि कुत्रचित् पूर्वपदस्य लोपः स्यात् । पुनः क्वापि परपदस्यच तथैवाप्रत्यय इष्टश्च उद्वयादुत्तरस्य इलस्य लोऽपीत्यर्थः । अप्रत्यय इति प्रत्ययशून्यः, अरामप्रत्ययो वा, तथा सति अप्रत्ययपक्षे अ इद्वयस्येत्यनेन पूर्वस्या इद्वयस्य हरः क्रमेणोदाहरणत्रयमाह देवक इत्यादि । अनुकम्पितो देवदत्त इत्यर्थस्तु पूर्ववत् । विष्णुल इति अनुकम्पितो विष्णुदत्त इत्यर्थः । उपेति उपादेरुत्तरस्य परभागस्यैक हरः स्यादिति खल्वपीत्यनेन निर्द्धारितमिति ॥ १०४४ ॥

**बाल०**—सन्ध्य । सन्ध्यक्षरस्य द्वितीयसर्वेश्वरत्वे सति तदादेर्लोपवचनं तत्सन्ध्य-क्षरमारभ्यान्तप्रभृतेलोपकथनं । केवलमुत्तरपदस्य लोपे प्राप्ते सन्ध्यक्षरादेर्लोपे चाप्राप्ते वक्तव्यमेतत् । एवमुपिय उपिल इति, सर्वेश्वरे लोपविधानात् कपक्षे उपेन्द्रदत्तक इतिच ॥ १०४५ ॥

## १०४६. एकसर्वेश्वरपूर्वपदादुत्तरपदलोपश्च ।

वागाशीः वाचिकः, त्वगाशीः त्वचिकः ।

## १०४७. षडङ्गुलिदत्तकस्य षडिको निपात्यते ।

## १०४८. शेवल-शिवाल-वरुणार्यमादीनां तृतीयसर्वेश्वरात् पर भागस्य हरः ।

शेवलदत्तकः शेवलिकः शेवलियः शेवलिल इत्यादि ।

---

अमृता०—१०४६. एकेति । स्पष्टम् । चशब्दात्–वाचियः त्वचियः, वाचिलः त्वचिलः, वाचडः त्वचडः, वाचकः त्वचक इति । कपक्षे–वागाशीष्कः त्वगाशीष्कः इति च, पूर्वस्य विष्णुपदवत्त्वभावात् ।

अमृता०—१०४७. षडिति । ठरामेण सह षडिक इति निपात्यते ।

अमृता०—१०४८. शेवलेति । सर्वेश्वरे परे शेवल प्रभृतीनां तृतीयसर्वेश्वरात् परभागस्य हरः स्यात् ।

---

बाल०—एक । सर्वेश्वरे परे एकसर्वेश्वरपूर्वपदादुत्तरपदस्य लोपश्च भवति । अनुकम्पिता वागाशीः वाचिक इति, अनुकम्पिता त्वगाशीः त्वचिक इति । चकारस्योक्त-समुच्चयार्थत्वेन पूर्वेषामनुकर्षणात् वाचियः त्वचियः, वाचिलः त्वचिलः, वाचडः त्वचडः, वाचकः त्वचक इति । कपक्षे पूर्वस्य विष्णुपदवत्त्वमननात् वागाशीष्कः त्वगाशीष्क इतिच । एतेषां प्रत्ययानां स्वार्थिकत्वात् । अनुकम्पिता वागाशीरित्यादिवाक्येऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिक्रान्ता अपीत्युक्तदिशा वाचिकादीनां पुरुषोत्तमवत्वं पूर्ववदेव कल्प्यं ।। १०४६ ।।

बाल०—षड । अनुकम्पादौ वर्तमानस्य षडङ्गुलिदत्तकस्य ठरामेण सह षडिक इति निपात्यते । त्रिपदत्वादत्र चतुर्थसर्वेश्वरादित्यनेन दत्तकस्य लोपे प्राप्तेऽङ्गुलप्रभृते-र्लोपार्थं वचनं । उपलक्षणञ्चैतत् तेन, अनुकम्पितः षडङ्गुलिदत्तकः । षडियः षडिलः, षडडः षडकः । कपक्षे षडङ्गुलिदत्तक इति ।। १०४७ ।।

बाल०—शेव । सर्वेश्वरे परे शेवलविशालवरुणार्यमादीनां तृतीयसर्वेश्वरात् परभागस्य हरः स्यात् । पूर्वेणाप्राप्तेऽयं विधिः । अनुकम्पितः शेवलदत्त इति शेवलदत्तक इत्यादि । इत्यादीत्यादिपदेन शेवलडः शेवलक इति । एवं विशालदत्तक इत्यादि, वरुणदत्तक इत्यादि, अर्यमदत्तक इत्यादिच यथायथमूह्यं । किञ्च, नीतेः पारम्पर्योपदे-शत्वेन शिक्षणार्थत्वात् दानमानितस्य पारितोषिकार्थत्वाच्च शिक्षितो दानेन सम्मानितो वा देवदत्त इति देवदत्तक इत्यादि । शिक्षितो दानेन सम्मानितो वा व्याघ्राजिनो नामेति व्याघ्रक इत्यादि । शिक्षितो दानेन सम्मानितो विष्णुदत्त इति विष्णुक इत्यादि । शिक्षितो दानेन सम्मानितो वा लक्ष्मीपतिदत्त इति लक्ष्मीपतिक इत्यादि । एवं देवक इत्यादि,

**१०४९. तूष्णींशीले तूष्णीकः साधुः ।**

**१०५०. एक-एकक-एकाकी चासहाये ।**

साधवः । एकाकिन्निति नान्तः ।

**१०५१. ह्रस्वे ।**

काकावित्येव । दण्डकः स्तम्भकः सर्वके ।

**१०५२. अल्पे ।**

काकौ । घृतकं उच्चकैः विश्वके भजतकि ।

**१०५३. संज्ञायां कः ।**

वेणुकः वंशकः ।

---

**अमृता०**—१०५०. एकेति । असहायार्थे वर्तमानस्य एकशब्दस्य अरामकरामाकिन् प्रत्ययैः सह एक प्रभृतयस्त्रयो निपात्यन्ते ।

**अमृता०**—१०५१. ह्रस्व इति । ह्रस्वः खर्वः, तस्मिन्नर्थे वर्तमानान्नामाव्ययादे र्यथास्वं तौ स्याताम् । ह्रस्वो दण्डः दण्डक इत्यादि ।

**अमृता०**—१०५२. अल्प इति । अल्पेऽर्थे वर्तमानात् नामादे र्यथास्वं काकौ भवतः । अल्पं घृतं घृतकमित्यादि ।

**अमृता०**—१०५३. संज्ञायामिति । संज्ञायां वर्तमानान्नाम्नः कः स्यात् । वेणु नामा कश्चित् वंशो वा वेणुक इति ।

---

एवं देवक इत्यादि, उपड इत्यादि, वाचिक इत्यादि । वागाशीर्दत्तोऽनुकम्पितः शिक्षितो दानेन सम्मानितो वेति वाचिक इत्यादीत्यन्ये । तथा षडिक इत्यादि शेवलदत्तक इत्यादिच ॥ १०४८ ॥

**बाल०**—तूष्णीं । तूष्णींशीले वाच्ये कप्रत्ययेन सह तूष्णीमित्यस्य महरेण तूष्णीक इत्ययं साधुः स्यात् । तूष्णीको मौनी ॥ १०४९ ॥

**बाल०**—एक । असहाये वर्तमानस्य एकशब्दस्य अरामकरामाकिन्भिः सह एकक एकाकीति क्रमेण साधवो भवन्ति । अन्तिमस्य नान्तत्वं स्वयमाह एकाकीति । शतमेकाकिनो यान्ति असहाया इत्यर्थः । अत्रासहाय इति वचनमेकस्य संख्यावाचित्वनिरासार्थं ॥

**बाल०**—ह्रस्वे । ह्रस्वः खर्वः अस्मिन्नर्थे वर्तमानान्नामादेर्यथासम्भवं पूर्ववत् काकावित्येव स्यात् । ह्रस्वो दण्डः दण्डक इति । एवं स्तम्भक इति । ह्रस्वाः सर्वे सर्वके इति । एवं यके तके इत्यादि ॥ १०५१ ॥

**बाल०**—अल्पे । अल्पेऽर्थे वर्तमानान्नामादेर्यथास्वं काकौ भवतः अल्पं घृतं घृतकं, अल्पमुच्चैरुच्चकैः, अल्पा विश्वे विश्वके, अल्पं भजति भजतकीत्यादि ॥ १०५२ ॥

**१०५४. कुटी शमी शुण्डादिभ्यो नः, कुत्वा उप् च, कासूगोणीभ्यां तरट् च ।**

कुटीरः शमीरः शुण्डारः । कुटी मृत्शरीरमित्येके । कुतुपः । एतेषां पुंस्यभिधानम् । कासूतरी गोणीतरी, कासूर्वस्त्रभेदः ।

**१०५५. वत्सोक्षाश्वर्षभेभ्यश्चासम्पूर्णतद्रूपत्वे ।**

वत्सत्वेनासम्पूर्णो वत्सतरो द्वितीयवयाः । एवमुक्षतरः तृतीयवयाः । अश्वतरी खरजाता । ऋषभतरो मन्दः ।

---

**अमृता०**—१०५४. कुटीति । संज्ञायां वर्तमानेभ्यः कुटी शमी शुण्डादिभ्यो र प्रत्ययः स्यात्, कुतु शब्दादुत्तरे उप् च स्यात्, तथा कसू-गोणीभ्यां तरट् च स्यात् । अल्पा कुतुरिति कुतुपः, संसार हरः ।

**अमृता०**—१०५५. वत्सेति । असम्पूर्णतद्रूपत्वे वाच्ये वत्सोक्षाश्वर्षभेभ्यश्च तरट् स्यात् । वत्सत्वेनासम्पूर्ण इति वाक्यात् वत्सरूपेण मुक्तोऽपि वत्सत्वस्य किञ्चिदंशा-परित्यागः सूच्यते, द्वितीय वया इति प्राप्तदमनकालइत्यर्थः । उक्षतरो महावृष इतिकोषः । टित्त्वात् सर्वत्र ईप् योज्यः ।

---

**बाल०**—संज्ञा । संज्ञायां वर्तमानान्नाम्नः कः स्यात् । वेणुनामा कश्चित् वेणुक इति । एवं वंशक इत्यादि ॥ १०५३ ॥

**बाल०**—कुटी । संज्ञायां वर्तमानेभ्य कुटीशमीशुण्डादिभ्यो वः स्यात् । कुत्वा । संज्ञायां वर्तमानायाः कुत्वाः उत्तर उपच् स्यात् । कासु । संज्ञायां वर्तमानाभ्यां कासुगोणीभ्यां तरट्च स्यात् । पूर्वसूत्रात् सूत्रत्रयेऽत्र संज्ञाया अनुकर्षणार्थश्चशब्दः प्रदर्शितः । कुटी धनादिरक्षार्थं इष्टकादिरचितो गृहविशेषः । सैवाल्पा कुटीर इति । शमो तापादिशमनी सैवाल्पा शमीर इति । शुण्डा हस्तिकरः शुण्डार इति । सूत्रस्थादिपदा ग् भाण्डीरः काण्डीरः हिण्डीरः इत्यादिच । कुटी शब्दस्य परमतार्थमाह कुटीति । अल्पा कुतूरिति कुतुपः, संसारस्य हरश्चितीत्यनेनात्र कुत्वाः संसारहरः । कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमानित्यमरः । कुटीरेत्यादीनां स्वार्थिकप्रत्ययान्तत्वात् लक्ष्मीत्वे प्राप्तेऽभिधानात् पुंस्त्वमित्याह एतेषामिति । अभिधानमित्यस्मात् परं स्वार्थिकाः प्रकृतेर्लिङ्गवचनान्यप्यतिक्रान्ता भवन्तीति हेतुभूतं कल्प्यं । कासुरेव कासुतरीति, गोण्येव गोणीतरीति । कासुशब्दस्यार्थमाह कासुरिति । कासूः शक्तिरायुध विशेष इत्यन्ये । गां नयतीति गोणीरिति क्विवन्तः ॥ १०५४ ॥

**बाल०**—वत् । न सम्पूर्णस्तद्रूपो यस्य सोऽसम्पूर्णतद्रूपस्तस्य भावोऽसम्पूर्णतद्-रूपत्वं तस्मिन् वाच्ये वत्सोक्षाश्वर्षभेभ्यश्च तरट् स्यात् । वत्सत्वेनासम्पूर्ण इति वाक्येन वत्सत्वेन मुक्तोऽपि वत्सत्वस्य किञ्चिदंशापरित्यागः सूचित इति वत्सतरस्य द्वितीयवयः-

**१०५६. किं यत्तद्भ्यो गुणक्रियासंज्ञाभि र्द्वयो रेकस्य निर्द्धारणायामतरच् ।**

कतरो भवतो र्वैष्णवः ? यतरो वैष्णवः ततर आयातु । एवं कतरः पूजकः, कतरो विष्णुशर्मा ।

**१०५७. बहूनां जातिप्रश्ने तमजकौ ।**

कतमो भवतां वैष्णवः ? यतमः ततमः । अक् पक्षे किमः क इत्यादौ साकस्यापीति कः, यकः सकः । महाविभाषया वाक्यञ्च । जातीति किम्—यो भवतां विष्णुदत्तः ।

---

अमृता०—१०५६. किमिति । गुणेन क्रियया संज्ञया च द्वयोर्मध्ये एकस्य निर्द्धारणे गम्यमाने किं यत् तद्भ्यः अतरच् स्यात् । कतर इतिचित् करणात् संसारहरः ।

अमृता०—१०५७ बहूनामिति । जातेः प्रश्ने गम्यमाने बहूनां मध्ये एकस्य निर्द्धारणे सति किं यत्तद्भ्यः अतमच् अक् च भवतः । जातिरिति संज्ञा व्यावृत्त्यर्थमिति प्रत्युदाहरति—य इत्यादिना ।

---

प्राप्तत्वेऽपि तद्रूपस्यासम्पूर्णत्वं गम्यते । एवमिति उक्षत्वेन तारुण्येनासम्पूर्ण उक्षतर इत्यत्रापि पूर्ववत्तारुण्यस्य किञ्चिदपरित्यागात् तृतीयवयःप्राप्तत्वेऽपि तद्रूपस्यासम्पूर्णत्वं । एवं वत्सतरी उक्षतरीतिच । अश्वतरी खरजातेति अश्वजातौ खरेण जातेत्यर्थः । उभयावयवदर्शनादत्रासम्पूर्णतद्रूपत्वं । एवमश्वतरोऽपि । ऋषभतरो मन्द इत्यनेन भारवहनाशक्तः सूचित इति ऋषभतर इत्यस्य प्राप्तसमर्थत्वेऽप्यसम्पूर्णतद्रूपत्वमिति ।।१०५५

बाल०—किंय । गुणेन क्रियया संज्ञयाच द्वयोर्मध्ये एकस्य निर्धारणायां गम्यमानायां किंयत्तद्भ्योऽतरच् स्यात् । गुणादिभिः पृथक्करणं निर्धारणं । भवतोर्द्वयोर्मध्ये को वैष्णव इति चित्करणात् संसारहरः कतर इति । एवं भवतोर्यो वैष्णवः स आयातु इति यतरो भवतोर्वैष्णवस्ततर आयात्विति योज्यं । कृष्णपूजादावत्र वैष्णवत्वेनाह्वानं ध्वनितमिति । एवमिति भवतोः कः पूजक इति कतर इति । तथा यतरः पूजकः, ततर आयात्विति पूर्ववत् पूजकत्वक्रिययात्राह्वानं । एवं भवतोः को विष्णुशर्मा कतर इति । तथा भवतोर्यो विष्णुशर्मा स आयात्विति यतरः ततर इतिच । संज्ञयात्राह्वानमिति ।। १०५६ ।।

बाल०—बहू । जातिप्रश्नेऽर्थे बहूनामेकस्य निर्द्धाराणायां किं यत्तद्भ्योऽतमजकौ भवतः । भवतां मध्ये को वैष्णवः कतम इति । भवतां यो वैष्णवः स आयात्विति यतमः ततम इति । अक्पक्षे साधनार्थं पूर्वोक्तं सूत्रं स्मारयति किम इति । किमः क इत्यादौ सूत्रे साकस्यापीत्यनेनाक्सहितस्यापि किमः कादेश इति भवतां को वैष्णवः क इति । तथा भवतां यो वैष्णवः स आयात्विति यकः सक इतिच । महेति तद्धितस्य महाविभाषया पक्षे वाक्यमपि तिष्ठतीत्यर्थः । विष्णूवधिदैवत्यादिगुणविशिष्टस्य जातिशालित्वाभावेऽप्यत्र

## १०५८. एकाच्च पूर्ववत् तरतमौ ।

एकतरो भवतोरायातु । एवं भवतामेकतमः ।

## १०५९. अवक्षेपे कः ।

व्याकरणकेनायं गर्वितः गर्वोऽत्राक्षिप्यते । प्रागिवीयाः पूर्णाः ।

## १०६०. इवार्थे कः प्रतिकृतौ संज्ञायाच्च ।

इवार्थः सादृश्यं तद्विशेषः प्रतिकृतिः । कृष्णसार प्रतिकृतिः कृष्णसारकः । संज्ञायां—कृष्णमृगकः । इवार्थे विधिः प्राक् पादात्, प्रतिकृतौ प्राग् वस्तेः ।

---

**अमृता०**—१०५८. एकादिति । गुणक्रिया संज्ञाभिर्द्वयोरेकस्य बहूनामेकस्य च निर्द्धारणायां यथाक्रमं एकशब्दात् तरतमौ भवतः । किञ्च, अन्यार्थे इदमन्याभ्यां तरः, इदमो दमभागहरश्चेति वाच्यमिति प्राञ्चः । इतरः अन्यतरः, पृथग्जन इत्यर्थः ।

**अमृता०**—१०५९. अवेति । अवक्षेपेऽर्थे गम्ये तद्युक्तान्नाम्नः कः स्यात् । इवार्थात् प्रागर्थानां प्रत्ययानाञ्चाधिकारः समाप्त इत्यर्थः ।

**अमृता०**—१०६०. इवार्थ इति । प्रतिकृतौ संज्ञायाञ्च वर्तमानान्नाम्नः क प्रत्ययः स्यात् । इवार्थं प्रतिकृतिञ्च स्पष्टयति—इवार्थः सादृश्यमिति । तद्विशेष इति तस्यैवार्थस्य प्रकार भेद इत्यर्थः । अधिकारमाह—इवार्थे विधिरिति । वस्तेः प्राक् प्रतिकृतौ विधिर्भवतीत्यर्थः ।

---

व्यवहारनिष्पत्तये पारिभाषिकी जातिः कल्प्या, दृश्यते हि जातिशक्तिवादिनां मते डित्थादीनामपि बालवृद्धयुवाद्युदोरितभेदेन अयं डित्थोऽयं डित्थ इति डित्थत्वं जातिरिति । जातेरन्यत्र तौ नस्त इति व्यावृत्तिमाह जातीत्यादि । विष्णुदत्त इति कस्यचिन्नाम डित्थादिवदत्र जातिर्न विवक्षितेति ॥ १०५७ ॥

**बाल०**—एका । पूर्ववदित्युपादानात् गुणक्रियासंज्ञाभिर्द्वयोरेकस्य निर्धारणायां, तथा बहूनामेकस्य निर्द्धारणायां यथा क्रममेककशब्दात् पुनस्तरतमौ भवतः । एकेति भवतोरेको वैष्णव आयात्वित्यर्थः । एवमिति भवतामेको वैष्णव आयात्वित्यर्थः । अन्यार्थे इदमन्याभ्यां तरः इदमो दमो हरश्चेति वाच्यं । अन्यार्थे वर्तमानाभ्यामिदमन्याभ्यां तरस्तस्मिन्निदमो दमिति भागस्य हरश्च स्यात् । इतरः अन्यतर इति पृथग्जन इत्यर्थः ॥

**बाल०**—अव । अवक्षिप्यतेऽसाविति कर्मणि घण् । अवक्षेपेऽर्थे गम्ये प्रत्यासत्या अवक्षेपयुक्तान्नाम्नः कः स्यात् । व्याकरणकेनेति । व्याकरणकत्वेनायं गर्वित इति वैयाकरणकत्वेनायं विकत्थत इति निर्गलितोऽर्थः । नन्ववक्षेप इत्युक्तं । कुतोऽत्र गर्वितत्वमागतमिति प्रश्ने सिद्धान्तमाह गर्व इति । इवार्थात् प्रागर्थान् प्रत्ययांश्च समापयति प्रागिति ॥ १०५९ ॥

**१०६१. मनुष्ये तस्य स्मरहरः जीविकार्थे चापण्ये ।**

चञ्चेव चञ्चामनुष्यः, चञ्चा तृणप्रतिमा । जीविकार्थे—य आदित्यादि प्रतिकृतिं कृत्वा भ्रमति स आदित्यः । एवं स्कन्दः वासुदेवः । अपण्ये किं—वासुदेवकान् विक्रीणीते ।

**१०६२. देवपथादिभ्यश्च ।**

देवपथः काश्यपः ।

**१०६३. अर्च्चासु पूजनार्थासु चित्र तद्वद्ध्वजेऽपि च, इवे प्रतिकृतौ लोपः कस्य देवपथादिषु ।**

---

अमृता०—१०६१. मनुष्य इति । इवार्थे मनुष्ये वाच्ये तस्य कप्रत्ययस्य स्मरहरः स्यात् । अपण्ये गम्यमाने इवार्थे जीविकार्थे च तस्य स्मरहरो भवति । चञ्चेत्यत्र मनुष्ये वाच्येऽपि लक्ष्मीत्वमिति स्मरहरत्वात् प्रकृते लिङ्गवचनप्रत्यावृत्तिः । पण्यं क्रयविक्रय व्यवसा ।

अमृता०—१०६२. देवेति स्पष्टम् । स्मरहरः स्यादित्यथः ।

अमृता०—१०६३. अर्च्चास्विति । पूजनार्थासु अर्च्चासु तथा चित्रकर्मणि, तद्वत्

---

बाल०—इवा । प्रतिकृतौ संज्ञायाञ्च वाच्यायामित्यर्थे वर्तमानान्नाम्नः कः स्यात् । इवार्थं प्रतिकृतिञ्च स्पष्टयन्नाह इवार्थ इति । तद्विशेष इति तस्यैवार्थस्य भेद इत्यर्थः । कृष्णेति कृष्णमारस्येव प्रतिकृतिरित्यन्तर्भूतमिवार्थं ज्ञेयं सूत्रे इवार्थग्रहणात् । एवमुत्तरत्रापि यत्रैव शब्दो न दृश्यते तत्र यथा सम्भवमूह्यः । प्रतिकृतावुदाहरण दत्त्वा संज्ञायां दर्शयति संज्ञेति । कृष्णमृग इव कृष्णमृगक इति । प्रत्ययोत्पत्त्यर्थं परिभाषामाह इवेति । पादात् पूर्वमिवार्थे विधिरिष्यते । वस्तेः प्राक्तु प्रतिकृतौ विधिरिष्यत इत्यर्थः ॥ १०६० ॥

बाल०—मनृ । इवार्थे सति मनुष्ये वाच्ये प्रतिकृतेरुत्तरस्य तस्य कप्रत्ययस्य स्मरहरः स्यात् । अपण्ये गम्ये इवार्थच तस्यास्तस्य स्मरहरः स्यात् । स्मरहरे प्रकृतेर्लिङ्ग-वचनयोः प्रत्यावृत्तिरित्युक्तमिति मनुष्ये वाच्येऽपि चञ्चेत्यत्र लक्ष्मीत्वं । चञ्चेत्यस्य पर्यायार्थमाह तृणेति । वाक्ये जीविकार्थं इत्यत्र निमित्तात् कर्मसंयोगे इत्यनेन सप्तमीति जीविकायै आदित्यादेरिव प्रतिकृतिं कृत्वा यो भ्रमति स आदित्य इति । एवमिति । स्कन्दः कीर्तिकेयस्तस्येव प्रतिकृतिं कृत्वा जीविकार्थं यो भ्रमति स स्कन्द इति । तथा जीविकार्थं वसुदेवस्येव प्रतिकृतिं कृत्वा यो भ्रमति स वासुदेव इति । व्यावर्तयन्नाह अपण्य इति । वाम्वित्यादेः पूर्वं जीविकायामिति योज्यं । अत्र मूल्यग्रहणेन जीविकार्थं वासुदेवस्य प्रतिकृतीर्निर्माय विक्रीणीते इत्यर्थः ॥ १०६१ ॥

बाल०—देव । जीविकार्थे चापण्ये देवपथादिभ्यश्च कस्य स्मरहरः स्यात् । देवपथ इति जीविकार्थं देवपथस्येव प्रतिकृतिं कृत्वा यो भ्रमति स इत्यर्थः । एवं काश्यप इत्यादि । आकृतिगणोऽयं ॥ १०६२ ॥

अर्चासु—शिवः विष्णुः, चित्रकर्मणि—दुर्योधनः अर्जुनः। ध्वजेषु—कपिः गरुडः सिंहः। प्रतिकृतिर्गता।

## १०६४. वस्ते र्माधवढः।

वस्तिरिव वास्तेयं वास्तेयी।

## १०६५. शिलाया ढरामश्च।

शीलेव शीलेयमस्याः शरीरम्। माधवत्वात् शैलेयं दधि, शैलेयी तनुः।

---

ध्वजे च वाच्ये, इवार्थे प्रतिकृतौ च वाच्यायां, तथा देवपथादिषु प्रयोगेषु कप्रत्ययस्य लोपः (स्मरहरः) स्यात्। शिवइति—पूजनार्थं शिवस्येव प्रतिकृति निर्मीयते स शिवः। दुर्योधन इति— दर्योधनस्येव प्रतिकृति श्चित्रीयते इत्यर्थः। कपिरिति—कपिरिव प्रतिकृति र्ध्वजे-क्रियत इत्यर्थः। प्रतिकृत्यर्थः सम्पूर्णः।

अमृता०—१०६४. वस्तेरिति। इवार्थे वस्तिशब्दात् माधवढः स्यात्। वस्ति र्नाभे रधोदेशः।

अमृता०—१०६५. शिलाया इति। इवार्थे शिला शब्दात् ढरामः स्यात्, चकारात् माधव ढोऽपि। शैलेयमिति–माधवत्वाद् वृष्णीन्द्रो लक्ष्म्या-मीप् च।

---

बाल०—अर्चा। व्यवस्थापककारिकामाहार्चेति। पूजनार्थास्वर्चासु वाच्यासु तथा चित्रकर्मणि तद्वद्ध्वजेऽपि। इवे। इवे प्रतिकृतौच वाच्यायां। एवं देवपथादिषु प्रयोगेषुच यथायोग्यं शिवप्रभृतिभ्यः कस्य लोपः स्मरहरः स्यात्। अर्चास्विति रूपं दर्श्यत इति शेषः। एवमुत्तरत्रापि। पूजनार्थं शिवस्येव प्रतिकृतिर्निर्मीयते शिव इति। एवं विष्णुः सूर्य इत्यादि दुर्योधन इति। दुर्योधनस्येव प्रतिकृतिश्चित्रीयत इत्यर्थः एवमर्जुनः युधिष्ठिर इत्यादि। कपेरिव प्रतिकृतिर्ध्वजः क्रियते इति कपिरित्यादि। इवे प्रतिकृतौ देवपथादिषुच चञ्चेत्यादीन्युक्तोदाहरणानि ज्ञेयानि। प्रतिकृतेरिवार्थविशेषत्वात् गोस्वामिपादैः कृष्णसार-प्रतिकृतिरित्यादौ वाक्ये इवशब्दप्रयोगो न कृतः। मयातु इवार्थे कः प्रतिकृताविति सूत्रदृष्ट्या यथासम्भवमिव-प्रयोगः कृत इति। अन्येतु देवपथादिषु सिंहान्तेषु स्वार्थे प्रत्ययहरमिच्छन्तीति। प्रतिकृत्यर्थं समापयति प्रतीति ॥ १०६३ ॥

बाल०—वस्ते। इवार्थे वस्तेरुत्तरो माधवढः स्यात्। इवार्थः सादृश्य इति पूर्वमुक्तवेव। वस्तिर्नाभेरधः ॥ १०६४ ॥

बाल०—शिला। इवार्थे शिलाया ढरामः स्यात्, चकारान्माधवढोऽपि। अस्या नायिकाया इति। माधेति। ढस्य माधवत्वात् टनित्वं तेन वृष्णीन्द्रः लक्ष्म्यामीप्च भवतीति भावः वाक्यन्तु पूर्ववत् ॥ १०६५ ॥

## १०६६. शाखादिभ्यो यः ।

शाखेव शाख्यः, मुख्यः जघन्यः ।

## १०६७. द्रव्यं भव्ये साधु ।

भव्यः अभिप्रेतानामर्थानां पात्रभूतः । द्रव्यमयं मानवक इति काशिका । द्रुरिव सर्वाश्रयो द्रव्यं, द्रव्यमेव खलु सर्ववल्लभमिति प्रयोगदर्शनादिति भाषावृत्तिः ।

## १०६८. कुशाग्राच्छरामः ।

कुशाग्रमिव कुशाग्रीया बुद्धिः ।

---

अमृता०—१०६६. शाखेति । इवार्थे शाखादिभ्यो यरामः स्यात् । शाखा मुख जघन अर्ष जवन स्कन्द अग्र उरस् चरण शृङ्गमेघ विरसेति शाखादिः ।

अमृता०—१०६७. द्रव्यमिति । इवार्थे भव्ये वाच्ये यरामेण सह द्रु शब्दस्य द्रव्यं साधुः स्यात् । स्वाभिप्रेतार्थं प्रकटयति—भव्य इत्यादिना । द्रव्य शब्दो नियत ब्रह्मलिङ्ग इति प्राचीनवाक्येन स्पष्टयति—द्रव्यमिति । द्रुरिव वृक्ष इव सर्वाश्रयः सर्वोपकारकः, पत्र पुष्पफल वल्कलादिभिरिति भावः ।

अमृता०—१०६८. कुशाग्रादिति । इवार्थे कुशाग्र शब्दात् छरामः स्यात् । कुशाग्रीया सूक्ष्मा तीक्ष्णा च बुद्धिरित्यर्थः ।

---

बाल०—शाखा । इवार्थे शाखादिभ्यो यः स्यात् । शाखा मुख जघन अर्षजवन स्कन्द अग्र उरस् चरण शरण शृङ्ग मेघ विरसेति द्वादश शाखादिः ॥ १०६६ ॥

बाल०—द्रव्यं । इवार्थे भव्ये वाच्ये यरामेण सह द्रु शब्दस्य द्रव्यं साधु स्यात् । स्वाभीष्टार्थमाह भव्य इति । अभिप्रेतानां मनोगतानामर्थानां यः पात्रभूतः स एव भव्य इत्यर्थः । द्रव्यशब्दोऽत्र स्वभावतो ब्रह्मलिङ्ग इति प्राचीनमतेनैव स्पष्टयति द्रव्यमिति । अयं मानवको द्रव्यमिति योज्यं । स्वोक्तार्थमपि परमतेन स्फुटयति द्रुरिति । द्रव्यमेव खलु सर्ववल्लभमिति प्रयोगदर्शनाद्धेतोर्द्रुरिव सर्वाश्रयो द्रव्यमिति भाषावृत्तिराहेत्यन्वयः । द्रुर्यथात्मनः फलादिभिरर्थिनः प्रीणाति तथायमप्यभीष्टदानेन सर्वाश्रयः सन् भव्य इति द्रव्यस्य निर्गलितोऽर्थः । आत्मगुणसम्पन्नोऽपि द्रव्यमुच्यते, द्रव्यं हि क्रियां विनयति नाद्रव्यमिति । हिरण्यादिकमपि द्रव्यं पुरुषार्थसाधकत्वादित्यन्ये च ॥ १०६७ ॥

बाल०—कुशा । इवार्थे कुशाग्रशब्दाच्छरामः स्यात् । कुशाग्रमिवेति सूक्ष्मत्वात् तीक्ष्णत्वाच्च ॥ १०६८ ॥

## १०६९. काकतालीयादयः साधवः ।

आकस्मिकेन तालपतनेन काकस्य वध इव केनापि देवदत्तस्य वधः काकतालीयम् । एवं अजाकृपाणीयं वधः । ब्रह्मत्वे त्वभिधानम् । काकतालीयादि शब्देनात्राकस्मात्तालादि पतन हेतुकः काकादि वध उच्यते, अस्मिन्नर्थे समासश्चात्र समर्थ्यते, देवदत्तस्य तद्वध स्तद्धितार्थः ।

## १०७०. शर्करादिभ्यः केशवणः ।

शर्करेव शार्करं, कापालम् ।

## १०७१. अङ्गुल्यादे र्माधव ठः ।

अङ्गुलीव आङ्गुलिकः । एवं भारुजिकादि ।

---

**अमृता०**—१०६९. काकेति । इवार्थे छरामेण सह काकतालीयादयः प्रयोगाः साधवो भवन्ति । स्वयं वाक्योदाहरणे दर्शिते । एवमिति—आकस्मिकेन कृपाणी पतनेअ अजाया वध इव देवदत्तस्य वधः अजाकृपाणीयमिति । एवं घुणाक्षरीयं, अन्धगर्त्तीयं, खलति बिल्वीयमित्यादयश्च ।

**अमृता०**—१०७०. शर्करादिभ्य इति । इवार्थे शर्करादिभ्यः केशवणः स्यात् । शर्करा कपाल पुण्डरीक शतपत्र गोलोमन् नकुल सिकता गोपुच्च कृपाटिका नाराचेति शर्करादिः ।

**अमृता०**—१०७१. अङ्गुलीति । इवार्थे अङ्गुल्यादे र्माधवठः स्यात् । अङ्गुली भरुज शष्कुलो कुलिश उरस् वर्ण नक्र हरि मुनि कपिश मण्डल घोणी खल चरु उदश्विदित्यङ्गुल्यादिः ।

---

**बाल०**—काक । इवार्थे देवदत्तादेर्वधे वाच्ये छरामेण सह काकतालादीनां स्थाने काकतालीयादयः साधवो भवन्ति । वाक्योदाहरणे स्वयं दर्शयति आकस्मिकेनेति । एवमिति आकस्मिकेन कृपाणीपतनेन अजाया वध इव देवदत्तस्य वधः । अजाकृपाणीयमिति । अनेन सूत्रेण साध्यप्रयोगाणां ब्रह्मत्व एव कथनमित्याह ब्रह्मत्व इति । एवमर्द्धजरतीयं घुणाक्षरीयं अन्धगर्तीयं खलतिविल्वीयमित्यादि । काकतालादिशब्दानां शक्तिनिरूपणपूर्वकं समाससमर्थनमाह काकतालेत्यादि । देवदत्तस्य तद्वद्वध इति आकस्मिकतालपतनेन काकस्य वध इवेति तद्धितार्थो ज्ञेयः काकतालशब्दः काकस्य गमन एव तालस्य पतनेन काकमरणे वर्तते तद्वदाकस्मिकसङ्गतं काकतालीयमिति । अर्द्धजरतीशब्दोऽर्द्धजरतीसमाने वर्तते तद्वदिष्टानिष्टत्वात्, अर्द्धजरतीयमितिच कश्चित् ॥ १०६९ ॥

**बाल०**—शर्क । इवार्थे शर्करादिभ्यः केशवणः स्यात् । शर्करा कपाल पुण्डरीक शतपत्र गोलोमन् नकुल सिकता गोपुच्छ कृपाटिका नाराचेति शर्करादिर्दश ॥ १०७० ॥

**१०७२. एकशालाया ष्ठरामो वा ।**

एकशालेव एकशालिकः । पक्षे कः, माधवठ इत्यन्ये ।

**१०७३. कर्क-लोहिताभ्यां ठी नृसिंहः ।**

कर्कः शुक्लोऽश्वः, तेन सदृशः कार्कीको गौः । लौहितीकः स्फटिकः । स्वयमलोहित उपाश्रयात्तथावभाषते उक्तमिवार्थे ।

**१०७४. पाद-शताभ्यां संख्यादिभ्यां वीप्सायां वुरामो लक्ष्म्याम-न्त्यलोपश्च, दण्ड-दानयोश्च ।**

द्वौ द्वौ पादौ तद्धितार्थे समासः, अन्त्यलोपात् पाच्छब्दस्य वामनो भगवति—द्विपदिका । एवं त्रिशतिका ।

---

**अमृता०**—१०७२. एकेति । इवार्थे एकशलायाः ठरामो वा स्यात् । पक्ष इति—तेन एकशालकः, एकशालिक इति च ।

**अमृता०**—१०७३. कर्केति । इवार्थे कर्क लोहिताभ्यां नृसिंह ठी र्भवति । इवार्थ व्यनक्ति—स्वमलोहित इत्यादिना । इवार्थः पूर्णतां गतः ।

**अमृता०**—१०७४. पादेति । वीप्सायां गम्यमानायां लक्ष्म्यां संख्यादिभ्यां पाद-शताभ्यां वुरामः स्यात्, तस्मिन् सति तयोरन्त्यस्य लोपश्च स्यात्, तथा दण्ड-दानयो र्गम्यमानयोः तादृशाभ्यां पाद-शताभ्यां वुरामो भवति । द्वौद्वौ पादौ आरोपिताविति शेषः तद्धितार्थे त्रिरामी । द्विपदिकेति लक्ष्म्यामापि कृते पूर्वारामस्येरामः ।

---

**बाल०**—अंगु । इवार्थे अंगुल्यादेर्माधवठः स्यात् । अंगुली भरुज् शष्कुली कुलिश उरस् वर्ण नक्र हरि मुनि कपिश मण्डल घोणी खल चरु उदश्विदित्यंगुल्यादि पञ्चदश ॥

**बाल०**—एक । इवार्थे एकशालाया उत्तरष्ठरामो वा स्यात् । अन्येषां मतमेव स्वमतमित्यङ्गीकुर्वन्नाह पक्ष इति । तेन एकशालकः ऐकशालिक इतिच ॥ १०७२ ॥

**बाल०**—कर्क । इवार्थे कर्कलोहिताभ्यां नृसिंहष्ठीर्भवति । कर्कशब्दस्यार्थदर्शनपूर्वकं वाक्योदाहरणे दर्शयति कर्क इति । एवं लोहितेन सदृशो लौहितीक इति । स्फटिकादिः समीपाश्रयवशादेव तथावभाषत इत्याह स्वयमिति । इवार्थं समापयति उक्तमिति ॥१०७३

**बाल०**—पाद । पादश्च शतञ्च पादशते ताभ्यां । संख्या आदिर्ययोस्ते संख्यादिनी ताभ्यां । वीप्सायामर्थे संख्यापूर्वपदाभ्यां पादशताभ्यां पादशताभ्यां वुरामस्तस्मिंस्तयो-रन्त्यस्य लोपश्च स्याल्लक्ष्म्यां लक्ष्मीलिङ्गे वर्तते । अन्त्य । अन्त्यलोपश्चेत्यत्रच शब्दोऽन्वाचयार्थस्तेन भो वटो भिक्षामट यदि पश्येद्गाश्चानयेति वदन्ति, मानादरविषय-त्वादत्र अ-इद्वयस्येत्यनेन शतशब्दस्यारामहरेण प्रयोजनान्तराभावात् प्रयोगसिद्धेऽपि अन्त्यलोपे पाच्छब्दस्य वामनकरणार्थश्च-शब्द इति ज्ञेयं । दण्ड । वीप्सानिवृत्यर्थमिदं ।

**१०७५. अन्यतोऽपीष्यते ।**

त्रिमोदकिका । तथा त्रिपदिकां दण्डितः, त्रिशतिकां व्यवसृजति ।

**१०७६. स्थूलादिभ्यः प्रकारोक्तौ कः ।**

वक्ष्यमाण जातीयस्य बाधा । स्थूलप्रकारः स्थूलकः । एवं यवकः अश्वकः, चञ्चतासदृशः चञ्चत्कः । एवं बृहत्कः ।

---

अमृता०—१०७५. अन्यत इति स्फुटार्थम् । दण्डदानयो रुदाहरति—तथा द्विपदिकामित्यादिभ्याम् । व्यवसृजति–प्रददातीत्यर्थः ।

अमृता०—१०७६. स्थूलेति । प्रकारस्य कथने स्थूलादिभ्य उत्तरे कः स्यात् । प्रकारार्थे जातीय प्रत्ययश्च वक्ष्यते, तस्य बाधकोऽयमित्याह—वक्ष्माणेति । गण स्तु परिशिष्टे द्रष्टव्यः ।

---

दण्डदानयोर्गम्यमानयोश्च संख्यादिभ्यां पादशताभ्यां वुरामस्तस्मिंस्तयोरन्त्यलोपश्च स्यात् लक्ष्म्यां वर्तते । वाक्य प्रदर्शनपूर्वकं समासप्रकारमाह द्वौ द्वाविति । पादावित्यस्मात् परमारोपिताविति क्रियापदं योज्यं शिष्टाचारात् । समास इति त्रिरामोसमास इति शेषः । अ-इद्वयस्य हरो भगवतीत्यनेनैवेष्टसिद्धावप्यन्त्यलोपश्चेति यत् कृतं तदेतज्ज्ञापकमिति । लोपपदमत्र महाहरपरमित्यतश्चारामव्यवधानाभावात् पाच्छब्दस्य वामनः स्यादन्यथातु न स्यादिति सूचयन्नाह अन्त्यलोपादिति । द्विपदिकेति द्विपदिकरूपाल्लक्ष्म्यामीपि कृते पश्चात् प्रत्ययस्थात् कादित्यनेन पूर्वारामस्येरामः । एवमिति त्रीणि शतानि आरोपितानीति त्रिशतिका ॥ १०७४ ॥

बाल०—अन्य । वीप्सायां संख्यादेरन्यतोऽपि नाम्नो वुराम इष्यतेऽन्त्यलोपश्च लक्ष्म्यां । शिष्टाचाराद्वक्तव्यमेतत् । त्रयस्त्रयो मोदका आरोपिता इति त्रिमोदकिका । एवं द्व्यपूपिका इत्यादि । अत्र सर्वत्र प्रत्ययेनैव वीप्सायां द्वित्वादेरप्युक्तत्वात् न पुनरुक्तिरेकत्वञ्च । दण्डदानयोरुदाहरणे आह तथेति । द्वौ पादौ दण्डित इति त्रीणि शतानि व्यवसृजतीतिच वाक्यं योज्यं । व्यवसृजतीति विशेषेण त्यजति ददातीति यावत् । अत्राप्यन्यत इति युज्यते, तेन द्विमोदकिकां ददाति द्व्यपूपिकामश्नातीत्यादि स्यात् ॥१०७५

बाल०—स्थूला । प्रकारस्योक्तौ स्थूलादिभ्यः कः स्यात् । सामान्यस्य भेदको धर्मः प्रकारः सच द्रव्याश्रितो यथा स्थूलादेः स्थूलत्वादिः । वक्ष्यमाणजातीयस्य बाधेति बाधकमित्यर्थः । स्थूलको मणिः । एवमिति यवप्रकारः अश्वप्रकार इत्यर्थः । चञ्चतासदृश इत्यनेन स्फुरत्कान्तिकरत्वाद्योऽचञ्चन्नपि चञ्चन्निव लक्ष्यते स चञ्चत्क इति सूचितं । एवं चलत्कः । एवमिति प्रभामण्डलयोगादबृहन्नपि यो बृहन्निव लक्ष्यते, स बृहत्क इति । अत्र त्रये सादृश्यमेव प्रकारार्थं व्याचक्षते । स्थूल यव अश्व चञ्चत् बृहत् चलत् अणु मास इक्षु ईषत् चञ्चु श्वशुर कुमारी पुत्रकुमारी पर्णमूल मूलपत्र हल वात्या कालेति स्थूलादिरूनविंशतिः ॥ १०७६ ॥

**१०७७. अनत्यन्तगतौ क्तात् ।**

नात्यन्तं भिन्नं भिन्नकं, छिन्नकम् ।

**१०७८. नार्द्ध वाचिपूर्वात् ।**

अर्द्धपीतं सामिभुक्तं खण्डकृतं नेमभिन्नम् । प्रतिषेधोऽयम् । स्वार्थिकस्य तस्य चास्तितत्वे लिङ्गमिदमेव, तेन बहुतरकमिति जयादित्यः ।

**१०७९. बृहतिका वस्त्रविशेषे, अषडक्षीणं तृतीयाद्यगोचरे, अशि-**

---

**अमृता०—१०७७.** अनत्यन्तेति । अत्यन्तगतेरभावे सति क्त प्रत्ययान्तात् कः स्यात् भिन्नकमिति ईषद्भिन्नमित्यर्थः । अत्यन्तगतौ तु–भिन्नम् ।

**अमृता०—१०७८.** नार्द्धेति । अनत्यन्तगतौ, अर्द्धवाची पूर्वोयस्य तस्मात् क्तान्तात्तु को न भवति । नात्यन्तमर्द्ध पीतमिति–अर्द्धपीतम् । प्रतिषेधस्यास्या–नित्यतां प्रतिपादयति–स्वार्थिकस्येत्यादिना । तत्र लिङ्गं ज्ञापकमित्यर्थः । तच्च प्राचीन मतेनापि पुष्पाति–बहुतरकमिति ।

**अमृता०—१०७९.** बृहतिकेति । वस्त्रविशेषे वाच्ये करामेण सह बृहत्या बृहतिका साधुः स्यात् । बृहतीशब्दस्य वामनो निपात फलम् । तृतीय जनादीनामगोचरे वाच्ये अषडक्षीत्यस्य खरामेण साकं अषडक्षीणं साधु भवति । तृतीयजनादे रगोचरीभूतं यदेकेन

---

**बाल०—अन** । न अत्यन्तमनत्यन्तं अनत्यन्तस्य गतिरनत्यन्तगतिस्तस्यां । अत्यन्तस्याप्राप्तौ सत्यां क्तप्रत्ययान्तात् कः स्यात् । भिन्नकमिति ईषद्भिन्नमित्यर्थः । नात्यन्तं छिन्नं छिन्नकमिति । अनत्यन्ते किं, भिन्नं काष्ठं । अत्यन्तमेव भिन्नमित्यर्थः ॥

**बाल०—नार्द्ध** । अनत्यन्तगतौ अर्द्धवाची पूर्वो यस्य तस्मात् क्तान्तात् को न स्यात् । नात्यन्तमर्द्धं पीतमिति नात्यन्तमर्द्धरूपेणोपलक्षितं पीतं वेति अर्द्धपीतं । एवं सामिभुक्त-मित्यादि त्रयमपि । अत्रार्द्धप्रभृतयश्चत्वारोऽर्द्धवाचकाः । क्तान्तत्वात् प्राप्तेऽयं निषेध इत्याह प्रतीति । स्वार्थीति, इदमेव प्रतिषेधसूत्रमेव पुनः स्वार्थिकस्य तस्य कप्रत्ययस्या-स्तित्वे विद्यमानत्वेऽपि लिङ्गं ज्ञापकमित्यन्वयाऽर्थश्चेति । तेन ज्ञापकेन हेतुना बहुतरमेव बहुतरकमिति जयादित्य आह । एवमर्द्धपीतमेवार्द्धपीतकमित्यादिच । अभिन्नोपपन्नबहु-सुकरादेस्तरात् क इत्यन्ये ॥ १०७८ ॥

**बाल०—बृह** । वस्त्रविशेषे वाच्ये करामेण साकं बृहत्या बृहतिका साधुः स्यात् । अत्र स्वार्थे कस्तस्मिन् बृहत्या वामनश्च निपातफलं । किञ्च, अस्य स्वार्थिकत्वात् प्रकृति-वल्लिङ्गत्वेऽजादित्वादाप् । नित्योऽयं विधिरभिधानशक्त्या । वस्त्रविशेषादन्यत्रतु बृहती औषधिः । अष । तृतीयाद्यगोचरे वाच्येऽषडक्षीत्यस्य खरामेण साकमषडक्षीणं साधु स्यात् । अविद्यमानानि षडक्षीणि अस्मिन्नित्यषडक्षीणं मन्त्रादि । तृतीयजनादेरगोचरस्य वाच्यत्वात् यदेकेन द्वाभ्यां वा कृतं तदेवोच्यते । आशि । पुरा पूर्वस्मिन् यत्र गाव

तङ्गवीनं गावो यत्राशिताः पुरा, अलंकर्मीणः कर्मक्षमे,
अलंपुरुषीणः पुरुषाय शक्ते ।

एते साधवः ।

**१०८०. अञ्चेः खरामो वा स्वार्थे नतु दिशि ।**

प्राक् प्राचीनं, प्राचीना ब्राह्मणी । तिर्यक् तिरश्चीनं, प्रत्यक् प्रतीचीनम् ।
नेह—प्राची दिक् ।

**१०८१. जात्यन्ताच्छरामो द्रव्ये ।**

ब्राह्मणजातीयः । अद्रव्ये तु ब्राह्मण जातिरदुष्टा ।

---

द्वाभ्यां वा सम्पन्नं तदषडक्षीणमित्यर्थः । पुरा यत्र गाव आशिता स्तृप्ता आसन् तस्मिन् वनादौ वाच्ये खरामेण सह आशितगो शब्दस्य आशितङ्गवीनं साधु स्यात् । मुमागमोऽत्र निपातफलम् । कर्मक्षमे वाच्ये अलंपूर्वस्य कर्मणः खरामेण सह अलंकर्मीणः साधु स्यात् । कर्मदक्ष इत्यर्थः । तथा पुरुषाय शक्ते वाच्ये खरामेण अलंपूर्वस्य पुरुषस्य अलंपुरुषीण इति साधुः स्यात् ।

अमृता०—१०८०. अञ्चेरिति । स्वार्थ विषये अञ्चेरुत्तरे खरामो वा स्यात्, दिशि वाच्ये तु स न भवति । प्रागिति—विकल्पविधानात् प्रकृतेरेव स्थितिः । केवलखरामत्वेन लक्ष्यसमीपोऽभावादार्पं दर्शयति—प्राचीना ब्राह्मणीति ।

अमृता०—१०८१. जातीति । द्रव्ये वाच्ये जात्यन्तात् छरामः स्यात् । द्रव्यमिह जाति व्यञ्जकमेव ज्ञेयम् । ब्राह्मणजातीय इति—ब्राह्मणो ब्रह्मत्वं जाति रस्येति वाक्यम्, ब्राह्मणत्व जात्याधारभूत इत्यर्थः ।

---

आशितास्तृप्ताः तस्मिन्नरण्यादौ वाच्ये खरामेण सह आशितगोशब्दस्याशितङ्गवीनं साधु स्यात् । अत्राशितान्मुमागमश्च निपातफलं । अलं । कर्मक्षमे वाच्येऽलंपूर्वस्य कर्मणः खरामेण सह अलङ्कर्मीणः साधुः स्यात् । अलं जातः कर्मणे इति पर्यादयश्चतुर्थ्या इत्यनेन मध्यपदलोपिचतुर्थीकृष्णपुरुषसिद्धात् खरामः अलङ्कर्मीण इति कर्मदक्ष इति कश्चित् । अलं । पुरुषाय शक्ते वाच्ये खरामेण सहालंपूर्वस्य पुरुषस्यालम्पुरुषीणः साधुः स्यात् । अलं शक्तः पुरुषाय इति पूर्ववत् वाक्यादिः । अत्र द्वयेऽलंशब्दस्य मान्ताव्ययत्वान्मुमागमो नापेक्ष्य इति । एकत्रैव वृत्तिमाह एत इति । कश्चिदाह चप्रत्ययान्तोऽषडक्ष इत्याद्यपि प्रयोक्तव्यमेवेति ॥ १०७९ ॥

बाल०—अञ्चे । स्वार्थेऽर्थेऽञ्चेरुत्तरः खरामो वा स्यात्, दिशि वाच्येतु न स्यात् । अञ्चेरिति लुप्तकृत्प्रत्ययस्यैव ग्रहणं नामाधिकारात् । प्रागिति प्रागेवेति योज्यं । प्रत्ययस्य वैकल्प्यात् प्रथमतः प्रकृतेरेव स्थितः, पक्षे प्राचीनं धनं, प्राचीनो वृद्ध इत्यादि । तिरश्चीनमिति तिर्यचस्तिरश्चिरुदच उदीचिरित्यनेनात्र तिरश्चादेशः । प्रतीचीनमिति अचोऽरामहरो भगवतीत्यनेनात्रारामहरः पूर्वस्य त्रिविक्रमश्च ॥ १०८० ॥

**१०८२. स्थानान्ताच्छो वा तुल्यत्वे ।**

भगवत् स्थानीयो भगवत्तुल्यः । एवं भगवत्स्थानः ।

**१०८३. किमेरामाख्याताव्ययेभ्य स्तरां तमाञ्चाद्रव्यप्रकर्षे ।**

किन्तरां किन्तमां । अत्र क्रियाया गुणस्य वा प्रकर्षः । पूर्वाह्णेतरां पूर्वाह्णेतमाम् । अत्राधारशक्तेः प्रकर्षः । एवं यातितरां यातितमां, प्रातस्तरां प्रातस्तमां, नितरां उच्चैस्तराम् । द्रव्यप्रकर्षे प्रतिषेधः, —उच्चैस्तरः कश्चित् ।

---

अमृता०—१०८२. स्थानेति । तुल्यत्वे वाच्ये स्थानात् शब्दात् छरामो वा स्यात् ।—स्थानशब्द एवात्र साम्यवाची । भगवत्तुल्यो भगवत सम इत्यर्थः ।

अमृता०—१०८३. किमिति । अद्रव्यस्य प्रकर्षे (आतिशय्ये) वाच्ये किमुशब्दात्, एरामान्तात्, आख्यातान्तात् तथाव्ययाच्च तरां तमाञ्च स्यात् । अद्रव्य प्रकर्षमेव प्रतिपादयति—क्रियाया गुणस्य वेति । याति तरामित्यादौ क्रियायाः प्रकर्षः । प्रात स्तरामित्यादौ कालस्य, नितरामित्यादौ गुणस्येति बोध्यम् ।

---

बाल०—जात्य । द्रव्ये वाच्ये जात्यन्ताच्छब्दाच्छरामः स्यात् । ब्राह्मणजातिरिव ब्राह्मणजातीयः भट्टादिः । द्रव्यादन्यत्रतु न स्यादित्याह अद्रव्ये त्विति । ब्राह्मणजातिरित्यत्र जातेरेव प्रधानता न तत्तुल्यस्य ॥ १०८१ ॥

बाल०—स्थाना । तुल्यत्वे वाच्ये स्थानान्तान्नाम्नश्छो वा भवति । शब्दशक्त्यात्र स्थान एव भगवत्साम्यं वक्तीति भगवतः स्थानमेव भगवत्स्थानीयः भगवत्तुल्य इति भगवत्साम्यः सच तुल्यादिः ॥ १०८२ ॥

बाल०—किमे । अद्रव्यस्य प्रकर्षे वर्तमानात् किंशब्दात् एरामात् आख्यातान्तात् अव्ययाच्च तरां तमाञ्च स्यात् । इदं किं इदं किमित्यनयोर्मध्येऽतिशयेन किं किन्तरां । इदं किं इदं किं इत्येषां मध्ये अतिशयेन किं किन्तमां, वदादित्वादनयोरव्ययत्वं । यद्यपिशब्दः प्रश्ने वर्तते, तथपि न प्रश्नप्रकर्षे प्रत्ययः किन्तर्हि पृच्छ्यमानस्य गुणस्य क्रियाया वा प्रकर्षे इत्याह अत्रेति । अत्र स्थले क्रियाया गुणस्य वा प्रकर्षः स्यात्, तराद्यन्तत्वेन पृच्छ्यमानप्रकर्षस्यैवावगम्यमानत्वात् । अस्मिन्पूर्वाह्णेऽस्मिन् पूर्वाह्णे इत्यनयोर्मध्येऽतिशयेन पूर्वाह्णे पूर्वाह्णेतरां । एवं बहूनां मध्ये एकस्योत्कर्षे पूर्वाह्णेतमां । कालानेङ्वा तरतमकालतनेष्वित्यनेनात्र सप्तम्या अलुक् । यद्यपि नामाधिकारात् सर्वत्र साम्न एव प्रत्ययस्तथापि विधानबलादत्र सप्तम्यन्तादप्ययं तद्धित इति ज्ञेयं । अद्रव्यप्रकर्ष इत्युक्तं सफलीकुर्वन्नाह अत्रेति । एवमित्यनेन पूर्वार्थसूचनात् इदं याति इदं यातीत्यनयोर्मध्ये इदमतिशयेन यातीति याति तरामित्यादौ यथायोग्यं वाक्यं कल्प्यं । यातितरामित्यादिद्वये कालस्य नितरामित्यादिद्वये गुणस्येति । अद्रव्यप्रकर्ष इत्युक्तात् द्रव्यप्रकर्षेतु

## १०८४. संख्यायाः क्रियाभ्यावृत्तौ कृत्वसुः, द्वि-त्रि-चतुर्भ्यः सुः ।

पञ्चवारान् हरिमर्च्चयति पञ्चकृत्वः । शतकृत्वः स्तुतवान् । द्विरधीते गीतं, त्रिश्चतुर्वा ।

## १०८५. बहो र्धा वा निकट कालक्रियाभ्यावृत्तौ ।

बहुधा यजते, बहुकृत्वो वा । अनिकटत्वेतु बहुकृत्व इत्येव ।

---

अमृत०—१०८४. संख्याया इति । क्रियाया अभित आवृत्तिः क्रियाभ्यावृत्तिः, यस्यां गम्यमानायां संख्यावाचिन उत्तरे कृत्वसुः स्यात्, तथा द्वित्रि चतुर्भ्यः संख्यावाचिभ्यस्तु सुः प्रत्ययो भवति । उराम इत् । अभ्यावृत्तिः पुनः पुनरावृत्तिः । वारशब्देन तामेव व्यनक्ति—पञ्चवारानिति । पञ्चकृत्व इति—वदादित्वेनाव्ययत्वात् स्वादे र्महाहरः । एवं सर्वत्र ज्ञेयम् । द्वौ वारौ अधीत इति द्विरधीत इत्यादि ।

अमृत०—१०८५. बहोरिति । निकटकालस्थक्रियाभ्यावृत्तौ बहु शब्दात् धाप्रत्ययो वा स्यात्, पक्षे च कृत्वसुः । निकटकालविरहे तु केवलः कृत्वसुः रित्याप–अनिकट इति ।

---

प्रतिषेध इत्याह द्रव्येति । कश्चिदिति वृक्षादिरित्यर्थः । किञ्च, पूर्वाह्णेतरामित्यत्र कालव्यतिरिक्तस्य एरामस्य भावात् कालस्य द्रव्यवाचित्वेऽपि न निषेधः । एवं शिष्टाचारात् प्रातस्तरामित्यादिष्वप्येव ॥ १०८३ ॥

बाल०—संख्या । क्रियाया अभित आवृत्तिः क्रियाभ्यावृत्तिस्तस्यां गम्यमानायां संख्यायाः संख्यावाचिनः कृत्वसुः स्यात् । द्वित्रि अभ्यावृत्तौ गम्यमानायां द्वित्रिचतुर्भ्यः संख्यावाचिभ्यस्तुसुः स्यात् । कृत्वसोः सोश्चोराम इत् । पुनः पुनः प्रवृत्तिरभ्यावृत्तिः । अभ्यावृत्तिरेव वार इति वाक्ये वारशब्दं गृह्णन्नाह पञ्चेति । यथा पञ्चकृत्व इति, तथा शतं वारान् हरिं स्तुतवान् शतकृत्व इति वदादित्वादत्र यथासम्भवं स्वादेर्महाहरः । एवं षट्कृत्वं सप्तकृत्वो भुङ्क्ते गच्छति तिष्ठतीत्यादि यथेष्टं । द्वौ वारावधीत इति द्विरधीते । एवं त्रीन् वारान् चतुरो वारानधीते त्रिरधीते चतुरधीत इति ज्ञेयं । किञ्च, अत्र कश्चित् द्व्यादिभ्यो विकल्पं सुमिच्छतीति वाशब्देन सूचितं । तेन द्विकृत्व इत्याद्यपि ॥ १०८४ ॥

बाल०—बहो । निकटकालक्रियाभ्यावृत्तौ गम्यमानायां बहुशब्दात् धा वा स्यात् पक्षे कृत्वसुश्च । बहुधेत्यादौ बहून् वारान् यजत इति वाक्यं योज्यं । निकटत्व एव विकल्पः निकटत्वाभावेतु केवलं कृत्वसुरित्याह अनिकट इति । सकृच्चैकस्य वारे गम्यमाने एकशब्दादुत्तरे सुर्भवति । एकशब्दस्य स्थाने सकृच्चादेशः आदेशे सति लुग् युजन्तस्येति सुलुक् च । सकृद्भुङ्क्ते एकवारं भुङ्क्ते इत्यर्थः, इति जुमरः । अभ्यावृत्तिर्वारः न चात्राभ्यावृत्तिः सम्भवति, तथापि लक्षणकरणसामर्थ्यादौपचारिको वारशब्दः प्रयोज्य इति कश्चित् । कश्चित्त्वेवमाह लक्षणमेतत् प्रपञ्चार्थं सकृच्छब्दस्यैकवारार्थस्य सकृद्भुङ्क्ते इति भविष्यति, एकशब्दात्तु अभ्यावृत्त्यभावादेव कृत्वसुर्न भविष्यतीति मतभेदाद्गोस्वामिपादै रेतन्न विवृतं ॥ १०८५ ॥

**१०८६. तत् प्रकृतवचने केशवमयः ।**

प्राचुर्येण प्रस्तुतः प्रकृतः, सचासौ प्रकृतश्चेति तत्प्रकृतः, तद्वचनेऽर्थे मयट् स्यात् । अन्नं प्रकृतं प्रस्तुतमन्नमयमिह । अपर आह—अन्नं प्रकृतमस्मिन् अन्नमयो यज्ञः । अपूपमयं पर्व उभयथापि प्रमाणम् ।

**१०८७. समूहवच्च बहुषु ।**

बहुषु प्रस्तुतेषूच्यमानेषु समूहवत् प्रत्ययाः स्युः । अपूपाः प्रकृता उच्यन्ते आपूपिकमिह । अन्यपदार्थे पक्षे आपूपिकं पर्व । चकारान्मयट्—अपूपमयं, तुलसीमयी पात्री । मोदकाः प्रकृता उच्यन्तेस्मिन् मौदकिकं मोदकमयम् ।

**१०८८. देवतान्तात्तादर्थ्ये यरामः, पादार्घाभ्याञ्च, अतिथेस्तु ण्यः ।**

---

**अमृता०—१०८६.** तदिति । स्वयं व्याख्याकृता । तत्र वचनं प्रतिपादनम् । मयट् प्रत्ययोऽयं स्वार्थे परार्थे च भवति, तत्राद्यमाह—अन्नमयमिहेति । द्वितीयं (परार्थं अन्यपदार्थं वा) प्राचीनमतेन दृष्टान्तयति—अन्नमयो यज्ञ इति । अपि च, संसर्गे व्याप्तौ अपृथग्भावे चमयट उदाहरणानि प्राचां, यथा,—घृतमयः धूममयः चिन्मय इति ।

**अमृता०—१०८७.** समूहेति । वृत्तिमाह—बहुष्विति । समूहवदिति—तस्य समूह इत्यर्थे यथा—अचित्त-हस्तिभ्यामित्यनेन माधवठो विहित स्तथात्रापि भवतीत्यर्थः । सूत्रधृतस्य चकारस्य फलमाह—चकारान्मयडिति ।

**अमृता०—१०८८.** देवतेति । तादर्थ्ये गम्ये देवतान्तात् नाम्नो यरामः स्यात्,

---

**बाल०—**तत् । प्रकृतशब्दस्य हृदयस्थमर्थं प्रतिपादयन् वृत्तिमाह प्राचुर्येणेति । प्राचुर्येण बाहुल्येन यः प्रस्तुतः सम्भृतीकृतः स एव प्रकृतपदवाच्यः । सचासावित्यत्र तच्छब्देन यस्मात् प्रत्ययस्तदेव परामृश्यते । तद्वचनेऽर्थे तत्प्रकृतवचनेऽर्थे तच्छब्दनिर्देश्यान्नाम्नो मयट् स्यात् । वाक्ये प्रस्तुतमित्यस्मात् पूर्वं प्राचुर्येणेति योज्यं । अन्नमयमिहेति पर्वादावित्यर्थः । अत्रापरः कश्चिदेतं वाक्योदाहरणे आहेति व्यक्ति अपेत्यादि । अपूपमयमिति अपूपः प्रकृतोऽस्मिन्नित्यर्थः । उभयथापि उभयप्रकारेऽपि प्रमाणं वाच्यमित्यर्थः ॥ १०८६ ॥

**बाल०—**समू । वृत्तिमाह बहुष्विति । समूहवदित्यस्मात् परं नाम्न इति प्रयोक्तव्यं । आपूपिकमिति तस्य समूह इत्यर्थे यथा अचित्तहस्तिभ्यामित्यनेन माधवठस्तद्वदत्रापि इहेति पूर्ववत् । अत्राप्यपरमतमाह अन्येति । सूत्रस्थं चशब्दस्य फलं वक्ति चकारादिति । यस्मात् समूहवत् प्रत्ययाः स्युस्तस्माच्चकारान्मयडपि स्यात् । अपूपमयमित्यस्मादिहेत्युह्यं । अपरमतेतु तुलसीमयीति । मोदका इत्यस्मात् पूर्वं एवमिति पूरयितव्यं ॥ १०८७ ॥

विष्णुदेवतायै इदं विष्णुदेवत्यम् । तथा पाद्यं अर्घ्यं, तथा आतिथ्यम् ।

**१०८९. स्वार्थे ।**

प्रभुरयम् ।

**१०९०. अनन्तावसथेतिह भेषजेभ्यो ण्यः ।**

अनन्त्यं अवसथ्यं ऐतिह्यं भैषज्यम् ।

**१०९१. तथा नव-सूर-मत्त-यविष्ठ-क्षेमेभ्यो यः ।**

नव्यं सूर्यः मत्त्यम् ।

**१०९२. नवस्य नूत्न-नूतन-नवीनाश्च ।**

साधवः ।

---

पादार्घाभ्याञ्च स स्यात्, तथा अतिथि शब्दात्तु ण्यरामो भवति, तादर्थ्य एव । पादाय इदं पाद्यं, अतिथये इदं आतिथ्यं स्वागतासनादिकम् ।

**अमृता०**—१०८९. स्वार्थ इत्यधिकारः ।

**अमृता०**—१०९०. स्वार्थे अनन्त-आवसथ-इतिह-भेषज इत्येतेभ्यो ण्यरामः स्यात् ।

**अमृता०**—१०९१. तथेति । स्वार्थे नवप्रभृतिभ्यः पञ्चभ्यो यरामो भवति ।

**अमृता०**—१०९२. नवस्येति । स्पष्टम् । क्रमात् त्न-तन-खरामैः साधव इत्यर्थः ।

---

**बाल०**—देव । तादर्थ्ये देवतान्तान्नाम्नो यरामः स्यात् । पादा । तादर्थ्ये पादार्घाभ्यामपि स एव स्यात् । अति । पूर्वस्मिन्नर्थेऽतिथिशब्दात्तु ण्यरामः स्यात् । तथेति पादाय इदमर्घाय इदमित्यर्थः । तथातिथये इदमित्यपि । सर्वत्र पुष्पफलजलादिकं वाच्यं ॥

**बाल०**—स्वार्थे । स्वार्थेऽर्थे नाम्नो यथास्वं प्रत्ययः स्यात् । इममधिकरोति प्रभुरिति ॥ १०८९ ॥

**बाल०**—अन । स्वार्थेऽर्थेऽनन्तु आवसथ इतिच भेषज इत्येतेभ्यो ण्यरामो भवति । अनन्त एवानन्त्यं । एवमुत्तरत्रापि वाक्यान्यूह्यानि पारम्पर्योपदेशे स्यादैतिह्यमितिहा-व्ययमित्यमरः । भैषज्यमौषधं । चतुर्वर्णादिभ्यश्चेति वक्तव्यं । स्वार्थेऽर्थे चतुर्वर्णादिभ्यश्च ण्यरामः स्यात् । चतुर्वर्णमेव चातुर्वर्ण्यं । एवं चातुराश्रम्यं चातुर्वैद्यं सार्ववैद्यं । किञ्च, चातुर्वैद्यादिद्वयेऽनुहोडादित्वादुभयपदस्य वृष्णीन्द्रः । तथा माङ्गल्यं षाड्गुण्यं सैन्यं सान्निध्यं सामीप्यं औपम्यं सौख्यं माणिक्यं त्रैकाल्यं त्रैशब्द्यं त्रैलोक्यमित्यादि ॥ १०९० ॥

**बाल०**—तथा । तथेति पूर्वोक्तेऽर्थे नवादिभ्यो यरामः स्यात् । नव एवं नव्यं । एवं सूर्यः मत्त्यं यविष्ठ्यं क्षेम्यं । स्वार्थिकाः क्वचित् प्रकृतेर्लिङ्गवचनान्यतिक्रान्ता वर्तन्त इत्यनेन स्वार्थिकानां लिङ्गादिव्यवस्थोक्तात्रापि ज्ञेया ॥ १०९१ ॥

**१०८३. पुराणस्य प्रण-प्रत्न-प्रतन-प्रोणाश्च ।**

साधवः ।

**१०८४. भाग-रूप-नामभ्यो धेयः ।**

भागधेयम् ।

**१०८५. देवात्ताप् लक्ष्म्याम् ।**

देवता ।

**१०८६. यावकादयः साधवः ।**

यावकः माणिकः नान्तरीयकः कन्दुकः स्नातक इत्यादि ।

**१०८७. लोहितको मणिबेदे, वर्णे चास्थिरे, लाक्षादिना रक्ते च साधुः ।**

---

अमृता०—१०८३. पुराणस्येति । स्फुटम् । प्रादेशेन न-त्न-तनःखरामैः सह साधवः।

अमृता०—१०८४. भागेति । स्वार्थे भाग रूप-नामभ्यो धेयः प्रत्ययः स्यात् । एवं रूपधेयं रूपमेवेत्यर्थः, नामधेयं नामैवेत्यर्थः ।

अमृता०—१०८५. देवादिति । स्वार्थे लक्ष्म्यां देवशब्दात् ताप् स्यात् । पइत् ।

अमृता०—१०८६. यावकेति । स्वार्थे नृसिंह वुरामादिभिः साकं यवादीनां यावकादयः साधवो भवन्ति । यव एव यावक इत्यादयः ।

अमृता०—१०८७. लोहितक इति । मणिभेदे, अस्थिरे वर्णे, तथा लाक्षादिना रक्ते

---

बाल०—नव । स्वार्थेऽर्थे नवस्य सम्बन्धे त्न तन खरामाः सन्तस्तस्य नूरित्यादेशेन सह नूत्न नूतन नवीनाश्च साधवो भवन्ति । नवीन इत्यत्र न्वादेशे सति उद्धयस्येति गोविन्दो ज्ञेयः ॥ १०८२ ॥

बाल०—पुरा । स्वार्थेऽर्थे पुराणस्य सम्बन्धे न त्न तन खरामाः सन्तस्तस्य प्र इत्यादेशेन सह प्रण प्रत्न प्रतन प्रीणाश्च साधवो भवन्ति । प्रीण इत्यत्र प्रादेशे सति अ-इद्वयस्येत्यरामहरो ज्ञेयः । वाक्यन्तु नव एव पुराण एवे तूह्यं ॥ १०८३ ॥

बाल०—भाग । स्वार्थेऽर्थे भागरूपनामभ्यो धेयः स्यात् । भाग एव भागधेयमिति । एवं रूपधेयं नामधेयं ॥ १०८४ ॥

बाल०—देव । स्वार्थेऽर्थे देवशब्दात् ताप् सन् लक्ष्म्यां वर्तते । देव एव देवतेति ॥

बाल०—याव । पूर्वोक्तेऽर्थे नृसिंहवुरामादिभिः सह यवादीनां यावकादयः साधवः स्युः । यव एव यावक इति नृसिंहवुरामान्तः । मणिरेव माणिक इति माधवठान्तः । नान्तरीयकादित्यत्रयन्तु करामान्तं । इत्यादीत्यादिपदेनास्याकृतिगणत्वं सूचितं ॥१०८६॥

अस्थिरे वर्णे लोहितिका लोहिनिका चेति दृश्यते ।

**१०६८. कालकमस्थिर-तद्वर्णे स्यात् ।**

कालकं मुखम् ।

**१०६९. विनयादे र्नृसिंह ठः ।**

विनयो वैनयिकः, समयः सामयिकः, उपचारः औपचारिकः, मुक्ता मौक्तिकम् ।

**११००. एवमत्यय-व्यवहार-समूह-विशेषाच्च, उपायस्यौपयिकं; अकस्मादित्यस्याकस्मिकम् ।**

साधु ।

---

च वाच्ये कप्रत्ययेन सह लोहितस्य लोहितकः साधुः स्यात् । लोहितिका लोहिनिका च प्राचां मते साधुः ।

**अमृता०**—१०६८. कालकमिति । अस्थिरकालवर्णे क प्रत्ययेन कालस्य कालकमिति साधु स्यात् । कालकं मुखमिति—मुखस्य कालिमा शोक दुःखादिनैव नतु सततमित्यर्थः ।

**अमृता०**—१०६९. विनयादेरिति । स्वार्थिकप्रत्ययान्तानां प्रकृतेश्च स्वरूपस्थितेरुभयमुदाहरणे दर्शयति—विनयो वैनयिक इत्यादि ।

**अमृता०**—११००. एवमित्यतिदेशः । अत्यय प्रभृतीनाञ्च सम्बन्धे नृसिंह ठः स्यात्, तथा तेन प्रत्ययेन उपायस्य औपयिकं, अकस्मादित्यस्य चाकस्मिकं साधु भवति । अत्यय एवात्ययिक इत्यादि । संसारहरो निपातफलम् ।

---

**बाल०**—लोहि । मणिभेदे वाच्ये अस्थिरेच, वर्णेच वाच्ये लाक्षादिना, रक्तेच वाच्ये कप्रत्ययेन साकं लोहितस्य लोहितकः साधुः स्यात् । अत्रास्थिरे वर्णे ठरामान्ता लोहितिका लोहिनिका चेति प्राचां मते दृश्यते इत्याह अस्थिर इति । तन्मते तरामस्य पाक्षिकनरामादेशस्तु निपातनात् ज्ञेयः ॥ १०६७ ॥

**बाल०**—काल । तस्य वर्णस्तद्वर्णः अस्थिरश्चासौ तद्वर्णश्चेति अस्थिरतद्वर्णस्तस्मिन् गम्ये केन सह कालस्य कालकं साधु स्यात् । कालकं मुखमित्यत्र मुखस्य कालिमवत्वं शोकादिनैवेति न तद्वर्णस्य स्थिरता ॥ १०६८ ॥

**बाल०**—विन । तद्धितस्य बाहुल्यात् स्वार्थिकप्रत्ययान्तानां प्रकृतेः स्थितिसम्भवाच्चात्र वाशब्दो गम्य इति स्वयमुदाहरणैः स्पष्टीकरिष्यते । एवं प्रकरणेऽत्र सर्वत्रैव यथासम्भवं वाकारो ज्ञेयः । तेन स्वार्थेऽर्थे विनयादेर्नृसिंहठो वा स्यात् । विनय एव विनयः वैनयिक इत्यादि ॥ १०६९ ॥

**११०१. वाचिकं सन्देशे, कार्मणं वाचा प्रतिपादिते कर्मणि ।**

साधुनी ।

**११०२. ओषधेः केशवणोऽजातौ ।**

औषधं पिब । जातौ तु,—

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभाषः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपा ॥

इति कुमारः १।१० ।

---

अमृता०—११०१. वाचिकमिति । सन्देशे (वार्त्तायां) वाच्ये नृसिंहठेन सह वाचो वाचिकं साधु स्यात्, तथा वाचा प्रतिपादिते कर्मणि वाच्ये केशव णरामेण सह कर्मणः कार्मणं साधु भवति ।

अमृता०—११०२. ओषधेरिति । जातिभिन्ने वाच्ये ओषधेरुत्तरे केशवणः स्यात् । ओषधिशब्द ओषधिभिरारब्धे कल्कादौ हि अजातिः, जातौ तु फलपाकान्ता क्षुद्रवृक्षा इति शिष्टप्रयोगेण जातौ केशवणस्याभावं दर्शयति—वनेचरीणामिति । ओषधयो वनेचराणां सम्बन्धे अतैलपूर्णाः सुरत प्रदीपा भवन्तीत्यन्वयः । ओषधीनां प्रभा हि प्रदीपकार्यं निष्पादयतीति भावः ।

---

बाल०—एव । आतिदेशिकोऽयं । एवम्प्रकारेणात्ययव्यवहारहमूहविशेषाच्च नृसिंहठो वा स्यात् । अत्यय एव अत्ययः आत्ययिक इत्यादिः । उपा स्वार्थेऽर्थे नृसिंहठेन सार्द्धं उपायस्यौपयिकं वा स्यात् । अत्र । पेत्यस्य वामनो निपातफलं । अक । स्वार्थेऽर्थे नृसिंहठेन साकमकस्मादित्यस्याकस्मिकं साधु वा स्यात् । अत्र संसारहरो निपातफलं । यथोक्तमत्रान्यैः । विनयोपचारसङ्गतिसमयसमुत्कर्षसम्प्रदानानि । व्यवहारसमाचाराः कस्मादनुगामिनः समूहश्च । अत्ययविशेषविषयाः कथञ्चिदत्यन्त इत्याद्याः ॥ ११०० ॥

बाल०—वाचि । सन्देशे वाच्ये नृसिंहठेन सह वाचो वाचिकं साधु स्यात् । सन्देशवाग्वाचिकमित्यमरः । कार्म । वाचा प्रतिपादिते कर्मणि वाच्ये केशवणरामेण सह कर्मण कार्मणं साधु स्यात् ॥ ११०१ ॥

बाल०—ओष । अजातौ वाच्ये ओषधेरुत्तरः केशवणः स्यात् । यदा ओषधिभिरारब्धे कल्कादौ ओषधिशब्दो वर्त्तते, तदैव ओषधिरेवेति औषधं पिवेति । यदातु जातौ वर्त्तते, तदा केशवणो न स्यादिति शिष्टप्रयोगेण द्रढयति जाताविति । यत्र हिमालये रजन्यां रात्रौ वनितासखानां वनेचराणां सम्बन्धे दरीगृहोत्सङ्गनिषक्तभासोऽतैलपूराः सुरतप्रदीपा ओषधयो भवन्तीत्यन्वयः । दरी गुहा सैव गृहं तस्योत्सङ्गः क्रोडस्तत्र निषक्ता नियुक्ता भासो दीप्तयो यासां ताः ॥ ११०२ ॥

प्रद्युम्नः कृष्णतः प्रति कृष्णाद् वा । तथा व्रजत आयाति व्रजाद्वा । अहीयरुहः किम्—वैष्णवमार्गाद्धीयते विष्णुपदादवरोहति ।

**११०७. अतिग्रहणाचल-निन्दा स्वकर्तरि तृतीयायाः, हीयमान-पापयोगाच्च ।**

वृत्ततोऽतिगृह्यते, हरिभक्तितो न चलति, व्यवहारतो निन्दितः । पक्षे हरिभक्त्येत्यादि । अकर्त्तरि किम्—वृत्तेन क्षिप्तः । तथा वृत्ततो हीयते वृत्ततः पापः ।

---

प्रत्ययो वा स्यात् । हीतरुहोऽप्रयोगे सति अपादाने प्रतिनिधौ चार्थे पञ्चम्याः तसि र्वा भवति, पक्षे पञ्चमीविष्णुभक्तिरेव । प्रत्युदाहरति—वैष्णवमार्गाद्धीयत इति । त्यज्यत इत्यर्थः, तथा अवरोहति स्र'सतीत्यर्थः ।

अमृता०—११०७. अतीति । अतिग्रह-अचय-निन्दासु अर्थेषु नाम्न उत्तरस्या अकर्त्तरि विहिताया तृतीयायाः स्थाने तसि र्वा स्यात् । हीयमानेन पापेन योगो यस्य तादृशान्नाम्न उत्तरस्या अकर्त्तरि तृतीयायाः तसि र्वा भवति । वृत्ततोऽपिगृह्यत इति–वृत्तेनातिक्रम्य गृह्यत इत्यर्थः । वृत्ततो हीयत इत्यादौ करणे हेतौ बा तृतीया ।

---

तस्य । हीयरुहोऽप्रयोगे सति अपादानार्थे चकारात् प्रतिनिधावपि नाम्नः परस्याः पञ्चम्याः परस्तसिर्वा स्यात् । रुह-हाकोरप्रयोगेऽपादानपञ्चम्या इति जुमरः । सिद्धोपदेशे विरिञ्चौ चेत्यनेन तसेरिराम इत् । पञ्चम्यास्तस् तद्धित इति सुबन्तपादे स्वयमेवोक्तमिति तसेस्तद्धितत्वात् । पूर्वस्य विष्णुपदवत्त्वं स्वादितद्धितयोरय-सर्वेश्वराद्योरित्यनेन पूर्वस्य विष्णुपदवत्त्वं सिद्धं । तेन पूर्वस्य विष्णुपदवत्त्वात् तसेस्तद्धितत्वेन समासावयवत्वाच्च अन्तरङ्गत्वादेर्महाहर इत्यनेन कृष्णत इत्यत्र तसि परे पञ्चम्या महाहरः । एवमुत्तरत्रापि । अत्र प्रतीति प्रतिनिधौ वर्तते, तस्मात् प्रद्युम्नः कृष्णस्य सदृश इति पर्यवसितोऽर्थः । तथेति पूर्वप्रकारेणेत्यर्थः । व्यावर्तयन्नाह अहीयेति । वैष्णवमार्गात् हीयत इति त्यज्यते इत्यर्थः दैवादिको हा इत्यस्य कर्तर्ययं प्रयोग इति कश्चित् । भावे चास्य प्रयोगो नेष्यत इत्यार्या इति स्वार्थाद्धीयते देवदत्तेनेति न स्यात् । तेन कर्मकर्तृर्यायं प्रयोग इति वाभटः । शक्निर्देशसामर्थ्यात् ओहाङ् गतावित्यस्य सार्थत उज्जिहीत इति कश्चित् । अवरोहतीति श्रंसतीत्यर्थः ।। ११०६ ।।

बाल०—अति ग्रहाचलनिन्दास्वर्थेषु अकर्तरि विहितायास्तृतीयाः परस्तसिर्वा भवति । हीय । हीयमानेन पापेनच योगो यस्य तद्वाचिनः शब्दादुत्तरस्या अकर्तरि विहितायास्तृतीयायाः परस्तसिर्वा स्यात् । वृत्ततोऽतिगृह्यत इति वृत्तेनातिक्रम्य गृह्यत इत्यर्थः । गृह्यत इति यक् कृष्णधातुके भावकर्मणोरिति यक् । ग्रहिज्यावचीत्यनेन सङ्कर्षणः । अत्र हेतौ करणे वा विहितायास्तृयायास्तस् । एवं हरिभक्तित इत्यादिद्वयेऽपि । विकल्पं स्मारयति पक्ष इति । किञ्च, पक्ष इत्यस्मात् वृत्तेनेत्यपि योज्यं । अकर्तरीत्यत्र

## ११०८. षष्ठ्या विविधपक्षाश्रये, रोगादपनयनेच ।

देवा अर्जुनतोऽभवन्, आदित्याः कर्णतोऽभवन् । अर्जुनस्य पक्षे, कर्णस्य पक्षे इत्यर्थः । तथा हिक्कातः कुरु, प्रवाहिकातः कुरु, प्रतिकारमस्याः कुर्वित्यर्थः ।

## ११०९. प्रथमाप्रभृतिभ्यश्च यथादर्शनम् ।

कर्मगुण इत्यर्थे कर्मगुणतः । स्मरणात् स्मरणतः, आदौ आदितः, पृष्ठे पृष्ठतः, शरीरेण शरीरतः । मन्त्रो दुष्टः स्वरतो वर्णतो वा ।

---

अमृता०—११०८. षष्ठ्या इति । विविधपक्षाश्रये गम्ये नाम्नः परस्याः षष्ठ्याः स्थाने तसि र्वा स्यात् । तथा रोगात् अपनयने च गम्यमाने रोगवाचिन उत्तरस्याः षष्ठ्याः तसि र्वा भवति । उदाहरणयोरर्थमाह—अर्जुनस्य पक्ष इत्यादि ।

अमृता०—११०९. प्रथमेति । यथादर्शनमिति शिष्टप्रयोगदर्शनमनतिक्रम्य नाम्नो विहितेभ्यः प्रथमादिभ्यश्च तसि र्वा भवति । कर्मगुणत इति—कर्मणो गुण इति विग्रहः, अतः प्रथमायास्तसिः । पक्षे यथास्थिति ! स्वरतो वर्णत इति हेतौ तृतीयायास्तसिः ।

---

इतिशब्दः प्रयोक्तव्यः सर्वत्र दर्शनात् । वृत्तेन क्षिप्त इति कर्त्तरि तृतीया । उत्तरसूत्रस्योदाहरणे दर्शयति तथेति । वृत्ततो हीयते वृत्ततः पाप इति हेतौ करणे वा तृतीया । अत्र वृत्तस्य हीयमानेन पापेनच अवैष्णवादिना । योगः नात्र निन्दा विवक्षिता, किन्तु स्वरूपाख्यानमेतत् निन्दायां पूर्वेणैव सिद्धेः ।। ११०७ ।।

बाल०—षष्ठ्या । विविधपक्षाश्रये गम्ये नाम्नः परस्याः षष्ठ्या उत्तरस्तसिर्वा स्यात् । रोगा । अपनयने रोगस्य चिकित्सायां गम्यमानायां रोगवाचिनो नाम्न उत्पन्नायाः षष्ठ्या उत्तरस्तसिर्वा स्यात् । देवा इत्याद्युदाहरणद्वये अर्जुनादि द्वाभ्यां, विविधपक्षाश्रयसम्बन्धे या षष्ठी तस्यास्तस्, विविधपक्षाश्रयश्चात्रासाक्षात् प्रतीयत इति । पक्षे, षष्ठ्यास्थितिरित्यपि सूचयितुमर्थकथनप्रकारमाह अर्जुनस्येति । अर्जुनस्य पक्षे देवाः, कर्णस्य पक्षे आदित्या अभूवन् यथाक्रमं तयोः पक्षमाश्रितवन्त इत्यर्थः एतत्तु कर्णार्जुनयोर्द्वैरथयुद्धे विवृतमस्ति । इत्यादीत्यादिपदेन यथासम्भवमन्यदूह्यं । उत्तरस्योदाहरणे दर्शयति तथेति । अर्थमाह प्रतीति । अस्या इति हिक्कायाः प्रवाहिकायाश्च प्रतिकारं कुर्वित्यन्वयः । पूर्ववदत्रापि पक्षे षष्ठ्या स्थितिः । हिक्वा रोगविशेषः । प्रवाहिका ग्रहणी रुक् । अपनयने किं, हिक्कायाः प्रकोपं करोतीत्यादि ।। ११०८ ।।

बाल०—प्रथ । दर्शनमिति शिष्टप्रयोगाणामित्यर्थाद्गम्यते । तेन यथादर्शनमिति शिष्टप्रयोगदर्शनमनतिक्रम्य नाम्नो विहितेभ्यः प्रथमादिभ्यश्च तसिर्वा स्यात् । कर्मेति कर्मणो गुणः कर्मगुणः स इत्यर्थे कर्मगुण इति प्रथमायास्तसिः । एवं स्मरणादित्याद्यर्थे स्मरणत इत्यादि स्पष्टं । पक्षे, प्रथमादेः स्थितिश्च । स्वरतो वर्णत इति हेतुतृतीयायास्तस् । एवं मन्त्रतो हीन इतितु कर्तृ तृतीयायास्तस्, हाक्प्रयोगे पञ्चम्या निषेधात् । हीयमानपापयोगाच्चेत्यस्य प्राप्तिरपि न सम्भवति । कर्तृव्यतिरिक्ततृतीयाया अर्थासङ्गतेश्च ।।११०९।।

## १११०. बह्वाल्पार्थात् कारकाच्छस् माङ्गलिके, संख्यापरिमाणाभ्याञ्च वीप्सायाम् ।

बहूनि बहुभ्यो बहुभिर्वा ददाति बहुशो ददाति । एवं भूरिशः अल्पशः स्तोकशः । श्राद्धादौ तु मा भूदिति माङ्गलिक ग्रहणं । संख्यायाः—द्वौ द्वौ ददाति द्विशः, एवं पञ्चशः । परिमाणात्—पणं पणं ददाति पणशः, एवं प्रस्थशः पादशः । अकारकात्तु बहुस्वामी ।

---

**अमृता०**—१११०. वह्विति । माङ्गलिकेऽर्थे गम्ये बह्वर्थात् अल्पार्थाच्च कारक युक्तान्नाम्न शस् प्रत्ययो वा भवति । तथा वीप्सायां गम्यमानायां संख्यावाचकात् परिमाण वाचकाच्च कारकान्वितनाम्नः शस् वा भवति । बहूनीति कर्म कारकः बहुभ्य इति सम्प्रदानं, बहुभिरिति करणम् । ददातीत्यनेन माङ्गलिककर्म बोध्यते । अर्थग्रहणफलं दर्शयन्नुदाहरति—भूरिश इत्यादि । स्तोकश इत्यल्पार्थः । माङ्गलिक्योपादान प्रयोजनमाह—श्राद्धादौ तु माभूदिति । व्यावर्त्तयति—अकारकात्तु बहुस्वामीति । अत्र बहूनां स्वामीति विग्रहे बहूनामिति सम्बन्धसामान्ये षष्ठीविधानात् कारकत्वाभाव इत्याशयः ।

---

**बाल०**—बह्व । बहवश्च अल्पश्च बह्वल्पौ तावर्थौ यस्य स बह्वल्पार्थस्तस्मात् । माङ्गलिके गम्ये बह्वार्थादल्पार्थाच्च कारकरूपान्नाम्नः शस् वा भवति । अधिकाराद्वाकारोऽत्रानुवर्तते । संख्या । वीप्सायां गम्यमानायां सख्यावाचकात् परिमाणवाचकाच्च कारकरूपान्नाम्नः शस् वा स्यात् । वाक्योदाहरणानि दर्शयति बहूनीत्यादिना । किञ्च, बहूनीत्यस्मात् पूर्वं आभ्युदयिकादिषु कर्मस्विति योज्यं, माङ्गलिकोपादानां । एवमाभ्युदयिकादिषु कर्मसु बहुभ्य आगच्छति बहुषु निदधातीत्याद्यर्थेऽपि बहुश इत्यादि । अर्थग्रहणस्य फलं सूचयन्नुदाहरणान्तराण्याह एवमिति । भूरिश इति आभ्युदयिकादिषु कर्मसु भूरीणि ददातीत्यादि वाक्यं योज्यं । तथा प्रभूतशो ददातीत्यादि यथास्व । एवमाभ्युदयिकादिषु कर्मसु अल्पं ददातीत्याद्यर्थेऽल्पश इत्यादिः । माङ्गलिकग्रहणस्य फलं दर्शयति श्राद्धेति । श्राद्धादावित्यस्मात् पूर्वं अनिष्टे कर्मणीति पूरणीयं । तेनानिष्टे कर्मणि अल्पश इत्यादिर्न स्यात् । आभ्युदयिके कर्मणि बहुशो दानं, अनिष्टे कर्मण्यल्पशो दानमिति कश्चित् । बह्वल्पार्थात् किं गां ददाति । कारकादिति किं बहूनां स्वामीत्यादौतु न स्यात् । संख्याया इति संख्यां लक्षीकृत्योदाह्रियते इत्यर्थः । यथा द्विश इत्यादिद्वयं, तथा कतिशः गणशः तावच्छः द्वादशशइत्यादि । परिमाणादिति संख्याया इतिवद्व्याख्येयं । यथा पणश इत्यादि एवं कार्षापणश इत्यादिच यथास्वं । पणादयः परिमाणशब्दा अन्यूनानतिरिक्तस्य परिमाणस्वरूपस्य एकार्थस्य वाचकाः विष्णुभक्त्यातु तेषां द्वित्वादिकमौपचारिकमभिधीयते । घटं घटं ददातीत्यत्रतु न भवति, नहि घटादयः पणादिवत् स्वभावात् एकार्थमात्रवृत्तयः यतो जातिशब्दा अमी जात्यतिव्यञ्जकभूतायामनेकव्यक्तौ वर्तन्ते । प्रकरणादिनातु एकार्थावगतौ घटशो देहीत्यादि भवत्येव यथा वृन्दशः सङ्घशः पूगश इति । वीप्सायामिति किं, द्वौ ददाति । अकारकत्वेतु द्वयोर्द्वयोः स्वामीत्यादौ न स्यात् ॥ १११० ॥

**१११९. कृते द्विर्वचनेऽनेकसर्वेश्वरोत्तरार्द्धादव्यक्तानुकरणात् कृभ्वस्तियोगे आच्, नरस्य तलोपश्च ।**

पटत् पटत् करोति, पटपटा करोति । एवं दमद्दमा स्यात् ।

**१११२. नत्विती ।**

पटपटदिति करोति ।

**१११३. आञ् कृञ्योगे ।**

प्रभुरयं विं यावत् ।

**१११४. द्वितीय-तृतीय-शम्बवीजेभ्यः कृषौ, संख्यायाश्च गुणान्तायाः ।**

---

अमृता०—१११९. कृत इति । कृभ्वस्तियोगे द्विर्वचने कृते (आभीक्ष्ण्ये वीप्सायां वा) सति अनेक सर्वेश्वरोत्तरार्द्धात् अव्यक्तानुकरण शब्दात् आच् प्रत्ययः स्यात्, नरस्य तरामश्चेत् तदा तस्य लोपश्च स्यात् । पट्पटेति—नरस्य तरामहरः, नारायणस्य हरश्चितीति अद्भागहरः । दमूदमू स्यादिति वाक्ये दमूदमा स्यादिति । इह तरामाभाव एव । एवं खट् खटा करोति, चट् चटा भवतीत्यादि ।

अमृता०—१११२. नेति । इति शब्दे परे तु तादृशानुकरण शब्दात् आच् न भवति ।

अमृता०—१११३. आजिति । कृञ् धातुयोगे नाम्नो यथास्वं आच् स्यात् । विप्रत्ययं यावदयमधिकारो ज्ञेयः ।

अमृता०—१११४. द्वितीयेति । कृषौ वाच्ये द्वितीय-तृतीय-शम्ब-बीजेभ्यः कृञ् योगे

---

बाल०—कृते । द्विर्वचन इत्यनेनात्राभीक्ष्ण्यं वीप्सा वा लभ्यते तत्तां विना द्विर्वचनासम्भवात् । यावन्मात्ररूपं तावन्मात्रबोधकमव्यक्तानुकरणमिति । यत्राकारादयो वर्णाः स्पष्टा न प्रतीयन्ते, सोऽव्यक्तशब्दस्तस्यानुकरणमिति कश्चित् । कृभ्वस्तियोगे द्विर्वचनकृते सति, अनेकसर्वेश्वरोत्तरार्द्धादव्यक्तानुकरणाच्छब्दात् आच् स्यात् । नरस्य तकारश्चेत्तदा तस्य लोपश्च । एवमिति दमद्दमा स्यादिति । अत्र नरे तरामाभावात्तस्य हरो न स्यात् । किंवेदं दमच्छब्दस्य रूपं । एवं खटखटाकरोति खटखटाभवतीत्यादि ॥

बाल०—नत्वि । इति परे कृभ्वस्तियोगे कृते द्विर्वचनेऽनेकसर्वेश्वरोत्तरार्द्धादव्यक्तानुकरणात्तु आच् न स्यात् । एवं पटपटदिति स्यादित्यादि । अनेकेति किं, श्रत् श्रत् करोति । अव्यक्तानुकरणादिति किं, दृशत् दृशत् करोतीत्यादौ न स्यात् ॥ १११२ ॥

बाल०—आच् । कृञ्योगे नाम्नो यथास्वं आच् स्यात् । यावत् वि तावदयं प्रभुनामाधिकार इत्याह प्रभुरिति ॥ १११३ ॥

बाल०—द्विती । कृषौ वाच्ये द्वितीयतृतीयशम्बवीजेभ्य आज्भवति कृञ्योगे ।

द्वितीयं कर्षणं करोति द्वितीया करोति, शम्बा करोति, पुनस्तिर्यक कर्षतीत्यर्थः। तथा द्विगुणा करोति क्षेत्रम्।

## १११५. समयाद् यापनायाम्।

समयाकरोति कालं यापयतीत्यर्थः।

## १११६. सपत्र-निष्पत्राभ्यामतिव्यथने।

सपत्रा करोति मृगं, पत्रपर्यन्तेन शरेण तं व्यथयतीत्यर्थः। एवं निष्पत्रा करोति, पत्रनिर्गमपर्यन्तेन इत्यादि पूर्ववत्। अतिव्यथने किम्—निष्पत्रं करोति तरुम्।

---

आच् स्यात् , तथा गुणन्तरायाः संख्यायाश्चोतरे आच् भवति। एवं तृतीया करोतीति। द्विगुणा करोतीति—द्विगुण विलेखनं करोतीत्यर्थः।

**अमृता०**—१११५. समयादिति। यापनायां गम्यमानायां कृञ् योगे समयशब्दा- दाच् स्यात्।

**अमृता०**—१११६. सपत्रेति। अतिव्यथनेऽर्थे गम्यमाने सपत्र-निष्पत्राभ्यां कृञ् योगे आच् स्यात्। पत्रं शराग्रस्थं सूक्षाग्रहौलास्त्रम्। पत्रनिर्गम पर्यन्तेनेति—शरीरं निर्भेद्य शरमपरपार्श्वे निष्क्रामयतीत्यर्थः।

---

तथा गुणान्तायाः संख्यायाश्च आच् स्यात्। यथा द्वितीयाकरोति। एवं तृतीयाकरोति अनुलोमं स्पृष्टं, पुनः प्रतिलोमं कर्षतीत्यर्थः। शम्बाकरोतीत्यस्यार्थं स्वयमाह पुनस्तिर्यगिति। एवं वीजाकरोति वीजेन सह कर्षतीत्यर्थः। द्विगुणाकरोतीति द्विगुणं विलेखनं क्षेत्रस्य करोतीत्यर्थः। एवं त्रिगुणाकरोतीत्यादिः। क्षेत्रमिति सर्वेषां वाच्यपदं ज्ञेयं॥ १११४॥

**बाल०**—सम। कृञ्योगे यापनायां गम्यमानायां समयशब्दाच् स्यात्। यापना तावत्कालस्य सम्भवतीति स्पष्टयन्नाह कालमिति॥ १११५॥

**बाल०**—सप। पत्रेण सह वर्तमान इति सपत्रः निर्गतं पत्रमस्मादिति निष्पत्रः इत्येताभ्यामतिव्यथने गम्यमाने कृञ्योगे आच् भवति मृगमित्यस्मात् परं व्याध इति योज्यं। इत्यादिपूर्ववदिति शरेण तं व्यथयतीत्यर्थः। अतिव्यथन इत्यत्रातिव्यधन इति कश्चित् पठति। तस्मिंश्च सति सपत्राकरोति सपत्रं शरमस्य शरीरे प्रवेशयतीत्यर्थः। निष्पत्राकरोति शरीरात् शरं अपरपार्श्वे निष्क्रामयतीत्यर्थः। व्यावर्तयति अतीति। तरुमित्यस्मात् परं ग्रीष्म इति पुरणीयं। एवं सपत्रं वृक्ष करोति प्रावृडितिच॥ १११६॥

**१११७. निष्कुलान्निष्कोषणे ।**

निष्कुलाचकार हिरण्यकशिपूदरम् । अन्तर्भाग बहिष्करणेन तद्विदारयामासेत्यर्थः ।

**१११८. सुख-प्रियाभ्यामानुलोम्ये ।**

सुखाकरोति वैष्णवम् ।

**१११९. दुःखात् प्रातिलोम्ये ।**

दुखाकरोत्यवैष्णवम् ।

**११२०. शूलात् पाके ।**

शूलाकरोति हरिपराङ्मुखात् यमः ।

---

**अमृता०**—१११७. निष्कुलादिति । निष्कोषणेऽर्थ निष्कुलशब्दात् कृञ् योगे आच् स्यात् । निष्कुलाचकारेत्यस्यार्थमाह—अन्तर्भागेति ।

**अमृता०**—१११८. सुखेति । आनुलोम्योऽर्थादानुकूल्येऽर्थे गम्यमाने सुख-प्रिय शब्दाभ्यां कृञ्योगे आच् स्यात् । सुखा करोति वैष्णवमिति—तस्यानुकूल्यं विदधातीत्यर्थः।। एवं प्रिया करोति साधुमिति ।

**अमृता०**—१११९. शूलादिति । पाके वाच्ये कृञ्योगे शूलशब्दादाच् स्यात् । शूला शूला करोतीति—शूलेन पचतीत्यर्थः ।

---

**बाल०**—निष्कु । निष्कोषणेऽर्थे वर्तमानान्निष्कुलशब्दात् कृञ्योगे आच् स्यात् । निष्कोषणार्थं स्फुटयति अन्तरिति । निष्कोषणादन्यत्रतु निष्कुलं करोति शत्रुं समूलं नाशयतीत्यर्थः । कुलशब्दोऽत्र गोत्रवचनः ।। १११७ ।।

**बाल०**—सुख । आनुलोम्ये गम्यमाने कृञ्योगे सुखप्रियाभ्यामाच् भवति। आनुलोम्यमानुकूल्यं तच्च चित्तावधानरूपं । सुखाकरोति वैष्णवं वैष्णवस्यानुकूल्यं करोतीत्यर्थः । एवं प्रियाकरोतीति । आनुलोम्यादन्यत्र सुखं करोत्यौषधं औषधस्याचेतनत्वात् नहि चित्तावधाने प्रवृत्तिः ।। १११८ ।।

**बाल०**—दुःख । कृञ्योगे प्रातिलोम्येऽर्थे गम्ये दुःखशब्दादाच् स्यात् । प्रातिलोम्यं प्रातिकूल्यं तच्च चित्तस्य व्यथनरूपं । दुःखाकरोत्यवैष्णवं अवैष्णवस्यानभिमतमाचरतीत्यर्थः । अस्मादन्यत्र दुःखं करोति कुत्सितान्नमिति ।। १११९ ।।

**बाल०**—शूला । कृञ्योगे पाके वाच्ये शूलशब्दादाच् भवति । हरिविमुखान् शूलेन पचतीत्यर्थः । पाक इति किं, शूलं करोति कदन्नं ।। ११२० ।।

**११२१. सत्यादशपथे ।**

सत्याकरोति वस्तूनि वणिक्, मयैतद्ग्रहीतव्यमिति निश्चिनोतीत्यर्थः । अशपथे किम्—सत्यं करोति ।

**११२२. मद्रभद्राभ्यां माङ्गलिकमुण्डने ।**

मुद्राकरोति बालः । आच् कृञ्योगे निवृत्तः ।

**११२३. अभूततद्भावे कृभ्वस्तियोगे विः, कृञि कर्मणि भवस्त्योः कर्त्तरि ।**

**विः सर्व इत् ।**

---

**अमृता०**—११२१. सत्यादिति । शपथभिन्नेऽर्थे सत्यशब्दात् कृञ्योगे आच् स्यात् । शपथे सति तु स न भवतीति प्रत्युदाहरति-सत्यं करोतीति । देवादिनाम्ना शपथं करोतीत्यर्थः ।

**अमृता०**—११२२. मद्रेति । मङ्गलकर्म सम्पर्किमुण्डनेऽर्थे कृञ् योगे मद्र-भद्राभ्यां आच् स्यात् । आचोऽधिकारो निवृत्तः ।

**अमृता०**—११२३. अभूतेति । अभूतस्य (अजातस्य) तदात्मलाभः अवस्थान्तरप्रापणं अभूततद्भावः, तस्मिन्नर्थे गम्यमाने कृभ्वस्ति योगे नाम्न उत्तरे वि प्रत्ययः स्यात् । तत्र च कृञ् योगे कर्मणि, भू अस्ति योगे कर्त्तरि वि ज्ञेयः । विः सर्व इदिति—केवलस्य प्रत्यय वे हंर इत्यनुशासनादित्याशयः ।

---

**बाल०**—सत्या । कृञ्योगे सत्यशपथेऽर्थे वर्तमानात् सत्यशब्दादाच् भवति । उदाहरणार्थौ स्पष्टौ । सत्यं करोति अंगुल्या गात्रं स्पृष्ट्वा तथ्यमिदमिति ज्ञापयतीत्यर्थः ॥ ११२१ ॥

**बाल०**—मद्र । मङ्गलपूर्वकं मुण्डनं माङ्गलिकमुण्डनं, अस्मिन्नर्थे वर्तमानाभ्यां मद्र भद्र इत्येताभ्यां कृञ्योगे आच् स्यात् । मद्राकरोति बालः, शुभमुण्डनं करोतीत्यर्थः । एवं भद्राकरोति । माङ्गलिकमुण्डन इति किं, मद्रं करोति भद्रं करोति मङ्गलमात्रं करोतीत्यर्थः । कृञ्योगे आजधिकारं निवर्तयति आजिति ॥ ११२२ ॥

**बाल०**—अभू । प्रागवस्थातः अभूतस्याजातस्यानन्तरं तदात्मलाभोऽवस्थान्तरेण जन्म अभूततद्भावः । कृच भूच अस्तिच कृभ्वस्तय एषां योगः कृभ्वस्तियोगस्तस्मिन् । अभूततद्भावेऽर्थे गम्यमाने कृभ्वस्तियोगे सति नाम्नो विर्भवति । कृष्णीति । यावत्सम्भवस्तावद्विधिरिति न्यायेन कृञ्योगे कर्मणि विषयेभ्वस्तियोगे कर्तरि विषये विः स्यादित्यर्थः । सर्वे इदिति । केवलप्रत्ययवेर्हर इत्यनेनेति शेषः ॥ ११२३ ॥

## ११२४. अद्वयस्य वा वीरामः, अन्यस्य त्रिविक्रमः ।

अकृष्णं कृष्णं करोति, कृष्णीकरोति । अकृष्णः कृष्णो भवति, कृष्णो स्यात् । एवं हरीकरोति हरी भवति ।

## ११२५. अरुर्मनश्चक्षुश्चेतोरहोरजसां सलोपश्च ।

अरू करोति, सुमनीभवति, उच्चक्षूस्यात् । सुचेतीकृत्य, रहीभूतं, नीरजीकृतम् ।

---

अमृता०—११२४. अद्वयस्येति । वौ (विप्रत्यये परे) अद्वयस्य स्थाने ईरामः स्यात्, अद्वयादितरस्य तु त्रिविक्रमो भवति । अन्यस्योदाहरणं यथा,—मुनी करोतीत्यादि । अमुनिं मुनिं करोतीत्यर्थः । हरो भवति, हरी स्यादिति कर्त्तरि विः । अभूततद्भाव इति किम्—शुल्कं करोति । अत्र पूर्वावस्थातोऽवस्थान्तरेण तदात्मलोलो न विवक्ष्यत इति आभूततद्भावः । किञ्च, सत्यप्यभूततद्भावे कारणात् कार्यस्य भेदविवक्षायान्तु वि प्रत्ययो न स्यात् । यथा—तन्तुभ्यो वसनं करोति, मृदो घटो भवति, यद्वा तन्तुं पटं करोति, मृदेव घटो भवतीत्यादौ ।

अमृता०—११२५. अरुरिति । अभूततद्भावे कृभ्वस्ति योगे अरुः प्रभृतिभ्यः षड्भ्यो विः स्यात्, एषांसंरामहरश्च भवति । अनरुः अरुः करोति, अरु-करोति । एवं सर्वत्र वाक्यार्थौ ज्ञेयौ । कृभ्वस्तीनां कृदन्तावस्थायामपि योग श्चेत्तदपि विः स्यादित्युदाहरति—सुचेतीकृत्येत्यादि ।

---

बाल०—अद्व विप्रत्यये परेऽद्वयस्य ईरामः स्यात् । अद्वयादन्यस्य त्रिविक्रमश्च । अवस्थान्तरापत्तेरेव वाच्यत्वेन मुख्यत्वात् तद्वाचकादेव नाम्नः प्रत्ययो भवति, नान्यस्मादित्यवधेयं । वाक्योदाहरणानि । किञ्च, अस्तेर्विध्यन्तस्यैव प्रयोगेऽभूततद्भावप्रतीतिः शब्दशक्तिस्वभावादिति सर्वशास्त्रसम्मतमित्यतः कृष्णीस्यादिति विध्यन्तमुदाहृतं नाच्युताद्यन्तं । अन्यस्येत्यस्योदाहरणं दर्शयति एवमिति । अहरिं हरिं करोतीत्यादिवाक्यन्तु पूर्ववत् । यद्यप्यन्यस्येति सामान्येनोक्तं, तथापि वामनस्येति ज्ञेयं । तेन नो स्यादित्यादौ न त्रिविक्रमसम्भावनेति । उक्तञ्च, अगौर्गौरभवदित्यर्थे गोऽभवदिति । अभूततद्भाव इति किं, शुक्लं करोतीत्यादि । नात्र पूर्वावस्थावतोऽवस्थान्तरेण तदात्मलाभो विवक्षित इति नास्त्यभूततद्भावः । कृभ्वस्तियोग इति किं, अकृष्णः कृष्णो जायत इति वाक्यस्यैव विश्रान्तिः । अभूततद्भावेऽपि कारणात् कार्यस्य भेदविवक्षायां न भवत्यनभिधानात् । तेन तन्तुभ्यः पटं करोति मृद्भ्यो घटो भवति, तन्तुं पटं करोति, मृदं घटं करोतीत्यादौ विर्न स्यात् । कथं तर्हि वितानभूतं विततं पृथिव्यां, यशः समूहन्निव दिग्विकीर्णमिति सत्यं भूतशब्दोऽत्र शब्दान्तरमिवार्थः । वितानमिवेत्यर्थः । ततोऽत्र वेरभावः । ( तुल्यार्थो भूतशब्दस्तत्र नाभूततद्भाव इति भारविटीकाकृन्मल्लिनाथाशयः । ३ । ४२ ) ॥ ११२४ ॥

## ११२६. सातिर्वा विषये कार्त्स्न्ये ।

पापं भस्मसात् करोति भस्मीकरोति विष्णुभक्तिः ।

## ११२७. अभिविधौ वि–विषये सम्पद्भ्वस्तियोगे सातिर्वा ।

अभिविधिरभिव्याप्तिः । सुखसात् सम्पद्यते हरिभक्तिः, सुखसाद् भवति, सुखसादस्ति, सुखी भवति ।

## ११२८. तदधीनवचने कृभ्वस्तिसम्पद्योगे साति र्वा ।

कृष्णाधीनं करोति कृष्णसात् करोति, कृष्णसात् सम्पद्यते ।

---

**अमृता०**—११२६. सातिरिति । कार्तस्न्ये वि–विषयेऽर्थादभूततद्भावे कृभ्वस्तियोगे नाम्नः सातिः वा स्यात्, पक्षे विश्च । भस्मसात् करोतीति—साकल्येन भस्म करोति, न किञ्चिदप्यवशेषं रक्षतीत्यर्थः । एवं भस्मसाद् भवति, भस्मीस्यात् कलुष इति ।

**अमृता०**—११२७.अभीति । अभिविधौ वि–वषये अभूततद्भावेऽर्थे सम्पद्भ्वास्तियोगे नाम्नः साति र्वा स्यात्, पक्षे विश्च । स्पष्टमुदाहरणम् ।

**अमृता०**—११२८. तदिति । तदधीनवचने कृभ्वस्तिसम्पद् योगे नाम्न साति र्वा स्यात्, पक्षे वाक्यमेव नतु विः; वि–विषयाग्रहणात् ।

---

**बाल०**—अरु । अभूततद्भावेऽर्थे कृभ्वस्तियोगेऽरुमनश्चक्षुश्चेतोरहो रज इत्येतेषां सम्बन्धे विः स्यात्, सरामस्य हरश्च । अरूकरोतीत्यादौ अनरुवरुः करोतीत्यादिवाक्यं यथासम्भवमूह्यं । अरूकरोति उच्चक्षूस्यादित्यत्र द्वये सलोपे सति, अन्यस्येत्यनेन त्रिविक्रमः, शेषेषु अद्वयस्येत्यनेन ईरामः ।। ११२५ ।।

**बाल०**—साति । वि–विषय इत्यनेनाभूततद्भाव इति । एवं कृभ्वस्तियोग इति । वा-करणात् पक्षे विरिति चानुवर्तते । कार्त्स्ना एकव्यक्तेरनेकव्यक्तेश्च सर्वात्मना विकारापत्तिरूपेऽभूततद्भावेऽर्थे कृभ्वस्तियोगे सति नाम्नः सातिर्वा स्याद्विश्च । पापमिति । विष्णुभक्तिः साकल्यं पापमभस्म भस्म करोतीत्यर्थः । एवं भस्मसाद्भवति, भस्मीस्यात् कलुष इति ।। ११२६ ।।

**बाल०**—अभि । अत्रापि पूर्ववदभूततद्भावादिरनुवर्तते । अभिविधिरूपे वि–विषयेऽभूततद्भावेऽर्थे सम्पद्भ्वस्तियोगे सति नाम्नः सातिर्वा स्यात् पक्षे विश्च । अनभिधानादत्र कृधातोरनुपादानं । अभिविध्यर्थं विवृणोति अभीति । अभिव्याप्तिरभिविधिः सचानेकव्यक्तीनां प्रत्येकमेकदेशेन विकारापत्तिरूप इति सुखेति हरिभक्तिर्यावत् सुखरूपा सम्पद्यते इत्यर्थः । यावत् सुखरूपेण प्रत्येकं परिणमतीति भावः । वाक्यस्त्वसुखं सुखं सम्पद्यत इत्यादि यथास्वमूह्यं ।। ११२७ ।।

## ११२९. देयेऽधीने च सातिस्त्रा च ।

कृष्णसात् करोति, कृष्णत्रा करोति, कृष्णत्रा सम्पद्यते, कृष्णत्रा भवति, मयेदं कृष्णत्रा कृतम् ।

## ११३०. देव-मनुष्य-पुरुष-पुरु-मर्त्तेभ्यो द्वितीया-सप्तम्यो र्बहुलम् ।

कृष्णकृपा देवत्रा गच्छति, देवंगच्छतीत्यर्थः । कृष्णः कृपां मनुष्यत्रा

---

अमृता०—११२९. देय इति । तदित्यनुवर्त्तते । यद् दीयते तद्देयम् तस्मिन्नभिधेये तदधीनेचार्थे कृभ्वस्तिसम्पद्योगे नाम्नः सातिः त्रा च स्यात् । कृष्णसात् करोति, कृष्णत्रा करोतीति—कृष्णदेयं करोति, कृष्णाधीनं करोतीत्यर्थः ।

अमृता०—११३०. देवेति । धातुमात्रयोगे द्वितीया-सप्तम्यो विषययो र्देव-मनुष्य-पुरुष-पुरु-मर्त्तेभ्यो बहुलं यथा स्यात्तथा त्रा भवति । देवं गच्छतीति द्वितीयार्थप्रकटनं,

---

बाल०—तद । वि–विषयाग्रहणादन्यत्राभूततद्भावो नानुवर्तते । तदधीनवचने तदायत्तवाच्ये कृभ्वस्तिसम्पद्योगे नाम्नः सातिर्वा भवति । सूत्रस्यास्य वैकल्पिकत्वात् कृष्णाधीनं करोतीति वाक्यं पाक्षिकोदाहरणञ्च । एवं कृष्णाधीनो भवति, कृष्णसाद् भवतीत्यादि । अभूततद्भावस्याभावादत्र विर्नानुवर्तत इति तस्योदाहरणं न दत्तं ॥११२८॥

बाल०—देये । तदिति पूर्वस्मादनुवर्तते । यस्मै यद्दीयते तत्तदधीनं तस्मिन्नभिधेये तदधीने चार्थे कृभ्वस्तिसम्पद्योगे नाम्नः सातिस्त्रा च स्यात् । कृष्णदेयं करोति कृष्णाधीनं करोतीति कृष्णसात् करोतीत्यादिद्वयं । एवं कृष्णदेयं सम्पद्यते कृष्णाधीनं सम्पद्यते इति कृष्णत्रा सम्पद्यते । तथा कृष्णदेयं भवति, कृष्णाधीनं भवतीति कृष्णत्रा भवति । मया इदं कृष्णदेयं कृतं कृष्णाधीनं कृतमिति मयेदं कृष्णत्रा कृतमित्यादि ॥ ११२९ ॥

बाल०—देव । कृञादेरग्रहणादत्र धातुमात्रयोगे द्वितीयासप्तम्योर्विषययोर्देवमनुष्य-पुरुषपुरुमर्त्येभ्यो बहुलं त्रा भवति । कृष्णकृपा देवत्रा गच्छतीत्याद्युदाहरणद्वयमर्थद्वयञ्च क्रमेणाह कृष्णकृपेति । एवमिति पुरुषं गच्छति पुरुषे वेत्यर्थः । इत्यादिपदेन पुरुत्रा गच्छति मर्त्यत्रा करोति । तथा पुरुत्रा प्राप्नोतीत्यादिच । अत्र बहुशब्दमपि कश्चित् पठतीति बाहुल्येनैव तद्दर्शयन्नाह बाहुल्यादिति । बह्विति । हे वैष्णव त्वं बहून् कालान् वाप्य जीव प्राणान् धारयेत्यर्थः । अनेन भङ्ग्या एतच्छास्त्रानुशीलकं प्रति ग्रन्थकृताशीर्दत्ता चिरजीवित्वाभावेनास्यानुशीलनस्यानिष्पत्तेः । एतदुपलक्षणं । बाहुल्यादन्यतोऽपि यथा-सम्भवमूह्यं । यद्यथाकथञ्चिद्यथा । सामान्ये वर्तमानात् किमृशब्दाच्चिच्च नौस्त इति वक्तव्यं । किमश्चिच्च नावसाकल्ये इत्यन्ये । कश्चित् कौचित् केचित्, काचित् केचित् काश्चित्, किञ्चित् केचित् कानिचित् । एवं कश्चन काचन किञ्चनेत्यादि । एवमन्यादेरप्युह्यं । तथा कुतश्चित् कुत्रचित् कुतश्चन कुत्रचनेत्यादि । किन्त्वेषु पूर्वस्वादेर्महाहरोऽपि बाहुल्यादेव

करोति, मनुष्ये करोतीत्यर्थः। एवं पुरुषत्रा गच्छतीत्यर्थं। बाहुल्यात्—बहुत्रा जीव वैष्णव। शसादिरव्ययं कृत्वस्वर्थाश्च।

॥ पूरिता स्तद्धिता ॥

इति श्रीहरिनामामृताख्ये वैष्णव व्याकरणे तद्धितादिप्रकरणं सप्तमम्।

---

मनुष्ये करोतीति सप्तम्यर्थं प्रकटनम्। बाहुल्यादिति—बहुत्रेति बहन् व्याप्य जीवेति भङ्ग्या एतच्छास्त्रानुशीलकं प्रति ग्रन्थकृताशीर्दत्ता। अपि च बाहुल्यात् प्रत्ययान्तात् किम् शब्दाच्चिच्चनौ स्याताम्। यथा—कश्चित् कौचित् केचित् किञ्चिदित्यादय स्तथा कश्चन केचन किञ्चन काचनेत्यादयश्च। शसादिः कृत्वस्वर्थाश्च अव्ययानीत्यर्थः।

सम्पूर्णतां गता तद्धितव्याख्यात्र।

---

न स्यात्। बाहुल्यस्यानेकार्थदानसामर्थ्यात् साचिप्रभृतयोऽपि निपातनत्वेन वाच्याः। साचि तिरश्च तिर्यगर्थे, धिक् निन्दायां, हिरुक् पृथक्च वर्जने, मनाक् अल्पे, शनैः क्रियामान्द्ये, उच्चैर्महत्वे, जोषं तूष्णीञ्च मौने, कामं स्वेच्छायां, निकाममतिशये, वरं नीचोत्कर्षे, परं किन्त्वर्थे, तिरोऽन्तर्द्धानतिर्यगर्थयो, स्वयमात्मार्थे, प्रायो बाहुल्ये, सदपि तत्क्षणार्थे, साक्षात् प्रत्यक्षे, समा सर्वकाले, सहसा हठात् चिरेण युगपच्च एककाले, उपांशु अल्पकालोच्चारणे, पुरोऽग्रे, प्रसज्य बलात्कारे, तु पुनरर्थे। अथ किञ्च अनुमतौ। अन्तरा अन्तराले, अमा नो नाच प्रतिषेधे, पूर्वं प्रथमञ्च प्रागर्थे। निश्चयेन पतन्त्यनेकार्थेषु निपाता इति। शब्दवारिधेरपारत्वादन्ये शब्दाः शास्त्रान्तराज्ज्ञेयाः। वदादेरन्तर्गणत्वादेतदन्त-शसादीनामव्ययत्वं प्रतिपादयति शसादिरिति। शसादिः कृत्वस्वर्थाश्चाव्ययं स्यादित्यर्थः। तद्धितान् समापयति पूरिता इति ॥ ११३० ॥



## ॥ अथ ग्रन्थोपसंहारः ॥

कृष्णत्रा कृतमेतत्तस्माद् त्रिफला नचात्र मात्रापि।
अपि तु महाफलयुक्ता तल्लीला काव्यवज्जयति ॥ १ ॥
यदत्र व्यक्तमुक्तं न, भ्रान्तं वा तदशेषतः।
ज्ञेयं शोध्यश्च विज्ञेभ्यो विज्ञशास्त्रावलोकतः ॥ २ ॥

---

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरेदिति रीति मनुसृत्य ग्रन्थान्तेऽपि तदाचरति—

**अमृता०**—१. कृष्णत्रेति। ननु यदि व्याकरणमिद हरिनामामृतनाम्नाभिहितं तर्हि सर्वत्रास्मिन् हरिनामान्वितत्वं कथं न दृश्यत इति चेत् ? तत्राह—कृष्णत्रेति। यस्मादेतद् व्याकरणं कृष्णदेयं कृतं कृष्णायार्पितं तस्माद्धेतोरत्रग्रन्थे मात्रापि (कोऽपि वर्ण इत्यर्थः) फल—रहितो न भवति, अपितु तल्लीलाकाव्यं श्रीभागवतादि, तद्वद् महाफलयुक्ता सती सर्वापि मात्रा जयति, सर्वोत्कर्षेण वर्त्तते। श्रीमद्भागवते च श्रीभगवत् सम्बन्धिकथाया अभानेऽपि कुत्रचित् ( राजान्वयवर्णनादित्वेन ) अन्तिमे श्रीभगवच्चरित्रपोषकत्वेन हि पर्यवसानज्ञानादिह च भगवत्यर्पणेन हि सफलत्वमस्य जात—मिति भावः।

**अमृता०**—२. यदद्यपि भगवन्नित्यपरिकरत्वेन स्वस्य भ्रमप्रमादादिरूपो दोषो न सम्भवेत् तथापि भक्ति स्वभावेन ह्यात्मानं साधारण जनमिव मन्यमानो दैन्योक्त्या वहिर्जनानुपदशति—यदिति। विज्ञशास्त्रं मुनिभिः कलितं पाणिनिप्रभृति, तस्मात्तथा विज्ञेभ्यो व्युत्पन्नसुधीभ्यश्च सकाशात् ज्ञेयमनुशीलितव्यं, अशुद्धं चेत् शोधनीयश्च। केवलमस्यानुशीलने कुत्रचित संशयश्चेत विज्ञशास्त्राभिज्ञेभ्यः जिज्ञासया स्वयश्च विज्ञशास्त्रानुसन्धानेन तत् सन्देहनिरसनं कार्यमित्यभिप्रायः।

---

**बाल०**—ननु व्याकरणमिदं हरिनामामृताख्यं तर्ह्यत्र सर्वेषां वर्णानां धातूनां नाम्नाञ्च हरिनामोपरक्तता कथमस्माभिर्न दृश्यत इति शास्त्रार्थपरिपन्थिनश्चेद्ब्रूयुस्तान् प्रत्याह कृष्णत्रेति। यतो मयैतच्छास्त्रं कृष्णदेयं कृतं कृष्णायार्पितं तस्मादत्र मत्कृत-व्याकरणे मात्रापि विफला फलहीना न स्यात्, यदत्र मात्राया विफलता न स्यात्, तदा पुनर्धातूनां नाम्नामपि विफलता न स्यादिति किमुत वक्तव्यं। अपितु तदर्पितत्वेन मात्रा तल्लीलाकाव्यं श्रीमद्भागवतादि तद्वत् महाफलसम्पृक्ता सती जयति सर्वोत्कर्षेण वर्त्तते ॥१॥

हानीयं पाणिनीयं रसवदरसवत् काकलापः कलापः,
सारप्रत्यागि सारस्वतमपहतगी विस्तरो विस्तरोऽपि ।
चान्द्रं दुःखेनसान्द्रं सकलमविकलं शास्त्रमन्यन्न धन्यं,
गोविन्दं विन्दमानां भगवति भवतीं वाणि नो चेद् ब्रवाणि ॥ ३ ॥

---

**अमृता०**—३. अथ श्रीभगवन्नामावलिवलितैतद् व्याकरणधृतसंज्ञाद्वारा तथोपसंहारे तत्समर्पणद्वारा च नाम-नामिनोरभेदात् श्री गोविन्दं लब्धवती वागधिष्ठात्री देवी ग्रन्थकारं प्रति सुपसन्ना सती तस्मै वर प्रदातुकामा सरस्वती ग्रन्थकृता स्तूयते श्लोक द्वयेन। तत्र प्रथमं तावद् भगवत्सम्बन्धित्वविरहतया शास्त्रान्तराणां दोषास्पदत्ववर्णमुखेन स्तुतिः—हानीयमिति। हे भगवति ! षड़ैश्वर्यवति ! अयिवाणि ! वागरुपिणि ! भवती यदि गोविन्दं विन्दमानां प्राप्नुवानां न ब्रवाणि न वदेयं तदा पाणिनीयं भगवत् पाणिनिमुनिप्रोक्तं व्याकरणं हानीयं त्याज्यं स्यात्। कलापः कार्त्तिकेयमुखनिःसृतोऽपि काकलापः, तद्वत्कर्णकटुः स्यात्। सारस्वताख्यं व्याकरणं सारप्रत्यागि सार-रहितं स्यात्। विस्तारेणोक्तोऽपि विस्तरनामा व्याकरणभेदः अपहतगी निरर्थको वृथाड़म्बरपूर्णः स्यात्। चान्द्राख्यमपि बहुदुःखयुक्तं स्यात्। किं बहुना अविकलं निर्दोषमपि अन्यत् सकलं शब्दशास्त्रं अधन्यं स्यात्। भगवन्नामरहितं यत्किञ्चिदपि शास्त्रं सर्वगुणान्वितमपि नखलु साधूनामादरनीयमिति निष्कर्षः।

---

**बाल०**—पूर्वं व्याकरणे मरुनीवृतीत्यनेन पाणिन्यादिपाठकानपि वैष्णवादीन् स्वस्वशास्त्रे प्रयासं त्याजयित्वा हरिनामामृतरसपानावगाहनार्थमस्मिन् शास्त्रे प्रवर्त्तित इतीदानीं यद्यपि स्वस्य भ्रमप्रमादादिर्नास्ति, तथापि अन्येन किञ्चिदपलपितं मत्वा तान् प्रार्थयते यदिति। अत्र शास्त्रे यद्व्यक्त नोक्तं भ्रान्तं वोक्तं तत्सर्वमशेषतः शेषाभावात् विज्ञशास्त्रदर्शनाद्विज्ञेभ्यः सकाशात् ज्ञेयं शोध्यञ्चेत्यर्थः। अथवा केवलमेतच्छास्त्रानुशीलकानां क्वचित् क्वचित् सन्दिहानानां शास्त्रान्तरज्ञानशून्यानां विज्ञशास्त्रेषु विज्ञजनेषु च दर्शनप्रश्नाभ्यां स्वस्वसन्देहभञ्जनार्थमादरप्रतिपादनाय प्रार्थनमिदं। समानमन्यत् ॥२॥

**बाल०**—अथ श्रीभगवन्नामघटितसर्वेश्वरदशावतारादिसंज्ञाद्वारा श्रीगोविन्दं लब्धवती तुष्टा हे वत्स वरं वृणु वरं वृण्विति स्वसाक्षाद्भाषिणीं वागधिदेवीं तत्वदृष्ट्या भगवन्निजकिङ्कर्यपि लोकरीत्या जीवाभिमानी सन् प्रेमोत्कण्ठितमनाः सगद्गदवाक् प्रणत्य शिरसि कृताञ्जलिः श्लोकयुग्मेन श्रीमान् ग्रन्थकारः स्तौति। तत्र प्रथमतः शास्त्रान्तरनिन्दामुखेन स्तुवन्नाह हानीयमिति। हे भगवति हे षडैश्वर्यपूर्णे हे वाणि हे वाग्रूपे भगवत्पाणिन्यादिकृतं वेदभूतं पाणिनीयप्रभृतिप्रशस्तशब्दशासनमपि भवतीं त्वां यदि गोविन्दं विन्दमानां श्रीकृष्णं प्राप्नुवतीं न ब्रवाणि न व्यक्तं वदेत्, तदा तत्सर्वमेवम्भूतमेवम्भूतं स्यादित्यान्वयः। तत्र तावत् पाणिनीयं पाणिनिना प्रोक्तं रसवत् रस इव पानार्हमप्यरसवत् सन्धानीयं हननार्हं स्यात्। प्रोक्तप्रत्ययान्ताच्चेति पाणिनीत्यस्माच्छः। कुशाग्रादित्वादिवार्थे हानेत्यस्माच्छः। तथा कलापः कार्तिकेयस्य वोढृकलापिना प्रोक्तोऽपि

पानीयं पाणिनीयं रसमृदु रसवन्मुत्कलापः कलापः,
सारश्री सारि सारस्वतमधिमधुगी विस्तरो विस्तरोऽपि ।
चान्द्रं सौख्येन सान्द्रं सकलमविकलंशास्त्रमन्यत् प्रशस्तं,
गोविन्दं विन्दतीं त्वां यदि भगवति गीर्वाणि वाणि ब्रवाणि ॥४॥

---

अमृता०—४. ततः शास्त्रान्तरप्रशंसामुखेन तां स्तौति–पानीयमित्यादि । हे भगवति ! अयि गीर्वाणि ! वाग् देवि ! यदि त्वां गोविन्दं विन्दतीं लभमानां ब्रवाणि तर्हि पाणिनीयं पानीयं पानयोग्यं स्यात; रसवदाख्यं रसेन मृदु मधुरं स्यात् । कलापः उत्कलापः उत्कण्ठितालापः स्यात; सारस्वतं सारश्रीसारि स्थिरसम्पद् विस्तारि स्यात; विस्तरो बहुलोऽपि विस्तरनामा अधिकृत मधुगीः स्यात; चान्द्रं सौख्येन निविड़ स्यात; तथा अविकलं सकलं शास्त्रं प्रशस्तं प्रशंसार्हं स्यात् ।

अत्रश्लोकयुग्मस्येदं तात्पर्यम्.—सर्वं खलु शास्त्रं वाङमयं, वागधिष्ठात्रीदेवी सरस्वती पुन विष्णुवल्लभा । अतश्च स्वप्रेष्ठस्य भगवतो नामयुक्तमेव यावच्छास्त्रं देव्याः स्वतोऽतिप्रियत्वात् सर्वैर्ग्राह्यं स्तुत्यञ्चापदद्यते । यदद्यपि बहुषु व्याकरणेषु भगवन्नाम दृश्यते तत्तु क्वचित् कदाचिदेव नतु सर्वत्र, इत स्वप्रणीते तु बाहुल्येन सर्वत्रैव । अत एतत् प्रणयनेनैव सर्वं खलु शब्दानुशासनं साफल्यमण्डितं जातमिति देवीप्रसादे हेतुः । श्लेषेण च—यथा गोविन्द संयुक्ताया भवत्या अतीव सन्तोष स्तथैव तवकृपया गोविन्द-प्राप्तावेव मम स्पृहा प्रयत्नश्चायम्, तस्मात् प्रसन्नया भवत्या देया चेत् सैव दीयतामिति जीवाभिमानिनो ग्रन्थकृतः प्रार्थना गम्यते ।

---

काकानामालाप इवेति कुत्सितालाप इव वेति लुप्तोपमा । एवं सारस्वतं सरस्वत्या भवत्या प्रोक्तमपि सारप्रत्यागि साररहितमित्येति । विस्तरो विस्तरकारेण प्रोक्तः स्वयं विस्तारभूतोऽप्यविस्तरः सन्नपहृतगीर्वृथावागिति । चान्द्रं चन्द्रेण प्रोक्तं सकलं कलाभिः सह वर्तमानमप्यविकलं कलाहीनं सत् दुःखेन सान्द्रं निविडं । अन्यत् कार्त्स्न्यं शब्दानु-शासनमधन्यं निष्फलमित्यर्थः । आहतजल्पितजटितं शब्दानुशासनस्तोममिति पूर्वोक्तहेतुरप्यत्रानुसन्धेयः ॥ ३ ॥

बाल०—इदानीं पाणिनीयादिशास्त्रप्रशंसामुखेन स्तुवन्नाह पानीयमिति । अत्रापि तेन प्रोक्ताद्यर्थं पूर्ववज्ज्ञेयं । परमानन्दचिद्रूप स्वप्रसादोन्मुखश्रीभगवत्स्वरूपशक्तिमुल्ला-साद्बहुविधं सम्बोधयन् प्रार्थयते, हे भगवति हे समग्रैश्वर्ययुक्ते हे गीर्वाणि हे वाग्देवि हे वाणि हे वाक्प्रवर्तके पाणिनीयादिशास्त्रं यदि त्वां गोविन्दं विन्दतीं ब्रवाणि तर्हि तदादि सर्वमेवम्भूतमेवम्भूतं स्यादित्यन्वयः । तत्र यदि पाणिनीयं त्वां गोविन्दं लब्धवतीं वदति, तदा रसेभ्योऽपि कोमलरसतुल्यं पानीयं पानयोग्यं स्यात् । एवं कलाप उत्कलापः उत्कण्ठितालापः स्यात् । सारस्वतं स्थिरसम्पदं सत् शोलं स्यात् । विस्तरनामा विस्तरोऽपि बहुलोऽपि सन् अधिकृतमधुगीः स्यात् । चान्द्रमविकलमपि सकलं सत् सौख्येन

भगवन्नामवलिता भगवद् भक्तितत्परैः ।
वृन्दावनस्थ जीवस्य कृतिरेषा तु गृह्यताम् ॥ ५ ॥

छान्दसाप्रचरद्रूपरूढ़शब्दात् विना मया ।
अत्रालेखि तदिच्छा चेद् दृश्योऽन्यः शास्त्रसंग्रहः ॥ ६ ॥

---

**अमृता०—५.** अथान्ते च स्वग्रन्थानुशीलने भगवद्भक्तान् प्रवर्त्तयति-भगवदिति वृन्दावनस्थस्य जीवाभिधमल्लक्षणस्य जनस्य एषा भगवन्नामवलिताकृतिः कार्यं ( व्याकरणरूपं ) भवद्भिर्गृह्यतां आलोच्यतां, यतो भवन्तो भगवद् भक्तिपारायणाः, तत एव युष्माकमानन्दमुत्पादयत्येषा, प्रियतमस्य नाममयत्वादिति भावः । यद्यपि भक्ति स्वाभाव्याद् यशः प्रतिष्ठादिषूदासीनेन ग्रन्थकृता स्वनामोल्लेखे किमपि सौष्ठवं न दर्शितं तथापि वाग्देवीत्वेवं ज्ञापयति—भक्तिशास्त्रप्रणेत्रालं तथा तद्व्याख्याया भृशं । जीवान् । जीवयते यो वै सहि जीवो यथार्थतः ।

**अमृता०—६.** छान्दसेति । अत्र ग्रन्थे तु मया पाणिनिवत् छान्दसा वैदिकाः तथा अप्रचलिताः रूढ़श्च शब्दा न अलेखि, भाषायां तेषामनुपयोगात् । तत्तच्छब्दप्रयोगे जिज्ञासा चेत् तदान्यग्रन्थसंग्रहः यत्र तेषां संग्रहोऽस्ति तत्र शास्त्रे तत्प्रयोगा द्रष्टव्याः ।

---

सान्द्रं निविडं स्यात् । अन्यत् शेषकात्स्न्यं शास्त्रं प्रशस्तं स्यात् । एवं स्तुता श्रीसरस्वती श्रीमद्ग्रन्थकारं प्रति स्वाभीष्टवरं दत्त्वा स्वधाम जगामेति ज्ञेयं ॥ ४ ॥

**बाल०—**इदानीं विविधशास्त्राध्यापकावलिनिषेवितपङ्कजः श्रीमान् ग्रन्थकारः स्वकृतिग्रहणाय हरिभक्त्यभिरतान् सच्छात्रादीन् प्रार्थयते भगवन्निति । भो साधवो वृन्दावनस्थस्य जीवाभिधस्य ममैषा तन्यमाना कृतिर्भवद्भिर्गृह्यतां । यतो युयं भगवद्भक्तिपरायणा इयं मम कृतिरपि भगवन्नामयुक्तेति भगवद्भक्तितत्परैर्युष्माभिरेवतु मत्कृतिरेषा ग्राह्या नान्यैरिति भावः । एतदादिबहुशास्त्रकृतापि श्रीमद्गोस्वामिपादेन स्वयशःप्रतिष्ठादिनिराकाङ्क्षिना वृन्दावनस्थजीवस्येति स्वनाम प्रदर्शने यत्परिपाटिहीनं कृतं तत् परिपाटियुतन्तु समासटीकायां तन्नामव्युत्पत्तौ मया दर्शितं (१२६३ पृ १८ पं)॥५॥

**बाल०—**पाणिनीयादौ तत्तद्ग्रन्थकृद्भिश्छान्दसा अप्रचरद्रूपा रूढशब्दाच्च प्रयुज्यन्ते मया त्वत्र ग्रन्थे छान्दमानां वैदिकत्वात् अप्रचरद्रूपरूढानां कादाचित्कत्वात् ते ते न प्रयुज्यन्त इत्याह छान्देति । छान्दसशब्दान् अप्रचरद्रूपरूढशब्दांश्च विना भाषात्वादत्र मयान्यशब्दो व्यलेखि, भवतां तेषु छान्दसादिष्वाकाङ्क्षा चेदस्ति तदा युष्माभिरन्यः शास्त्रसंग्रहो दृश्यत इति प्रेरणं ॥ ६ ॥

हरिनामामृतसंज्ञं यदर्थमेतत् प्रकाशयामासे ।
उभयत्र मम मित्रं स भवतु गोपालदासाख्यः ॥ ७ ॥

इति वेद–वेदांग–वेदान्तेतिहास–पुराणाध्ययनाध्यापन–जनित–यश
स्तोम–सोमधवलीकृत–दिङ्मुखैर्महामहोपाध्यायनिकरैः
परम – बृहत्तमसिद्धसंघैश्च निषेवितपादपङ्कजेन
परमहंसकुलमुकुटमणि - श्रीमज्जीवगोस्वामि-
पादेन विरचितमिदं श्रीमद्धरिनामा-
मृताख्यं वैष्णवं व्याकरणम्
सम्पूर्णम् ॥

---

अमृता०—७. इदानीं ग्रन्थं समापयता श्रीमद्गोस्वामिचरणेन प्रधानतो यमुद्दिश्य ग्रन्थमेतं प्रकाशयामास तत्साहित्यं सर्वावस्थायां प्रार्थयते–हरिनामामृतेति । यदर्थं यस्य प्रयोजन ( ज्ञान ) सिद्धये एतत् हरिनामामृतसंज्ञं व्याकरणं मया प्रकाशयामासे स श्रीगोपालदासनामा वैष्णवः उभयत्र इहलोके च मम मित्रं सुहृद् भवतु । प्रकटकाले अस्यानुशीलन-प्रचाराभ्यां बन्धुकार्यं करोतु तथाऽप्रकटे च भगवत् सेवानुकूल्याय मे सदानुचरो भवत्वित्याशीश्च गम्यते शिष्यं प्रति ।

इति श्रीगोपालदासकाव्यव्याकरणतीर्थविद्यारत्नविरचिता
श्रीहरिनामामृतस्यामृतास्वादिनी टीका सप्तमपादस्य पूर्णतां गता ।

---

बाल०—इदानीन्तु ग्रन्थं समापयता श्रीमद्गोस्वामिपादेन यन्निमित्तमेतच्छास्त्रं प्रकाशितं सर्वावस्थायां तत्साहित्यं प्रार्थ्यते हरिनामामृतेति । यस्मै श्रीयुत्गोपालदासाख्याय निमित्तमेतद्धरिनामामृतसंज्ञं व्याकरणं मया प्रकाशयामासे स श्रीमद्गोपालदासनामा उभयत्र व्यवहारे परमार्थेच, किम्वा प्रकटावस्थायामप्रकटावस्थायाञ्च मम मित्रं भवत्वित्यर्थः ॥ ७ ॥



## टीकाकृतः श्रीजीवस्तुतिः ।

श्रीश्रीमज्जीवगोस्वामिने श्रीवैष्णवाय नमः ।

इत्थं महाशब्दपाथो-निधीनां, स्फुरद्रूपकालोलकल्लोलवर्गं ।
सदानन्दभान्दोललीलां विधत्ते, नमो जीवगोस्वामिने नित्यमस्तु ॥ १ ॥
हरेर्लीलया श्रीनितान्तः कृती यः, सदा राधया राधयन् गोपमीशम् ।
तयोर्नाममालाभिरेतद्व्यधत्त, नमो जीवगोस्वामिने नित्यमस्तु ॥ २ ॥
पुराणेषु वेदेषु निष्णातबुद्धिस्तदंगेषु तत्त्वार्थवेत्ता विचार्य ।
न चान्यः समो यस्य तत्तद्विचारे, नमो जीवगोस्वामिने नित्यमस्तु ॥ ३ ॥
कृतं येन भक्त्या परेशप्रवेशं, सुशास्त्रं महाबोधकं शब्दरूपम् ।
हरेर्नामसन्धानशीलैश्च सेव्यं, नमो जीवगोस्वामिने नित्यमस्तु ॥ ४ ॥

### टीकाकारस्य सविनयविज्ञप्तिः ।

अब्धिकोटिगभीरस्य श्रीजीवस्य महामतेः ।
बोद्धुं कार्त्स्न्यमतं कोऽपि न शक्तोऽत्र महीतले ॥ ५ ॥
तथाप्यहं तत्पदाब्जद्वन्द्वमाश्रित्य क्षुद्रकः ।
तत्कृतेस्तु यथायोग्यं व्याख्यानं कृतवान् मुदा ॥ ६ ॥
श्रीगोविन्दपदद्वयं हृदि वहन् श्रीकिन्दुविल्वे वसन् ।
मासे कार्तिकसंज्ञके शुभतिथौ घस्रे तथा भार्गवे ।
भक्त्या श्रीगुरुपादपद्मयुगलं नत्वाच सद्वैष्णवान्
श्रीगोपीचरणाभिदः कलिभवोऽकार्षं हि टीकां मुदा ॥ ७ ॥
हे वैष्णवा हरिपरायणसद्गुणाढ्या
युष्मत्कृते मम कृतिर्न यथा वृथा स्यात् ।
एषा तथैव परिशीलक-सज्जनेभ्यः
सन्दीयतामिदमहं बहुधा हि याचे ॥ ८ ॥
जाड्यमान्द्यादिदोषाद्धि यदत्र न स्फुटं भवेत् ।
तत्सर्वं विज्ञशास्त्रेभ्यः शोध्यं ज्ञेयं भवादृशैः ॥ ९ ॥
पुलिन्दोत्थो यथा वह्निः स्वर्णनैर्मल्यकारकः ।
तथैवायं मदुत्थोऽपि बुद्धिसम्मार्जको भवेत् ॥ १० ॥

॥ इति परमभागवताग्रगण्य-श्रीमद्धरेकृष्णाचार्यकृतौ बालतोषणीनाम्न्यां टीकायां मध्ये तुर्याश्रमिक-वेदान्तभूषण-श्रीमद्गोपीचरणदासाख्यविरचिता तद्धितोद्दीपनीनाम्नी सप्तमी टीका समाप्ता ॥

# बाबा कृष्णदासजी (कुसुम सरोवर वाले)

## द्वारा प्रकाशित प्राप्य ग्रन्थों की सूची

१–ब्रजभक्तिविलासः—ब्रजमण्डल के लुप्त प्राय: तीर्थों का प्राकट्य करने वाले आचार्य महामहिम श्रीनारायणभट्टजी महाराज की जीवन तपस्या का साफल्य यह ग्रन्थ, ब्रजमण्डलपरिचय की दृष्टि से सर्वोपरि एवं सर्वश्रेष्ठ है। इसमें ब्रजमण्डल के समस्त बन, उपबन, तीर्थ लीलास्थलों का विस्तार पूर्वक वर्णन तो है ही, उनके अधिष्ठातृदेवता, अनुष्ठान, मन्त्र, स्नान, परिक्रमा, प्रणाम आदि की विधि एवं हर वन, उपवन, तीर्थस्थलों आदि का सीमा विस्तार वर्णन भी है। अत: यह ग्रन्थ ब्रज और ब्रजराजनन्दन के भक्तों के लिये अनन्त रसरूप ही है अद्यावधि यह ग्रन्थ हिन्दीभाषानुवाद सहित अप्राप्य था अब श्रीबाबामहाराज की कृपा से सर्व सुलभ हो गया है। मूल्य २॥)

२–ग्रन्थरत्नप्रपञ्चकम्:—इसमें रूपगोस्वामी रचित श्रीराधाकृष्णगणोद्देशदीपिका–जिसमें श्रीप्रियाप्रीतम की निकुञ्जलीला, परिकर एवं वेष भूषा का विचित्र एवं अद्वितीय वर्णन है। हिन्दी के अनेक कवियों ने इसका अनुवाद भी किया है। श्रीपादसनातन-गोस्वामीजी रचित श्रीकृष्णलीलास्तव में ब्रजेन्द्रनन्दन गोविन्द की दशमस्कंदीयलीलाओं का क्रम से स्तवन स्वरूप में प्रस्तुती करण विश्व के साहित्य में बेजोड़ है। श्रीकविकर्णपूर महोदय रचित श्रीगौरगणोद्देश दीपिका–ही एकमात्र ऐसा ग्रन्थ है जिसमें श्रीचैतन्यमहा-प्रभु के सम्पूर्ण ब्रज परिकर का विषद विवेचन है। श्रीपादविश्वनाथचक्रवर्त्ति रचित सकल्पकल्पद्रुम में श्रीराधागोविन्द की सेवा की प्रार्थना की गई है यह रागमार्गी साधकों की निज निधि है। श्रीपादरघुनाथगोस्वामी ने ब्रजविलासस्तव में प्रार्थना रूपमें अतिकारुण्य भाव में व्रज के मुख्य तीर्थों का दर्शन वर्णन किया है। अभी तक यह ग्रन्थ मूल रूप में प्राप्त होने से सर्वसाधारणोपयोगि नहीं थे। बाबा महाराज की अनन्य कृपा से अब यह भाषानुवाद सहित प्रकाशित होगया है। ये पाँच ग्रंथ एक ही जिल्द में हैं। मूल्य १॥)

३–श्रीचैतन्यचन्द्रामृत तथा श्रीसंगीतमाधव:—श्रीश्रीप्रबोधानन्द सरस्वती पाद रचित यह दोनों ग्रंथ अभूतपूर्व हैं। चैतन्यचन्द्रामृत में श्रीचैतन्यमहाप्रभु की उत्कर्ष महिमा का वर्णन है। "संगीतमाधव" में जो रस और गीत का समन्वय है इसे पढ़कर भ्रम हो जाता है कि "गीतगोविन्द" ही है। श्रीप्रियाप्रीतम की निकुञ्जलीला वर्णन इसमें दर्शनीय है। मूल्य १।)

४–हंसदूत:—दूतकाव्य परिपाटी में अध्यात्मिक जगत के सर्वोत्कृष्ट इस ग्रन्थ के रचयिता श्रीश्रीपादरूपगोस्वामीजी ने इसमें भगवान् श्रीकृष्ण के विरह में व्यथित ललिता सखी के द्वारा एक हंस को संबोधित करते हुए वियोग शृङ्गार में भक्त हृदय का विश्लेषण और प्रेमरस की जो निझरिणी प्रवाहित की है वह अन्यत्र अप्राप्त ही है। इस पर श्रीयुत् गोपालचक्रवर्ति पाद की संस्कृतटीका, पन्नालालजी "प्रेमपुञ्ज" की पद्यमय तथा हरेकृष्णजी "कमलेश" जी की दो हिन्दी टीकाएँ हैं। मूल्य १॥)

५–श्रीगोवर्धनभट्ट ग्रन्थावली:—महामहिम पण्डितप्रवर श्रीपाद गोवर्धनभट्टजी के तीन ग्रन्थ मधुकेलिवल्ली, श्रीराधाकुण्डस्तव और श्रीरूपसनातनस्तोत्र इसमें ग्रथित हैं। आनन्दवृन्दावनचम्पू में भगवान् की होरीलीला का जो वर्णन है उसका दूसरा सरसतम रूप ही मधुकेलिवल्ली है। श्रीराधाकुण्ड की महिमा की चरम उत्कर्षता जिसमें वर्णित है उस ग्रन्थ का नाम राधा-कुण्डस्तव है। तीसरे ग्रन्थ में रूपगोस्वामी एवं श्रीसनातन-गोस्वामी की प्रशस्ति वर्णित है। इन तीनों ग्रन्थों को भाषानुवाद सहित छापकर वैष्णव मात्र को ब्रज रसामृतपान कराया गया है। मूल्य ।।)

६–पदाङ्कदूत:—दार्शनिक धुरधर श्रीश्रीकृष्णदेवसार्वभौम ने दूतकाव्य परिपाटी में "पदाङ्कदूत" जोड़कर संस्कृत साहित्य को मानो एक नवरत्न प्रदान कर दिया। वियोग श्रृंगारप्रेम निर्भरावस्था में श्रीनित्यप्रिय वृषभानुजा श्रीकृष्णपादपद्म को ही दूत बनाकर अपनी विरहव्यथा गोविन्द तक पहुँचाने में तल्लीन हैं। माधुर्य रस का पूर्णपरिपाक और रस निर्झरण का आनन्द मूल, टीका व भाषानुवाद पढ़ने वाले सभी के लिये समान आनन्द देने वाला यह ग्रन्थ है। मूल्य ।।)

७–शुकदूत:–भगवान आनन्दकन्द मुकुन्द द्वारिका में बैठे एक शुक को अपने हृदयस्थ गोपीप्रेम को वर्णन करते व्रज प्रदेश के प्राकृतिक सौन्दर्य को वर्णन करते हुए ब्रजयात्रा को उद्बोधन कर रहे हैं। स्वभाव और ब्रजके प्राकृतिक सौन्दर्य वर्णन के लिये यह अनुपम ग्रन्थ है। संस्कृत में भी अप्राप्य यह ग्रन्थ अब श्रीबाबा–कृष्णदासजी की कृपा से हिन्दीभाषानुवाद सहित भी सर्वसुलभ हो गया है। मूल्य १।।)

८–ब्रजोत्सवचन्द्रिका:–यह एक वैष्णव धर्मग्रन्थ है। इसमें भगवान् श्रीनित्यप्रिया-प्रीतम के परिकर सहित व प्रत्येक के अलग अभिषेक आदि विधि, उनकी लीलाओं का समय, स्वरूप, स्थान, स्थिति, मर्यादा, सेवा आदि का विशद विवेचन किया गया है। ब्रज के प्राय: सभी देव, तीर्थों, मन्दिरों आदि में सेवा का क्रम इसी ग्रन्थ की देन है। इसे लगभग ४०० वर्ष पूर्व आचार्य श्रीनारायणभट्टजी ने प्रकट किया है। मूल्य १।।)

९–ग्रन्थरत्नत्रयम्:–१-श्रीब्रह्माण्ड पुराणोक्त श्रीकृष्णाष्टोत्तरशत-नामस्तोत्र २–श्रीगौतमीयतन्त्रोक्त गोपालस्तवराज, उक्त दोनों ग्रन्थों पर श्रीयुक्त बृन्दावनदासजी विरचित भाष्य है। दोनों में दार्शनिक तत्वों का सुन्दरतम विवेचन है। साथ में ३–श्रीपाद–नारायणभट्टजी कृत लाडिलेयाष्टक भी प्रकाशित है। यह लाड़िलेय स्वरूप वही हैं जिन श्रीविग्रह की कृपा से भट्टजी ने सम्पूर्ण ब्रज को प्रकाशित किया था। बाबाकृष्णदासजी ने भाषानुवाद सहित प्रकाशित कर इसे सर्वसुलभ किया है। मूल्य ।।)

१०–नारायणभट्टचरितामृत:–श्रीपादजानकीप्रसादभट्टविरचित इस ग्रन्थमें ब्रज के लुप्त प्राय तीर्थों के प्रकाशक, रासलीलानुकरण के प्रवर्तक, ब्रजयात्रादिके सूत्रपात कर्त्ता श्रीश्रीभट्टजी के सम्पूर्ण जीवन का विस्तार से वर्णन श्लोकों में प्रस्तुत है। अब बाबा ने इसे भाषानुवाद सहित छापा है। मूल्य ।।)



## ।। परिशिष्टम् ।।

श्रीलश्रीजीवगोस्वामिविरचितः

# धातुसंग्रहः

श्रीकृष्णाय नमः

**कृष्णलीला कथा बीजरूप धातुगणो मया ।**
**संक्षेपाद् वक्ष्यते तेन कृष्णो मह्यं प्रसीदतु ।।**

भ्वादयः ।

भू सत्तायाम्, चितो संज्ञाने, संज्ञानं निद्रादि विगमो ज्ञानमात्रञ्च, अत्र सातत्यगमने, च्युतिर् आसेचने, श्च्युतिर् क्षरणे, मन्थ विलोडने, कुथि हिंसा-संक्लेशयोः:, षिधु गत्याम्, षिधू शास्त्रे मांगल्ये च, खादृ भक्षणे, गद व्यक्तायां वाचि, रद विलेखने, णद अव्यक्ते शब्दे, अर्द गतौ याचने च, नर्द गर्द शब्दे, इदि परमैश्वर्ये, णिदि कुत्सायाम्, टुनदि समृद्धौ, चदि आह्लादने, दीप्तौ च, क्रदि आह्वाने रोदने च, तकि कृच्छ् जीवने, आङ् पूर्वे त्वातङ्के, बुक्क भषणे, भषणं कुक्कुर ध्वनिः, उख, इख, ईखि, वल्ग, अगि, इगि, रिगि, लिगि-गत्यर्थाः । लगि गतौ, लघि अतिक्रम्य गतौ, शिघि आघ्राणे, शुच शोके, हानि स्मरणे, अनुसंधानं शोकः, कुञ्च, क्रुञ्च कौटिल्याल्पी भावयोः, एतौ सकर्मकावकर्मकौ, लुञ्च अपनयने, अञ्चु गति पूजनयोः, चञ्चु, वञ्चु, म्लुञ्चु, ग्रुञ्चु, ग्लुञ्चु, षस्ज गतौ, ग्रुचु, ग्लुचु स्तेय करणे, अर्च्च पूजायाम्, चर्च परिभाषण-तर्ज्जनयोः, म्लेच्छ अव्यक्तायां वाचि, आछि आयामे, लाछि लक्षणे, वाछि इच्छायाम् । ह्रीछ लज्जायाम्, मूर्च्छा मोह समुच्छ्राययोः, उछि उञ्छे, उच्छी विवासे, विवासो वासातिक्रमः, वज, व्रज, गतौ, अज क्षेपणे च, अर्ज अर्ज्जने, खजि गति वैकल्ये, एजृ कम्पने, टु ओ-स्फूर्जा वज्र निष्पेषे, (वज्र निर्घोषे), क्षि क्षये, कूज, गुज अव्यक्त शब्दे, तर्ज भर्त्सने, गर्ज शब्द, शौटृ गर्वे, कटे वर्षा वरणयोः, रट परिभाषणे ।

जट संघाते, मट नृत्तौ, नृति नर्त्तनम्, लुट विलोडने, चिट प्रेष्ये, अट्ट, इ गतौ, मडि भूषायाम्, मुट प्रमर्दने, मुडि खराडने, खराडनं लोम शातनम्, वटि विभजने, लुटि स्तेये, स्फुटिर् विसरणे, विसरणं विकाशः, विशरण इति पाठे विदारणं, पठ व्यक्तायां वाचि, हठ बलात्कारे, शठ कैतवे, मठ निवासे, चुड्ड हावकरणे, हावकरणं शृङ्गार-चेष्टा, क्रीड् विहारे, लड विलासे, गुपु रक्षणे, तप, धूप सन्तापे, रप, लप, जल्प व्यक्तायां वाचि, जप

मानसे च, चुप मन्दायां गतौ, चुवि वक्त्र संयोगे, रण, भण, मग क्वण, ष्टन, ध्वण, शब्दे संभक्तौ, च, ओणृ, अपनयने, शोणृ लौहित्ये, तुड़ तोड़ने, तोड़नं, भञ्जनं, षण संभक्तौ, चमु, जमु, अदने, क्रमु, पादविक्षेपे, क्लमु. ग्लानौ, यम उपरमें, णम प्रह्वत्वे, शब्दे च, प्रह्वनं नमस्कारो नम्रता च, अम, द्रम, गतौ, ईर्ष्य ईर्ष्यायाम्, हय गतौ, दल, ञिफला विशरणे, मील निमेषणे, नील वर्णे, शील समाधौ, शूल रुजायाम्, तूल निष्कर्षे, मूल प्रतिष्ठायाम्, फल निष्पत्तौ, निष्पत्ति निष्पादन प्रतिफलनञ्च, चुल्ल हावकरणे, फुल्ल विकसने,बेल्ल गतौ, स्खल चलने, चलनं विच्युतिः, गल अदने शंसने च, खेलृ विहारे, खोलृ गति प्रतिधाते, धोर्ऋ गतिचातुर्ये, त्सर छद्मगतौ, अभ्र, चरगतौ, ष्ठिवु निरसने,निरसनं थूत्कारः, जिजये, जीव प्राणधारणे, पीव स्थौल्ये, उर्वी तुर्वी, धुर्वी, हिंसार्थाः, मुर्वी बन्धने, चर्व अदने, इवि व्याप्तौ, गर्व दर्पे, अव रक्षपालने, घुषिर् शब्दे, णिक्ष चुम्बने, मृक्षा संघाते, तक्ष त्वचने, त्वचनं संबरणम्, काक्षि कांक्षायाम्, अक्षू व्याप्तौ संघाते च, त्वक्ष तनूकरणे, चूष पानें, तूष तुष्ठौ, पूष बृद्धौ, मूष स्तेये, तसि, भूष अलंकारे, ऊष रुजायाम्, कृष विलेखने आकषर्णे च,

कष, रूप, रिष हिंसायाम्, भष भर्त्सने (कुक्कुरध्वनि विशेष इत्यर्थः) वृषु, उक्ष सेचने; मृषु सहने; पुष पुष्टौ; प्रुपु ल्पुषु; उष दाहे;घृषु संघर्षे; तुस, रस शब्द;लस क्रीड़ायाम् त्रसो उद्वेगे; हसे हसने; धस् लृ अदने पिसृ गतौ; शश ल्पुतगतौ; णिश समगतौ शसु हिंसायाम; शन्सु स्तुतौ च; मिह सेचने; दह भस्मीकरणे; रह त्यागे; रहि गतौ; दृहि वृहि बृद्धौ; वृहिर् शब्दे च; अर्ह, मह पुजायाम; ग्लै हर्षक्षये; ल्मै गात्रविनामे, कान्तिक्षय इत्यर्थः; द्रै स्वप्ने; कै, गै शब्दे; ष्ट्यै स्त्यै शब्दसंघातयोः; क्षै क्षये; शै, श्रै पाके; पै, अव शोषणे; ष्टै (स्तै) वेष्टने; दैप् शोधने; घेढ् पा पाने; घ्रा गन्धोपादाने; ध्मा शब्दाग्निसंयोगयोः; ष्ठा गतिनिवृत्तौः म्ना अभ्यासे; दाण्; ह्वृ कौटिल्ये; स्वृ शब्दोपतापयोः स्मृ, ध्यै चिन्तातामृ; सृ गतौ; ऋ प्रापणे चः श्रु श्रवणेः स्रु, द्रू, ऋच्छ गमृलृ, सृप्लृ गतौ, स्कन्दिर् गतिशौषणयोः, गतिरत्र स्खलनम्; यभ मैथुने; तृ प्लवन तरणयोः प्लवनं जले बहनम्, तरणं नद्यादेः पारगमनम्; षु प्रसवे; त्यज हानौ; षन्ज सङ्गे;ःदृशिर् प्रेक्षणे; दन्श दंशने; कित निवासे रोगापनयनेः संशये च– इति परपदिनः । एध बृद्धौ; स्पर्द्ध संवर्षे, संघर्षः स्पर्द्धा गाधृ प्रतिष्ठायाम्; तलस्पर्श इत्यर्थः; बाधृ विलोड़ने; दध धारने,स्कुदि आप्लवने, आल्पवनं ल्पुतगतिः; बदि अभिवादन स्तुत्योः, अभिवादनं प्रणामः, स्पदि किञ्चिच्चलने मुद हर्षे; दद दाने हद पुरीषौत्सर्गे ष्वद, स्वाद, स्वर्द आस्वादने, आस्वादनं रसोपादानं रूचिश्च, क्रूर्द क्रीड़ायामेव; षद क्षणनें, क्षणनं हिंसा ह्राद अव्यक्त शब्दे; ह्लादो सुखे च पर्द कुत्सिते शब्दे, अपानशब्द इत्यर्थः;

यतो प्रयत्ने; नाध याच्ञोपतापैश्वर्य्याशीःषु च; श्रथि शैथिल्ये; ग्रथि, वकि क्रोटिल्ये; कथ आत्मश्लाघायासुः शोकृ सेचने; लोकृ, लोचृ दर्शनें; श्लोकृ संघाते, आनुपूर्व्या पदानां ग्रन्थनं संघातः;शकि शङ्कायाम्; अकि लक्षणे; ढौकृ ष्वष्क, टीकृ, लघि गत्यर्थाः अघि गत्याक्षेपे,गत्याक्षेपो वैगगतिर्गत्यारम्भो वा; लाघृ सामर्थ्ये; श्लाघृ स्तुतौ; षच् समवाये; पचि व्यक्तोकरणे भृजी परिष्वङ्गे; घट्ट चलने; स्फुट विकसने; चेष्ट चेष्टायाम्;

वेष्ट वेष्टने; कठि शोके; भड़ि परिहासे; हिड़ अनादरे; गतौ च; मुड़ि मार्ज्जने, चड़ि कोपे, पिड़ि संघाते, पड़ि गतौ, खड़ि मन्थे, कड़ि तुषाकरणे, हेड़ृ अनादरे, शाड़ृ श्लाघायाम्, ग्लेपृ दैन्ये, टुवेपृ. कपि चलने, त्रपूष लज्जायाम्, लबि अवस्रंसने, कवृ वर्णे, क्लीवृ अधाष्ट्र्ये, क्षीवृ मदे, रेभृ शब्दे, रमि गवां शब्दे ष्टभि, स्कभि प्रतिबन्धे, जम, जृभि गात्रविनामे, वल्भ भोजने, गल्भ धाष्टर्ये ष्टु भु स्तम्भे घिणि ग्रहणे, घुर्णा, भ्रमणे स्रन्सु प्रमादे, पण व्यवहारे स्तुतौ च, वन च भाव क्रोधे क्षमुष् सहने, कमु कान्तौ, कान्तिरिच्छा, अय, रय गतौ, णय रक्षणे च, दय दान गति हिंसा दानेषु च ऊयी तन्तुसन्ताने, पूयी विशरणे दुर्गन्धे च, क्नुयी शब्दे उन्दे च, क्ष्नायी विधूनने, स्फायी, ओप्यायी वृद्धौ, तायृ विस्तारण पालनयोः, कल संख्याने, देवृ देवने, षेवृ, शवृ सेवने, क्लेश बाधने, धुक्ष सन्दीपन जीवन क्लेशनेषु, शिक्ष विक्ष्योपादाने, भिक्ष याच् ञायाम् दक्ष शीघ्रार्थे दीक्ष मोण्ड्येड्योपनयन-नियमव्रतादेशेषु, ईक्ष दर्शने, भाषा व्यक्तायां वाचि, हेषृ अश्वशब्दे, कास्र कासरोग-शब्दे, काश्टृ भास्र दीप्तौ, आङः शस इच्छायाम्, ग्रसु, ग्लसु अदने, ईह चेष्टावाञ्छयोः, वहि वृद्धौः अहि गतौ, गर्ह, गल्ह कुत्सायाम्, ऊह वितर्के, गाहू विलोड़ने, स्मिङ् ईषद्धसने, कुङ्, डु ङ् शब्दे, च्युङ्, प्रुङ, प्लुङ्, गाङ, श्यैङ् गतौ, मेङ्, प्रतिदाने, देङ्, त्रैङ् पालने, प्यैङ् वृद्धौ, पूङ् पवने डीङ विहायसा गतौ, गुप गोपन-कुत्सनयोः, मान पूजायां विचारणे च, वध बन्धने, निन्दायाञ्च, रभ राभस्ये+, डुलभष् प्राप्तो, द्यु त, शुभ, रूच दीप्तौ, श्विता वर्णे, ञिमिदा, स्नेहने, ञिष्विदा मोचने च, घुट परिवर्त्तने, लुट लुठ शोकादिना पतने, क्षुभ सञ्चलने, भ्रन्सु श्रनसु, ध्वनसु अधः पतने, श्रन्भु विश्वासे, वृतु वर्त्तने, वृधु वृद्धौ, शृधु अपानशब्दे, स्यन्दु प्रश्रवणे, कृपू सामर्थ्ये कृत्स्नं द्यु तादिः, वृतादिः, घट चेष्टायाम्, व्यथ दुःखे, प्रथ प्रख्याने, म्रद मर्द्दने, क्रदि वैक्लव्ये, ञित्वरा सम्भ्रमे– एते घटादिषु षितः एधादयः आत्मपदिनः। ज्वर रोगे, णट नृतौ, नृतिर्नर्त्तनम्, लगे सङ्गे, ष्टगे संवरणे श्रण दाने क्नथ, हिंसायाम्ः, ह्वल चलने, ज्वल दीप्तौ स्मृ आध्याने, आध्यानं सोत् कण्ठस्मरणम्, दृ भये श्रा पाके, मारण तोषण–निशामनेषु ज्ञा, कम्पने चलिः, छदिर् ऊर्ज्जने, ऊर्ज्जनं प्राणनं वा, जिह्वो-न्मथने लड़िः, उन्मथनमुत्क्षेपणम्, मदी हर्षग्लेपनयोः, ध्वन शब्दे इति घटादयः। जनी, जॄष वयोहानौ, रञ्ज अमन्ताश्च, ज्वल, ह्वल, नमोअनुपेन्द्राद्वा, ग्लास्ना-वनु-वमश्च, न कम्यमिचमः, शमो दशने, यमिरपरिवेषणे–कृत्स्नं घटादिः, फण गतौ परपदिनः। राजृ दाप्तौ– उभयपदी। टुभ्राजृ, टुभ्राशृ टुम्लाशृ दीप्तौ–आत्मपदिनः, स्वन शब्दे–फणादिः। ज्वल दीप्तौ, चल कम्पने, टल, टल वैक्लव्ये, स्थल, स्थाने, हल विलेखने, वल प्राणने, पुल महत्त्वे, पत् लृ पथे च गतौ, क्वथे निष्पाके, मथे विलोड़ने, टुवम उद्गिरणे, भ्रम चलने, क्षर सञ्चलने-परपदिनः षह मर्षणे, रमु क्रीड़ायाम्-आत्मपदिनौ। षदलृ छेदनगत्यवसादनेषु, शदलृ शातने, शातनं पातनम्, क्रुश आह्वाने कुच कौटल्ये, बुध अवगमने, रूह जन्मनि प्रादुर्भावे च, कस गतौ, कृत्स्नं ज्वलादिः–परपदिनः। हिक्कायाम्, धावु गतिशुद्ध्योः, अञ्चु गतौ, अस दीप्त्यादानयोश्च, टुयाचृ याच् ञायाम्, प्रोथृ पर्य्याप्तौ पर्य्याप्तिः पूर्णता सामर्थ्यं वा, मेधृ मेधा हिंसयोः, णिद णेदृ कुत्सा-सन्निकर्षयोः, बुधिर् बोधने, खनुँ अवदारणे, चाषृ पूजानिशामनयोः, स्पश बाधन स्पर्शनयोः, दाशृ, दासृ दाने, भ्रेषृ चलने, लष कान्तो, भक्ष भक्षणे गुहू संवरणे–इति हिक्कादयः। हृञ्हरणे, हरणं देशान्तर प्रापणम्, अपनयनञ्च;

भृञ् भरणे, धृञ् धारणे नीञ् प्रापणे, दान अव-खन्डशे, शान तेजने, डुपचष् पाके, भज, सेवायाम्, रन्ज रागे, शप आक्रोशे, त्विष दीप्तौ, यज देवपूजा-सङ्ग तिकरण दानेषु, डुवपु वीजतन्तुसन्ताने, वह प्रपणे, वेञ् तन्तुसन्ताने, व्येञ् संवरणे, ह्वे ञ् स्पर्द्धायां शब्दे च— उभयपदिनः। वस निवासे, वद व्यक्तायां वाचि, टुओश्वि गति बृद्धयो, कृत्स्नं यजादिः— परपदिनः। इत्यौत्सर्गिक–शव् विकरणा भूवादयः ॥२॥

अदादयः।

अद प्सा भक्षणे, वश कान्तौ, कान्तिरिच्छा, हन हिंसागत्योः यु मिश्रणामिश्रणयो, णु स्तुतौ क्ष्नु तेजने ष्णु प्रस्रवणे टुक्षु, रु, कु शब्दे, षु प्रसवे, इक् स्मरणे, इण गतौ' वी प्रजन कान्त्यसन-खादनेषु च, प्रजनं गर्भ ग्रहणम्, भा दीप्तौ, या प्राप्तौ, वा वायु गतौ, ष्णा शौचे- श्रा पाके, द्रा कुत्सायां गतौ पा रक्षणे, रा ला दाने , दाप लवने, ख्या प्रकथने प्रा पुरणे, मा माने, विद ज्ञाने, अस् भुवि सत्तायामित्यर्थः मृजुष् शुद्धौ, परिभाशणे, रुदिर् अश्रु विमोचने, ञिष्वप् शये, श्वस् प्राणने, अन् च (प्राणनर्थः) जक्ष भक्ष हसनयोः— कृत्स्नं रुदादिः। जागृ निद्राक्षये, दरिद्रा दुर्गतौ, चकासृ दीसौ, शासु अनुशिष्टौ कृत्स्नं जक्षादिः यङ् लुक् च परपदिनः।

चक्षिङ् व्यक्तायां वाचि, ईर गतौ कम्पने च ईड स्तुतौ, ईश ऐश्वर्य्ये आस उपवेशने विद्यमानतायाञ्च, आङ शासु इच्छायाम्, वस आच्छादने, कसि गति शासनयोः णिसि चुम्वने, णिजि- शुद्धो, शिजि भुषण-ध्वनौ, वृजी वर्जने, पृची सम्पर्के , षूङ् प्राणिगर्भ विमोचने, शीङ् स्वप्ने, अध्ययने, हुण ङ अपनयने आत्मपदिनः। द्विष अप्रीतौ, दुह प्र-पुरणे, दिह प्रलेपे लिह आस्वादने, ऊर्णु ञ आच्छादने ष्टुञ स्तुतौ ब्रू ञ् व्यक्तायां वाचि उभयपदिनः।

हु वह्नौ दाने, ञिभी भये, ह्री लज्जायाम, पृ पालन पुरणयो वामनोऽप्यस्ति,ओहाक् त्यागे ऋ, सृ गतौ —पर पदिनः। णिजिर् शौचे, विजिर् पृथक् भावे, विषऌ व्याप्तौ, डुदाञ् दाने डुधाञ् डु भृ ञ् धारण पोषणयोः उभय पदिनः। माङ माने ओहाक् गतौ— आत्मपदिनौ। जुहोत्यादिः। इति शव् लुकोऽदादयः ॥ २-३ ॥

दिवादयः।

दिवु क्रिडा-विजिगीषा-व्यवहार-द्यु ति-स्तुति-कान्ति-गतिषु, षिवुतन्तुसन्ताने, स्रिवु गति शोषणयोः ष्ठिवु निरसने, नृती गातृ विक्षेपे, त्रसि उद्वेगे, कुथ पुता भावे, पुथि हिंसायाम्, क्षिप् प्रेरणे. पुज्य विकसने, तिम; ष्टीम, ष्टिम, आर्द्रीभावे, ब्रीड लज्जायाम् इष गतौ, षह शक्तौ, जृष वयोहानौ, शोतनु करणे, छो छेदने षो अन्त कर्मणि दो अवखण्डने, राध, साध, संसिद्धौ, मृग अन्वषणे, त्रुट छेमने, व्यध ताडने, लष कान्तौ, पुष पुष्टौ, शुष शोषणे, दुष वैकृत्यों, वैकृत्यं शुद्ध भावः, श्लिष आलिङ्गने, ञि ष्विदा गात्र प्रक्षरणे, क्षुध बुभुक्षायाम्, शुध शौचे, षिधु संराद्धौ ॥ रध हिंसायाञ्च, तृप प्रीणने, दृप गर्वं, मुह वैचित्त्ये द्रु ह जिघांसायाम्, ष्णुह उद्गिरणे, ष्णिह प्रीतौ, णश अदर्शने—कृत्स्नंरधादिः। क्रमु पाद विक्षेपे, शमु दमु उपशमे, तमु ग्लानौ, श्रमु तपसि खेदेच, भ्रमु अनवस्थाने, क्षमु सहने क्लमु ग्लानो, मदी हर्षे-शमादिः। असु क्षेपणे यसु प्रयते, मोक्षणे, दसु उपक्षये, प्लुष-दाहे,

लुठ विलोडने, उच समवाये, भृशु भ्रंशु अधःपतने, कृष तनु करणे, ञि तृषा पिपासायाम्, तुष, हृष तुष्टौ, कुप कोपे, रुष रोषे, ष्टुप समुच्छ्राये, लुभ गार्द्धये क्षुभ सञ्चलने, क्लिदू आर्द्रीभावे ञिमिदास्नेहने ञिक्ष्विदा मोचने च, ऋधु वृद्धौः गृधु अभिकाङ्क्षायाम् कृतस्नं पुषादिः—परपदिनः। षूङ् प्राणिगर्भ विमोचने दुङ् परितापे, दीङ् क्षये धीङ् अनादरे, मीङ् हिंसायाम रीङ् स्रवने लीङ् श्लेषणे डीङ् गतौ. व्रीङ् वरणे—स्वादयः आरामेतः॥ पीङ् पाने माङ् माने ईङ् गतौ प्रीङ प्रीतौ, जनी प्रादुर्भावे दीपी दीप्तौ, पुरी आप्यायने, जुरी जीर्णे तूरी त्वरण हिंसयोः गरी हिंसायाम् चुरी दाहे तप ऐश्वर्य्ये वा बृतु वरणे क्लिश उपतापे टु भ्राश्रृ दीप्तौ वाश्रृ तिरश्चां ध्वनौ, पद गतौ, खिद दैन्ये, विद सत्तायाम् बुध अवगमने; युध संप्रहारे, अनौरुध कामे, अनावुपपदे रुधिः कामे दिवादिरित्यर्थः, मन ज्ञाने, युज समाधौ, सृज विसर्गे, लिश अल्पीभावे— आत्मपदिनः। शक मृष क्षमायाम्, ई शुचिर् पूतीभावे— उभयपदिनः॥ इति श्य- विकरणा दिवादयः॥४॥

स्वादयः

षू ञ् अभिषवे, अभिषवः सन्धानं मङ्गलस्नानं वा, षिञ्- बन्धने, शिञ् निशाने डुमिञ् प्रक्षेपणे चिञ् चयने स्तृञ् आच्छादने, कृञ् हिंसायाम्, वृञ् वरणे, धुञ्कम्पने—उभय पदिनः। — टुदु उपतापे, हि गतौ वृद्धौ च, पृ प्रीतौ, आप् लृ शक्तौ, राध, साध संसिद्धौ, कृवि, द्रु जिघांसायाम्, ञि धृषा प्रागल्भ्ये दन्भु दम्भे, ऋधु वृद्धौ, धिवि प्रीणने, अक्षू व्यासौ संघाते च, तक्षू तनुकरणे— परपदिनः। अशुङ् व्याप्तौ— आत्मपदी॥ इति श्नु विकरणाः स्वादयः॥५॥

तुदादयः

तुद व्यथने, णुद प्रेरणें, दिश अतिसर्ज्जने, अति सर्जनं दानमाज्ञापनं वा, कथनेऽप्ययम्, भ्रस्ज पाके, क्षिप् प्रेरणे, कृष विलेखने, मुच्लृ मोक्षने, लुप् लृ छेदने, विदलृ लाभे, लिप् उपदेहे, षिच क्षरणे—उभयपदिन। कृति छेदने, खिदपरिघाते, कृतस्नं मुचादिः। धि धारणे क्षिनिवास गत्योः, ओव्रश्चू छेदने ऋच्छ गतीन्द्रिय-प्रलयमुर्त्तिभावेषु, कृ विक्षेपे गृ निगरणे, चर्च परिभाषणें, उब्ज आर्जवे उदझष उत्सर्गे, गुफ गुन्फ दृभी ग्रन्थे, शुभ, शुन्भ, शोभार्थे, उभ उन्भ पुरणे, विधविधाने, ताडनेऽपि, मृड सुखने, पुण शुभे ( कर्मणि ), घुण घुर्ण भ्रमणे, प्रच्छ ज्ञीप्सायाम्, सृज विसर्गे, टुमस्जोशुद्धौ रुजो भङ्गे, भुजो कौटिल्ये, छुप स्पृश संस्पर्शे, रुष रिश हिंसायाम्, विच्छ गतौ, विश प्रवेशने, मृश आमर्शने, आमर्शनं स्पर्शः, विमर्शः आलोचनञ्च, शद्लृ शातने, षदलृ विशरणे, क्षुर विलेखने, खुर छेदने, घुप भीमार्थ शब्दयोः, तृण हु हिंसायाम, बृहु उद्यमें, इषु इच्छायाम्, कुट कौटिल्ये, मिल सङ्गे, लिख विलेखने, कुच संकोचे व्यच व्याजीकरणे, गुज शब्दे, छुर, त्रुट छेदने, स्फुट विसरणें, घुट प्रतिघाते, तुड उपहनने, वुड, व्रुड—मज्जने, स्फुर स्फुरणे, णु स्तवने, धु विधुनने, विधुननंकम्पनं, गु पुरीषोत्सर्ग, ध्रु गतिस्थैर्ययोः-परपदिनः। गुरी उद्यमे, कुङ् कुङ शब्दे— कृतस्नं कुटादयः। पृङ् व्यायामे, व्यायामश्चेष्टा, धृङ् अवस्थाने, भृङ् प्राणत्यागे, जुषी प्रीति सेवनयोः, ओ विजी भयचलनयोः दृङ् आदरे, ओलजी ओलस्जी व्रीडायाम्— आत्मपदिनः। इति श-विकरणास्तुदादयः॥६॥

रुधादयः

रुधिर् आवरणे, भिदिर् विदारणें, छिदिर् द्विधाकरणें रिचिर् विरेचने, विचिर् पृथग्भावे, क्षुदिर् संपेषणे, युजिर् योगे—उभय पदिनः। कृती वेष्टने, शिष्लृ विशेषणे, पिष्लृ सञ्चूर्णने, भनजो आमर्दने, भुजपालनाभ्यवहारयोः तृह हिसि हिंसायाम, उन्दि क्लेदने, अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, ओविजी भयचलनयोः वृजी वर्ज्जने, पृची सम्पर्के–परपदिनः। ञिइन्धी दीप्तौ, खिद दैन्ये, विद विचारणे–आत्मपदिनः। इति श्नम् विकरणा रुधादयः ॥७॥

तनादयः

तनु विस्तारे, षणु दाने, क्षणु, क्षिणु हिंसायाम्, तृणु अदने, डु कृञ् करणे–उभय पदिनः। वनु याचने मनु वोधने–आत्म पदिनौ। इति उ–विकरणास्तनादयः ॥८॥

क्र्यादयः

डु क्रीञ् द्रव्य विनिमये, प्रीञ् तर्पणे इच्छायाञ्च, श्री ञ् पाके, षि ञ् यु ञ् वन्धने स्कु ञ् आप्लवने, क्नु ञ् शब्दे, मीञ्, द्रुञ् हिंसायाम् पु ञ् पवने लू ञ् छेदने, स्तृ ञ् आच्छादने, कृ ञ् हिंसायाम्, वृ ञ् वरणे, धु ञ् कम्पनेः, ग्रह उपादाने–उभय पदिनः। शृ सृ हिंसायाम पृ पालन पुरणयोः क्लीवृ वरणे, दृ विदारणें, जृ वयोहानौ, री रेषणे च रेषणं वृक ध्वनिः, ली श्लेषणें–कृत्स्नं पादि ल्वादि। व्री बरणे, भ्री भरण, ज्ञा अबोधने, ग्रन्थ मोचने, बध बन्धने मन्थ विलोडने, ग्रन्थ सन्दर्भे, कुन्थ संक्लेशे, मृद क्षोदे, मृड सुखने, कुष निकर्षे, निष्कर्षो निष्काशनम्, खब भुतिप्रादुभावे, क्षुभ सञ्चलने, क्लिशु विबाधने, अश भोजनें, पुष पुष्टौ, मुष स्तेये–परपदिनः। वृङ् संभक्तौ–आत्मपदौ। इति श्ना विकरणाः क्र्यादयः ॥९॥

चुरादयः

चुर स्तेये, चिति स्मृत्याम्, यन्त्रि संकोचने, लक्ष दर्शनाङ्कयोः, लड उपसेवायाम् गौरवादि रहितेन प्रीतियोगेन सेवा, मिदि, ष्णिह स्नेहनें, ओलडि उतक्षेपे, ओदनुबन्धोऽयम्,पीड अवगाहने, दुःख क्रियायाञ्च, नट अवस्यन्दनें, अवस्यन्दनं नाट्ये, वध संयमनें, पृ पृ पुरणे, उर्ज्जवलप्राणयोर्धारणे, कुट्ट छेदने, पट विस्तारे, पुट संचूर्णने चट्ट चलनें, छद संबरणें, पिजि, पिषि हिंसायाम, पथि गतौ, तड आघाते, खड, कडि भेदे, क्षल शौचे, तल प्रतिष्ठायाम,तुल उन्मानें, चुल निमर्जने, घुप समुच्छाये, मुल रोहनें सान्त्व साम प्रयोगे, मान पुजायाम, चुद प्रेरणाक्षेपयो, पाल रक्षणें, श्लिष श्लेषणें, ज्ञप मारणाद घटादिश्च, यमच परिवेषणें, अन्ये स्वार्थण्यन्ता घटादि–पठिता अपि न घटादये तेन 'शम, लक्ष आलोचने इत्यस्य निशा मयति शृणोतीत्यर्थः, व्यय क्षयो, स्फिट हिंसायाम, पुल, पिडि संघाते, टकि बन्धने, पुज पुजायाम ईड स्तवनें, शुठि शोषनें, चुर्ण पेषणें, गर्ज शब्दे पचि विस्तारवचने, तिज निशानें, कृत संशब्दनें, बर्द्ध छेदन पुरणयो म्लेच्छ अपशब्दे, म्रक्ष म्रक्षणें, इल प्रेरणें, लुष्ठ स्तेये, छर्द वमने शूर्प माने, गर्द्ध अभिकाक्षायाम, रुष रोषे, बटि बिभाजने, मडि भुषायाम्, श्रण दाने छदि संवरणे, भडि प्रतारणे

यमु हिंसायाम्,-परपदिनः। तत्रि ब्रिस्तारणे,मन्त्रि गुप्त भाषणे,निष्क,परिमाणेलल ईप्सायाम्, चित संवेदने, दशि दंशने, दसि दर्शने च, कुण संकोचने तर्ज, भर्त्स स तर्जने, यक्ष पुजायाम्, गुर उद्यमे, शम, लक्ष आलोचने,कुत्स अवक्षेपने, भल विरुपणे, निपुर्वो दर्शने, कुट अप्रसादे, वञ्चु प्रलम्भने मद तृप्तियोगे, दिवु परिकुजने, गृ विज्ञाने, विद वेदनाख्यान-निवासेषु, कुस्म कुस्मये अतमपदिनः। चर्च अध्ययने शब्द-उपेन्द्र पुर्व आविस्कारे, षूद आस्रवने, ज सु ताडने, पश वन्धने अम रोगे चढ, सकुट भेदने घट संघाते-हन्त्यर्थाश्च, ये च तेषु गणेषु हिंसार्था धातव उक्तास्ते चुरादावपि ज्ञेया इत्यर्थः, दिवु अदर्शने, अर्ज प्रतियत्ने, घुषिर् विशब्दने, विशब्दनं स्वाभिमताविष्करणम्, नानाशब्दनं वा, आङ्-क्रन्द क्रन्दन सातत्ये, तसि, भुष-अलङ्कारे, मोक्ष असने, अर्ह पुजायाम, ज्ञा नियोजने, भज विश्राणने, यत निकारोपस्कारयोः ( निरश्च प्रतिदाने ) विपुर्वश्चर असंशयेः, मुच प्रमोचने, स्वद-पर्यन्ताः सकर्मका एव, ग्रस अदने, पुष धारणे, दल विदारणे, लोकृ, लोहृ णद तर्क वृतु, वृधु—दीप्तचर्था। पुरी आप्यायने, रुज हिंसायाम, स्वद आस्वादने, इतो निर्विष्णुचापा अदन्ताः—कथ वाक्य प्रवन्धे, वरईप्सायाम्, ग्रण संख्याने, रह त्यागे, स्तन, गदी देव शब्दे, पत गतौ, पष अनु पेन्द्रात्, स्वर आक्षेपे, रच प्रतियत्ने, कल गतौ संख्यानेच, चह आलोचने, महपुजायाम, श्रथ, श्लथ दौर्वल्ये, स्पृह ईशायाम, भाम क्रोधे, सुच पैशुन्ये, बीज बीजाधाने गोम उपलेपने, कुमार क्रीडायाम्, शील उपधारणे, साम सान्त्वने, वेल काल गणने, पल्युल लवन पवनयो, गवेष मार्गणे, वास गुणान्तराधाने, निवास आच्छादने, भाज पृथक् करणे, समाज प्रीति सेवनयोः, ऊन् परिहाने, धन शब्दे स्तेन चौर्य्ये—परपदिनः। आगर्वादात्मपदिनः—पद गतौ, गृह ग्रहणे, मृग अन्वेषणे, कुह विस्मापने, शुर, वीर विक्रान्तौ, स्थूल परिबृंहणे, अर्थ उपयाच्चायाम्, सत्र सन्तति क्रियायाम् (निर्वाह निस्सार कर्मणि वेत्यर्थः) संग्राम युद्धे, गर्व माने। सुत्र अवमोचनम् अबमोचनम् वेष्टणमुः मुत्र प्रस्रवणे,

रूक्ष पारुष्ये पार, तीर कर्म समाप्तौ, अंस समाधाने, चित्र चित्रिकरणे कदाचि-द्दर्शनेच, वट विभाजने, लज प्रकाशने, अन्ध, छद दृष्ट्युपघाते, दण्ड दण्डनिपाते, अङ्क लक्षणे, सुख, दुःख तत् क्रियायाम्, रस आस्वादन-स्नेहनयो, व्यय वित्तसमुत्सर्गे,रुप रुप-क्रियायाम्, छेद द्वैधीकरणे, ब्रण गात्र विचुर्णने, वर्ण वर्णक्रियाविस्तार गुणवचनेषु, पुर्ण हरित भावे,लाभ क्षय पुरणे अघपापकरणे एवम् आन्दोल,प्रेङ्खोल चालने,ओज सामर्थ्ये स्फुट प्रकाशने अवधीर अवज्ञायाम्,तुथ्थ आवरणे इत्यादयः। इतो विकल्पण्यन्ताः युज,पृच संयमने, षह मर्षणे ईर प्रेरणे ली द्रवीकरणे, वृजी वर्ज्जने, जू वयहानौ, रिचवियोजन-संपचनयोः, शिष असर्वोपयोगे, विपुर्वोऽतिशयेः तृप प्रीणने, छद आवरणे, मीगतौ कथ, हिसि हिंसायाम्, ग्रन्थ बन्धने त्त, आङः षद प्राप्तौ, श्रन्थ, ग्रन्थ सन्दर्भे, आपलृलम्भने, बेः तनु दैर्ध्ये, वद सन्देश वचने, भु प्राप्तौ।

अण्यन्त स्तूभयपदी—मान पुजायाम्, गर्ह विनिन्दने, दभी भयो, दृभ सन्दर्भे मार्ग अन्वेषणे, कठि शोके, मृजु शौचे, धृष प्रहसने—परपदिनः। मृषतितिक्षायाम्, तष दाहे, बद भाषणे, अर्चपूजायाम्, अर्द हिंसायाम्, शुद्ध शुद्धौ—आत्मपदिनः।

वृञ् आवरणे धुञ् कम्पने, प्रीञ् तर्पणे—उभयपदिनः। इति स्वार्थण्तन्ता श्चुरादयः समाप्ताः ॥१०॥

वर्ण वासौ बेलबिन्तौ व्ययवीरौ तथा ब्रणः। वृञ्च वृञ्च वृङ् च विजी ब्री ब्ली वा वकि वेञ् व्यथाः ॥१॥ व्येञ् वदी वच वै वल्गा व ञ्चु-व्याच-विजिर् व्रजाः। वर्चं व्रश्चु वाछि-विच्छौ बृजी वष्ट-वटि व्रुडाः ॥२॥ विदा विद्‌ लृ वद ब्रीड़ व्याधौ वृधः वह वेपौ। बाधृ विशौ वृत व्युषौ बनु बीज वपा वमुः ॥३॥ वसौ वृषु बशौ वेल्ल बनौ वाह वृही वजः। एषां प्रयुक्त धातनामन्तः स्थादित्व मिष्यते ॥४॥ अब ऊर्वि क्वि क्षीवृ कव्रृ क्लीवृ खवस्तथा। वर्चं जीवौ गर्व तुर्वौ धुर्वि गुर्वि धिवु स्रिवु ॥५॥

दि वि पिवौ देवृधावु सान्त्व षेव षिवु ष्ठिवु।
एषां प्रयुक्त धातुनामन्तः स्थान्तत्व मिष्यते ॥६॥

अप्रयुक्ताः परे ज्ञेया ग्रन्थात् कल्पद्रुमादिकात्।
हरिनामामृतस्यैषा संक्षेपाद् धातुपद्धतिः।
मया कृता प्रयुक्तान्य धातुं स्त्यक्ता क्वचित् क्वचित् ॥
इति श्री श्रील श्रीजीव गोस्वामि पाद विरचितः।

धातुसंग्रहः समाप्तः।

